प्राच्यविद्या-ग्रन्थमालायाः तृतीयं रत्नम्



राजानकश्रीमम्मटविरचितः

# का व्य प्र का शः

साहित्यचूडामणि-सुधासागर-सहितः




संपादयिता

**रेवाप्रसाद-द्विवेदी**

काशीहिन्दूविश्वविद्यालयस्य प्राच्यविद्याधर्मविज्ञानसंकाये
साहित्यविभागाध्यक्षः

प्रकाशकः

**का शी हि न्दू वि श्व वि द्या ल यः**

वाराणसी–५

प्रकाशकः—काशीहिन्दूविश्वविद्यालयः
वाराणसी–५

प्राप्तिस्थानम्—
विशेषाधिकारी
विक्रयविभागः,
काशीहिन्दूविश्वविद्यालयः
वाराणसी–५



प्रथमं संस्करणम्, २०३८ वि० सं०
१९८१

मूल्यम्—रु० १३५)

प्रकाशनसहायकौ
'चक्रवर्ती' जगदीशचतुर्वेदी (प्रकाशनाधीक्षकः)
श्रीकपिलदेवगिरिः, आचार्यः, एम० ए०, (शोधसहायकः)

मुद्रकः—श्रीभरतनारायणगुप्तः
विशेषकार्याधिकारी
काशीहिन्दूविश्वविद्यालयमुद्रणालयस्य

*PRĀCYAVIDYĀ SERIES : THIRD ISSUE*

MAMMAṬA'S

# KĀVYAPRAKĀŚA

WITH THE COMMENTARIES

SĀHITYACŪDĀMAṆI AND SUDHĀSĀGARA




*CORRECTED & EDITED*

*by*

REWĀPRASĀDA DWIVEDĪ

*Professor & Head, Department of Sāhitya*

FACULTY OF ORIENTAL LEARNING & THEOLOGY

BANARAS HINDU UNIVERSITY

*Publisher*

**BANARAS HINDU UNIVERSITY**

**VARANASI-221005**

(INDIA)

# प्रावेशिकी

विक्रमसंवत्सरस्य ११०८ वर्षे[1] यावदेव राज्यं कृतवतो भोजराजस्य स्मर्तृ[1], अस्यैव च संवत्सरस्य १२०१ वर्षे काव्यानुशासनकृता[2] हेमचन्द्रेण स्मर्यमाणः काव्यप्रकाश-कारो मम्मटो नूनमेव ध्रियते स्म ११५८-११८३ इत्येतस्मिन् विक्रमीये कालावधौ। कश्मीरा अस्याभिजनः। शब्दव्यापारविचाराख्यः, काव्यप्रकाश-कारिकात्रयं[3], प्रतिनवं[4] च कारिकात्रयमिति कारिकाषट्कमात्रकलेवरः सोदाहरण-वृत्तिसमेतो ग्रन्थोऽस्यापरा कृतिः[5]।

सोऽयं मम्मटः स्वकीयं समयं यावद् विरचितस्य काव्यशास्त्रस्य सर्वेषामपि पथां वामनवदेव कृत्स्नवित्। तत्र सर्गबन्धाद्याकृत्यपेक्षया शब्दार्थास्वादतारतम्यं प्रमाणीकृत्य काव्यतत्त्वोल्लेखे प्रवृत्तस्यास्य ध्वनिमार्ग एव सिद्धान्तमार्गः। साध्यसाधनयोरन्यतरत् केन्द्रीकृत्य परिभाषमाणेषु संस्कृतकाव्यशास्त्रिषु य एव साधनापेक्षया रसवदाद्यलङ्कारः स एव साध्यापेक्षया रसादिध्वनिः। शरीरापेक्षया शरीरिणि समधिकं समासक्तचित्तकोषाणां भारतीयानां दर्शनेष्विव काव्यमार्गेष्वपि प्रतिमूर्च्छतु नामाध्यात्मवादित्वविरुदः, तथापि नास्ति ततः साधर्म्यादिकाव्यशिल्पस्याप्रतिष्ठा व्यवहारस्येव पारमार्थिकतया प्रतिपाद्यमानेन प्रतिभासेन। न हि शपथशतैर्युक्तिसहस्रैर्वा मिथ्यात्वेन प्रतिपाद्यमानं जिहासति माता सुतम्, पत्नी पतिम् उत्तमर्णो वा द्रविणम्। एवं च प्रौढोक्तिमात्रमिदमाचार्याणां यद् रसगुणा-लङ्कारादिष्वन्यतमस्य गौणत्वं प्रधानत्वं च तदितरस्य। वस्तुतस्तु व्यवहारे ज्ञान-कर्मणोरिव प्रशस्यतेतरां योग एव कविकर्म-तच्चमत्कारयोः काव्ये। संतुलनात्मा चैष योगः। संतुलन एव च श्राद्धा बुद्धिमन्तः। अत एव नामी लौकायतिका इव याज्ञिका इव वा नास्तिक्यास्तिक्यमात्रभेदेन स्थूलभुजः, न परिवृत्तिमृत्युचौराय प्रपञ्चमुष्टिं प्रतिग्राह्य क्रमाक्रमाभ्यां प्रतीयमानं किञ्चिदनुत्तरं तत्त्वं चानुशील्य मुकुलितलोचनं घूर्णमाना औपनिषदा इव स्व-मात्र-परिभोग-लक्षण-मोक्ष-सक्षण" नापि च स्थूले शून्यतां सूक्ष्मे चासिद्धिमुत्प्रेक्ष्य निर्वाणमात्रस्य प्रतीक्षया भोगमो भयभ्रंशात् सौगता इव 'काव्यालापांश्च वर्जयेद्'-ति कलामात्रवर्जनाधः स्थूलसूक्ष्मयोः, परिवृत्तापरिवृत्तयोः व्यभिचरित-स्थायिनोश्च समं रज्यन्तो ह्

---

[1] अत्रैव ६४० पृष्ठे 'मुक्ता' इत्युदाहरणम्।

[2] काव्यानुशासन-द्वितीयाध्यायान्त-विवेके नामग्राहम् प्रथमाध्यायगतध्वन्यादिप्रति-पादनावसरे सर्वत्र च प्रतिबिम्बात्मना काव्यप्रकाशांशोद्वमनपूर्वकम्।

[3] काव्यप्रकाशस्य २.

[4] कारिका १, ६

[5] अस्माकं हिन्दीभाष्येण सह १९७३ ई० चौखम्भातः प्रकाशितः।

प्रकाशविमर्शयोः सांसिद्धिकमविनाभावमनुभूय शिवाद्वैतिन इव सममेव स्वदन्ते-तमामेकमिवानेकमनेकमिव चैकम्। त एते आलङ्कारिक-मौलिमणय इत्युच्यन्ते। अन्यतम एषु मम्मटः। असौ हि काव्यस्य प्रकाशरूपतामनुशील्य अनुशील्य च प्रकाशनरूपस्य तद्विमर्शस्य उल्लासतां प्रकाशोल्लासपदाभ्यामेव परामृशतितरां काव्यविश्वम्, उत्सृज्य पूर्वाचार्यसंभावितान्यपि रसालङ्कारगुणध्वनि-वक्रोक्त्यौचित्य-साहित्यादीनि पदान्तराणि। उत्पत्त्यनुमितिव्यक्तिभुक्तिषु सर्वा अपि गर्भीकृत्य राराजमानं प्रकाशनमिदं चतुष्पात्त्वेन शक्यमेव संभावयितुं वाक्तत्त्वमिव।

अथ 'काव्यं प्रकाश' इति कोऽर्थः? अयमेव यन्मध्यमोरूपमेव काव्यमिति। अथ केयं मध्यमा? संविदेषा, यत्र हि निरापदं विभ्राजते शिवयोरिवैव वागर्थयोः साहित्यम्। सैवेयमेका त्रेधा प्रतीयते वाक्त्वेनार्थत्वेन साहित्यत्वेन च। अत एवास्या 'अग्रहस्ते हस्त' इतिवद् वाक्त्वेनोपचारस्तान्त्रिकागमिकशाब्दिकेषु प्ररूढः। उक्तत्रितये संविदेवैषा समवायि, संविदेवैषाऽसमवायि, संविदेवैषात्र निमित्तम्। ततश्चाद्वैतमिदं परिणाम-विवर्त्तयोः, अभेद एष प्रतिभास-परमार्थयोः, आश्लेष एष स्वप्नजागरणयोः, सौभ्रात्रमिदं सौगतश्रोत्रिययोः, पिण्डीबन्ध एष तान्त्रिकागमिकयोः, सपीतिरियं जैमिनि-वादरायणयोः, [1]कण्ठसूत्रबन्धश्चैष रति-प्रशमयोः। इयमेव भाषा। अयमेव स्फोटः। इदमेव शब्दब्रह्म। अत्रैव खलु परिसमाप्तं सर्वमपि वाङ्मय-कृत्यम्। अयमेव संप्रदायः, अयमेवानुश्रवः, इयमेव च विद्या। अस्या एव भगवत्याः परत्र संक्रमाय श्रूयमाणानां ध्वनीनां पदवाक्यप्रबन्धात्मना समुपोहः, लिपीनामिव ध्वनेः समुच्चारणाय। अत्र हि अग्रहस्तहस्तन्यायेन, आयुर्घृतन्यायेन, बिम्बप्रति-बिम्बसहयुध्वना चित्रतुरगन्यायेन वौपचारिकमेव श्रूयमाणानां ध्वनीनां भाषात्वं दृश्यमानानां लिपीनामिव ध्वनित्वम्। अत एव चौपचारिक एव 'काव्यं श्रूयते' इति 'काव्यं श्रुतमर्थो न ज्ञात' इति 'काव्यादर्थोऽवगम्यत' इति च विश्वजनीनोऽपि व्यवहारः।

मध्यमाख्या संविदेव हि देशकाल-वैयधिकरण्य-बाधितस्यापि सत्यापनभूमिः सशपथं प्रतिज्ञायमानस्य शब्दार्थसाहित्यस्य। नास्त्यत्रोच्चारणं न वा प्रध्वंसः। परामर्शक्षणिकत्वमपि तरङ्गक्षणिकत्वमिव सलिलसत्यत्वेन नास्ति समधिकं व्यथकम्।

काव्यस्य संविन्मात्रत्वे न संगच्छते शरीर-शरीरि-दृष्टान्तः, स्थूल-सूक्ष्म-शरीर-दृष्टान्तो वा। अनङ्गस्यास्य काव्यराजकुमारस्य 'शब्दा अर्था'श्चेति सर्वाऽपीयमङ्ग-सम्पदेव, सर्वापि चेयमवैषम्येणैवान्तरङ्गा। पौर्वापर्यप्रतीतिश्च पदपदार्थ-वाक्यार्थ-प्रतीतिरिव, घटप्रदीपप्रतीतिरिव, पुरीतद्ब्रह्म-स्वप्न-प्रतीतिरिव वा प्रावेशिक्येव, न पार्यवसानिकी। पर्यवसाने हि विभावानुभाव-संचारि-स्थायि-समवाय-प्रतीतिरिव पानकायमानैवेयमविभागा धीः।

---

[1] रघुवंश–१९।३२

अत्र हि शब्दकलैव भेदिका चित्रमूर्त्तिभ्यां काव्यविद्यायाः। वाङ्मयान्तरात्त्वस्या भेदिका दोषहान-गुणालङ्कारादान-प्रयोज्या सौन्दर्यापरपर्याया शोभेति वामनः। दोषाभाव-गुणालङ्कार-समष्टिरेव सेति तु मम्मटः। तत्र दोषाभाव-गुणालङ्कारत्वानां प्रत्यायिका शोभैवेति वामनीया एवाबामना इत्येके, शोभा चेयं काव्यत्वेनैव गतार्थेति माम्मटा एव वाग्भटा इत्यपरे। आनुभविकस्तु शोभा-तज्जनक-तदाश्रयाणां भेद इति [1]कालिदासः, ततश्च वामना एव व्यावहारिका इति तु सानातनीयाः। शब्दार्थगतोऽतिशय एव काव्यत्वम्। स एव चावच्छेदको दोषाभावगुणालङ्कार-निरूपितायाः प्रयोज्यतायाः, शृङ्गारत्वादिरिव द्रुत्यादिनिरूपिताया प्रयोजकताया इति माधुर्यादिनेव कृतमनेन शोभाख्येनातिरिक्तेन धर्मेणेति काममत्र विप्रतिपद्यन्तां पण्डितेन्द्रास्तथाप्यपत्येषु मातापितृ-शुक्रशोणिताभ्यां पुष्पेषु वा वृक्षतद्रसाभ्यां विश्वजनीनमतिरिक्तत्वमनपलपतां प्रेक्षातिशयवतां न ह्येवावमाननालेशोऽपि प्रयोज्य-प्रयोजक-भेदविपर्यिण्यामात्मानुभूतौ भामहादीनामिव शृङ्गार-करुण-शान्तत्वाद्यतिरिक्तमाधुर्याद्यनुभूतौ। या च लाघव-गौरवकथा, निरुक्तिविषया हि सा। न हि तया निरुच्यमानमन्यथयितुं शक्यम्। को नाम तार्किकशिरोमणिरपि सन् दाशरथित्वापेक्षया रामलक्ष्मणत्वादिषु गौरवमुद्वीक्ष्य त्याज्यत्वमेषां प्रतिजानीत। अन्यथा मृत्तिकामात्रव्याहारेण सिद्धौ कृतं घटपटादिव्यवहारेण गौरवग्रासेन।

सति ध्वनौ नातिप्रयोजनकत्वं काव्ये वाग्विकल्पभूतानामुपमादीनामित्यानन्दवर्धनाचार्यः। अपरिहार्य एव उपमात्वाद्यवच्छिन्न-शेषत्वनिरूपितशेषिभावो वक्रोक्तिरूपोऽलङ्कारः काव्यस्यात्मलाभायेति तु कुन्तकः। यदुक्तमेतेन 'सालङ्कारस्य काव्यता, न तु काव्यस्यालङ्कारयोग' इति। सोऽयमुपस्थितो भद्रगजविमर्दः। दर्शयति प्रशमोपायमत्र मम्मटः 'अलङ्कारोऽपरिहार्य एव, स्फुटत्वं पुनरस्य वैकल्पिकमिति समुदाहरन्। नागरीव सभ्यजनोक्तिरप्युद्विजत एव सर्वाकारनिरलङ्कारताया-इवोल्वणालङ्कारताया अपि। 'कोपात् कोमले'-त्यादिपद्ये रूपकस्यानिर्व्यूढिमनुमन्यमानस्य नेदमनभिमतमानन्दवर्धनस्यापि। सेयमस्य महामतेर्मम्मटस्यात्माहुतिः। प्रसक्त एतेनाव्याप्तिदोषोऽस्य काव्यलक्षणे, अलंकारस्य नियतत्वे वस्तुव्यङ्ग्यवस्तुध्वनि-स्थलस्यासंग्रहात्। प्रसिद्ध्यति हि व्यङ्ग्यो व्यञ्जकश्चेत्युभयत्राप्यलङ्कारस्य स्फुटत्वेनेवास्फुटत्वेनाप्यनिवेशादेव ध्वनिरेषः। अन्यथा तु 'वस्तुव्यङ्ग्यालङ्कारध्वनिः, अलङ्कारव्यङ्ग्यवस्तुध्वनिः-'इति प्रकारयोरेवान्यतरस्य प्रसरः। ततश्च व्याहन्येत वस्तुव्यङ्ग्यवस्तुध्वनेः काव्यत्वं काव्यलक्षणत्वं वा मम्मटोक्तस्य काव्यलक्षणस्य। यदि वा अस्फुटालङ्कारत्वमेवाऽनलङ्कृतित्वम्, तदेव च वस्तुत्वं काव्यार्थस्य। एवं चास्फुटालङ्काररूपवस्तुव्यङ्ग्यस्यैव वस्तुध्वनेर्वस्तुव्यङ्ग्यवस्तुध्वनित्वम्, व्यङ्ग्यालङ्कारशरीरे स्फुटत्वकल्पनाया अव्यावहारिकत्वात्। व्यङ्ग्यत्वमस्फुटत्वञ्चेत्यनर्थान्तरमेव। गुणीभूतव्यङ्ग्यत्वेन गणितमस्फुटत्वं पुनरतिगूढत्वरूपमिति नास्ति क्षतिः।

---

[1] काप्यभिख्या तयोरासीद् व्रजतोः शुद्धवेषयोः। रघु० १

आहार्यत्वेन प्रथितस्यालङ्कारस्य स्वतःसंभवित्वमप्यस्फुटत्वेनैव। अस्फुटस्यालङ्कारस्य वस्तुप्रायत्वाल्लौकिकालापसाधारण्येनेव व्यवस्थितौ क्षीयत एव प्रौढोक्तिमात्रसिद्धत्वम्। नात्र चित्रं व्यपगतनेपथ्ये राजनि जायते चेत् सामान्यजनत्वभ्रमः।

काव्यरूपस्य धर्मिणः संविद्रूपत्वे दोषाभावादीनां धर्माणामपि तत्त्वमव्याहतम्। ततश्च परामृश्यमान एव दोषः काव्ये दोषः, अन्यथा त्वदोष एव। एवं च 'न्यक्कारो ह्ययमेवे' त्यादिषु 'निःशेषच्युतचन्दनं स्तनतटमि-'त्यादिषु च विद्यमाना अपि विधेयाविमर्शादयो न दोषाः। इयमप्रतीतिरेवाभावः। एवं च दोषस्य दोषत्वेनाप्रतीतिरेव दोषाभावरूपः काव्यधर्मः। परमार्थदृष्ट्या विश्वप्रपञ्च एव दोषः, का कथा तन्मध्यपतितस्य काव्यस्य। शिवाद्वैतिनोऽपि विमले शिवेऽशिवं मलमुपकल्पयन्त्येव बाहुविध्येन। अस्ति च तत्पदार्थे इदम्पदार्थस्याध्यारोपापरपर्यायोऽध्यासो ब्रह्मिष्ठानां दोषत्वेनाभिमतः। मुखादिषु चन्द्रादीनामारोपोऽपि वस्तुदृष्ट्या न न दोषः। अयं तु विशेषो यदेकत्रापवाद्यत्वेनापरत्र चोपास्यत्वेन प्रवृत्तिः सचेतसाम्। कोऽत्र हेतुः? अयमेव यद् ब्रह्मणि जगदारोपो ऽनाहार्यः, आहार्यस्तु चन्द्रादेरारोपो मुखादिषु। आहार्यत्वं चैच्छिकत्वम्। ऐच्छिकत्वं चापारमार्थिकत्वसगोत्रं कल्पितत्वम्। तच्चाभावरूपमेव मूलतः। सेयं दोषाभावतैव। यत्त्वत्र चमत्कृतिजनकत्वं सोऽलङ्कारः। अतिशयमात्मीकृत्य प्रथमानस्यालङ्कारमात्रस्य इयमेव स्थितिः। अत एवालङ्काराणां प्रौढोक्तिसिद्धत्वमेव, न स्वतःसंभवित्वम्। एवं च 'अतिशयमात्रस्य दोषत्वम्, अप्रतीतिस्त्वस्य तथेति दोषाभावत्वम्, चमत्कारेण पुनरलङ्कृतित्वम्'इति सुव्यवस्थितं दर्शनम्। यश्च दोषसामान्याभाव-विकल्पः सोऽप्यत्रैव निमज्जति। यश्च संभावितदोष-परिहारः सा हि काव्यप्रागभाव-कालिकी कविकर्मनिष्ठा पाकरूपा क्रिया। प्रावेशिकी सा ध्रुवा। निष्पन्ने काव्ये विद्यमानस्य दोषस्य निष्पन्ना चेत् प्रतीतिर्वज्रलेप एषः। न संभवत्यस्य परिहारः। संभवति वा परिहारे परिह्रियते तत्काव्यत्वम्, उत्पद्यते च काव्यान्तरत्वमेव, विशेषणाभावप्रयुक्तस्य विशेष्याभावस्य सर्वसंमतत्वात्। कविप्रतिभा हि तितउः। तया काव्योचितमर्थजातं सक्तुमिव पुनन्तः कवयः कीर्त्तिं भजन्ते भवन्ति च बहुमानपात्रम्। मालाकारसधर्मत्वमत एव संमतं कवीनाम्। अयमेवैषां तत्त्वाभिनिवेशः। अत्रैव चरितार्था महतामाचार्याणां कविकर्मशिक्षानुवीक्षा। अनयाऽपहस्त्यन्तेऽवद्यानि, आपाद्यन्ते चानवद्यतां शब्दार्थजातानि। सर्वावयवानवद्यतापि हि सुप्रगल्भा सुमनसामावर्जनाय, किं पुनः प्रसिद्धावयवता। अत एवाभाष्यते 'अपदोषतैव विगुणस्य गुण' इति। पर्यङ्काधिरोहे हि अपदोषतैव सर्वसहा, यौवनमेव परमोऽलङ्कारः, प्रच्छदादिगतानीवापघनगतानि घन-सुकुमारत्वादीन्येव च स्पृहणीया गुणाः प्रलयलाभाय। अत एव दोषाभाव इति प्रथमं सोपानम्, काव्योचितशब्दार्थत्वमिति द्वितीयम्, सगुणत्वमिति तृतीयम्, सालङ्कारत्वमिति च तुरीयम्। त एते कविकर्मानुरोधिनोऽतिशयाः काव्यस्य। अतश्च तृतीयेनैव चमत्कृतिसिद्धौ तदतिशयायैवालङ्कृतियोगः, ससितक्षीरादिष्विव केसरैलाक्षोदादियोगः। अत एवात्र विकल्पः स्यादयं न वेति। सोऽयं सोपानक्रमः सुप्रकाशः प्रकाशकृतः काव्यलक्षणे।

तटस्थता खलु महानवगुणः कलायाः। को नु गुणः काव्यानुशीलनेन यतो न विस्फार्यन्ते, न प्रज्वाल्यन्ते, नार्द्रीक्रियन्ते वा चेतोधातवः सचेतसाम्। स हि परमो निकषः काव्यहेम्नः। वैमल्यरूपप्रसादपरिगृहीतौजोमाधुर्यान्यतरा हि काव्यबन्धा प्रगल्भन्तेतरां सहृदयान् प्रभावयितुम्। फलेग्रहिरेतेन कवीनां कविकर्मकल्पद्रुमः। अत्रैव समाहिताः सर्वेऽपि रसाः। अत एव निर्वेदादीनां सञ्चारिणामपि न न स्वाद्यत्वरूपं रसत्वम्। सोऽयं चित्तानुवेध एव प्रमात्रनुवेधः, आत्मचैतन्यरूपेण प्रमात्राऽननुगृहीतस्य चेतसः प्रसादादेरसंभवात्। असंलक्ष्यक्रमे ध्वनौ भग्नावरणा चिदेव व्यक्तिरिति तत एव पण्डितराजाः। प्रमातृ-प्रमिति-प्रमेयरूपमायापथोत्तीर्णस्यास्यैव कविकर्मणः परमानन्दज्योतीरूपसरस्वतीत्वं सर्व-बुध-नमस्यत्वञ्च। अयमेव चैतन्यपरामर्शः शृङ्गारविरुदः सार्वभौमश्च सरस्वतीकण्ठाभरणप्रकाशः।

कवि-संविदमारभ्य रसिकसंविदं यावदुद्यत्प्रवाहा येयं कविकर्म-सरस्वती सा हि कार्त्स्न्येनैव प्रतिपन्ना काव्यप्रकाशस्य काव्यलक्षणप्रबन्धेन।

काव्यप्रकाशतत्त्वचिन्तामणिगीता चेति त्रितयेऽपि टीकाकारबाहुल्यमिति समानो धर्मः। तत्र काव्यप्रकाशस्य टीकाकृत्सु गोविन्दठक्कुरः, गोकुलनाथः, सुधासागरकारः, अन्ये च शास्त्रसम्पन्नेषु भृशमादृताः। अथापि साहित्यचूडामणिकारमिमे नातिशेरते। चूडामणिकार एव हि टीकाकृत्सु केवलः साहित्यसम्प्रदायवेत्ता। स हि भरत-दण्डि-भामह-उद्भट-वामन-रुद्रटानन्दवर्धन-धनञ्जय-भोज-कुन्तकाभिनवगुप्त-रुय्यकाणां ग्रन्थानक्षरशोऽन्वशीलयत्। अखण्ड एव हि साहित्यशास्त्रस्य संप्रदायो दण्डिनमारभ्य साम्प्रतं यावत्। भट्टनायकादीनां कतिपये लुप्ता अपि ग्रन्थास्तथापि काव्यप्रकाशरूपस्य मानससरसो यानि पूरकाणि साहित्यस्रोतांसि तानि नाद्यापि न सुलभानि। गोविन्दठक्कुरादिभिस्तानि अनालोच्यैव पूर्वपक्षाः कल्पिताः, व्याख्यातानि चोत्तराणि। अतः संजातः काव्यप्रकाशमर्मप्रकाशे मतिभेदः, निर्मिताश्च भूयस्यष्टीकाः। साहित्यचूडामणिकारः पुनः पूर्वपक्षानिमान् साहित्यशास्त्रस्य प्राचीनेभ्यो ग्रन्थेभ्योऽवचिनोति प्रशमयति चोत्तरपक्षस्वरूपविषयकं सन्देहम्। सोऽयं महामतिः स्वयमपि महानेव सहृदयः अतो व्यक्तिविवेकादिगतान्यपि तत्त्ववादमाक्षिकाणि बाढमाद्रियते, समेधयते च तेषामुद्धरणैः काव्यप्रकाशस्य प्रामाणिकताम्। आनन्दवर्धनस्येवाभिनवगुप्तस्यापि, भामहस्येवोद्भटस्यापि, वामनस्येव च रुद्रटस्यापि प्रमेयाणि यथास्थानं प्रतिपद्येन प्रस्तूय विस्मापयत्येष आधुनिकानपि शोधकर्त्तॄन्। शास्त्रवादेषु वाक्यपदीय-प्रमाणवार्त्तिक-श्लोकवार्त्तिक-स्पन्दकारिका-ईश्वरप्रत्यभिज्ञा-तन्त्रालोक-प्रभृतीनपि यदृच्छयैव प्रस्तुवतोऽस्य स्फुटमेव महामेधावित्वम्। नेदृशी स्थितिर्गोविन्दठक्कुरगोकुलनाथादीनाम्। याच श्रीविद्याचक्रवर्त्तिनो बृहतीतिनाम्नी संप्रदायप्रकाशिनी नाम काव्यप्रकाशटीका तस्या बृहतीत्वमिव संप्रदायप्रकाशिनीत्वमपि काव्यप्रकाशविमर्शिनीनामनि साहित्यचूडामणावेवाञ्जस्येन संगच्छते प्रतिपदं प्राचीनालङ्कारिकग्रन्थसन्दर्भाणामिव कश्मीरशैवशास्त्रादिसन्दर्भाणामपि महतौदार्येण नितान्तमेव तलस्पर्शितया च ससंरम्भं

निर्व्यभिचारं च प्रारम्भात् परिसमाप्तिं यावदुपस्थापनात्। मननतरितीर्णविद्यार्णवतया सर्वङ्कषतया च प्रथमानात्मश्लाघस्य जगन्नाथपण्डितस्यापि पाण्डित्यगर्वक्रमेलकः चूडामणिविधातुः सर्वशास्त्रसिद्धान्तपाण्डित्यसन्दर्भाभ्यासातिशयस्वर्णप्रस्थेषु शिथिलयेदेवौन्नत्यदर्पम्, यावदस्य शब्दार्थबन्धनैपुणीतित्तिरिकाचीत्कृतिरपि कान्दिशीकायेतैव गोपालभट्टस्य समुदारसर्वसम्पदतिशयं काव्य-कलापिकेकाहेवाकमनुशीलय्य। अत्रैव हि परिणतो वृद्धभावः। अयमेव हि संमर्शिनामल्लक्षाणां च प्रामाणिकानामग्रणीः। कविसहृदयाख्यं सरस्वतीतत्त्वमत्रैव समुपोढयौवनम्। अभिनवगुप्तमासाद्य ध्वन्यालोक इवामुमेवासाद्य प्रसत्त्यतिशीतिमासादयति काव्यप्रकाशः।

तस्यास्य चूडामणिकारस्य भट्टगोपालस्य शारदातनय-जनकस्य भट्टगोपालस्य च देश-कालसम्प्रदायानामभेदादभेद एव युक्तिसहः। कश्मीराभिजनः शैवागमोऽस्य सांप्रदायिक आगमः। नियतिपरामर्शप्रभृतीनां व्याख्यया, टीकाया अस्या विमर्शिनीति संज्ञया, अस्याप्रारम्भतः परिपूर्त्तिं यावद् अनवसर-हानि शैवशास्त्रस्योद्धरणाच्च स्पष्टभूयिष्ठमेवेदम्। अलङ्कारसर्वस्योद्धरणाद् अनुद्धरणाच्च तत्पश्चाद्वर्त्तिनामलङ्काररत्नाकरालङ्कारविमर्शिनीप्रभृतीनां महत्त्वमण्डितानामलङ्कार ग्रन्थानां द्वादश-त्रयोदशयीशुवर्षशतकयोः सन्धिरस्य स्थितिकालः। केरलदेशीयस्य कुलशेखरनाम्नो [ ११२५-ई० ] नृपतेः स्मरत्यसौ चूडामणौ, आसीच्च तस्यैवास्थानगोष्ठीशेखरालङ्कार एष [ ६१४ पृ० ] इत्यतोऽप्युपर्युक्त एवास्य स्थितिकालः। प्रथमे वयसि परिशीलितभामहादिग्रन्थस्यास्य वयः-परिणाम इव काव्यप्रकाशालङ्कारसूत्रयोर्लाभः। अत एवासौ काव्यप्रकाशस्योपजीव्यानां स्रोतसां प्रचिकाशयिषयेव टीकामिमां सपरिकरमातनोत्। इदंप्रथमतया रत्नापणकारः कुमारस्वाम्येव [ १५०० ई० ] भट्टगोपालस्य चूडामणिं स्मरतीति नास्य कुमारस्वाम्यपेक्षयाऽधिकं प्राचीनत्वमिति नातिरुचिरं, रविकीर्ति-कालिदास-न्यायेन।

देशोऽस्य केरल एवेति स्पष्टमेव कुलशेखरनृपतेरुल्लेखात्।

शारदतनयोऽप्यभ्यस्तशैवशास्त्रः, यीशुसम्वत्सरस्य १२-१३-शतकसन्धिकाल एवास्य स्थितिकालः, भारतस्य दक्षिणा दिगेव चास्य देशः। ततश्च तस्य पितुर्भट्टगोपालस्यापि त एव देश-काल-सम्प्रदायाः। ततश्च चूडामणिरपि शारदातनयपितुरेव रचना। अयमत्रापरो हेतुर्यद् भट्टगोपालः प्रत्युल्लासारम्भं सरस्वतीं स्तौति। उल्लासपर्यवसानेऽपि तामिमां देवतां न विस्मरति। अस्ति च शारदातनयोऽपि तत्पितुः शारदाया उपासनस्य फलम्। एवं च शारदोपासनाऽप्युभयोः भट्टगोपालयोः समानो विशेषः। इदमेवात्रान्तरं यत् साहित्यचूडामणौ भगवती शारदा सरस्वतीनाम्ना स्तूयते, न तु शारदानाम्ना। अभेदप्रत्यायकानामन्येषां हेतूनां सति लाभे शारदायाः शारदा-नाम्नानुल्लेखस्य भेदसाधकत्वं पङ्क्तिरथनाम्ना समुल्लेखस्य दशरथे तद्भिन्नत्वसाधकत्वमिवाकिञ्चित्करप्रायमेव।

एवं च शारदातनयपिता भट्टगोपाल एव चूडामणिकारो भट्टगोपालः। ततश्च 'आर्यावर्त्तस्य यो मेरूत्तर इति महान् स्फीतश्च जनपदः तस्य दक्षिणस्यां दिशि विद्यमाने 'माठरपूज्य'नामनि ग्रामे विहितवसतिः कश्यपगोत्रः, विहितत्रिंशद्विष्णु-यागो, विरचितवेदभाष्यश्च श्रीलक्ष्मणनामा ब्राह्मणोऽस्य पितामहः, श्रीकृष्ण इव सकलवेदशास्त्रपारदृश्वा श्रीकृष्णोऽस्य पिता भावप्रकाशनकारः शारदातनयश्चास्य श्लाघ्यः पुत्रः। तत्र वाराणस्यां महादेवमुपास्यास्य पितामुमिवासौ शारदादेवीमुपास्य स्वपुत्रं शारदातनयमवाप। यथा च भट्टगोपालः सुलोचनः[१] अष्टादशसु विद्यासु कृतभूरिपरिश्रमश्च तथैव तत्पुत्रः शारदातनयोऽपि गुणोत्तरः।

शारदातनयो भट्टगोपालस्य ग्रन्थान्नोल्लिखति। ततश्च भिन्न एव तत्पिता साहित्यचूडामणिकारत इत्येके, हेत्वाभास एष इति न तत ऐकान्तिकी भेदसिद्धिरिति चान्ये।

'लौहित्य' इति चूडामणिकारस्य उपाधिः। अस्य मूलमवाच्येषु जनपदेष्वद्यापि प्रसिद्धो 'रोहित' इति जातिविशेषविरुद इत्येके, कामरूप-नद-विशेषस्य लौहित्यस्य परिसरानुपसेव्य, उपास्य च तत्रत्यास्तास्तास्तन्त्रदेवताः प्रतिप्राप्तकेरलस्यास्य तथा प्रसिद्धिरिति चापरे। कश्मीरशास्त्राणां तीर्थयात्राप्रसङ्गेन केरलप्राप्तिरिव केरली-यस्योपासकस्य तथैव प्राक्ज्योतिषक्षेत्रप्राप्तिरपि धर्मसाहित्याभ्यां सर्वकालमेकात्मत-यैव विराजमानेऽस्मिन् देशे न ह्येव चित्रम्।

भट्टगोपालः सहृदयः सिद्धश्च कविः। अत्रोदाहरणान्यत्रैव टीकायामुल्लासाना-मारम्भेष्विव तत्र तत्रोपलभ्यान्यस्य पद्यरत्नानि। चमत्कारचिन्तामणिः, परिमलश्चा-परावस्य ग्रन्थौ। तत्र प्रथमः कारिकात्मक इति ६८२ पृष्ठे तदुद्धरणेन स्पष्टम्। परिमलश्च कदाचिन्निबन्धात्मा टीकालक्षणो वा संभाव्यते [पृ० ७२३]। माधवाचार्येण धर्मशास्त्र-व्यवस्थासु प्रामाणिकत्वेन स्मर्यमाणो गोपालोऽप्ययमेवेति केषामपि मतम्। तत्र 'भ्रण'-शब्दस्य 'वेद' इति व्याख्यानं सहृदयोचितमेवेति नूनं नायमनुपलालनीयः पक्षः, भट्टगोपालस्यास्य सहृदयतायाः प्रसिद्धत्वात्।

सेयं टीका श्रीविद्याचक्रवर्त्तिनः संप्रदायप्रकाशिन्या सह १९२६-३० वर्षेषु त्रिवेन्द्रमतः प्रकाशितापि बहोः कालाद् दुरवापैव।

अन्या च सुधासागरनाम्नी टीका तदारम्भेऽवसाने च दत्तभूरिपरिचयस्य भीमसेनदीक्षितस्य कृतिः। इयं हि गोविन्दठक्कुरस्य काव्यप्रदीपमक्षरश आददाति प्रस्तौति च निस्संकोचम्। अस्य विदुषः सुमहानेवादरः काव्यप्रकाशकर्त्तरि मम्मटे। तममुमसौ 'वाग्देवताऽवतार'-विरुदेन सभाजयति। काव्यप्रकाशं प्रदीपकारो यत्र खण्डयति तत्रासौ संरम्भमीयिवानिव प्रदीपपक्षमेव दूषयितुं कृतसङ्कल्पः। छन्दः-शास्त्रगणितशास्त्रयोरपि महानेवास्य संरम्भः। प्रायेण प्रतिपद्यमसौ छन्दसो लक्षणं

[१] सुलोचनत्वं स्वभ्यस्त-ध्वन्यालोकलोचनत्वमपि।

नामान्तरं च प्रस्तवीति । अस्य महामतेष्टीकेयं काव्यप्रदीपमिव सुबहूष्टीकास्तत्कर्त्तृंश्च स्मरति । तथा हि—

१ अच्युतरामः, अच्युतभट्टाचार्यः, मिथिलेशसचिवः ( १८०,१९६ )
२ गोविन्दमहामहोपाध्यायः (काव्यप्रदीपकारः) (१०,१५) प्रतिपृष्ठमिव
३ चक्रवर्त्ती, चक्रवर्त्तिभट्टाचार्यः (७६,१३०) (विस्तारिकाकृत् परमानन्द इव)
४ चण्डीदासभट्टाचार्यः (दीपिका) (५४,८८)
५ जयराम(न्याय-तर्क)पञ्चाननः (तिलकः) ( १२७ आदिषु )
६ देवनाथतर्कपञ्चाननः (१२२)
७ नृसिंहठक्कुरः (नृसिंहमनीषा) (१३८,२२२)
८ पक्षधरमिश्रः (१३४,१३८,१८०, आदि)
९ भरत (दशरूपककारः) (१०९)
१० भास्करभट्टाचार्यः (साहित्यदीपिका) (१४६)
११ मिश्रादयः (१४७,१६९)
१२ रत्नपाणिभट्टाचार्यः (काव्यदर्पणः) (१८०) (अच्युतरामपुत्रः)
१३ रवि-भट्टाचार्यः (मधुमती) (रत्नपाणि-पुत्रः) (१२२)
१४ वाचस्पतिमिश्रः (१३७,२६९)
१५ वैद्यनाथः (उदाहरणचन्द्रिका) (१३७,२६९)
१६ श्रीवत्सलाञ्छनभट्टाचार्यः (सारबोधिनी) (८,९ प्रतिपृष्ठमिव)
१७ साहित्यदर्पणः (विश्वनाथस्य) (२३)

अन्ये (४६)-केचित् (१२) नव्याः, (१८,४८) परे (१९,२२), प्राञ्चः (३७३)-एवमपि काँश्चिदसौ स्मरति । अन्येषु साहित्यशास्त्रतत्कृत्सु—

१ अग्निपुराणम् (२१)
२ अप्पय्यदीक्षितः (२९)
३ दण्डी (२०,२६)
४ ध्वनिकृत् (२२)
५ भोजराजः (३९८), शृङ्गारप्रकाशः (१५१) सरस्वतीकण्ठाभरणम् (१६१),
६ महिमभट्टः (न्यायाचार्यव्यक्तिविवेककृत् (२९५)
७ रससुधासागरः (१३३)

एतानपि नाम्नोद्दिशति । महाभाष्यं (४९) वाक्यपदीयम् ( १३ ) वैयाकरणभूषणम् (१३) छन्दःशास्त्राणि च कानिचित् सुधासागरे कीर्त्तितनामानि । भाम-

द्दोद्भटवामनेषु तद्ग्रन्थेषु चायं बद्धमौनः। वक्रोक्तिजीवितमपि नासौ स्मरति। एवं हि शब्दव्याख्यानपर एष न तु साहित्यसंप्रदायशुद्धिपरः।

भीमसेनदीक्षितमते शब्दस्य व्यञ्जनाख्यया शब्दशक्त्यापि ब्रह्मणः साक्षात्कारः संभवति (टीकान्ते)। ततश्च काव्यवर्त्मनि परमस्यापि पुरुषार्थस्य दर्शनमनेन क्रियते। सेयमस्य महामतेर्महत्तमा चित्तभूमिः काव्यालोचने।

ते इमे उभे अपि टीकारत्ने बहोः कालाददुर्लभायन्त। तयोरेनयोः पुनः प्रकाशनं चिरं प्रत्यैक्ष्यत। सेयं प्रतीक्षा प्रकाशमेवानेन शाम्यति।

अस्य संस्करणस्याधारः साहित्यचूडामणेः कृते त्रिवेन्द्रमतः सुधासागरस्य च कृते वाराणसीतः प्रकाशितं संस्करणम्। अनयोर्बहुत्र संशोधनान्यपि कृतानि। तानि पाण्डुलिपिभ्यः प्रमाणयिष्यन्त एवेति नाबलीयानस्माकं प्रत्ययः। आफ्रेचस्य राघवस्य च पाण्डुग्रन्थसूचीपत्रे साहित्यचूडामणेः कतिचन नूतना अपि हस्तलेखा दत्त-विवरणाः। समीक्षकास्तानत्र शीलयेयुः। सुधासागरस्य च हस्तलेखाः साम्प्रतमपि प्रतीक्षाविषयाः।

मूलमत्र साहित्यचूडामणिपाठमनुसृत्य क्वचित् परिवर्त्तितम्। अन्यत्र पुनः पूनामुद्रितं वामनाचार्यस्वीकृतमेवामूलमत्रोपादायि।

अनयोर्मुद्रणे श्रीजगदीशचतुर्वेदः, श्रीकपिलदेवगिरिश्चेति द्वाभ्यां विद्वद्भ्यां भूरि पर्यश्रामि। विश्वविद्यालयमुद्रणालयोऽपि कार्येऽस्मिन्नजागरूकायत पर्यपूरयत चामुं कार्ययज्ञं निष्कालव्ययम्। अस्याः प्रकाशनयोजनायाः संपादकमण्डलस्य सदस्या डा० राजमोहनोपाध्यायाः (संप्रति संकायस्य प्रमुखाः), डा० सीतारामशास्त्रिणः, पं० श्रीराजेन्द्रप्रसादपाण्डेयाश्च साहाय्यातिरेकेण कार्यमिदं समपादयन्त। त एते सर्वेऽपि मम धन्यवादपात्राणि।

धन्यो मम्मटपण्डितो, विरचितः काव्यप्रकाशाह्वयो
येनाचान्तसमस्तपूर्वकृतिनालङ्कार एषोऽद्भुतः।
यस्मादीश्वरवादिनामिव महामेधाविनां बुद्धयः
श्रद्धाकण्ठितसन्धयो न दधते काव्याश्रमे चापलम्॥

—इति निवेद्य कार्यस्यास्य साफल्यं भगवन्तं काशीपतिं याचे—

१५-९-८१ काश्यपो द्विवेदी रेवाप्रसादः

# विषय-सूची

———

# ग्रन्थनामसंक्षेपाः

## ABBREVIATIONS

| | |
|---|---|
| अ० सू० | अलङ्कारसूत्रम् (रुय्यकस्य) |
| | अष्टाध्यायीसूत्रम् (पाणिनेः) |
| ई० प्र०/ईश्वरप्र० | ईश्वरप्रत्यभिज्ञा (उत्पलस्य) |
| उ० रा० | उत्तररामचरितम् (भवभूतेः) |
| का० अनु० | काव्यानुशासनम् (हेमचन्द्रस्य) |
| का० अ० सू० | काव्यालङ्कारसूत्रम् (वामनस्य) |
| का० प्र० | काव्यप्रकाशः (मम्मटस्य) |
| का० सा० | काव्यालङ्कारसारः (उद्भटस्य) |
| का० सा० सं० | काव्यालङ्कारसारसंग्रहः (उद्भटस्य) |
| का० सू० | काव्यालङ्कारसूत्रम् (वामनस्य) |
| का० सू० वृ० | काव्यालङ्कारसूत्रवृत्तिः (वामनस्य) |
| दश०/दशरूप० | दशरूपकम् (धनञ्जयस्य) |
| ध्व० | ध्वन्यालोकः (आनन्दवर्धनस्य) |
| ना० शा० | नाट्यशास्त्रम् (भरतस्य) |
| प०/परि० | परिकरश्लोकाः |
| प्र० वा०/प्रमाणवा० | प्रमाणवार्त्तिकम् (धर्मकीर्त्तेः) |
| भा० का० | भामहस्य काव्यालङ्कारः |
| मी० द० | मीमांसादर्शनम् (जैमिनेः) |
| यो० सू० | योगसूत्रम् (पतञ्जलेः) |
| व० जी० | वक्रोक्तिजीवितम् (कुन्तकस्य) |
| वा०/वा० प०/वाक्यप० | वाक्यपदीयम् (भर्तृहरेः) |
| वृ० | वृत्तिः |
| व्य० वि/व्यक्तिवि० | व्यक्तिविवेकः (महिमभट्टस्य) |
| व्यक्तिवि० पृ० | व्यक्तिविवेकस्य अस्माकं संस्करणपृष्ठसंख्या |
| श्लोकवा० | श्लोकवार्त्तिकम् (कुमारिलस्य) |
| सं० | संग्रहकारिका |
| सं० | संपादकः (२२४ टिप्पण्याम्) |
| स० कं० | सरस्वतीकण्ठाभरणम् (भोजस्य) |
| सा० चू० | साहित्यचूडामणिः (भट्टगोपालस्य) |

अथ

राजानक-श्रीमम्मटाचार्य-विरचितः

# काव्यप्रकाशः

## प्रथम उल्लासः

ग्रन्थारम्भे विघ्नविघाताय समुचितेष्टदेवतां ग्रन्थकृत् परामृशति—

नियतिकृतनियमरहितां ह्लादैकमयीमनन्यपरतन्त्राम् ।
नवरसरुचिरां निर्मितिमादधती भारती कवेर्जयति ॥१॥

नियतिशक्त्या नियतरूपा सुखदुःखमोहस्वभावा परमाण्वाद्युपादान-कर्मादिसहकारि-कारणपरतन्त्रा, षड्रसा, न च हृद्यैव तैः, तादृशी ब्रह्मणो निर्मितिर्निर्माणम् । एतद्विलक्षणा तु कविवाङ्निर्मितिः । अत एव जयति । जयत्यर्थेन च नमस्कार आक्षिप्यत इति तां प्रत्यस्मि प्रणत इति लभ्यते ॥१॥

### भट्ट-गोपाल-कृतः

### साहित्यचूडामणिः

ब्रह्म-स्तम्ब-कुटुम्ब-संघटितयोरग्राम्यभोगोत्सवं
साहित्यं शिवयोः प्ररोहयतु नः सौहित्यमव्याहतम् ।
यत्रान्योन्यमुखावलोकनसुखं संपद्यते सस्मितं
मङ्गल्ये मणिदर्पणे महति चायोगे विमर्शोत्तरे ॥१॥
भद्रं पक्ष्मलयन्तु वो नरहरेरक्षुद्रशौर्या नखाः
स्तोकोन्मुद्रितपारिभद्रकलिकापाण्डित्यपाटच्चराः ।
ये गर्वोच्छ्वसदिन्दिरास्तनतटीकाठिन्यसर्वंसहाः
क्रीडाकैतकपत्रलेखमलिखन्नेकातपत्रं द्विषाम् ॥२॥

श्रीभीमसेन-विरचितः

### सुधासागरः

जाग्रत्त्रैलोक्यराज्योद्भवविभवपरीरम्भसम्भाविताङ्घ्रि-
क्षीराकूपारकन्याललितकरतलोन्मृष्टपादारविन्दम् ।
काञ्चीश्रीवत्सहाराङ्गदमुकुटलसत्कौस्तुभोद्भासिताङ्गं
लक्ष्मीकान्तं प्रसन्नं हृदयसरसिजान्तःस्थितं संस्मरामि ॥१॥
श्रीमच्छाण्डिल्यवंशे कृतविविधमखः कीर्त्तिमान् दीक्षितोऽभूद्
गङ्गादासः प्रसिद्धः सुरगुरुसदृशः कान्यकुब्जाग्रगण्यः ।
तस्माद् वीरेश्वराख्यस्तनय इह महाभाग्यवान् विष्णुभक्तो
जातः संकीर्त्तनीयः सकलबुधजनैर्भूपतीनां सभासु ॥२॥

## साहित्यचूडामणिः

प्रणौमि क्वणदोङ्कारमणिघण्टाविभूषिताम् ।
कविलोककुटुम्बस्य कामधेनुं सरस्वतीम् ॥३॥

अद्वितीय—सुखोल्लेखामवधूतनियन्त्रणाम् ।
सर्वंसहचमत्कारां सृष्टिं सारस्वतीं स्तुमः ॥४॥

जयन्ति कृतिनः सन्तो देशान्तरमहाद्रुमाः ।
चारु सारस्वतं येषां कर्पूरमिव पच्यते ॥५॥

शिक्षयन्नद्भुतां रेखां 'काव्यादर्श–'लिपिक्रमे ।
मध्ये मध्ये महाचार्यो दण्डी भीषयते कवीन् ॥६॥

वामनस्य तदुत्तुङ्गं पदमुन्नतिशालिनः ।
प्रसूते पावनीं वृत्तिं गङ्गामिव कविप्रियाम् ॥७॥

## सुधासागरः

तस्माच्छ्रीमुरलीधरो हि कवितापाण्डित्यपुण्यावधि-
र्जातस्तस्य सुतौ त्रिलोचनशिवानन्दो गुणैस्तत्समौ ।
शैवे वा पथि वैष्णवे समरसः श्रीमच्छिवानन्दतः
सञ्जातः किल भीमसेन इति सद्विद्याविनोदी कविः ॥३॥

शब्दब्रह्म सनातनं न विदितं शास्त्रैः क्वचित् केनचित्
तद्देवी हि सरस्वती स्वयमभूत् कश्मीरदेशे पुमान् ।
श्रीमज्जैयटगेहिनीसुजठराज्जन्माऽऽप्य युग्मानुजः
श्रीमन्मम्मटसंज्ञया श्रिततनुं सारस्वतों सूचयन् ॥४॥

मर्यादां किल पालयन् शिवपुरीं गत्वा प्रपठ्यादरा-
च्छास्त्रं सर्वजनोपकाररसिकः साहित्यसूत्रं व्यधात् ।
तद्वृत्तिं च विरच्य गूढमकरोत् काव्यप्रकाशं स्फुटं
वैदग्ध्यैकनिदानमर्थिषु चतुर्वर्गप्रदं सेवनात् ॥५॥

कस्तस्य स्तुतिमाचरेत् कविरहो को वा गुणान् वेदितुं
शक्तः स्यात्किल मम्मटस्य भुवने वाग्देवतारूपिणः ।
श्रीमान् कैयट औवटो ह्यवरजो यच्छात्रतामागतो
भाष्याब्धिं निगमं यथाक्रममनुव्याख्याय सिद्धिं गतः ॥६॥

काव्यं वर्णद्वयं यद्विवृतिमुपगतं सर्वशास्त्रार्थसारो-
द्धारं कुर्वद् रसेन श्रुतिगतमपि दुर्ज्ञेयमाद्यं व्यनक्ति ।
सा देवी मम्मटाख्या निजविकटकृतिव्याकृतिव्याकुलं मां
मज्जन्तं मोहसिन्धौ परमकरुणया प्राप्तपारं करोतु ॥७॥

## साहित्यचूडामणिः

वक्रानुरञ्जनीमुक्तिं चञ्चूमिव मुखे वहन् ।
कुन्तकः क्रीडति सुखं कीर्त्तिस्फटिकपञ्जरे ॥८॥
उद्भटेनापि नम्रेण नायकेनोपलालितः ।
हृद्यो भाम इव स्त्रीणामल्पारम्भोऽपि भामहः ॥९॥
अतिलोकमलङ्कारमाबिभ्रदमृतस्रुतम् ।
आर्यानुरागी सर्वज्ञः सत्यं रुद्रः स रुद्रटः ॥१०॥
भारतस्य प्रयोगस्य प्रणेता शिक्षितोत्तरः ।
वसत्यज्ञातमद्यापि स्त्रीव शोच्यो धनञ्जयः ॥११॥
पक्षपातेन रमते राजहंसो विवेकवान् ।
महतां मानसाम्भोजे भोजः कीर्त्या विशुद्धया ॥१२॥

## सुधासागरः

वन्दे श्रीकृष्णपादाम्बुज-युगलमघव्यूह-विध्वंसदक्षं
दृष्टं प्रोक्तं श्रुतं वा स्मृतमपि रचयत्येव यन्मङ्गलानि ।
यस्मिन्नाधाय चित्तं सरलमिव विविच्याशु साहित्यसारं
ज्ञातुं शक्नोमि यस्मान्न च चलति मनाङ् मे मनोऽन्यत्र जातु ॥८॥
काऽहं मन्दमतिः क्व चाऽतिगहनः काव्यप्रकाशाभिधो
ग्रन्थः कुत्र सहायता कलियुगे कुत्रास्ति शिष्टादरः ।
युक्तो नैव महाप्रबन्धरटने यत्नस्तथापि ध्रुवं
श्रीकृष्णाङ्घ्रिसरोजसेवनपरः शक्नेन किञ्चित् क्वचित् ॥९॥
वन्देऽहं गजवक्त्रमिन्दुविलसद्भालं विशालोदरं
सिन्दूरारुणमस्तकं फणिफणाकल्पैरनल्पैर्युतम् ।
शुण्डादण्डविराजमानविपुलोद्यद्दन्तकाण्डोज्ज्वल
विघ्नध्वंसकरं भयार्तशरणं सिद्ध्यै गणानां पतिम् ॥१०॥
येनाऽज्ञानमहान्धकारपटली प्रोत्सारिता सूक्तिभि-
र्यद्ध्यानात् स्फुरदद्भुतैकरचनापाण्डित्यपीठेऽनिशम् ।
जिह्वा नृत्यति नर्तकीव शतधा नानारसैः सादरं
वन्दे तच्चरणारविन्दयुगलं श्रीमद्गुरूणामहम् ॥११॥
सार्द्धं रक्तमनञ्जनं हि नयनं सार्द्धं पुनः साञ्जनं
केशार्द्धं तु जटीकृतं तदपरं वेणीकृतं राजते ।
श्रोत्रं रत्नविभूषितं तदपरं रुद्राक्षमालाधरं
वक्षो वामकुचोन्नतं वपुरहो गौरं सितं चाभित. ॥१२॥

## साहित्यचूडामणिः

लोचनेनैव जानन्ति लोके ये केचन ध्वनिम् ।
भुजङ्गा इव ते किन्तु वमन्त्यमृतमाननैः ॥१३
रसामृतनदीमग्ने ध्वनिकारे महागुरौ ।
अनुमायापि महिमा काव्यगोष्ठीं न मुञ्चति ॥१४॥
तावदुद्घाट्यते तत्र यावद् यत्रोपपुज्यते ।
नहि रत्नपरीक्षायां पाणौ सामुद्रलक्षणम् ॥१५
प्रसङ्गानुप्रसङ्गेन कुत्र संगच्छते न किम् ।
मृत्तिकापि कुलालस्य ब्रह्मविद्यां विगाहते ॥१६॥
उपोद्घातो विवेकश्च वृत्तेः शब्दार्थयोर्द्वयोः ।
श्रेष्ठमध्यकनिष्ठानां [1]काव्यानामनुशासनम् ॥१७
दोषाणां निस्तुषा चिन्ता गुणत्रयविनिर्णयः ।
वागर्थभूषा-शिक्षेति दशोल्लासा इह क्रमात् ॥१८

## सुधासागरः

सव्ये पाणितले कपालमतुलं वामे लसत्पङ्कजं
मञ्जीरध्वनिमञ्जुलो हि चरणः फूत्कारभृच्चाऽपरः ।
गोसिंहावपि सोदराविव सदा धत्तस्तदङ्घ्रिद्वयं
यस्येयं परमाऽद्भुताङ्गरचना तस्मै नमो ब्रह्मणे ॥१३॥
शक्यः पण्डितमानिनां न विजयः साक्षात्कथंचित्सुरा-
चार्येणापि पुनः सतामनुचितः प्रौढा च वाग्देवता ।
इत्यालोच्य विवादबुद्धिविधुरो गर्विष्ठगर्वापहं
गूढं विद्वदमन्दसंमदपदं कुर्वे सुधासागरम् ॥१४॥
यच्छास्त्रेषु परिश्रमोऽस्ति मम यद्भक्त्या च देवार्चनं
यत्पुण्यं च तपश्च काव्यमपि यद् यद्वंशशुद्धिः परा ।
यद्गोविन्द-पदारविन्द-भजनान्नैर्मल्यमन्तःस्थितं
सन्तः साधु परीक्षयन्तु कृपया सर्वं तदत्र स्फुटम् ॥१५॥
नो किञ्चित्पठितं स्मरामि न च मे शक्तिः पुनस्तादृशी
नो वा कोऽपि सहायतामुपगतो नाऽप्यस्ति किञ्चिद्बलम् ।
सङ्गी चोरशिरोमणेः प्रतिदिनं गृह्णाम्यनर्घ्यान् गुणान्
सर्वस्यापि परन्तु मां द्विषति यस्तस्याशु नाक्री गतिः ॥१६॥
व्याख्यातं हि पुराऽत्र यैः सुकवयः सर्वे महापण्डिता—
स्ते वन्द्याः सुतरां न तेषु मम कोऽप्यस्त्याग्रहः स्पर्द्धितुम् ।
किन्तु ग्रन्थसहस्रसारमपि यद्वृत्त्या विरुद्धं वच—
स्तत् क्षन्तुं न समुत्सहे न च पुनर्भीतिः सुरेज्यादपि ॥१७॥

---

[1] कार्याणामिति मूले ।

## साहित्यचूडामणिः

ध्वनिमर्यादया यत्र काव्यस्यार्थः परीक्ष्यते ।
उल्लेखं काञ्चनस्येव निकषोपलरेखया ॥१९॥
कुशलस्य क्रियौचित्यं खलेन यदि शिक्ष्यते ।
बिम्बमप्यम्बरमणेर्भस्मना परिशोध्यताम् ॥२०॥

अथ वृत्तिकारः स्वकर्तृकाः कारिकाः परीक्षितुकामो विशिष्टविद्वज्जनानुष्ठितमादिवाक्यवर्त्तिनं मङ्गल्यमितिकर्त्तव्यताविशेषं परस्य व्याख्यातुं पीठिकां प्रतिष्ठापयति 'ग्रन्थारम्भ' इति ।

इष्टदेवतानमस्कारः शिष्टप्रयुक्तो मङ्गलाचार इत्येतावन्मात्र-संतुष्ट-खण्डिकोपाध्याय-प्रस्थानातिक्रमेणाह—'समुचिते'—ति । अभिमतविषयत्वाद् इष्टत्वमविगीतम् । समुचितत्वं तु काव्यलक्षणारम्भे सरस्वतीलक्षणायाः [ देवतायाः ] प्रणन्तव्यत्वात् ।

'परामृशति' अनुसन्धत्ते । परामर्शो नाम विश्वव्यवहारप्रथमनिबन्धनस्य प्रकाशस्य प्राणप्रदायी स्फटिकमुकुराद्यवच्छिन्न प्रकाशसाधारण-जडिम-दोष-प्रसङ्ग-विघटन-पटिष्ठः पारमार्थिक-पुरुषार्थोपयोगी स्वभावः । उक्तं हि—

स्वभावमवभासस्य विमर्शं विदुरन्यथा ।
प्रकाशोऽर्थोपरक्तोऽपि स्फटिकादिजडोपमः ॥ [ई० प्र० १.५.११] इति ॥

तन्मयः प्रणाम-परिचर्या-प्रभृतिरखिलो देवतोपचार इत्यभियुक्ताः ।

विघ्नन्त्यभिप्रायमिति 'विघ्ना' आध्यात्मिकादयो भावविशेषास्तदधिष्ठातारो भूतविशेषाश्च । तेषां 'विघातं' व्युदासं संपादयितुम् ।

## सुधासागरः

अभ्यासः पञ्चमाब्दात् सकलसुखपरित्यागपूर्वं कृतो यो
नानाशास्त्रेषु नित्यं निशिततरधियाऽत्यन्तरागाऽनुवृत्त्या ।
तस्येदानीं फलं मे भवतु सहृदयस्वान्तसन्तोषकारि
श्रीमत्काव्यप्रकाशोज्ज्वलविवृतिमयं श्रीसुधागराख्यम् ॥१८॥

अथ श्रीमम्मटाचार्यः स्वकृतकाव्यरूपसूत्रारम्भरचितं स्वस्वरूपसूचकं मङ्गलं स्वकीयमनुस्मरन्नाह 'ग्रन्थारम्भ' इति ।

अत्र सूत्रकारो वृत्तिकारश्चैक एवेति तत्त्वम् । उक्तञ्च प्रागस्माभिर्ग्रन्थकारवर्णनायाम् । नचैतावता निर्मूलत्वापत्तिः । वामनभरतादिभिरप्येतद्विषये सूत्रितत्वात् । किञ्च नाऽयमाचार्यो मानुषः किन्तु वाग्देवतैव । प्रमाणन्तु ग्रन्थस्याऽलौकिकत्वम् । ग्रन्थत्वं तावत् प्रतिपाद्यप्रतिपादकभावप्रयोजनबोधाधीनशुश्रूषाजन्यश्रुतिविषयशब्दसन्दर्भत्वम् । आरभ्यतेऽस्मिन्नित्यारम्भोऽव्यवहितप्राक्कालः । विशिष्टो घातो विघातः । समाप्त्ययोगव्यवच्छेदो वैशिष्ट्यम् । समुचितेत्यादिकर्मधारयद्वयगर्भः समासः । औचित्यं प्रकृतानुकूल्यम् । इष्टत्वमुपास्यत्वम् । देवतापदेन

## साहित्यचूडामणिः

व्यतिरेकं व्याख्यातुमन्वयमुखेनोपक्रमते – नियतिशक्त्येति। नियतिस्तत्त्वविशेष एव शक्तिः अर्थादीश्वरस्य, तया नियतमन्योन्यासङ्कीर्णव्यवहारतया व्यवस्थापितं रूपमाकारो यस्याः। एतेन 'कृत'–शब्दो व्याख्यातः, प्रयोगकरणभूतायाः पारमेश्वर्या नियतेः प्रयोज्यस्वभावस्य नियमस्य च पृथगुपादातव्यत्वात्। अन्यथा प्रमुख एव पुनरुक्तप्रायग्रन्थघट्टोल्लङ्घनप्रयासः। सत्त्वरजस्तमःप्रयोज्याश्चित्तवृत्तयः सुखदुःखमोहाः, येषु सांसारिकव्यवहारः पर्यवस्यति। यथोक्तं 'संविन्मार्गोऽयमाह्लाददुःखमोहैस्त्रिधा स्मृत' इति। स्वभावशब्देन मयडर्थं व्याचष्टे। ह्लादः स्वविश्रान्तिलक्षण आनन्द एकः प्रकृतो यस्याम्। परमाण्वादीत्यत्रादिपदेन दर्शनभेदाद् ब्रह्मप्रधानप्रभृति परिगृह्यते। 'कर्मादी'त्यत्र देशकालादि। 'उपादानं' समवायिकारणम्। नन्वनन्यतन्त्रामित्येतावदुच्यताम्, अपरतन्त्राम् इति वा, किमुभयोरुपादानेनेति चेत्, सत्यम्। अन्यथा काव्यसृष्टौ कवेः परतन्त्रीकृताशेषविभावादिप्रपञ्चं स्वातन्त्र्यमनुद्रेचितं स्यात्। तथोक्तम्—

## सुधासागरः

कारिकास्थभारतीपदस्य वाक्यपरत्वव्युदासो व्यज्यते। ग्रन्थकृदिति योग्यः पुरुषः। परामृशति परामर्शविषयीकरोति स्तौतीति यावत्। एवं च ग्रन्थस्यारम्भे प्रागव्यवहितकाले विघ्नविघाताय समाप्त्ययोगव्यवच्छेदपर्यवसन्नप्रारिप्सितप्रतिबन्धकदुरितध्वंसाय समुचितेष्टदेवतां परमचातुर्यसम्पादनेन सकलशास्त्रसारभूतविलक्षणरसग्रन्थानुगुणां सेव्यां च देवतां भारतीं ग्रन्थकृत् प्रतिभावत्त्वेनाऽलौकिकग्रन्थोत्पादनसमर्थः कश्चिन्महापुरुषः परामृशति 'आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुख'मितिवृद्धवचनादलौकिकव्यञ्जनावृत्तिमहिम्ना प्रणामात्मकं मङ्गलमावेदयन् स्तौतीत्यर्थः।

सर्वोत्कृष्टत्वं किल जयत्यर्थः। नचासावत्र विवक्षामात्रेण किन्तु युक्त्या। युक्तिस्तु परमोत्कृष्टोपमानादाधिक्यमिति। सृष्टिकर्तृत्वेनोत्कृष्टतरविधातृनिर्मितिं जेतव्यत्वेन वृत्तिकृद् वर्णयति नियतीत्यादि।

नियम्यन्ते सौरभादयो धर्मा अनेनेति नियतिरसाधारणः पद्मत्वादिरूपो धर्मः। वस्तुतस्तु नियतिरदृष्टम्। रूढिर्योगमपहरतीति न्यायात्। कृतेत्यस्य विवरणं शक्त्येति। कारणतायाः शक्तिरूपत्वात्। शक्तिजन्यत्वं तेन नियतरूपेति कश्चित्। तत्तुच्छम्। कार्यमात्रस्यादृष्टजन्यत्वात्। न च शब्दार्थोभयरूपकाव्ये ऽर्थस्य नित्यतयाऽजन्यत्वाद्युक्तमेवैतदिति वाच्यम्। ब्रह्मनिर्मितावर्थस्य नित्यत्वेन प्रसिद्धत्वेऽपि कविनिर्मितौ लोकोत्तरविभावादिरूपतया जन्यत्वाद् व्यतिरेकाऽसिद्धेः।

केचित्तु शक्तिरत्र प्रयोज्यता। तथा च नियतिप्रयोज्यो नियमः कमलादौ सौरभविशेषाऽयोगव्यवच्छेदः। चन्द्रादावेव तत्पदप्रयोगाच्चन्द्रत्वादिव्याप्यप्रतीत्या व्यापकीभूताह्लादकत्वाद्यवगमादिरूपश्च। तेन नियतरूपा=सनियमा। ईदृङ्नियमराहित्यं कविनिर्मितौ स्फुटमेव। कामिनीवदनसन्निधौ तेष्वपि तदभाववर्णना-

## साहित्यचूडामणिः

अपारे काव्यसंसारे कविरेकः प्रजापतिः।
यथास्मै रोचते विश्वं तथेदं परिवर्तते ॥ [ध्व० ३।४२] इति।

यदाह ध्वनिकारः—

भावानचेतनानपि चेतनवच्चेतनानचेतनवत्।
व्यवहारयति यथेच्छं सुकविः काव्ये स्वतन्त्रतया ॥ [ध्व० ३।४२ वृ०]

इति। अन्यत्र परतन्त्रा न भवति, किन्तु कविविषय एव। असूर्यंपश्या इतिवत् समासः। 'नचे'ति। एकविधिर्द्विविधिस्त्रिविधिरिति (पञ्चम उल्लासे) वक्ष्यमाणया युक्त्या नवसंख्याकत्वं रसानां तत्प्रयुक्ता सृष्टेः स्पृहणीयतरता च विधीयते रक्तं पटं वयेतिवत्। भोक्तॄणामभिलाषभेदात् अम्लादौ कश्चिदेव कस्मैचित् रोचते, न सर्वः सर्वस्मै। तादृशी नियतिनियमान्वितेत्यादिरूपा।

व्याख्यातमन्वयं व्यतिरेके विश्रमयति—'एतद्विलक्षणे'-ति। कविवाङ्-निर्मितिरिति समासेन कारिकावतलं व्यासं व्याचष्टे। अन्यथा योजनान्तरमन-भिलषितमपि शक्यसमर्थनं स्यात्—'किं कवेर्निर्मितिं कुर्वाणा भारती जयति उत

## सुधासागरः

न्मुखादावपि चन्द्रादिपदप्रयोगात्तदवगमाच्चेत्याहुः। तदपि न सम्यक्। मुखादावाह्लाद-कत्वाद्यवगमस्य प्रयोज्यत्वान्नियमाऽप्रच्यवात्।

अत्रेदं तत्त्वम्। शक्तिर्निरूप्यता। तथा च नियतिनिरूप्यो नियमः स्रष्टुः कमलाद्यात्मकनिर्माणे जलाद्ययोगव्यवच्छेदरूपः। तेन नियतरूपा। एतद्राहित्यस्य कवेरनिर्वचनीयकमलाद्यात्मकनिर्माणे सत्त्वान्न दोषलेशावकाशः।

विश्वस्य सुखदुःखमोहात्मकसत्त्वरजस्तमोलक्षणगुणत्रयात्मकत्वात्। उक्तञ्च साङ्ख्ये 'सर्वे त्रिगुणा भावाः' इति। अयमाशयः। ब्रह्मनिर्मितौ यथैकैव काचित्कामिनी रूपयौवनवस्त्रालङ्कारस्रक्चन्दनादिसम्प्रतिपन्ना स्वस्वामिनं सुखयति तं प्रति तस्याः सुखरूपसत्त्वसम्बन्धित्वात्। सैव सपत्नीर्दुःखाकरोति ताः प्रति तस्याः दुःखरूपरजः-सम्बन्धित्वात्। सैव च तामविन्दन्तं तरुणान्तरं मोहयति तं प्रति तस्या मोहरूपतमः-सम्बन्धित्वात्। एवं रीत्या सर्वे लौकिकपदार्थाः सुखदुःखमोहजनकाः। कविनिर्मितौ तु नैवम्। सर्वस्यापि काव्यपदार्थस्याऽऽनन्दहेतुत्वादिति।

परमाण्वादि यत् समवायिकारणं तदीयश्च यः स्पन्दस्तत्प्रभृतिसहकारिकारणा-धीनेत्यर्थः। नानाविधसमवाय्यसमवायिनिमित्तकारणायत्तेति यावत्।

मधुराम्ललवणकटुकषायतिक्ताख्याः षड् रसा यस्यां सा तादृशी।

षड्भी रसैर्न मनोरमैव कट्वादीनां प्रायेणाहृद्यत्वात्। शृङ्गारादीनामलौकिक-सुखजनकत्वेनैकरूपतया सर्वान् प्रतिपत्तॄन् प्रति हृद्यत्वमेव। मधुरादीनां तु परस्पर-वैलक्षण्येन कञ्चित् प्रति क्वचित् कस्यचिदेव हृद्यत्वमिति भावः।

## साहित्यचूडामणिः

यथोक्तां निर्मितिं कुर्वाणा कविसम्बन्धिनी भारती'-ति । एवं कारकप्रपञ्चं परीक्ष्य तं क्रियाभागे घटयति—'अत'इति । यत एतदीया सृष्टिर्नियतिनियन्त्रणातिक्रान्ता, यतः सुखैकस्वभावा, यतः परतन्त्रवार्तानभिज्ञा, यतश्च शृङ्गाराद्यलौकिकविविधरसवैचित्र्यचारुचमत्कारा, अत एव जयति । सर्वोत्कर्षो हि जयतेरकर्मकस्यार्थः । ततश्च किं फलं सम्पन्नमित्यत आह—जयत्यर्थेनेति । उपास्यदेवतोत्कर्षो हि न क्वचिदुपासकजनप्रह्वीभावमन्तरेणावतिष्ठते । एवम् इत्यादावेतद्विपर्ययः पर्यालोचनीयः ॥१॥

अथ सर्वाकारस्वीकार्यामभिधेयस्य प्रयोजनवत्तां प्ररोचयति—इहेति । काव्यं खल्वत्र प्रकरणेऽभिधेयम् । प्रकरणशास्त्रकाव्ययोर्यथाशास्त्रमभिधानाभिधेयभावः सम्बन्धः । काव्यप्रयोजनयोः कार्यकारणभावः । श्रोतृवक्त्रोर्व्युत्पाद्यव्युत्पादकभावः । काव्यस्वरूपपरिज्ञानं प्रयोजनं, तस्य च प्रयोजनं काव्यत्वरूपलाभः तस्यापि प्रयोजनम् अनन्तरमनुक्रंस्यमानाः कीर्त्यादयः । तदुपरि न प्रयोजनम् , अपेक्षाया अभावात् ।

## सुधासागरः

निर्मितिरूपक्रियायां नियतीत्यादि-विशेषणाऽसम्भवान्मूलस्थ—निर्मिति-पदं विवृणोति निर्माणमिति । निर्मीयत इति निर्माणं काव्यं जगच्च । कर्मणि ल्युट् ।

श्रीवत्सलाञ्छनभट्टाचार्यास्तु-'ब्रह्मणो निर्मितिर्निर्माणम् , निर्माणमेव न सम्यगित्यर्थ' इति क्रियापरत्वेन पक्षान्तरमाहुः । तत् पदार्थनिश्चयाभावविजृम्भितमिति हेयम् । एतद्विलक्षणा तु कविवाङ्निर्मितिः । एतस्याः प्रदर्शितरूपायाः ब्रह्मनिर्मितेर्विलक्षणा मूलकारिकाप्रतिपादितोत्कृष्टगुणा तु काव्यरूपा सृष्टिरित्यर्थः ।

यदेतादृशनिर्मितिशालिनीत्याक्षेपलभ्योऽर्थः, अत एव परमप्रावीण्यमहिम्नैव जयति सर्वान्तःपातित्वेन ब्रह्माणमपि पराजयते, नत्वन्यथा स्वतः पराभवं करोतीत्येवकार आवश्यकः । पितुः पराभवस्यानौचित्यात् । एवं स्थिते यत् श्रीवत्सलाञ्छनः कश्चित् 'अतएवेत्यत्रैवकारो व्यर्थ इति ध्येयमिति' वृत्तिकारोक्तं वेदाक्षरमिवोद्धर्तुमशक्यमेवकारं न्यायविद्यावागीशभट्टाचार्यपदलब्धाखर्वगर्वेण दूषितवान् तत्सुधीभिः क्षन्तव्यम् । शास्त्रराजस्यैतद्ग्रन्थस्य सागरस्येव दुरवगाहत्वात् । एतद्ग्रन्थमाहात्म्यानभिज्ञतयैवकारोपपत्तिमिच्छद्भिर्गोविन्दमहामहोपाध्यायैस्तु 'अत एव जयति उत्कर्षेण वर्तते नतु वर्ततामित्यर्थः । तथा सत्युत्कर्षस्यासिद्धत्वेन नमस्काराक्षेपकत्वानुपपत्तेः' इति व्याख्यातम् । तत्तुच्छम् । न हि जयतीत्यस्योत्कर्षेण वर्ततामित्यर्थः सम्भवति । नचैतावता एवकारोपपत्तिरिति विभाव्यम् ।

अथ एतद्विलक्षणा त्विति वृत्तिसूचितसूत्रस्थपदार्थान् विवेचयामः । तत्र नियतिकृतनियमरहितामिति व्याख्यातम् । ह्लादैकमयीमिति । ह्लादेनैकमयीमेकस्वभावामानन्दमात्रस्वभावामिति यावत् । ह्लादः सुखम् एकशब्दो मात्रार्थः । मयट् स्वार्थे ।

इहाभिधेयं सप्रयोजनमित्याह—

काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये ।
सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे ॥२॥

कालिदासादीनामिव यशः, श्रीहर्षादेर्धावकादीनामिव धनम्, राजादिगतोचिताचारपरिज्ञानम्, आदित्यादेर्मयूरादीनामिवानर्थनिवारणम्, सकलप्रयोजनमौलिभूतं समनन्तरमेव रसास्वादनसमुद्भूतं विगलितवेद्यान्तरमानन्दम्, प्रभुसम्मितशब्दप्रधानवेदादिशास्त्रेभ्यः सुहृत्सम्मिततात्पर्यवत्पुराणादीतिहासेभ्यश्च शब्दार्थयोर्गुणभावेन रसाङ्गभूतव्यापारप्रवणतया विलक्षणं यत् काव्यं लोकोत्तरवर्णनानिपुणकविकर्म तत् कान्तेव सरसतापादनेनाभिमुखीकृत्य रामादिवद् वर्तितव्यं न रावणादिवदित्युपदेशं च यथायोगं कवेः सहृदयस्य च करोतीति सर्वथा तत्र यतनीयम् ॥२॥

## साहित्यचूडामणिः

काव्यमिति । कृद्विदादयः सम्पदादिक्विबन्ताः पादपूरणमात्रप्रयोजना इत्युत्तानबुद्धयः । न खलु मतिमान् ग्रन्थकृत्—

काव्यं यशसेऽर्थाय व्यवहाराय कुशलेतरक्षतये ।
सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशाय ॥

## सुधासागरः

तज्जनकत्वेन तत्त्वोपचार इति बोध्यम् । अनन्यपरतन्त्रामिति । परपदोपादानादनन्यपरतन्त्रामसाधारण्येनानन्यप्रकाश्यामिति श्रीवत्सलाञ्छनभट्टाचार्याः । तन्न सम्यक् । ब्रह्मनिर्मितेरप्यसाधारण्येनानन्यप्रकाश्यत्वात् । कवेस्तत्प्रतिभायाश्चान्यो य आत्मनः परस्तदायत्तत्वरहितामिति परमार्थः । परतन्त्रशब्द एवायत्तवचन इति कश्चित् । तत्तुच्छम् । तथा सति प्रतिभाया अपि व्यवच्छेदापत्तेः । नवरसरुचिरामिति । नव रसा यस्यां सा नवरसा चासौ रुचिरेति कर्मधारयः । वृत्तौ षड्रसा न च हृद्यैव तैरिति व्यतिरेकद्वयदर्शनात् । अत्र बहुव्रीहेरेव संङ्ख्यापूर्वकत्वान्न द्विगुत्वमिति न नवरसीति प्रयोगापत्तिः । नचैवं हृद्यैव तैरिति हेतूपदर्शनवैयर्थ्यम् । तैः कट्वादिसाधारणैः षड्रसैरुपलक्षिता यतोऽतो न च हृद्यैव तैरिति तदर्थत्वात् । अस्तु वा तृतीयातत्पुरुष एव, नचैवं नवरसीतिरूपप्रसङ्गः । त्रिगुणसचिवइतिवदुपपत्तेः । न च वृत्तिविरोधः । [१]नवरसरुचिरत्वरूपविशिष्टधर्मव्यतिरेकस्तत्रत्यरसेषु नवत्वाभावेनायोगव्यवच्छेदिहृद्यत्वप्रयोजकत्वविरहेण चेति वृत्तिप्रतिपाद्यत्वात् ।

[१] नवत्वं नूतनत्वमपीति श्लेषो नवरसीति प्रयोगे बाधकः ।

## साहित्यचूडामणिः

इति भणितुं न प्रगल्भते। किं तर्हि, अर्थं कर्तुं व्यवहारं वेदयितुम् उपदेशं च योक्तुं प्रभवति काव्यमिति तस्य करणीयज्ञापनीयाद्यनेकार्थक्रियासामर्थ्यं समर्थ्यत इत्यलं कोमलहृदयकविजनकदर्थनेन। यशसे यशः प्रख्यापयितुम्। शिवेतरस्यामङ्गलस्य क्षतिं कर्तुम्।

## सुधासागरः

तथा च नियतीत्यादिविशेषणविशिष्टां निर्मितिमादधती विशिष्टपाकसृष्टिं कुर्वती कवेर्भारती कविभिराराधनीया सरस्वती जयति सर्वोत्कर्षेण वर्त्तते इत्यर्थः। कवेरित्याराध्याराधकभावे षष्ठी। अनेक-सम्बन्ध-विशेषेषु षष्ठीविधानात्। उक्तञ्च महाभाष्ये 'एकशतं षष्ठ्यर्थाः' इति।

यत्तूक्तं प्रदीपकारैः—'निर्मितिमादधतीति तृणोलपन्यायेन सामान्यविशेषभावान्न पुनरुक्तिः' इति, तद्वृथैव, निर्मितिर्निर्माणमिति व्याकुर्वता वृत्तिकृतैव निर्मितिपदस्य क्रियापरत्वव्युदासात्। अत्र निर्माणव्यतिरेकमुखेन चतुराननात् कविभारत्या व्यतिरेकालङ्कारो व्यङ्ग्य इति लक्ष्यक्रमव्यङ्ग्याऽन्तर्गतोऽलङ्कारध्वनिः।

जयत्यर्थेन वक्तुर्विषयस्य च वैशिष्ट्यान्नमस्कारो व्यज्यते। मत्तस्त्वमुत्कृष्टस्त्वत्तोऽहमपकृष्ट इति नमस्कारार्थत्वात्। व्यञ्जनयैवेति भावः। तथा च वस्तुध्वनिरयम्। नमस्कारहेतुकस्तुतिपरिहारेण नमामीत्यादि स्पष्टं तु नोक्तम्। न खलु नतिमात्रोपनिबन्धे स्तुतिर्निबद्धा भवति स्तुतिनिबन्धे त्वर्थान्नतिरपि निबद्धैवेत्याशयाद् विदग्धानां व्यङ्ग्येनैव व्यवहाराच्चेति बोध्यम्। भारतीविषयककविनिष्ठरतेर्ध्वननाद् भावध्वनिः स्पष्ट एव। स च रसादिलक्षणासंलक्ष्यक्रमव्यङ्ग्यान्तर्गतः। एवं चात्रानन्तानां ध्वनीनां संकलने ध्वनित्रयमेवेति ध्वनितम्। स्फुटीभविष्यति च पञ्चमोल्लासे सर्वोऽपि ध्वनिभेद इति दिक्॥ गीतिश्छन्दः

आर्याप्रथमदलोक्तं यदि कथमपि लक्षणं भवेदुभयोः।
दलयोः कृतयतिशोभां तां गीतिं गीतवान् भुजङ्गेशः॥

इति लक्षणात्। आर्यालक्षणं तु—

यस्याः प्रथमे पादे द्वादशमात्रास्तथा तृतीयेऽपि।
अष्टादश द्वितीये चतुर्थके पञ्चदश सार्या॥ इति।

इयमेव गाथेत्युच्यते। एतल्लक्षणं पिङ्गले यथा—

पढमं बारह मत्ता बीए अट्ठारहेहिं संजुत्ता।
जह पढमं तह तीअं पंचदहविहूसिआ गाहा॥ इति॥ १॥

ग्रन्थेऽभिधेयसम्बन्धप्रयोजनाधिकारिचतुष्टयकथनं युक्तम्। तत्र सम्बन्धः प्रतिपाद्यप्रतिपादकभावः, अधिकारी च तत्फलार्थीति प्रसिद्धमित्यभिधेयं सप्रयोजनं प्रेक्षावत्प्रवृत्त्यर्थं वक्तुमावश्यकमित्यभिप्रेत्य परीक्षणीयतयाऽङ्गिभूतकाव्यस्य फलेन परीक्षणरूपं प्रकृतग्रन्थाभिधेयमङ्गं फलवत्, अङ्गाङ्गिनोरैक्यात्, इति व्यञ्जयन् वृत्तिकृदाह—इहाभिधेयमिति।

## साहित्यचूडामणिः

राजेति। पुरुषार्थव्युत्पत्तिम् अपि फलति। उचितेति। इदमेव काव्यव्यवहारस्य सर्वस्वं, यदौचित्यलक्षणं वस्तु प्रमाणकक्ष्यां निक्षिप्यते। ततश्च रसगोचरमेवेति निश्चयः। सकलप्रयोजनेति। उद्देशक्रमे पार्यन्तिकस्य प्रयोजनयुगलस्य प्राधान्यं प्रख्याप्यते, तत्रापि तत्त्वचिन्तायामानन्दस्य। यतः कीर्त्यादिभिरपि कवेः प्रीतिरेवोत्पाद्या, इतरथा प्रभुसम्मितेभ्यो वेदादिभ्यः सुहृत्सम्मितेभ्यश्च पुराणादिभ्यो व्युत्पत्तिहेतुभ्यः कीदृगस्य कान्तासम्मितत्वरूपो विशेषः। यदाहुः—

धर्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च।
करोति कीर्त्तिं प्रीतिं च साधुकाव्यनिषेवणम्॥ [भा० का० १।२] इति।

सामनन्तर्येण सद्यः-शब्दो व्याक्रियते। परा या लोकातिशायिनी निर्वृतिरानन्दस्तस्यै। विगलितानि जीर्णपर्णप्रक्रियया परित्रुटितानि वेद्यान्तराणि तदेकव्यतिरिक्ताः प्रमेयभागा यत्र। प्रभिवेति। इह खलु सर्वोऽपि वाङ्मय उपदेशहेतुः संक्षेपात् त्रिधा—प्रभुसम्मितः, सुहृत्सम्मितः, कान्तासम्मितश्चेति। तत्र प्रभुणा साम्मित्यं शब्दप्राधान्यात् आज्ञामात्रे तात्पर्यात्, अर्थप्राधान्यान्मित्रेण, उभयस्मिन्नप्यप्राधान्यात् कान्तया। अध्ययनमात्रादभ्युदयनिःश्रेयसश्रवणात्, कचिदपि पाठस्खलनशङ्कायामसदस्यत्वप्रसङ्गात् प्रत्यवायलक्षणामङ्गलश्रवणाच्च वेदानां शब्दार्थयुगलमेलके शाब्द एव भागे प्राधान्यं, नार्थे। इत्थं पुराणानामर्थवादानु-

## सुधासागरः

एवञ्चाभिधेयं काव्यत्वेन परिणतमिति परीक्षणीयफलेनैव परीक्षणं ग्रन्थश्चेत्युभयोरपि प्रयोजनवत्त्वं बोध्यम्। तथा च न वक्ष्यमाणकारिकायां काव्यफलप्रदर्शनमनुपयुक्तमिति शङ्क्यम्॥

काव्यमिति। भवतीति शेषः। गीतिश्छन्दः। लक्षणमुक्तं प्राक्। अत्र कृद्-विद्-युज्-शब्दा भावे क्विबन्ताः। कृदभिहितो भावो द्रव्यवत् प्रकाशते इति भावः। मूलकारिकां दृष्टान्तमुखेन व्याचष्टे—कालिदासेत्यादि।

यशःप्रभृति कर्मपदं वक्ष्यमाणकरोतिपदेन योजनीयम्। न खलु कालिदासस्य पित्रादिकुलं वा कश्चिज्जानाति न वा दानादिकं किञ्चित् प्रसिद्धं येन तादृशं यशः स्यात् किन्तु काव्यमेव तत्कारणम्।

ननु वाल्मीकिव्यासादीनामिवेति वक्तव्ये किं कालिदासादीनामित्युक्तमिति चेत्, सत्यम्। किन्त्वदिव्यप्रकृत्यपेक्षयेदमुक्तम्। दिव्यादिव्यप्रकृतिवाल्मीक्यादीनां तु न काव्यमात्रं यशःकारणमित्यवेहि। आदिपदाद् दण्डिभारविबाणगोवर्द्धनादयो ग्राह्याः। श्रीहर्षाभिधाद् राज्ञः सकाशात् धावककविना रत्नावलीनाटिकां कृत्वा महद् धनमाप्तमिति प्रसिद्धम्। आदिपदाद् भोजप्रबन्धकारिभिर्भोजात्, माघकारिभिर्माघाख्यवैश्याद् बहुतरं धनमाप्तमित्याद्यूह्यम्।

राजादीति। आदिपदाद् राजपुत्रादीनां वर्णाश्रमादीनाञ्च पृथिवीपालनादि तत्तदुचिताचारपरिज्ञानम्।

## साहित्यचूडामणिः

प्राणनत्वादार्थ एवांशे प्राधान्यं न शाब्दे। अनुभयप्रधानं काव्यं, लङ्घनेन ध्वननलक्षणे व्यापारविशेषे तस्य प्रपञ्चयिष्यमाणत्वात् उपजीव्यतया मुख्या येषाम्। एवं पुराणादीत्यत्रापि। अथ क भयोरपि युगपदप्राधान्यम्, एकतरप्राधान्ये तदन्यस्य गुणीभावा शङ्कयाह—रसेति। 'रसादिलक्षणस्त्वर्थः स्वप्नेऽपि न वाच्य' इति रम्भे) वक्ष्यमाणक्रमेण व्यङ्ग्यत्वमात्रस्वभावानां रसानामङ्गभूतः परि व्यापारः व्यञ्जनाकारा शक्तिः तत्र प्रवणता तात्पर्यं तया विलक्षणं सकाशाद् विशिष्टं यत् काव्यम्। यदाहुः [१.५ लोचने]

शब्दप्राधान्यमाश्रित्य तत्र शास्त्रं पृथग्विदुः।
अर्थे तत्त्वेन युक्ते तु वदन्त्याख्यानमेतयोः॥
द्वयोर्गुणत्वे व्यापारप्राधान्ये काव्यधीर्भवेत्॥ इति

व्यापार्यप्राधान्यपर्यवसानाभिलाषादयं व्यापारप्राधान्याभ्युप दशमे चैतदवगमयिष्यते। किञ्च व्यापार-प्राधान्ये व्यापारकः वस्तुचिन्तायां शास्त्रादेरपि काव्यमुखप्रेक्षितया कार्यकारित्वमित्युपनिष

स्वादुकाव्यरसोन्मिश्रं शास्त्रमप्युपयुञ्जते।
प्रथमालीढमधवः पिबन्ति कटु भेषजम्॥ [

## सुधासागरः

आदित्यादेरिति। पुरा किल मयूरशर्मा कविः क्लेशम शाखावलम्बिशतरज्जुशिक्यमधिरूढः सूर्यमस्तौषीत्। एकैकपद्य चिच्छेद। एवं क्रियमाणकाव्यपरितुष्टो रविः सद्य एव नीरोग तत्तनुमकार्षीत्। प्रसिद्धं च तन्मयूरशतकम्। आदिपदाद् राजविशे वधनिवृत्तिश्चौरपञ्चाशिकारूपकाव्यमहिम्नेत्यवधेयम्। एवं काव्यतुष्ट न्तरैरपि कियतामनर्थनिवारणं कृतमिति दिक्। कालिदासादौ र प्राधान्यपुरस्कारेण न तु प्रयोजनान्तरव्यवच्छेदेनेति ज्ञेयम्।

सकलप्रयोजनमौलिभूतमिति। यावन्ति फलानि तेभ्यः इदं च परेत्यस्य व्याख्यानं सद्यइत्यनेनान्वितत्वभ्रमनिरासाय व्युत बोध्यम्। सद्य इत्यस्य विवरणं समनन्तरमेवेति। काव्यश्रवण तु यागादिवद्देहान्तरोत्पादनेन न वा वृक्षारोपणादिवत् कालविलम्बेन हेतुमाह रसास्वादनेति। रस्यते इति व्युत्पत्त्या रसः आस्वाद्य स्वादनं विभावादिसंयोजनं व्यञ्जनं वा, तेन समुद्भूतं प्रादुर्भ तन्मात्रापेक्षित्वेन श्रवणानन्तरमेवेत्युपपद्यते।

ननु विषयोपरक्तचेतसां कथं तत्सम्भव इत्याशङ्क्याह—वि रमिति। काव्यश्रवणस्यैष महिमा यत् तदा वेद्यान्तरं किमपि न भ निर्वृतिपदविवरणमानन्दमिति।

## साहित्यचूडामणिः

इति। प्रसंगात् काव्यशब्दं निर्वक्ति—'लोकोत्तरे'ति। इन्दुमन्दानिलादीनां भावानां या लोकस्वभावातिलङ्घिनी वर्णना शिल्पशालिनी भणितिः अत्र निपुणो व्युत्पन्नः। उक्तं च [का० अनु० १.३]

प्रज्ञा नवनवोन्मेषशालिनी प्रतिभा मता।
तदनुप्राणनाजीवद्वर्णनानिपुणः कविः॥ इति।

कौति शब्दायते विमृशति रसभावादिकमिति कविः, तस्य कर्म।

कान्तयेव वल्लभया सदृशं कृत्वा। तत्र साधर्म्यमाह—सरसेति। सारस्याकारचमत्कारार्पणेनाभिमुखीकृत्य अर्थादुपदेश्यं जनम्, व्यतिरिक्तवस्तुवासनाव्युदासपूर्वकं रसचर्वणामात्रानुप्राणनामुपकल्प्य रामादिवद् वर्तितव्यमित्युपदेशं करोति। तदिदं पुण्ड्रेक्षुभक्षणेन वेतनवित्तलाभो यत् काव्यश्रवणाद् व्युत्पत्तिसिद्धिः। उपायक्रमेण प्रवृत्तस्य सिद्धिः अनुपायद्वारा विनाश इति नायकप्रतिनायकमुखादर्थानर्थोपायव्युत्पत्तिरत्रोपदेश्या। तथाह—.

कटुकौषधवच्छास्त्रमविद्याव्याधिनाशनम्।
आह्लाद्यमृतवत् काव्यमविवेकगदापहम्॥ [व० जी० १.५]

इति। इवशब्दः सम्मितशब्दं व्याकर्तुम्। नायकवद् वर्तितव्यं न प्रतिनायक-

## सुधासागरः

ननूपदेशार्थं नीतिशास्त्राण्येव सन्ति, किं तत्र काव्येनेत्याशङ्क्योक्तम्—कान्तासम्मिततयेति। व्याचष्टे—प्रभिवत्यादि। अयमाशयः। शब्दस्तावत् त्रिधा प्रभुसम्मितः, सुहृत्सम्मितः, कान्तासम्मितश्च। तत्राऽद्यः शब्दप्रधानो वेदादिः शासनप्राधान्येन विधिलक्षणः। स हि प्रभुरिव त्वमेवं कुर्विति समाज्ञापयति। ततश्च नियुक्तः सन्ध्यावन्दनादौ निष्फलेऽपि आज्ञामात्रपालनफलेऽपि वा प्रवर्तते। ननु धर्मशास्त्रे सन्ध्यावन्दनफलमपि बहुविधं श्रूयते, तत्कथं निष्फलमिति चेत्। मैवम्। किञ्चिद्गुणफलं 'खादिरं वीर्यकामस्य यूपं कुर्यात्' इत्यादिवत्, किञ्चित्पृथग्जपविषयं, किञ्चिद्दीर्घसन्ध्याविषयम्, न तु नित्यसन्ध्यायाः किञ्चित्फलमिति सिद्धान्तात्। द्वितीयस्त्वर्थतात्पर्यवान् सिद्धार्थरूपः पुराणेतिहासादिः, स हि सुहृदिव एवं कृते इदमिष्टं भवत्येवंकृते इदमनिष्टमित्येतावन्मात्रं बोधयति, न त्वाज्ञापयति। तृतीयस्तु ताभ्यां विलक्षणो रसप्रधानः काव्यलक्षणः। तत्र हि रसाङ्गभूतो यो व्यापारो विभावादिसंयोजनात्मा व्यञ्जनारूपो वा, तन्निष्पाद्यरसादिव्यक्तिनिष्पादकतया शब्दार्थयोर्द्वयोरपि गुणत्वाद् रसस्यैव प्राधान्यम्।

एवं 'विलक्षणं यत् काव्यमि'-ति। काव्यपदं विवृणोति—लोकोत्तरेत्यादि लोकोत्तरा रसोद्बोधसमर्था या वर्णना तत्र निपुणो यः कविस्तस्य कर्म। एतेन रसोद्बोधजनक ज्ञानविषयतावच्छेदकत्वं लक्ष्यतावच्छेदकमुक्तमिति न तद्दोषाविति वक्ष्यमाणकाव्यलक्षणे पौनरुक्त्यं शङ्क्यम्। ननु 'हायनान्तयुवादिभ्योऽण' इति सूत्रादणि

## साहित्यचूडामणिः

वदित्यन्वयव्यतिरेकाभ्यामुपदेशस्य स्थैर्यमुद्घाट्यते। 'कवेः सहृदर काव्यस्रष्टेर्निर्वाहकौ तयोर्द्वयोरपि। यदुक्तं लोचने—

'सरस्वत्यास्तत्त्वं कविसहृदयाख्यं विजयताम्'

इति। ननु किमुभयोरपि प्रत्येकं प्रयोजनषट्कलाभः? नेत्याह— योगो युक्तिरौचित्यं तमनतिक्रम्य। कीर्तिरर्थोऽनर्थप्रतीकारश्च कवेः परनिर्वृतिः कान्तासम्मितोपदेशश्च सहृदयस्य। प्रक्रान्तं प्रघट्टका 'इती'-ति। एकैकस्मादपि फलाद्, किमुत फलषट्कात्। तस्मिन् ऐहि प्रदायिनि काव्य उद्यन्तव्यम्। यथाहुः—'काव्यं सद् दृष्टादृष्टार्थं प्रीति इति क्रमे—

प्रतिष्ठां काव्यबन्धस्य यशसः सरणिं विदुः।
अकीर्त्तिवर्तनीं चैव कुकवित्वविडम्बनाम्॥
कीर्त्तिं स्वर्गफलामाहुरासंसारं विपश्चितः।
अकीर्त्तिं च निरालोकनरकोद्देशदूतिकाम्॥

[का. सू. वृ. १।

## सुधासागरः

'श्रोत्रियस्य यलोपश्च' इत्यतो यलोपे चानुवर्तमाने 'इगन्ताच्च ल सूत्रेणाऽणप्रत्यये यलोपे च सति शुचेर्भावः कर्म वा शौचं मौनमित्यादि कर्म वा कावमिति प्राप्नोति तत्कथं काव्यमिति। मैवम्। कविश दित्वाद् 'गुणवचनब्राह्मणादिभ्यः कर्मणि च'[2] इति सूत्रेण ष्यञ्विधान काव्यं कान्तासम्मितत्वेनोपदेशं करोति। अयं भावः—

'ये सुकुमारमतयोऽतिसुखिस्वभावा राजकुमारादयो नीरसे प्रवर्त्तयितुमशक्यास्तानपि काव्यं कान्तेव सरसतापादनेनाऽभिमुखीकृत्य गुडजिह्विकया शिशूनिवौषधम्। यदाहुः—

स्वादुकाव्यरसोन्मिश्रं वाक्यार्थमुपभुञ्जते।
प्रथमालीढमधवः पिबन्ति कटु भेषजम्॥

[भा. का.

यथायोगमिति। यशोऽर्थानर्थनिवारणानि कवेरेव। 
सहृदयस्यैव। कवेस्तयोः सिद्धत्वात्। परनिर्वृतिरुभयोरपीत्यर्थः। रामा रामकृतो बालिवधादिर्न ग्राह्यः। रावणकृतं हरपूजनादिकन्तु ग्राह्यम पदेशपदानन्वयात्। इति सर्वथा तत्र यतनीयम्। यत्नस्तु कारणमेव। यत एतावदिष्टविशिष्टं काव्यमतः सर्वथा तद्धेतुरुपादेयः॥२॥

---

१ अ० सू० ५.१,१३०-१३१ २ अ० सू० ५.१.१२४ ३

एवमस्य प्रयोजनमुक्त्वा कारणमाह—

शक्तिर्निपुणता लोकशास्त्रकाव्याद्यवेक्षणात् ।
काव्यज्ञशिक्षयाऽभ्यास इति हेतुस्तदुद्भवे ॥३॥

शक्तिः कवित्वबीजरूपः संस्कारविशेषः, यां विना काव्यं न प्रसरेत्, प्रसृतं वा उपहसनीयं स्यात् । लोकस्य स्थावरजङ्गमात्मक-लोकवृत्तस्य, शास्त्राणां छन्दोव्याकरणाभिधानकोशकलाचतुर्वर्गगज-तुरगखड्गादिलक्षण-ग्रन्थानां, काव्यानां च महाकविसम्बन्धिनाम्, आदिग्रहणादितिहासादीनां च विमर्शनाद् व्युत्पत्तिः । काव्यं कर्तुं विचारयितुं च ये जानन्ति तदुपदेशेन करणे योजने च पौनःपुन्येन प्रवृत्तिरिति त्रयः समुदिता न तु व्यस्तास्तस्य काव्यस्योद्भवे निर्माणे समुल्लासे च हेतुर्न तु हेतवः ॥३॥

## साहित्यचूडामणिः

एवं काव्यस्य प्रयोजनभूतं कार्यमालोच्य कारणसूत्रमासूत्रयति—'अस्ये'–ति ।

कवित्वस्य लोकोत्तरवर्णनानैपुणलक्षणस्य बीजरूपो धानास्थानीयः संस्कार-विशेषः कार्यकल्पनीया काचिद् वासना शक्तिः ।[१] 'उपहसहनीयम्' व्रीडावहम् । यथा [भा० का० १.१२]

नाकवित्वमधर्माय मृतये दण्डनाय वा ।
कुकवित्वं पुनः साक्षान्मृतिमाहुर्मनीषिणः ॥

इति । लोकस्य [२]वृत्तं विचित्रो हेवाकः, यदवलम्बनात् स्वभावोक्त्यतिशयोक्त्यादयोऽलङ्काराः । एवं "लोको विद्याः प्रकीर्णं च काव्याङ्गानी"—[३]ति क्रमेण लोकं व्याख्याय

## सुधासागरः

नन्वेवमप्यभिधेये किमायातम् । किञ्च हेतुमज्ञात्वा तदुपार्जनं कथं स्यादित्य-पेक्षायां काव्यज्ञशिक्षारूपतया काव्याङ्गत्वं ग्रन्थस्य प्रतिपादयन्नेव कारणान्तरमप्या-हेत्यभिप्रेत्याह ।

कारणमित्येकवचनन्तु विशिष्टकाव्यकारणतामादाय शक्तेरुत्कृष्टत्वप्रतिपादनाय चेति बोध्यम् । स्पष्टीभविष्यति चानुपदमेव शक्तेः प्राधान्यम् ।

यत्तूक्तं काव्यप्रदीपकारैः—प्रतिभाव्यपदेश्य इति । तत्तुच्छम् । अनन्यपरतन्त्रा-मित्यत्र कवेस्तत्प्रतिभायाश्चाऽन्यो य आत्मनः पर इति व्याख्यानविरोधात् । न हि

---

१–३ का० अ० सू० १.३.१-५,

## साहित्यचूडामणिः

विद्याः प्रस्तौति—शास्त्राणामिति। छन्दोविचितेर्वृत्तसंशयच्छेदः[१] तद्व्यतिरेके वैतालीयादेरनिर्वाहात्। व्याकरणात् सौशब्द्यनिर्णयः। 'कला'नृत्तगीतादयः। महाकविसम्बन्धिनां कुमारसम्भवादीनाम्। इतिहासादीनामित्यादिग्रहणात् बृहत्कथादि। दण्डापूपिकया रामायणभारतादिपरिग्रहः। काव्यस्य करणम् इदं-प्रथमिकयोन्मीलनं तत्र कवय एव प्रभवः येषु प्रख्यायाः प्राचुर्यम्। विचारणं वैचित्र्येण विमर्शः। तत्र सहृदया एव समर्थाः यत्रोपाख्यायाः प्राधान्यम्। पूर्वं कथापरीक्षा, तत्राधिकारावापः, फलपर्यन्ततानयनं, रसं प्रति जागरणं, विभावादिवर्णनायामलङ्कारौचित्यमिति करणम्।

आधानोद्धरणे तावद् यावद्दोलायते मनः।
पदानां स्थापिते स्थैर्ये हन्त सिद्धा सरस्वती॥
यत् पदानि त्यजन्त्येव परिवृत्तिसहिष्णुताम्।
तं शब्दन्याससनिष्णाताः शब्दपाकं प्रचक्षते॥

[का० अ० सू० १.३ १५ वृ०]

इति विचारणं यद् योजनमित्युच्यते। 'त्रय' इति शक्तिव्युत्पत्त्यभ्यासाः। नत्विति। हेतुरित्येकवचनस्य विवक्षितत्वात्। निर्माणे समुल्लासे चेति। उद्भवशब्दस्य उत्पत्तिः उपरितनं प्रसरणं चार्थ इत्यर्थः यथा भिन्नप्रमेयप्रसर इत्यत्र प्रसरशब्दस्य॥३॥

## सुधासागरः

रसोद्बोधसमर्था कविनिर्मितिः संस्कारमात्रमपेक्षते किन्तु शक्त्यादित्रयम्। एवञ्चैतत्कारणत्रयविशिष्टा धीः प्रतिभा। कवीतरे प्रतिभावत्त्वव्यवहारस्तु स्तुतिपर इति सहृदयैर्ध्येयम्। संस्कारो जन्मान्तरीयाभ्यासाद्देवताप्रसादाद् वा। बीजरूपताऽनुपदमेव स्फुटीभविष्यति। कारणतायां मानमाह—'यां विने-'ति।

अयमाशयः। निपुणतादिकारणान्तरसद्भावेऽप्यनुपहसनीयकाव्यप्रसरस्य कार्यस्याभावः शक्तेः कारतायां प्रमाणम्। स च विशेष्यस्य काव्यप्रसरस्य विशेषणस्यानुपहसनीयत्वस्य वाऽभावात् सर्वत्राविशिष्टः। एवं चानुपहसनीयकाव्यत्वावच्छिन्नं प्रत्येव शक्तिः कारणम्। तद्व्यतिरेकश्च क्वचित् काव्यव्यतिरेकात् क्वचिच्च काव्येऽनुपहसकीयत्वव्यतिरेकादित्यवधेयम्। नचैवं कारणान्तरं किञ्चिदायातु, न तु शक्तिरिति वाच्यम्। प्रसिद्धातिरेकिण्येव तद्धेतौ शक्तिव्यपदेशात्।

लोकपदस्य शक्यार्थमाह—स्थावरजङ्गमात्मकेति। लक्ष्यार्थमाह—लोकवृत्तस्येति। नन्वत्र लक्षणायां किञ्चित्प्रयोजनमिति चेत्। व्युत्पत्तिप्रयोजकत्वमित्यवेहि।

यत्तु सारबोधिनीकारैरुक्तम्—'वृत्तानन्त्येन वर्णनाऽऽनन्त्यं लक्षणाफलम्। अन्यथा धर्मिमात्रवर्णने काव्यं संक्षिप्येत' इति। तन्न मनोरमम्। धर्मिमात्रस्य वर्णनाविषयत्वाभावात् व्युत्पत्त्यनाधायकत्वाच्च। स्थावरत्वं स्वाधीनक्रियाशून्यत्वं, तदितरत्वं जङ्गमत्वं बोध्यम्।

---

[१] का० अ० सू० १.३.६.

## सुधासागरः

शास्त्राणामित्यादि। अभिधानं नामानुशासनम्। कोशस्तु लिङ्गानुशासनम्। यत्तूक्तं सारबोधिनीकारैः—'अभिधानानि नामानि तेषां कोशः संग्रहः' इति। तन्नादरणीयम्। अभिधानकोशस्याऽप्रसिद्धेः चतुर्वर्गाख्यं धर्मार्थकाममोक्षचतुष्टयम्। खड्गादीत्यादिपदेन धनुरादि ग्राह्यम्।

महाकविसम्बधिनां रघुवंशादीनाम्, न तु रामायणादीनाम्। सर्वथाऽऽर्षग्रन्थानुसरणस्यानौचित्यात्। इतिहासादीनामित्यादिपदेन नाटकालङ्काराख्यायिकाचम्पूनाटिकादिभेदा ग्राह्याः। अवेक्षणपदार्थमाह—विमर्शनादिति। सम्यग्विचारादिति भावः।

निपुणतां व्याचष्टे। व्युत्पत्तिरिति। 'काव्यं कर्तुं विचारयितुं च ये जानन्ति तदुपदेशेने'त्यनेन काव्यज्ञशिक्षयेति व्याख्यातम्। अभ्यासपदं विवृणोति करणे योजने च पौनःपुन्येन प्रवृत्तिरिति। इतिशब्दो मिलितोपस्थापनाय। अन्यथा तद्वैयर्थ्यमेव स्यादित्याशयेन मूलस्थमितिपदं विवृणोति। त्रयः समुदिता इति।

ननु तर्हि त्रिफलावद् भिन्नगुणकतया विजातीयांशकरम्बितैकफलोत्पादकत्वमेषां भविष्यतीति भ्रमं वारयति—हेतुरिति। एकवचनेनैकस्वभावसूचनम्। तेनैकं कारणं यथैकं कार्यं करोति तथा शक्त्यादित्रयमपि एकरूपं काव्यं करोति, कारणतायाः पार्थक्येऽपि सजातीयत्वात्। हरीतक्याः सारकता, विभीतकस्य कफघ्नता, आमलक्याः शीतलतेतिवद् विजातीयप्रयोजकता नैतेषामिति भावः।

नन्वेकफलोत्पादकहेतूनां समुदितत्वमेव संभवति इति समुदिता इत्यपुष्टमिति शङ्कां निराकरोति—न तु व्यस्ता इति। व्यस्तानामपि हेतूनामेकफलोत्पादकत्वं दृश्यते। यथा तृणारणिमणीनामग्निजनकता। न तथैतेषामिति भावः। तु-शब्दः समुदितापेक्षयाऽत्यन्तवैलक्षण्यं सूचयति। तत्पदं व्याचष्टे तस्येति। तस्य बुद्धिस्थस्य रसोद्बोधसमर्थकाव्यस्येति यावत्। काव्यपदशक्यस्य सहृदयेतरानुपहसनीयकाव्यस्य शक्तिमात्रादप्युत्पत्तेः। उद्भवे इति मूलस्थपदमनूद्य विवृणोति—निर्माणे समुल्लासे चेति। उद्भवपदं विशिष्टोत्पत्तिलक्षकमिति भावः। ननु समुदिता हेतुरित्युक्तम्, तर्ह्येकस्वरूपतया काव्यजनकत्वमिति भ्रमं निराकरोति—हेतुर्नेति। चन्दनोशीरादिपञ्चहिमजलमेकस्वरूपं यथा शीतलत्वमुत्पादयति तथा शक्त्यादित्रयमेकस्वरूपं काव्यकारणमिति भावः। हेतुर्नेत्यतोऽनन्तरं 'न तु व्यस्ता' इतिवदावश्यक इति तुकारः प्रक्षिप्तः क्षुद्रेण; अनुसृतश्च सरलैर्न पुनर्योग्य इति ध्येयम्।

नन्वसम्भव एव कारणतायास्त्रयाणां समुदितत्वेऽप्येकरूपतया कार्योत्पादकतानङ्गीकारे इति भ्रमं निराकरिष्णुराह—हेतव इति। हेतवः सन्ति तादृशाः घटोत्पत्तौ चक्रदण्डचीवराणामिव विवक्षितकाव्योत्पत्तौ परस्पराकाङ्क्षित्वेन मिलितानामपि भिन्नस्वरूपाणां शक्तिनिपुणताभ्यासानां कारणतेति भावः। अत्र क्वचिद् वृत्तिपुस्तके हेतुपदमेकमेव दृश्यते। तत्राप्यावृत्त्या नेयम्। अन्यथा सकलसम्मतं चक्रदण्डादिसाम्यं न व्यवतिष्ठेतेति ध्येयम्।

## सुधासागरः

अत्रायं परमनिष्कर्षः। यां विना काव्यं न प्रसरेदिति वृत्तिस्थकाव्यपदं, शक्यं यच्छन्दोऽयाकरणविरोधाभावमात्रगुणकपद्यं तत्परं, न तु दोषाभावगुणालङ्कारविशिष्टं रसोद्बोधासमर्थं यल्लक्ष्यं तत्परम्, तादृशकाव्यस्योपहसनीयत्वासम्भवात्। तथा च शक्त्यभावे निपुणताभ्यासान्यतरसद्भावे काव्यं न प्रसरेत्। उभयोः सद्भावे प्रसरेत् किन्तूपहसनीयं स्यात्। शक्तिमात्रसद्भावे तु सहृदयातिरिक्तसामान्यविदुषां मीमांसकादीनामनुपहसनीयं काव्यं भवेत्। शक्तेर्निपुणताद्यन्यतरस्य च सद्भावे तु श्लाघ्यं भवेत्। शक्त्यादित्रितयसद्भावे तादृशानां श्लाघ्यतरं सहृदयानां काव्यव्यवहारयोग्यं रसोद्बोधसमर्थं भवेत्। तादृशेऽप्युत्तममध्यमाधमभेदास्तु व्यङ्ग्यभेदमादायेति व्यवस्थितम्।

इदं त्ववधेयम्। उत्तमकाव्येऽप्युत्कृष्टत्वमुत्कृष्टतरत्वमुत्कृष्टतमत्वं ततोऽप्युत्कृष्टत्वादिकं च रत्नादिवत् सम्भवत्येव, परन्तु तदनवस्थमिति न कुत्रापि दोषलेशाऽवकाशः।

एवं च शक्त्यादीनां स्वरूपत्वप्रयोजकत्वयोः पार्थक्येऽपि रसोद्बोधजनकज्ञानविषयताच्छिन्नकाव्यरूपकार्येण मिलितानामेव फलोपहितत्वमिति प्रतिभावद्भिः सूक्ष्मदृशाऽवधातव्यम्। यत्तूक्तं—गोविन्दमहामहोपाध्यायैः काव्यप्रदीपे 'काव्यस्योद्भव उत्कृष्टोत्पत्तिस्तया कार्येण मिलितानामुपधानं दण्डचक्रादीनामिव घटेन, न तु मिलितत्वेन कारणतैवेति भ्रमः कार्यः' इति, तन्न स्पष्टप्रतिपादकम्। प्राचीनग्रन्थास्त्वत्र शिथिला एवेति न तदनुवादं कुर्मः। यत्तु नव्याः प्राहुः-'शक्तिरेव कारणं नापरौ, ताभ्यां विनापि डिम्भेन काव्योत्पादनात्। न च वृत्तिविरोधः। यत्र त्रयः समुदिता न तु व्यस्तास्तत्राप्येकशक्तिप्रधानास्त्रयो हेतुर्न हेतव इति तदाशयात्। अत एवोक्तं— कवित्वबीजरूप इति। तथा चाऽनन्यथासिद्धनियतपूर्ववृत्तित्वेन शक्तेरेव कारणता। अन्ययोस्तु प्राशस्त्यविधायकतामात्रम्। अत एवास्य कारणमाहेत्युक्तं वृत्तिकारैर्न तु कारणानीति। न च डिम्भेऽपि प्राग्भवीययोस्तयोः सत्त्वान्न व्यभिचारः। अतएव 'जन्म जन्म यदभ्यस्तमि'त्युक्तमिति वाच्यम्। अन्योन्याश्रयात्। तथा हि-सिद्धे कारणत्वे तयोः कल्पनं तस्मिंश्च सति कारणत्वमि'-ति, तद् वाग्देवतावतारवृत्तिकारगूढाशयानवबोधविजृम्भितमिति हेयम्। तथा हि

यत्तावत् डिम्भेन काव्योत्पादनान्न निपुणताभ्यासयोः कारणतेत्युक्तम्, तत्प्रामादिकम्। तयोर्जन्मान्तरीययोः सत्त्वात्। न चान्योन्याश्रयः, देवदत्तेन बाल्यावस्थायां कृतं काव्यं सहृदयेतरानुपहसनीयम्। निपुणतावशाद्यौवनावस्थायां कृतं साधारणैः श्लाघ्यं जातम्। इदानीं प्रौढावस्थायां शक्तिनिपुणताभ्यासवशात् सहृदयव्यवहरणीयं रसोद्बोधसमर्थं क्रियते, इति व्यवहारेण त्रयाणां कारणतायाः सिद्धत्वात्। एवं च सिद्धे कारणत्वे यत्र निपुणताभ्यासयोरसम्भवस्तत्र जन्मान्तरीयत्वं कल्पनीयम्। अतएवोक्तं 'जन्म जन्म यदभ्यस्तम्' इत्यादि। वृत्तिग्रन्थाशयस्तु विस्तरेणानुपदमेव स्पष्टीकृतोऽस्माभिरिति दिक् ॥३॥

**एवमस्य कारणमुक्त्वा स्वरूपमाह—**

**तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि ॥**

**दोषगुणालङ्कारा वक्ष्यन्ते । क्वापीत्यनेनैतदाह यत् सर्वत्र सालङ्कारौ, क्वचित् तु स्फुटालङ्कारविरहेऽपि न काव्यत्वहानिः । यथा—**

**यः कौमारहरः स एव हि वरस्ता एव चैत्रक्षपा-**
**स्ते चोन्मीलितमालतीसुरभयः प्रौढाः कदम्बानिलाः ।**
**सा चैवास्मि तथापि तत्र सुरतव्यापारलीलाविधौ**
**रेवारोधसि वेतसीतरुतले चेतः समुत्कण्ठते ॥**

**अत्र स्फुटो न कश्चिदलङ्कारः, रसस्य च प्राधान्यान्नालङ्कारता ॥**

## साहित्यचूडामणिः

कारिकान्तरं सङ्गमयति—एवमिति । स्वम् अनन्यसाधारणमव्यभिचरितं रूपमाकारमाह लक्षणमाहेति यावत् ।

तदिति । निर्दोषत्वादिविशिष्टं शब्दार्थयुगलं काव्यमिति संक्षेपः । शब्दार्थौ द्वावेकं काव्यमित्यपूर्वत्वोद्भावनयोक्तिः । 'तेन कामनीयकशालिशब्द' एव काव्यम्, अथवा 'अर्थ एवे'ति पृथक् पक्षद्वयं प्रतिक्षिप्तं, येन तिलतैलन्यायाद् द्वयोः संभूयाह्लाद-निबन्धनत्वम् । यदुक्तं वक्रोक्तौ [१.७] "न शब्दस्य रमणीयताविशिष्टस्य केवलस्य काव्यत्वं, नाप्यर्थस्य" इति । 'वक्ष्यन्त' इति—सप्तमादिषु पृथक् प्रपञ्चयिष्यन्ते, नेदानीमेषामवसरः । यद् वक्ष्यति 'धर्मिणि प्रदर्शिते धर्माणां हेयोपादेयता ज्ञायते' इति । क्वापीति । निर्दोषौ सगुणौ सालङ्कारौ शब्दार्थौ काव्यमिति घण्टापथः । किन्तु सर्वं वाक्यं सावधारणमिति युक्त्या यथा दोषशून्यावेव गुणवन्तावेव शब्दार्थौ काव्यमित्यवधारणं तथा सालङ्कारावेवेति न पार्यते नियन्तुम् । वयं हि काव्यशोभासम्भावनया स्वैरमलङ्कारनैयत्यं तु न सहामहे । उक्तं हि—

## सुधासागरः

एवमित्यादि । एवमुक्तप्रकारेणाऽस्य विवक्षितकाव्यस्य कारणं मिलितशक्त्या-दित्रयमुक्त्वा स्वरूपं लक्षणं कथयतीत्यर्थः । [ 'तददोषादि' ] व्याचष्टे—

काव्यस्वरूपमप्रतिपाद्य विशेषणपदार्थानां दोषादीनां निरूपणमनुचितमिति तत्परित्यज्य क्वापीति पदं व्याचष्टे—क्वापीत्यनेनेत्यादि । अत्र वृत्तिकारैः सरलतया विशेषतो विस्तरेणाप्रदर्शितं काव्यस्वरूपमिदानीं न सामान्यबुधानां दुर्बोधमिति तत्र वदामः । निर्दोषत्वादिविशेषणविशिष्टौ शब्दार्थौ तदिति योजना । तत् काव्यमित्यर्थः । शब्दार्थयोरुपादानपौर्वापर्यज्ञानपौर्वापर्यात् ।

अत्र केचिदाहुः-कविकर्म काव्यमिति समाख्याबलाद् विभावाद्यर्थकेषु शब्देष्वेव काव्यत्वं नार्थेषु, तेषां तत्कृत्यसाध्यत्वात् । अत एवाऽर्हितत्वात् शब्दस्य प्राङ्

## साहित्यचूडामणिः

दोषहानं गुणादानं कर्तव्यं नियमात् कृतौ ।
कामचारः पुनः प्रोक्तोऽलङ्कारेषु मनीषिभिः ॥ इति ।

एतत्

मुख्या महाकविगिरामलङ्कृतिभृतामपि ।
प्रतीयमानच्छायैषा भूषा लज्जेव योषिताम् ॥ [ध्व० ३।३७]

इत्यत्र अपिशब्दात् प्रतीयते । यस्मादलङ्कृतिभृतां तदभावशालिनीनामपीति तात्पर्यम् । 'क्वचित् त्विति' सहृदयैकसंवेदनीये प्रयोगे कविसंरम्भगोचरत्वं स्फुटत्वम् । ननु

निर्दोषं गुणवत् काव्यमलङ्कारैरलङ्कृम् ।
रसान्वितं कविः कुर्वन् कीर्त्तिं प्रीतिं च विन्दति ॥ [स० कं १।२]

इत्यादिवत् किमिति रसान्वितत्वमात्रं नोक्तं येन नीरसत्वं काव्यस्यानुमन्येतेति चेत् । न । दोषगुणप्रमाणादेव तत्सिद्धिः । तथा च वक्ष्यति "मुख्यार्थहतिर्दोषो रसश्च मुख्य" [का० प्र० ७] इति,

ये रसस्याङ्गिनो धर्माः शौर्यादय इवात्मनः ।
उत्कर्षहेतवस्ते स्युरचलस्थितयो गुणाः ॥ [का० प्र० ८]

इति,

उपकुर्वन्ति तं सन्तं येऽङ्गद्वारेण जातुचित् ।
हारादिवदलङ्कारास्तेऽनुप्रासोपमादयः ॥ [का० प्र० ८]

## सुधासागरः

निर्देशः । तथा चाऽऽस्वादजीवातुः पदसन्दर्भः काव्यम्, तत्त्वं च लक्षण'मिति । तन्न । काव्यत्वप्रयोजकस्यास्वादव्यञ्जकत्वस्य शब्दार्थयोरविशेषात्, अर्थेष्वपि व्यञ्जनावृत्त्यङ्गीकारात्, शब्दार्थयोरुत्कर्षापकर्षाभ्यां तदुत्कर्षापकर्षव्यवहारात्, विभावाद्यर्थविशिष्टेषु शब्देषु काव्यत्वं शब्दविशिष्टेषु तेषु वेति विनिगमनाविरहाच्च । न च समाख्यैव विनिगमकम्, कविप्रकाश्यत्वेनैव तदुपपत्तेः । इदं काव्यममुकेन कृतमिति व्यवहारोऽपि तत्प्रकाश्यत्वपर एव । अन्यथा शब्दानां नित्यत्वे मौनिश्लोके च शब्देष्वपि तदसम्भवात् । अपूर्वविभावत्वादिप्राप्त्याऽर्थेष्वपि समाख्याया अक्षतेश्च । एतेन उक्तं च न लक्षणं लक्ष्यतावच्छेदकाभेदात् । तेन शब्दार्थयोः साधारण्येऽपि रघुकाव्यं कालिदासेनैव कृतमित्यादिव्यवहारः शब्दार्थयोर्योजनात्मककविव्यापारावलम्बी, यथा सूत्रपुष्पयोरन्यदीयत्वेऽपि इयं मालाऽमुकेन कृतेति व्यवहारः ग्रथनरूपव्यापारावलम्बी । योजनं च एकज्ञानानन्तरज्ञानविषयत्वमपरवर्णस्य मौनिश्लोकसाधारणम् । तथा च—इष्टार्थावच्छिन्नताद्दशयोजनविषयशब्दावल्येव काव्यम् । तदुक्तं दण्डिना [ काव्यादर्शे ]—

शरीरं तावदिष्टार्थव्यवच्छिन्ना पदावली । इति ।

## साहित्यचूडामणिः

इति। न च रसचमत्कारस्वभावमलौकिकमर्थं दोषहान्यादिना बहिष्ठेन सह समशीर्षिकया युक्तं परिगणयितुम्। न काव्यत्वहानिरिति। यथा दोषहानादिविरहे काव्यत्वभङ्गः, न च तथालङ्कारभावे।

'य' इति। एषा हि बाल्य एव क्वचित् कुलशीलादिगुणगणोल्वणे यूनि निगूढनिर्व्यूढाभिलाषायाः पश्चादाचारसंरक्षणार्थम् 'अज्ञानादिक' नीत्या मातापितृभ्यां तेनैव पाणिं ग्राहितायाः कुटुम्बिनीपदमधिवसन्त्याः प्रियसखीसंकथायां प्राचीनवासनावशंवदायाः कस्याश्चिदुक्तिः। कौमारं कुमारीभावः, तस्य हरणमिदंप्रथमिकया सम्भोगोपदेशः। ते चेति चकारेणावधार्यतया कदम्बानिलाः समुच्चीयन्ते। अतो न प्रक्रमभङ्गः। तत्रेति। प्रच्छन्नकामितजनानुशीलिते। सुरतार्थो यो व्यापारो दूतीसंप्रेषणादिः स एव लीलायाः कालविनोदनादिरूपाया विधिरनुष्ठानमिति योजनायां नापकारशङ्का। रेवारोधो महान् विषयः, वेतस्या बालवञ्जलात्मनस्तरोर्मूलस्थलमवान्तरभूतः। अनन्यत्रभावो विषयार्थः सप्तमीपरम्परया स्मर्यमाणस्य रमणीयस्य अर्थस्य वैचित्र्यमासूत्र्यते।

निरलङ्कारतां विवरीतुमाह अत्रेति। काशकुशावलम्बनादलङ्काराभाससंभावनायामलङ्कारनैयत्यपक्षनिर्वाह इत्यलं क्षुल्लकाशया। कविसंरम्भगोचराणामलङ्काराणां न कस्यचिदुपलम्भः। तथापि न काव्यत्वभङ्गः। विशेषोक्तिविभावनयोः स्वस्वविरुद्धार्थमुखेन कथञ्चिदुत्थापनेऽपि न स्पष्टत्वं, कण्ठोक्त्या निषेध्ययोः कार्यकारणयोर्भावान्तरमुखेनाभावाभिधानात्। अथ च साधकबाधकप्रमाणाभावाद्

## सुधासागरः

नचैवं शब्दार्थाविति द्वन्द्वादुभयप्राधान्यावगतिविरोधः। काव्यं हि व्यङ्ग्यपरामर्शं विना न चमत्करोति। अचमत्कृतं च नोपदेशे पर्यवस्येदिति व्यङ्ग्यपरामर्श आवश्यकः। स च व्यञ्जनाधीनः। तस्याश्च शब्दार्थावाश्रयावित्येतावन्मात्रेण शब्दार्थयोः प्राधान्यस्य विवक्षितत्वाद् द्वन्द्वकरणादित्यपास्तम्। रसोद्बोधसमर्थस्यैवात्र लक्ष्यत्वात्। तत्त्वं च विषयतया रसोद्बोधजनकतावच्छेदकत्वम्। तच्च दोषाभावगुणालङ्कारैर्विशिष्टयोः शब्दार्थयोर्व्यासज्यवृत्ति। तैर्विशिष्टयोर्ज्ञानत एव रसोद्बोधात्। लोकेऽपि हि काणत्वादिदोषाभावेन पाण्डित्यसौन्दर्यादिगुणेन वस्त्रालङ्कारादिपरिच्छदेन विशिष्टस्यैव दर्शनाच्चित्तं चमत्करोति नत्वेकदेशवैकल्येन। अतएव दोषाभावादिविशेषणत्रयनिवेशः।

यच्चाऽग्निपुराणे श्रीमद्वेदव्यासैरुक्तम्—

> अदोषं गुणवत् काव्यमलङ्कारैरलङ्कृतम्।
> रसान्वितं कविः कुर्वन् कीर्तिं प्रीतिं च विन्दति। इति।

तत् काव्यं शब्दार्थफलं यतोऽदोषादिविशेषणत्रयमतो रसान्वितमित्यर्थकम्। नाऽतस्तद्वशात् सदोषादेः काव्यत्वमिति बोध्यम्। एवं च विशिष्टयोः शब्दार्थयोः काव्यत्वे निर्व्यूढे काव्यं पठति शृणोतीत्यादि व्यवहारः शब्दपरतया समर्थनीयः।

## साहित्यचूडामणिः

द्वयोः संदेहरूपः सङ्कर एव। तत्राप्यस्फुटत्वानुवृत्तिः। ननु 'सौन्दर्यमलङ्कार'[1] इति काव्यशरीरवर्तिनी चारुता काचिदत्र परिस्फुरति यत्र भावसाधनता। अलङ्क्रियतेऽनेनेति करणसाधनताकोटिक्रोडीकारेऽपि यन्निबन्धना काव्यस्य चारुता स एव शृङ्गारो रसः स्वैरमूरीक्रियताम् अलङ्कारत्वेन। प्रख्यायते हि रसभावादिर्नामालङ्कारः इत्याशङ्कयाह—रसस्येति। रसस्य प्राधान्याप्राधान्यलक्षणमवस्थायुगलमस्ति आत्मन इव पर-जीवत्वाकारम्। तत्र रसभावाद्यपेक्षया यदप्राधान्यं तद् गण्यतामलङ्कारत्वेन यथा—'अयं स रसनोत्कर्षी पीनस्तनविमर्दनः' [का० प्र० ५] इत्यादौ। तत्र करुणस्य प्राधान्यादप्राधान्याच्च शृङ्गारस्यालङ्कार्यता। यथा वा ममैव—

किं ते गण्डे कितव! कुटिलाताम्रमालग्नमेतत्
किं तन्मुग्धे! परिमृशतु ते पाणिराज्ञातमाः किम्।
प्रष्टव्योऽयं? प्रणयकलहेष्वस्त्रमर्धं सुधांशो—
रित्यालापो रहसि शिवयोः पेशलस्त्रायतां वः॥

इत्यत्र पार्वतीपरमेश्वरविषयस्य कविवर्तिनो भावस्य वाक्यार्थतया प्राधान्यादप्राधान्येन शृङ्गारस्यालङ्कारता। प्राधान्यपक्षे तु कटाक्ष्यमाणे नालङ्कारता प्रत्युत तस्यालङ्कार्यत्वम् यदाह—

तत्परावेव शब्दार्थौ यत्र व्यङ्ग्यं प्रति स्थितौ।
ध्वनेः स एव विषयो मन्तव्यः सङ्करोज्झितः॥ [ध्व० १।१३ प०]
प्रधानेऽन्यत्र वाक्यार्थे यत्राङ्गं तु रसादयः।
काव्ये तस्मिन्नलङ्कारो रसादिरिति मे मतिः॥ [ध्व० २।५]

इति। प्रकृते शृङ्गारस्य प्राधान्यमविप्रतिपन्नम्, अन्यस्य भावादेः प्राधान्योचितस्याभावात्॥ ४॥

## सुधासागरः

नन्वत्रादोषत्वं यत्किञ्चिद्दोषाभावो यावद्दोषाभावो वा? नाद्यः। अव्यावर्त्तकत्वात्। यत्किञ्चिद्दोषाभावस्य सर्वत्र सुलभत्वाच्च नापरः। अन्ततः पदतदेकदेशश्रुतिकटुत्वादेः सम्भवात् इति।

अत्र केचित्—अदोषत्वं नेह विशेषणं किन्तु यथाशक्ति दोषहानाय तदुक्तम्। दोषाणामपकर्षकतया काव्यस्वरूपाऽप्रच्यावकत्वात्। कीटवेधादीनामिव रत्नादौ। दृश्यते हि आस्वादवति दुष्टेऽपि काव्यत्वम्। कथमन्यथा—

तथाभूतां दृष्ट्वा नृपसदसि पाञ्चालतनयां
वने व्याधैः सार्द्धं सुचिरमुषितं वल्कलधरैः।

इत्यादेर्न्यूनपदत्वेन स्वयमेव दूषितस्य स्वयमेव काकुसहकृतार्थध्वनित्वं वक्ष्यमाणं न विरुध्येत। उक्तं च ध्वनिकृताऽप्यविमृष्टाविधेयांशदुष्टस्यापि 'न्यक्कारोह्ययमेव' इत्यादेर्ध्वनित्वम्। इत्थमेव दुष्टं काव्यमिति व्यवहारोऽपि संगच्छत इत्याहुः।

---

[1] का. सू. १।१।२। अलङ्कृतिरलङ्कार इति भावसाधनत्वमलंकारशब्दस्य।

## सुधासागरः

परे तु—निःशेषदोषराहित्यं वाच्यम्। काव्यलक्षणस्य विरलविषयत्वं त्विष्टमेव। तदुक्तं—ध्वनिकृता—'द्वित्राण्येव काव्यानि द्वित्रा एव कवयः' इति। तथाभूतामित्यादौ 'इत्थमिति चेति'पदद्वयसहिते चतुर्थचरण एव वा? न्यक्कारो ह्ययमेवेत्यादौ अयं न्यक्कार इति योजना। वाक्यघटिते निर्दोषतदेकदेश एव वा ध्वनित्वमव्याहतम्। यदवच्छेदेन यावद्दोषाभावस्तदवच्छेदेन काव्यत्वोपगमात्। दुष्टं काव्यमिति व्यवहारश्च दुष्टो हेतुरिति व्यवहारवदित्याहुः।

सुबुद्धिमिश्रास्तु—स्फुटदोषराहित्यं वाच्यम्। स्फुटत्वं च कविप्रतिभातिरोधानाभावः। अस्ति हि प्रतिभावतां काव्ये कश्चन विशेषो यः सामाजिकाँश्चित्रार्पितानिव कृत्वा दोषान्न ग्राहयतीत्याहुः। तदसत्। काव्यमात्रस्य प्रतिभावितन्यत्वेन कुत्रापि दोषग्रहानापत्तेः। एवञ्च न्यक्कार इत्यादौ दोषाभिधानं विरुद्ध्येत। तस्योत्तमकाव्यत्वेन प्रतिभाजन्यत्वावश्यकत्वात् इति जयरामन्यायपञ्चाननाः प्राहुः।

अत्रेदं तत्त्वम्। स्फुटत्वं रसोद्बोधविरोधित्वम्। अस्फुटत्वं रसोद्बोधविलम्बकत्वं रसप्रकर्षविघातकत्वं च। तथा च अस्फुटानां रसोद्बोधाविरोधित्वात्तद्व्यञ्जनाधीनं काव्यत्वमव्याहतम्। अतस्तदभावो न लक्षणघटकः किन्तु स्फुटानामेव रसोद्बोधविघातकानाम्। तद्विघातकत्वं च—च्युतसंस्कृतिक्लिष्टाविमृष्टविधेयांशादेः शाब्दबुद्धिविघटकतया, श्रुतिकटुत्वादेः साक्षाद्रसप्रतिबन्धकतया। अतएव वीररसादौ व्यङ्ग्ये श्रुतिकटुत्वं न दोषः, तदुद्बोधाविरोधित्वात्। इत्थं च तथाभूतामित्यादौ न्यक्कारो ह्ययमेवेत्यादौ च प्रतिपदजीवातुव्यङ्ग्यव्यङ्ग्यप्रतीत्यादेर्दोषज्ञानतिरोधानात्तादृशव्यङ्ग्यवैचित्र्यप्रतीतिविरहविशिष्टदोषज्ञानस्यैव विरोधित्वेन सतोऽपि वा दोषज्ञानस्याविरोधित्वाद् ध्वनित्वमव्याहतम्। यस्य न व्यङ्ग्यवैचित्र्यप्रतीतिस्तं प्रति दोषत्वमेवेति दोषप्रदर्शनमप्यविरुद्धम्।

नन्वेवमेकस्य काव्यस्य सामाजिकभेदेन काव्यत्वमकाव्यत्वं च स्यादिति चेत्। स्यादेव। काव्यत्वस्योपाधेः सप्रतियोगिकत्वस्पृष्टत्वात्। जातेरेव तत्त्वस्य दोषत्वात्। तदुक्तम्—'वक्त्राद्यौचित्यवशाद् दोषोऽपि गुणः क्वचिद्' इत्यादि। अत एवाप्रतीतत्वं तच्छास्त्रज्ञं प्रत्यदोषोऽपीतरं प्रति दोष एवेति तद्वतः काव्यत्वमकाव्यत्वं चेति लक्ष्यमपि सामाजिकविशेषनियन्त्रितमित्यननुगमो न दोषाय।

> कीटानुविद्धरत्नादिसाधारण्येन काव्यता।
> दुष्टेष्वपि मता यत्र रसाद्यवगमः स्फुटः॥

इति दर्पणकारोक्तेरप्ययमेवार्थः यत् प्रभातिशयेन यथा रत्ने दोषतिरोधानान्न स्वरूपभङ्गः तथा काव्येऽपि व्यङ्ग्यवैचित्र्येणेति दिक्।

एवं चार्वाचीनैर्यदुक्तम्—यथोक्तस्य काव्यलक्षणत्वे काव्यपदं निर्विषयं प्रविरलविषयं वा स्याद् दोषाणां दुर्वारत्वात्। तस्मात् 'वाक्यं रसात्मकं 'काव्यम्' इति तल्लक्षणम्। तथा च दुष्टेऽपि रसान्वये काव्यत्वमस्त्येव परन्त्वपकर्षमात्रम्। एवं

## सुधासागरः

चालङ्कारादिसत्त्वे उत्कर्षमात्रम्। नीरसे तु चित्रादौ काव्यव्यवहारो गौण इति। तद्विद्वद्भिर्नादरणीयम्। काव्यस्य गुणवत्त्वं स्वव्यङ्ग्यास्वादसमवायसम्बन्धेन न तु साक्षात्। तेषां रसैकधर्मत्वात्। नन्वेवमपि गुणादीनां रसघटितत्वं रसस्य च विभावादिघटितत्वं तेषां च काव्यघटितत्वमित्यात्माश्रयचक्रकापत्तिरिति चेत्। न। 'व्यक्तः स तैर्विभावाद्यैः' इति रसलक्षणे विभावनादिव्यापारत्वेन विभावादीनां प्रवेश्यत्वान्न तु काव्यानुप्रवेशनेनेति दोषासम्भवात्। अतएवोक्तं गोविन्दमहामहोपाध्यायैः—'गुणस्य रसनिष्ठत्वेऽपि तद्व्यञ्जकपरं गुणपदम्। नत्वलंकारेऽतिव्याप्तिः, सालंकारत्वविशेषणानुपादानादिति न वाच्यम्। यतः क्वापीत्यनेनैतदुक्तम् यत् सर्वत्र सालंकारौ शब्दार्थौ काव्यम्, क्वचित्तु स्फुटालङ्कारविरहेऽपि न काव्यत्वहानिः नञोऽल्पार्थत्वात्। अल्पत्वस्य चाऽत्राऽस्फुटत्व एव विश्रामात्। नीरसेऽप्यस्फुटालङ्कारे काव्यत्वमिष्टमेवेति ऋजुः पन्थाः। वस्तुतस्तु नीरसे स्फुटालङ्कारविरहिणि न काव्यत्वम्। यतो रसादिरलङ्कारश्च द्वयं चमत्कारहेतुः। तथा च यत्र रसादीनामवस्थानं न च तत्र स्फुटालङ्कारापेक्षा। अत एव रसानुगुणार्थविशेषनिबन्धनमलंकारविरहेऽपि छायातिशयं पुष्णाति। यथा—

> मुनिर्जयति योगीन्द्रो महात्मा कुम्भसम्भवः।
> येनैकचुलुके दृष्टौ दिव्यौ तौ मत्स्यकच्छपौ॥ इत्यादौ।

अत्र हि अद्भुतरसानुगुणमेकचुलुके मत्स्यकच्छपदर्शनं छायातिशयं पुष्णाति। नीरसे तु यदि न स्फुटोऽलङ्कारः स्यात् किंकृतश्चमत्कारः स्यात्, चमत्कारसारं च काव्यमित्यवश्यं स्फुटालंकारापेक्षा। अनलङ्कृती पुनः क्वापीत्यनेनाप्यस्फुटालङ्कारस्य क्वचिदेव काव्यत्वं यत्र रसादिः स्फुटो न तु सर्वत्रेत्येतदेव प्रतिपाद्यते। तस्मात् सालंकारत्वमात्रं न विशेषणं किन्तु स्फुटालङ्काररसान्यतरवत्त्वम्। एवं च रसाविशिष्टास्फुटालङ्कारभिन्नालंकारवत्त्वं विशेषणमिति तत्त्वम्'—इति।

अत्र रसेषु शृङ्गारः प्रधानम्, स च द्विविधः। तत्र न कुलटाभुजङ्गयोः प्राधान्यं किन्तु दम्पत्योरिति सर्वं सूचयन्नेव स्फुटालङ्कारविरहे काव्यत्वमुदाहरति। यथेति।

शार्दूलविक्रीडितं छन्दः। 'सूर्याश्वैर्मसजास्ततः सगुरवः शार्दूलविक्रीडितम्' इति लक्षणात्। अत्रोपभुक्तानामपि वरोपकरणादीनामत्यन्तप्रियत्वेन क्षणमप्यपरित्याज्यत्वं सूचयन्ती काचित् स्वकीया सखीमाह। हे सखि! यः कौमारहरो वरः स एव यद्यप्यस्ति, चैत्रक्षपास्ता एव यद्यपि सन्ति, उन्मीलितमालतीसुरभयः प्रौढाः कदम्बानिलास्ते च यद्यपि सन्ति, अस्मि च सैव यद्यप्यस्मि तथापि तत्र रेवारोधसि वेतसीतरुतले सुरतव्यापारलीलाविधौ चेतः समुत्कण्ठते इत्यन्वयः। हीत्यस्याव्ययानां नानार्थत्वाद् यद्यपीत्यर्थकत्वम्। अस्मीत्यस्याहमर्थकत्वम्। अस्तेरध्याहारः। तत्रेत्यस्य त्रिष्वपि सप्तम्यन्तविशेषणेषु सम्बन्धश्च बोध्यः।

कौमारमभिनवयौवनं हरतीति कौमारहर इत्येके। तन्न। निषिद्धलक्षणापत्तेः। कौ पृथिव्यां मारं मदनं हरत्यनुहरतीत्यन्ये। वस्तुतस्तु कौमारं स्वकीयबाल्यं

## सुधासागरः

परमरसिकतया तदवस्थायामपि मत्सम्बन्धि सम्भोगेच्छोत्पादनेन हृतवान् चोरितवान् इति कौमारहरः व्रियते प्रियया प्रियत्वेन स्वयमङ्गीक्रियते न तु पित्रादिपारतन्त्र्या-दिति वरः। एतेनाकृत्रिमप्रेमपात्रताप्रकटनद्वारा परस्परं दम्पत्योरनुरागदार्ढ्यं ध्वन्यते। स एव। उपभोक्ताऽनन्यादृश इत्यर्थः। यत्तूदाहरणचन्द्रिकायामुक्तम्—उपभोक्ताऽन्यो नेत्यर्थः इति तत् प्रामादिकम्। तथा सति वक्ष्यमाणालंकारस्य स्फुटत्वं स्यात्।

एवकारार्थं चानुपदमेव स्फुटीकरिष्यामः। चैत्रमासस्य क्षपाः वसन्तसमये-नातिमनोहरा रात्र्यस्ता एवेति पूर्ववत्। उन्मीलिता तत्कालविकसिता मालती तया सुरभयः शोभनगन्धाः। मालती च वासन्तीलतानुजातिः। चैत्रे तस्या असम्भवात्। प्रौढाः रत्युद्दीपनादिप्रागल्भ्यशालिनः। अतो मन्दत्वेऽप्यविरोधः। कदम्बस्य धूलीकदम्बाख्यस्य पुष्पविशेषस्य, वसन्ते कदम्बान्तरस्यासम्भवात्। सर्वदिक्-संचारित्वेन कदम्बाकारा अनिलाः कदम्बानिला इति केचित्। प्राचीनव्याख्यानानु-रोधेनैवं मालतीकदम्बपदे व्याख्याते। वस्तुतस्तु ऋतुराजयोर्वसन्तघनसमययोः सकलकुसुमवर्णनस्य कविसम्प्रदायसिद्धत्वान्न कश्चिद् विरोधः।

यत्तु दर्शितविरोधे समाधिमपश्यद्भिश्चैत्रेत्यत्र भाद्रेतिपाठः कल्पितः तत्रान्यै-र्व्याख्यातृभिर्दोषोद्भावनं कृतं वर्षर्तौ नदीतीरनिकुञ्जे सुरतवर्णनमनुचितमिति, तत् गोविन्दमहामहोपाध्यायैरुदाहरणदीपिकायाम्—कच्छे निकुञ्जे तदनौचित्येपि तीरनिकुञ्जेऽनौचित्याभावः 'मेघैर्मेदुरम्' इत्यादौ दृष्टत्वादिति निराकृतम्। नैतावता भाद्रेति पाठः साधुरिति शङ्क्यम्। भाद्रक्षपायां नदीतीरनिकुञ्जसंकेतस्य स्वाधीनपतिकाया अनौचित्यात्। परैरसंभावनीयतया परकीयाया एव तादृश-संकेतवर्णनात्। चैत्रेतिपाठस्योपपादितत्वाच्चेति सहृदयैराकलनीयम्। ते चेति चकारोऽवधारणे। त एवेत्यर्थः। सा चेति चकारोऽप्यर्थो भिन्नक्रमश्च। अहमपि सैव न तूत्कण्ठाहेत्ववस्थान्तरं प्राप्तेत्यर्थः! अस्मीत्यस्याहमर्थकत्वानङ्गीकारे तु सैवेत्य-स्योद्देश्यं न लभ्येतेति द्रष्टव्यम्, तथापि यद्यप्यसकृदुपभुक्ता एवैते पदार्थास्तथा-पीत्यर्थः। तत्रेत्युपभुक्त इत्यर्थकसप्तम्यन्तं त्रयेऽप्यन्वेति, तेन सुरतलीलाविधिरपि नान्यादृशो येन क्रीडास्थानैक्येऽप्युत्कण्ठा स्यादिति व्यज्यते।

केचित्तु तत्रेत्यस्य स्नानसमयानुभूत इत्यर्थः। तथाचानुपभुक्तरेवातीरस्या-त्यन्तोपादेयत्वसूचिकोत्कण्ठैवात्र स्वाद्यते इत्याहुः। स्वीकृतश्चायमर्थो बहुभिः, नत्वनवद्यः, वक्ष्यमाणविशेषोक्त्यलंकारविरोधात्।

रेवायाः नर्मदायाः। रोधसि तीरे। वेतसीवेष्टितस्तरुर्वेतसीतरुस्तस्य तलमधो-देशस्तस्मिन्। सुरतानुकूलव्यापाररूपा लीलाः कुसुमाभरणादिकाः प्रसाधनादिकाः स्मिताश्लेषचुम्बनादिकाश्च तासां विधौ सम्पादने चेतोऽन्तःकरणं समुत्कण्ठते उत्सुकं

## सुधासागरः

भवतीत्यर्थः अत्र रूपकादीनामसम्भव एव। अस्मीत्यस्य विभक्तिविपरिणामादस्तु दीपकमिति चेन्न। अस्मीत्यस्याहमर्थकाऽव्ययत्वात् त्वामस्मि वच्मीतिवत्। क्रियापदेऽपि न दीपकत्वम्। तदन्वितानां सर्वेषामेव प्राकरणिकत्वात्, दीपकस्य तु प्राकरणिकाप्राकरणिकविषयत्वात्। सादृश्याप्रतीतेश्च न तुल्ययोगिता। विशेषोक्ति-विभावने विद्यमाने अपि न स्फुटे। कथमिति चेत्। इत्थम्—विशेषोक्तिस्तावत् कारणसत्त्वेऽपि कार्याभाववचनम्। अत्रानुत्कण्ठाकारणं वरोपकरणयोरुपभुक्तता। तत्सत्त्वे यद्यप्यनुत्कण्ठाभाव उत्कण्ठारूपो निर्दिष्ट एव तथापि नानुत्कण्ठाभावत्वेन, किन्तूत्कण्ठात्वेनैव। तस्मादस्फुटत्वमस्याः। यदि चेतोऽनुत्कण्ठितं नेत्यभिधीयेत तदा स्फुटत्वं भवेत्।

एवं कारणाभावेऽपि कार्योत्पत्तिवचनं विभावना। अत्र चोत्कण्ठाकारणं वरोपकरणयोरतत्ता तदभावश्च यद्यपि उक्त एव तथापि नातत्ताविरहत्वेन किन्तु तत्तारूपेणैव अभावाभावस्य तत्त्वात्। अतोऽस्या अस्फुटत्वमेव। अत्र वरोपकरणादीनामत्यन्तोपादेयत्वमप्रसिद्धकारणं विभावनीयम्।

दीपिकायान्तु—आत्मनः प्रकृतिविशेषो बहुकालव्यवधानं वा रत्युत्कण्ठया विभावनीयमित्युक्तम्, तदयुक्तम् प्रकृतिविशेषबहुकालयोः सा चास्मीत्यनेन परिहृतत्वात्। न च स एवेत्येवकारेणातत्त्वाभावप्रतीतेरतत्ताभावत्वेन प्रतीतौ कथमस्फुटत्वमिति वाच्यम्। विशेषणसङ्गतेनैवकारेण विशेष्ये विशेषणायोगस्य व्यवच्छेदो हि प्रत्याय्यते। न तु विशेषणाभावाभाव एवाऽनाहत्य प्रत्याय्यते किन्तु विशेषणयोगाभाव इति द्रष्टव्यम्। अत एव शङ्खः पाण्डुर एवेत्यादौ नापाण्डुर इति, पार्थ एव धनुर्द्धर इत्यादौ च नान्यो धनुर्धर इत्यादिः स्फुटत्वार्थं प्रयुज्यते।

दण्ड्यप्याह—'त्वन्मुखं त्वन्मुखेनैव[1] तुल्यं नान्येन केनचिद्' इति।

अन्यथा पुनरुक्तिस्तत्र स्यादिति। अनयोरस्फुटत्वे च सन्देहरूपसंकरोऽप्यनयोरस्फुट इति विभावनीयम्। अत्र तृप्तापि वरोपकरणादेरत्यन्तोपादेयतां सूचयितुमुत्कण्ठां कथयतीति सम्भोगः, किंवा केनापि हेतुना किञ्चित्कालविलम्बे पतिसान्निध्येऽप्यत्यन्तप्रणयप्रयुक्तो विलक्षणविप्रलम्भ इति सन्देहे साधकबाधकमानाभावात् सङ्कर एव स्यादहेतुः।

नन्वत्र रसस्य स्फुटत्वाद् रसवदलंकारः स्फुट इति न शङ्क्यम्। रसस्यात्र प्राधान्यात्। अप्राधान्ये एव तस्यालङ्कारत्वोपगमात्।

एतत्सर्वमभिप्रेत्याह—रसस्य हि प्राधान्यान्नालङ्कारतेति। दण्ड्यादिमताभिप्रायेण रसवदलङ्कारः उट्टङ्कितः। स्वमते तु तद्विषये गुणीभूतव्यङ्ग्यत्वमिति। प्राचीनमतदौर्बल्यं च पञ्चमोल्लासे स्फुटीकरिष्यामः॥

[1] काव्यादर्शे नियमोपमा २।१९। तत्र कमलेनैवेति पाठः।

तद्भेदान् क्रमेणाह—

**इदमुत्तममतिशयिनि व्यङ्ग्ये वाच्याद् ध्वनिर्बुधैः कथितः ॥४॥**

इदमिति काव्यम्। बुधैर्वैयाकरणैः प्रधानभूतस्फोटरूपव्यङ्ग्यव्यञ्जकस्य शब्दस्य ध्वनिरिति व्यवहारः कृतः, ततस्तन्मतानुसारिभिरन्यैरपि न्यग्भावितवाच्यव्यङ्ग्यव्यञ्जनक्षमस्य शब्दार्थयुगलस्य। यथा—

निश्शेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरो
नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः।
मिथ्यावादिनि दूति बान्धवजनस्याज्ञातपीडागमे,
वापीं स्नातुमितो गताऽसि न पुनस्तस्याधमस्यान्तिकम् ॥

अत्र तदन्तिकमेव रन्तुं गताऽसीति प्राधान्येनाऽधमपदेन व्यज्यते ॥४॥

## साहित्यचूडामणिः

एवं सामान्येन काव्यलक्षणमुक्त्वा विशेषतः शिक्षयितुमाह—तद्भेदानिति। क्रमेण उत्तमादिपरिपाट्या इदमिति काव्यं हि—

अर्थः सहृदयश्लाघ्यः काव्यात्मा यो व्यवस्थितः।
वाच्यप्रतीयमानाख्यौ तस्य भेदावुभौ स्मृतौ ॥ [ध्व० १।२]

इति ध्वनिदृशा वाच्यो व्यङ्ग्य इत्यर्थद्वयमन्योन्यव्यतिषक्तमुपलभ्यते। कश्चिदखण्ड एवार्थो विवेकिभिर्विभागबुद्ध्या व्यवस्थाप्यत इति यावत्।

## सुधासागरः

अथास्य विभागविशेषलक्षणयोरवसर इति श्लेषेण तद्द्वयमाह—

तद्भेदानिति। भेदनं भेदो विभागः भिद्यतेऽनेनेति भेदो विशेषलक्षणम् भेदाश्च भेदाश्च भेदास्तान् विभागांस्तल्लक्षणानि च क्रमेणाहेत्यर्थः।

गीतिः। लक्षणमुक्तं प्राक्। भेदलक्षणयोः प्रकृतत्वादिदंशब्देन तत्परामर्शभ्रमं वारयति। इदं काव्यम्। वाच्यादतिशायिन्यधिकचमत्कारिणि व्यङ्ग्ये उत्तमम्। बुधैरित्यादि। अयमाशयः। पटादिभिः पदैः स्फोटरूपं शब्दब्रह्म व्यज्यते तस्मादभिव्यक्तादर्थप्रत्ययः। तादृशस्य स्फोटव्यञ्जकस्य पटादिशब्दस्य ध्वनिरिति संज्ञेति वैयाकरणानां सिद्धान्तसरणिः।

अत एवोक्तं श्रीवत्सलाञ्छनभट्टाचार्यैः—शब्दात् कथं पदार्थवाक्यार्थधीः। आशुविनाशिनां क्रमिकाणां वर्णानां मेलकाभावात्। आनुपूर्व्या ज्ञातुमशक्यत्वाच्च। तेन च पूर्वपूर्ववर्णानुभवजनितसंस्कारसहितान्तिमवर्णानुभवेन स्फोटो व्यज्यते, स च ध्वन्यात्मकः शब्दो नित्यः ब्रह्मस्वरूपः सकलप्रत्ययप्रत्यायनक्षमोऽङ्गीक्रियते। तद्व्यञ्जकश्च वर्णात्मकः शब्दः। वृत्तिस्तु व्यञ्जनैव। तद्व्यञ्जकश्च शब्दो ध्वनित्वेन

## साहित्यचूडामणिः

अतिशयिनीति। वाच्यातिक्रमणसमर्थे व्यङ्ग्ये काव्यं तदुत्तममिति ध्वनिरिति च व्यपदिश्यते। व्यङ्ग्यकर्तृकातिक्रमणकर्मीभावो हि ध्वनौ वाच्यस्य महानुपयोगः। यदाह—

वाच्यानां वाचकानां च यदौचित्येन योजनम्।
रसादिविषयेणैतत् कर्म मुख्यं महाकवेः॥ [ध्व० ३।३२]

इति। अतिशयश्चायं व्यङ्ग्यस्य प्राधान्यं, न तु पर्युदासो वाच्यस्य। 'न हि व्यङ्ग्ये प्रतीयमाने वाच्यबुद्धिर्दूरीभवति। वाच्याविनाभावेन तस्य प्रकाशनात् घटप्रदीपन्यायस्तयोः। यथा प्रदीपद्वारेण घटप्रतीतौ न तत्प्रकाशः प्रणश्यति, तद्वद् व्यङ्ग्यप्रतीतौ वाच्यस्फुरणस्यावर्जनीयत्वम्। क्रमस्तु लाघवात् क्वचिन्न लक्ष्यते क्वचिच्च लक्ष्यत[1] इति वक्ष्यते। उपायकत्वायां तु—

यथा पदार्थद्वारेण वाक्यार्थः सम्प्रतीयते।
वाच्यार्थपूर्विका तद्वत् प्रतिपत् तस्य वस्तुनः॥' [ध्व० १।१०]

इति ध्वनिदृशा वाच्यव्यङ्ग्ययोः पौर्वापर्यनियमः। नन्वेवं युगपदर्थद्वययोगिता वाक्यस्य प्रसज्येत। तथा चास्य वाक्यतैव विघटेत ऐकार्थ्यलक्षणत्वात् तस्येति चेत्, न, गुणप्रधानभावेन तयोरवस्थानात्। ध्वनौ वाच्यं गुणः, व्यङ्ग्यं प्रधानम्, इतरत्र विपर्ययः।

## सुधासागरः

व्यवह्रियते इति वैयाकरणानां मतम्। यद्यपि एवमन्तिमवर्णानुभवस्यैव पदार्थवाक्यार्थधीक्षमत्वे आनुपूर्वीज्ञानस्योपायसम्भवे किमन्तर्गडुना स्फोटेनेति वक्तुं शक्यते, तथापि श्रुतिपुराणादय एव स्फोटे प्रमाणमिति ध्येयमिति। अतः प्रधानीभूतव्यङ्ग्यव्यञ्जकत्वसाधर्म्याद् गुणीभूतवाच्यं यद् व्यङ्ग्यं तद्व्यञ्जनक्षमस्य शब्दार्थयुगलरूपस्योत्तमकाव्यस्यान्यैरपि कतिपयैर्वैयाकरणानुसारिभिर्ध्वनिपण्डितैरालङ्कारिकैरिति यावत्, ध्वनिरिति संज्ञा कृतेति।

अत्रेदं रहस्यम्। स्फोटरूपं शब्दब्रह्म। तदेव सत्यम्। उक्तञ्च वैयाकरणभूषणे—

इत्थं निष्कृष्यमाणं यच्छब्दतत्त्वं निरञ्जनम्।
ब्रह्मैवेत्यक्षरं प्राहुस्तस्मै पूर्णात्मने नमः॥

तस्माद् वेदान्तवेद्यं सर्वात्मकं वस्त्वेतदेव। नचैतद् व्यञ्जनां विना स्फुटीभवति। निःसम्बन्धत्वात्। व्यञ्जना तु संसारोच्छेदभीत्या शक्तिलक्षणान्यतरत्वं वृत्तित्वमिति वदद्भिः शास्त्रकारैर्गोपितेति पदपदार्थकल्पनायां मीमांसानुसारिणां वेदान्तिनामपि दुर्बोधा। तद्वाग्देवतावतारः परमकारुणिको व्यञ्जनापरिचायककाव्येनालौकिकं लक्ष्यक्रमव्यङ्ग्यं चानेकविधं दर्शयन्नधिकारिणां सच्चिदानन्दसरणिं सूचयन्नेवोत्तमकाव्यत्वमुदाहरति यथेति।

---

[1] ध्व. ३।३३ वृत्तिः पृ० ४१३।४२०-२१ चौ० सं० १९९७ वि.।

## साहित्यचूडामणिः

इदमितीति। 'तददोषौ शब्दार्थावि'-त्यत्र तद्वृत्तेन परामर्शः, अत्र त्विदं-वृत्तेनेति न प्रक्रमभङ्गदोषशङ्का, काव्यगोचरत्वात् तस्य। इत्थं 'तददोषौ शब्दार्थावि'-त्यत्रोद्देश्यविधेयभावव्यत्यासेऽपि न दोषशङ्का। विद्वत्सामान्यवाचिनो बुधशब्दस्य ध्वनिवादप्रणेतृलक्षणे पर्यवसानमिति तदाह—वैयाकरणैरिति। 'प्रथमे हि विद्वांसो वैयाकरणाः, व्याकरणमूलत्वात्, सर्वविद्यानामि'[1]ति। प्रधानेति। वैयाकरणा हि—'गौरित्यादि प्रयोगे गकारादीनामेकैकशो वाचकत्वे द्वितीयाद्यानर्थक्यापातात् समुदायस्य वाचकत्वे समुदायिनां क्रमवत्तयाकर्ण्यमानत्वात्—

'क्रमवर्तिषु वर्णेषु सङ्घातादि न युज्यते'[२]

इति क्षणिकत्वस्य तेषामध्यक्षणीयत्वात्, अभिमानमात्रसारत्वाच्च समुदायसंविदः, 'बुद्धौ तु सम्भवस्तस्य तदन्यत्वे प्रतिक्षणम्'[३]—इति एकानुसन्धानक्रोडीकृतानां वर्णानां वाचकत्वे 'सरो रसो' 'हरो रह' इत्यादौ एकार्थप्रतीत्यापाताद् 'धीरन्त्यशब्दविषया वृत्तशब्दाहितस्मृतिः'[४]—इत्यन्त्यबुद्धिनिर्ग्राह्यः, स्फोटो नाम वाचकः, 'तस्माद् ध्वनिः शब्द' इत्याचार्यमहाभाष्यकारमर्यादया काव्ये व्यङ्ग्यव्यञ्जकानां शब्दानां ध्वनिशब्द-वाच्यत्वमित्यातिष्ठन्ते। व्यञ्जकेभ्यो ध्वनिभ्यः स्फोटलक्षणव्यङ्ग्यस्य प्राधान्यमर्थ-प्रतीत्यवश्यम्भावात्। स्फुटत्यस्मादर्थ इति स्फोटः। यतो व्यञ्जकानां वर्णानां

## सुधासागरः

निःशेषेति। शार्दूलविक्रीडितं छन्दः। लक्षणमुक्तम्। नायकानयनाय प्रेषितां तं सम्भुज्यागतां दूतीं प्रति विदग्धोत्तमनायिका स्नानकार्यत्वप्रतिपादनमुखेन सम्भोग-चिह्नान्युद्घाटयितुमाह। अन्वयो यथाश्रुत एव। तवेत्यस्य स्तनतटादौ सर्वत्र सम्बन्धो बोध्यः।

अयमर्थः। रे मिथ्यावादिनि मया गत्वा चिरं बहुधा प्रसादितोऽपि नागत इति मिथ्याभाषणशीले दूति। न तु सखि। तेन मिथ्याभाषणशीलत्वस्य योग्यता व्यज्यते। बान्धवजनस्य मद्रूपस्याज्ञातः स्वार्थपरायणतयाऽनाकलितः पीडाया आगमः आगमनं यया तथाविधे। इतो ममान्तिकाद् वापीं प्रति स्नानाय गतासि स्नानकालातिक्रमलोभात्। पुनरेवार्थे। तस्य बहुधा कृतापराधस्य। अत एवा-धमस्यापरवेदनानभिज्ञतया दुःखप्रयोजककर्मशीलस्यान्तिकं समीपं नैव गतासीत्यर्थः। उक्तार्थे साधकं निःशेषेत्यादि।

अप्पयदीक्षितास्तु—वृत्तिकारमहिमानमजानन्तः स्वकल्पितप्रकारेणैवैतदुदाहरणं दूषयितुं व्याचक्रुः—'तथा हि—अधमत्वमपकृष्टत्वं तच्च जात्या कर्मणा वा भवति। तत्र जात्यापकर्षं नोत्तमनायिका नायकस्य वक्ति। नापि स्वापराधपर्यवसायिदूतीस-म्भोगादिहीनकर्मातिरिक्तेन कर्मणा। तादृशं च दूतीसम्प्रेषणात् प्राचीनं सर्वं सोढमेवेति नोद्घाटनार्हमितीतरव्यावृत्त्या सम्भोगरूपमेव पर्यवस्यतीत्यधमपदस्य प्राधान्यम्।

[1] ध्व. १।१३ वृत्तिः, पृ० १३२-३३ चौ० सं०। २—४. भा. का. ४.५-६

## साहित्यचूडामणिः

ध्वनिव्यवहारः, तत एव हेतोस्तन्मतानुसारिभिराचार्यानन्दवर्धनप्रभृतिभिरपि वाच्यार्थन्यक्कारसमर्थं यद् व्यङ्ग्यं वस्तु तद्व्यञ्जनविदग्धस्य शब्दार्थयुगलस्य ध्वनिरित्येव व्यवहारः कृतः। केवलं शब्दशरीरनिर्व्यूढा ध्वनिशिक्षा शब्दार्थयुगलमेलकलक्षणे काव्येऽपि योजितेति नात्यन्तं विशेषः। प्रादीनामुपसर्गाणां निपातानां च चादीनां वाचकत्वावधीरणेन व्यञ्जकत्वाङ्गीकारोऽपि तदनुरोधेनेति वैयाकरणोपज्ञमेतत्। अतः स्थितमेतत् 'वाच्यातिलङ्घनप्रवीणे व्यङ्ग्ये काव्यं तदुत्तमं ध्वनिरिति च व्यपदिश्यत' इति। तदेतद् व्यक्तिविवेकव्याकृतान् दोषानुद्धर्तुम्।

यत्रार्थः　शब्दो वा　तमर्थमुपसर्जनीकृतस्वार्थौ।
व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः॥ [ध्व० १।१३]

इति ध्वनिकारिकां प्रतिसंस्कृत्योक्तं यदुत 'तत्र केचिदाग्रहोद्गृहीताः, एके विद्यमानाः, इतरे सन्तोपि न प्रमेयभागोपक्षीणा यावद्ग्रन्थप्रतीकखण्डनमात्रव्यापृता इति दोषाणां त्रैविध्यम्। तत्र विद्यमानानां परिहारः, अन्येषामुपेक्षा, यस्मादर्थस्य विशिष्टत्वदूषणमाग्रहप्रयुक्तं, ध्वनिस्कन्धाद् गुणीभूतव्यङ्ग्यलक्षणस्य काव्यस्कन्धस्यानपह्नवनीयत्वात्। एतदुक्तं भवति—'वाच्यव्यङ्ग्ययोरुपायोपेयभावः अचारुचारुत्वविभागः उपकारकोपकार्यभावश्चेति त्रैविध्यम्। तत्रोपेयस्य चारोरुपकार्यस्य च प्राधान्यम्।

## सुधासागरः

निःशेषेत्यादिवाक्यानि सम्भोगचिह्नोद्घाटनेन तस्य साहाय्यकमाचरन्ति। तथा हि—उत्तरीयाकर्षणेन चन्दनच्युतिरित्यन्यथासिद्धिपरिहाराय निःशेषेति। ततश्चन्दनच्युतेः स्नानसाधारण्यव्यावर्तनेन सम्भोगचिह्नोद्घाटनाय स्तनतटग्रहणम्। स्नानेन हि सर्वत्र चन्दनच्युतिः स्यात् तु तव स्तनयोस्तटे उपरिभाग एव दृश्यते, सेयमाश्लेषकृतैवेति। तथा ताम्बूलग्रहणविलम्बात् प्राचीनरागस्य किञ्चिन्मृष्टतेरित्यन्यथासिद्धिपरिहाराय निर्मृष्टेति। पुनः स्नानसाधारण्यव्यावर्तनेन सम्भोगचिह्नोद्घाटनायाऽधर इति। उत्तरोष्ठे सरागेऽधरमात्रस्य निर्मृष्टरागता चुम्बनकृतैवेति। एवं प्रातर्दन्तमञ्जनं कालविलम्बेन किञ्चिद्विलुप्तमित्यन्यथासिद्धिपरिहाराय दूरमित्युक्तम्। दूरमत्यर्थमित्यापाततोऽर्थः। कालतः स्नानेन वा सर्वतोऽञ्जनलोपः स्यात् तव तु लोचनयोः क्वचित्प्रान्त एवानञ्जनत्वमिदं चुम्बनकृतमेवेति। पुलकिता तन्वी तवेयं तनुरित्यत्रापाततस्तन्वीति सहजतानवकीर्तनेन पुलकितेति स्नानचिह्नोपन्यासः। पुलकितापि तन्वी वर्तत इति हृदि स्थितोऽन्वयः। तेन च स्नानेन पुलकिता तनुः किञ्चिदुल्लसिता भवति। इयं तु न तथेति रतिक्लेशजनितावेव तानवपुलकोद्गमाविति मर्मोद्घाटनम्। एवं मिथ्यावादिनीति सम्बोधनमपि व्यङ्ग्यानुगुण एव नायकमानेतुं गच्छामीति मिथ्याभाषणरूपेऽर्थे पर्यवस्यतीति।

एवं च निःशेषेत्याद्यवान्तरवाक्यार्थानां स्नानव्यावृत्तिद्वारेण व्यङ्ग्यासाधारण्यसम्पादनं न व्यञ्जनानुकूलम्। व्याप्त्यपरपर्यायस्यासाधारण्यस्यानुमानानुकूलताया

## साहित्यचूडामणिः

अप्राधान्यं पुनरुपायस्याचारोरुपकारकस्य च इति स्थितावादिमयोः प्रतिक्षेपशङ्कायामन्तिमस्योपकार्यत्वस्य स्वविश्रान्तिलक्षणस्य न काचित् प्रतिक्षेपार्हता। इतरथा गुणीभूतव्यङ्ग्ये व्यङ्ग्योऽर्थो वाच्यो (वायतः उपायभूतः) चारुरपि स्वविश्रान्तिशाली प्रसज्येत प्रत्युत तस्य वाच्योपस्काराय प्रवृत्तत्वात्। अत एवोक्तं ध्वनिवृत्तौ 'समारोपितनायिकानायकव्यवहारयोर्निशाशशिनोरेव वाक्यार्थत्वादिति' (ध्व० १.१३ वृ०) ततश्च समासोक्त्यादौ प्रत्यावृत्य स्वविश्रान्तत्वेन वाच्यस्य व्यङ्ग्यार्थोपकार्यत्वमस्तीति व्यभिचारवदप्राधान्यमिति विशेषणोपपत्तिः। एवम्

अलङ्कारान्तरस्यापि प्रतीतौ यत्र भासते।
तत्परत्वं न काव्यस्य (वाच्यस्य) नासौ मार्गो ध्वनेः स्मृतः ॥ [ध्व० २।२७]

इत्यत्र दीपकादेरुपमादिं प्रत्यतत्परत्वसिद्धिः, यतस्तत्रापि दीपकादेरुपायत्वाचारुत्वयोरपि स्वविश्रान्तिलक्षणमुपकार्यत्वमनुभूयते, प्रतीयमानोपमया दीपकस्योपक्रियमाणत्वात्। तत एव दीपकव्यपदेशश्च। इत्थं च यदुक्त[१]—'मभिधायकवदभिधयापि भाव्यं गृहीतयेति, तदप्ययुक्तं, चिरन्तनैरुद्भटादिभिः शब्दार्थधर्मतयालङ्काराणामङ्गीकारात् न शब्दव्यापारधर्मतया। अभिधा ह्यर्थप्रतीत्युन्नेयं शब्दोच्चारणम्। न च तस्य किञ्चिच्चारुत्वम्, उच्चार्यमाणस्य शब्दस्य [प्रतिपाद्यस्य चार्थस्य चारुत्वनिश्चयात्। शास्त्रेतिहासादिवैलक्षण्यं च व्यापार्येण प्रयोज्यते न व्यापारमात्रेण इति ध्वनिकारस्याभिसन्धानादिति। 'सूरिभिः कथित इति सूर्युपादान-

## सुधासागरः

व्यक्तिप्रतिकूलत्वात्। 'ओण्णिद्दं दोब्बल्लं चिन्ता' इत्यादौ साधारणानामेवौन्निद्र्यादीनां वक्त्रादिवैशिष्ट्यवशादर्थविशेषव्यञ्जकत्वस्वीकारात्। तथा च विशेषणवाक्यार्थानां वापीस्नाने बाधावतारात् स्नातुं गतासीत्यत्र विरोधिलक्षणया न गतासीति निषेधस्य, तस्यान्तिकं न गतासीत्यत्र गतासीति विधेश्च प्रतीत्या तदन्तिकमेव रन्तुं गतासीत्यस्य व्यङ्ग्यत्वानुपपत्तिरित्याशयेन 'स्थिताः क्षणं पक्ष्मसु ताडिताधराः' इत्यादि कुमारसम्भवपद्यमुत्तमत्वेन तैश्चित्रमीमांसायामुदाहृतम्।

तत्र ब्रूमः—यत्तावन्निःशेषेत्यादौ स्नानसम्भोगपक्षयोः साधारण्यव्यावर्तनम्, तन्महाग्रन्थगूढाशयानवबोधविजृम्भितम्।

इत्थं किल तत्राशयः, उत्तरीयाकर्षणेन चन्दनच्युतिरित्यन्यथासिद्धिपरिहाराय निःशेषेति। ततो गृहस्नानसाधारण्यव्यावर्तनेन प्रसिद्धवापीस्नानचिह्नोद्घाटनाय स्तनतटग्रहणम्। गृहस्नानेन हि सर्वत्र चन्दनच्युतिः स्यात्, तव तु स्तनयोस्तटं प्रान्तसमदेशो न तु स्तनसन्ध्यादिः निःशेषं च्युतं स्खलितं चन्दन यस्मात्तथाभूतम्। वापीगतबहुलयुवजनलज्जापारवश्यादंसद्वयलग्नाग्रस्वस्तिकीकृतं भुजयुगलं यथा स्यात्तथा स्नाने तटस्यैवोन्नततया मुहुः परामर्शात्। अत एव च्युतमित्युक्तं न तु क्षालितमिति। युवजनसम्मर्दैन क्षालनानवकाशात्।

[१] महिमभट्टेन व्यक्तिविवेकारम्भ इति यावत्।

## साहित्यचूडामणिः

खण्डनमप्याग्रहनिर्व्यूढं सामान्यविवक्षायां दोषस्य शङ्क्यमानत्वाद् विशेषविवक्षायां तु प्रत्युत वैयाकरणोपक्रमत्वप्रख्यापनाद् गुणलाभात्। ततः पुंस्त्वदूषणादयो ग्रन्थखण्डनमात्रव्यापृताः। व्यञ्जनव्यापारः शब्दस्यार्थस्य वा नापह्नोतुं पार्यते, अनुमानस्यापि व्यञ्जनविशेषतयाङ्गीकारादित्यलं ग्रन्थगौरवेण।

निश्शेषेति—एषा हि वल्लभानयनाय दूतीं प्रेषितवत्याः 'स्त्रियः कामितकामिन्यः' इति नीत्या तेनैव तामुपभुक्तामवगच्छन्त्याः कस्याश्चिदुपालम्भोक्तिः। अधमस्य नायिकातद्दूतीविभागानभिज्ञस्य। तदन्तिकं वल्लभस्य सकाशम्। प्राधान्येनेति। अयमेव हि वाच्याद् व्यङ्ग्यस्यातिशयः, यद् वापीं स्नातुमितो गतासीति विधौ वाच्ये 'न गतासी'ति निषेधो व्यङ्ग्यः। यच्च न पुनस्तस्याधमस्यान्तिकमिति निषेधे वाच्ये तदन्तिकमेव रन्तुं गतासीति विधिर्व्यङ्ग्यः। इति विधिनिषेधौ विरुद्धाविति न कस्यापि विमतिः॥ ४॥

## सुधासागरः

व्यङ्ग्यपक्षे तु—मर्दनाधिक्यात्तटमेव तथाभूतमिति व्यक्तमेव साधारण्यम्। एवं ताम्बूलग्रहणविलम्बात् किञ्चिन्मृष्टरागतेत्यन्यथासिद्धिपरिहाराय निर्मृष्टेति। पुनर्गृहस्नानसाधारण्यव्यावर्तनेन वापीस्नानचिह्नोद्घाटनायाऽधर इति। गृहस्नाने सावकाशतया मुखप्रक्षालनादुभयोरोष्ठयोर्निर्मृष्टरागता स्यात् तव तु अधरस्योत्तानतया बहुलजलसम्बन्धादुत्तरोष्ठस्य न्युब्जतया तत्र जलसम्बन्धमान्द्यादधरमात्रे निर्मृष्टरागता वापीस्नानकृतैव। व्यङ्ग्यपक्षे तु चुम्बनकृतमेव तथात्वमिति व्यक्तमेव साधारण्यम्।

एवं प्रातर्दत्तमञ्जनं कालविलम्बात् किञ्चिद् विलुप्तमित्यन्यथासिद्धिपरिहाराय नेत्रे अनञ्जने इति। ततो गृहस्नानसाधारण्यव्यावर्तनेन वापीस्नानचिह्नोद्घाटनाय दूरमिति। गृहस्नाने हि प्रक्षालनवशात् सर्वत्राञ्जनलोपः स्यात्, तव तु दूरमुपरिभाग एवाऽनञ्जनता, सेयं वापीस्नानकृतैव। वाप्यन्तर्मज्जनकाले नेत्रमुद्रणान्मध्ये वापीस्नानजलसंसर्गाभावात्। व्यङ्ग्यपक्षे तु नेत्रमध्ये चुम्बननिषेधात् प्रान्तेऽनञ्जनता, चुम्बनकृतैवेति व्यक्तमेव साधारण्यम्।

एवं तनोः साहजिकतनुरूपतापरिहाराय तन्वी तनुरियमिति। सहजकृशा तव तनुः इयं स्नानसुखवशादुल्लसितेति भावः। पुनर्गृहस्नानसाधारण्यव्यावर्तनेन वापीस्नानचिह्नोद्घाटनाय पुलकितेति। गृहे तप्तोदकस्नाने पुलकासम्भवाद्वापीस्नानशैत्यवशादेव तनुः पुलकितेति। व्यङ्ग्यपक्षे तु—सुरतस्मरणात् पुलकितेति व्यक्तमेव साधारण्यम्। अधमत्वोक्तिरपि प्राचीनानामेव सोढानामप्यपराधानामसह्यतां दूतीं प्रति प्रतिपादयितुं, न तु सम्भोगम्, विदग्धोत्तमनायिकायाः सखीसमक्षं स्फुटतया तत्प्रकाशनानौचित्यात्।

एवं च विदग्धाया गूढतात्पर्यया वाचोयुक्त्या साधारणेष्वेतेषु वाक्यार्थेष्ववगतेषु विदग्धोत्तमनायिकात्वदुःशीलत्वादिरूपवक्तृबोद्धव्यवैशिष्ट्यबलादधमपदार्थे दुःखप्रयोजककर्मशीलत्वरूपः साधारणो वाच्यतादशायां तादृशकर्मान्तरशीलत्वरूपे-

## सुधासागरः

णाऽवस्थितो व्यञ्जनया दूतीसम्भोगरूपतादृशकर्मशीलत्वाकारेण पर्यवसाने विलम्बाभावात्तथाभूत इत्यधमपदप्राधान्यम् ।

चन्दनच्यवनादीनां तु स्नानकार्यतया निबद्धानां योग्यतया सम्भोगाङ्गभूताश्लेषचुम्बनादिकार्यताप्रतिसन्धाने सति तद्व्यञ्जनद्वारा सम्भोगगमकत्वमिति शेषः । अत्र च त्वय्यकृतज्ञायां यद्बान्धवबुद्ध्या विश्वसिमि, यच्च तत्रैवंविधे दृढमनुरक्ताऽस्मि, तद्युक्तमेव ममैवंविधविविधवञ्चनाजनितपरितापपात्रत्वमितीर्ष्याहेतुकविप्रलम्भसंचारिनिर्वेदध्वनिः । तदनुगुणश्च दूतीसम्भोगः। चन्दनच्यवनादीनां च वाच्यानां व्यङ्ग्यानां च परिरम्भचुम्बनाद्यनुभावानां सम्भोगोत्कर्षद्वारेणेर्ष्योत्तेजकानां निर्वेदोत्कर्षत्वमिति ध्येयम्। तथा चाऽप्पयदीक्षितप्रतिपादितमसाधारण्यं प्रामादिकमेवेति विद्वद्भिर्नादरणीयम् ।

यत्तूपनायकमानेतुं प्रेषितां तदुपभोगलुप्तचन्दनादीन् वापीस्नानव्याजेन गोपायन्तीं दूतीं प्रति नायिकाया इयमुक्तिरिति केषांचित् पूर्वपीठिकारचनम् , तदपि प्रामादिकमेव । तथा सति स्नानस्य दूत्यभ्युपगत्वेन तदुपपादकनिःशेषेत्यादिवाक्यानामसङ्गतत्वापत्तेः । सम्भोगप्रकाशनस्यापि स्नानकार्यप्रकाशनमुखेनैव कर्तव्यत्वात् ।

किञ्च स्नानतदन्तिकगमनयोर्द्वयोरपि दूत्या निवेदितयोरेकस्य सत्यत्वेऽपरस्यापि सत्यत्वमेव सम्भाव्यते न तु मिथ्यात्वमिति तदन्तिकगमनस्य मिथ्यात्वोपन्यासो निर्बीज एव स्यात् । दूत्यनभ्युपगतस्नानसाधने तु प्रतारकतया तदन्तिकगमनस्य मिथ्यात्वोपन्यासो युक्त इति सहृदयैराकलनीयम् ।

एतत्सर्वमभिप्रेत्य वृत्तिकृदाह—अत्राऽधमपदेन तदन्तिकमेव रन्तुं गतासीति प्राधान्येन व्यज्यत इति । अत एव काव्यप्रदीपकारैरुक्तम्—नन्वत्र मुख्यार्थबाधाद् विपरीतलक्षणया तदन्तिकमेव गतासीति लक्ष्यमेव युज्यते न तु व्यङ्ग्यम् । अन्यथा 'साहेन्ती' इत्यादिवक्ष्यमाणलक्षणामूलव्यञ्जनोदाहरणेऽपि विपरीतलक्षणा न स्यात् विशेषाभावादिति । अत्र केचित् । सत्यमत्र विपरीतलक्षणा । वृत्तिग्रन्थस्तु तदन्तिकमेव गतासीत्यत्र लक्ष्यते इति शेषकल्पनया योजनीयः । व्यज्यत इति रन्तुमित्यनेनैवान्वीयत इत्याहुः ।

परमार्थस्तु—न खलु मुख्यान्वयायोग्यत्वं स्वरूपसल्लक्षणाबीजम्, किन्तु ज्ञातम् । तथा च यत्र सख्यादेः प्रसाद्यकामुकादिसम्भोगः प्रमाणान्तरेण श्रोतुः प्रतीतिमुपगतः स तत्र मुख्यार्थबाधादस्तु लक्षणा तदभिप्रायेणैव 'साहेन्ती सहि सुहअम्' 'उपकृतं बहु नाम' इत्युदाहृतम् । यत्र तु प्रमाणान्तरं न तज्ज्ञापकमवतरति तद्वाक्यजनितप्रत्ययमहिम्नैव तु तत्प्रत्ययस्तत्र कथं लक्षणा । बाधाभावात् । उत्पन्नेऽपि वाक्यार्थबोधे भवन्नपि बाधोऽकिञ्चित्कर एव । तदभिप्रायेण 'वापीं स्नातु' मित्युदाहृतम् । अतएवोक्तमधमपदेन व्यज्यत इति । अत एव च यत्र सख्यादेस्तादृशत्वं न प्रमाणान्तरेणावगतं तत्र न साहेन्तीत्यादौ विपरीतलक्षणा व्यङ्ग्यार्थप्रतीतिर्वा । वापीं स्नातुमित्यादौ तु बाधानवतारेऽपि अधमपदार्थपर्यालोचनया यथोक्तव्यङ्ग्यं प्रतीयत एवेत्येव प्राधान्यमधमपदस्य । तस्मात् साहेन्तीत्यदौ यदि व्यञ्जना तदा लक्षणामूलैव, वापीं स्नातुमित्यादौ तु न नियम इति ॥४॥

[ मध्यमं काव्यम् ]

**अतादृशि गुणीभूतव्यङ्ग्यं व्यङ्ग्ये तु मध्यमम् ।**

अतादृशि वाच्यादनतिशायिनि । यथा—

ग्रामतरुणं तरुण्या नववञ्जुलमञ्जरीसनाथकरम् ।
पश्यन्त्या भवति मुहुर्नितरां मलिना मुखच्छाया ॥

अत्र वञ्जुललतागृहे दत्तसङ्केता नागतेति व्यङ्ग्यं गुणीभूतम्, तदपेक्षया वाच्यस्यैव चमत्कारित्वात् ॥

## साहित्यचूडामणिः

अतादृशीति । तादृक्त्वम् उत्तमकाव्यलक्षणयोगित्वम् । तद्व्यतिरेको वाच्यादनतिशयितत्वमित्याह—वाच्यादिति । मध्यमकाव्यं गुणीभूतव्यङ्ग्यमिति च पर्यायः । व्यङ्ग्यस्य स्वाभाविकं वपुः प्राधान्यम्, अप्राधान्यं पुनरौपाधिकमिति च्विप्रत्ययः ॥

## सुधासागरः

अतिशयितचमत्कारानाधायकव्यङ्ग्यं मध्यमं काव्यं तद् गुणीभूतव्यङ्ग्यं कथितमित्यनुषज्यते । अत्र व्यङ्ग्ये स्फुटव्यङ्ग्ये इत्यर्थः । तेन नाऽधमकाव्यातिव्याप्तिरिति केषांचिन्मतमयुक्तम् । 'अगूढमपरस्याऽङ्गम्' इत्यादिना गुणीभूतव्यङ्ग्यप्रभेदत्वेन प्रतिपादयिष्यमाणस्यास्फुटव्यङ्ग्यस्याव्यङ्ग्यतापत्तेः । किन्त्वस्फुटतरातिरिक्तव्यङ्ग्यपरं व्यङ्ग्यपदम् । गुणीभूतव्यङ्ग्ये चास्फुटमात्रं व्यङ्ग्यम् । अधमकाव्ये तु अस्फुटतरं तद्विरह एवेति न काचिदनुपपत्तिः । एतेन सारबोधिनीकारैर्यदुक्तम्—अत्र चित्रान्यत्वे सतीति विशेषणं देयम् । तेन चित्रे नातिव्याप्तिः' इति । तन्नादरणीयम् ।

यथेति । मध्यमकाव्यमुदाहरति 'ग्रामे'-ति ।

गाथा छन्दः । लक्षणमुक्तम् । नवञ्जुलमञ्जरीसनाथकरं ग्रामतरुणं पश्यन्त्यास्तरुण्या मुखच्छाया नितरां मुहुर्मलिना भवतीत्यन्वयः ।

अयमर्थः । नवा नूतना वञ्जुलस्याशोकस्य मञ्जरी तया सनाथः युक्तः करो यस्य तथाभूतम् । अत्र नवेत्यनेन नूतनवस्तुग्रहणस्यौचित्येनावितर्कणीयता सूच्यते इत्याहुः ।

नूतनस्य दर्शनौचित्येन शङ्कानुदयाय नवेति विशेषणमिति केचित् ।

वयन्तूद्दीपनप्रकर्षाय नवेति विशेषणम् । प्रधानस्य मुखमालिन्यरूपानुभावस्य सर्वथोत्कर्षणीयत्वादिति प्रतीमः ।

## साहित्यचूडामणिः

ग्रामेति। ग्रामीणपुत्रानुरागिणी वञ्जुललतागृहे दत्तसङ्केतां श्वश्रूपारतन्त्र्येण निर्गन्तुमसमर्था तस्मिन् सङ्केतस्थानमुपगम्य शून्यं प्रतिनिवृत्ते तदभिज्ञापनाय वञ्जुलसम्बन्धिनीमेव पुष्पमञ्जरीमाददाने विषण्णहृदयां स्नुषामुद्दिश्य मिथः सख्योरुक्तिः।

अत्रासौन्दर्यलक्षणं वक्ष्यमाणं गुणीभावोपाधिकमुपपादयति—तदपेक्षयेति। तस्य व्यङ्ग्यस्यापेक्षया प्रतिसम्बन्धिताबुद्ध्या वाच्यस्यैव चमत्कारकारित्वात् न पुनर्व्यङ्ग्यस्य।

## सुधासागरः

ग्रामतरुणमिति—ग्रामेतिविशेषणेन निरन्तरसन्निधानात् सङ्केतदानयोग्यता स्नेहातिशयो वा ध्वन्यते इति उदाहरणदीपिकाकाराः। तन्न। तथासति दिनान्तरेऽपि सम्भोगप्रत्याशानुवृत्तौ विप्रलम्भस्य लघुत्वापत्तेः।

ग्रामे एकतरुणं तेन दुर्लभत्वं ध्वन्यते इत्यन्ये।

ग्रामस्य स्त्रीसमूहस्य सम्बन्धी तरुण इत्यर्थः। तेनानेकनारीप्रार्थ्यमानत्वं सूच्यते इत्यपरे।

मुहुर्दर्शनेऽपि शङ्कानुदयाय ग्रामेतिविशेषणमितीतरे।

ग्रामतरुण इति ग्रामीणतया पुनरनुकूलयितुमशक्य इति व्यज्यते इति केचित्।

वयं तु ग्रामतरुणमित्यनेन बलवत्त्वं तेन सर्वोत्कृष्टकामुकत्वं व्यज्यत इति प्रतीमः। पश्यन्त्यास्तरुण्या इति द्वयोस्तरुणत्वोक्त्या परस्परानुरागोत्कर्षः सूच्यते।

मुखच्छाया वदनकान्तिः। नितरामतिशयेन मुहुर्मलिना भवतीत्यनेन दर्शनकाल एव यथा यथा तदनुसन्धानं तथा तथा ऽनुतापोत्कर्षोन्मालिन्यातिशयः सन्तन्यमानता चेति वाच्यम्। चमत्कार्यभावत्वेन विप्रलम्भपोषकं प्रतीयत इति वञ्जुललतागृहे दत्तसंकेता तरुणी नागतेति व्यङ्ग्यं न वाच्यातिशायीति गुणीभूतम्। पश्यन्त्या भवतीति वर्तमाननिर्देशाभ्यां जनकीभूतदर्शनसमकालतया कार्यस्य मुखच्छायामालिन्यस्य कथनादतिशयोक्तिरलङ्कारः। सर्वमेतदभिप्रेत्य वृत्तिकृदाह अत्रेत्यादि।

[ अवरं काव्यम् ]

**शब्दचित्रं वाच्यचित्रमव्यङ्ग्यं त्ववरं स्मृतम् ॥५॥**

चित्रमिति गुणालङ्कारयुक्तम्। अव्यङ्ग्यमिति स्फुटप्रतीयमानार्थरहितम्। अवरमधमम्। यथा—

स्वच्छन्दोच्छलदच्छकच्छकुहरच्छातेतराम्बुच्छटा-
मूर्च्छन्मोहमहर्षिहर्षविहितस्नानाह्निकाह्नाय वः।
भिद्यादुद्यदुदार-दर्दुर-दरी-दीर्घाऽदरिद्र-द्रुम-
द्रोहोद्रेकमहोर्मिमेदुरमदा मन्दाकिनी मन्दताम्॥
विनिर्गतं मानदमात्ममन्दिराद् भवत्युपश्रुत्य यदृच्छयाऽपि यम्।
ससंभ्रमेन्द्रद्रुतपातितार्गला निमीलिताक्षीव भियाऽमरावती ॥५॥

इति काव्यप्रकाशे काव्यस्य प्रयोजनकारणस्वरूप-
विशेषनिर्णयो नाम प्रथम उल्लासः ॥१॥

●

## साहित्यचूडामणिः

शब्देति। अव्यङ्ग्यमधममित्युभयथा व्यपदेशः। शब्दाख्ये काव्यभागे चित्रं, न पुनरन्यत्र रसादौ। एवमर्थचित्रेऽपि। यदाह—

प्रधानगुणभावाभ्यां व्यङ्ग्यस्यैवं व्यवस्थितेः (ते)।
काव्ये उभे, ततोऽन्यद् यत् तच्चित्रमभिधीयते॥
चित्रं शब्दार्थभेदेन द्विविधं च व्यवस्थितम्।
तत्र किञ्चिच्छब्दचित्रं वाच्यंचित्रमतः परम्॥ [ध्व० ३।४२-४३]

इति। गुणालङ्कारयोगश्चित्रत्वम्।

## सुधासागरः

श्लोकश्छन्दः। लक्षणमुक्तं प्राक्। अत्र चित्रमित्यध्याहार्यं तेनाव्यङ्ग्यं काव्यमवरमधमम्। तच्चित्रमिति कथितमित्यर्थः। अव्यङ्ग्यमव्यङ्ग्यतरातिरिय रहितम्। तादृशं चास्फुटतरव्यङ्ग्यसद्भावे व्यङ्ग्यमात्राभावे वा। चित्रं गुणालङ्कारयोगि।

इदमत्र रहस्यम्—उत्तममिति मुख्यो व्यवहारस्तदेवैकदेशिभिर्ध्वनित्वेन व्यवहृतं, तथा मध्यममिति गुणीभूतव्यङ्ग्यत्वेन, अधममिति चित्रत्वेनेति।

ननु कथमेकस्मिंश्चित्रत्वमधमत्वमिति चेत्। उच्यते यथा चित्रे देवादेर्नृपादेर्वाऽऽकृतेर्ज्ञापनाय लिखितया प्रकृत्या विविधचित्रवर्णकरेखाघटनावैचित्र्येण स्वस्यां चित्तमाकृष्टवत्योत्तरकालं प्रकृतयः स्मार्यन्ते, तथा ऽत्रापि झटित्यास्वादोद्बोधाय निबद्धैर्गुणालङ्कारैरुद्भटवैचित्र्येणात्मनि सहृदयं विश्राम्य परत एव कथंचिदङ्गतया स्वाद्यत इति चित्रता। अतएव झटित्युद्देश्यानिर्वाहकत्वादधमतेति बोध्यम्। सर्वमिदमभिप्रेत्याह-चित्रमिति। गुणालङ्कारयुक्तमित्यादि। यथेति।

## साहित्यचूडामणिः

ननु 'सर्वथा नास्त्येव सहृदयहृदयहारिणः काव्यस्य स प्रकारः यत्र न प्रतीयमानार्थसंस्पर्शेन सौभाग्यमिति'[१] ध्वनिवृत्तियुक्त्या पर्यन्तकक्ष्याप्रेक्षणे शृङ्गाराद्यन्यतमस्फुरत्तानैयत्यान्न तृतीयेऽपि काव्ये रसवासना त्रुट्यति। तत् कथमुक्तम् "अव्यङ्ग्यमवरमि"त्याशङ्क्याह—स्फुटेति। कविसंरम्भगोचरेण प्रतीयमानार्थेन रहितं, न तु सर्वथा व्यङ्ग्यवासनाशून्यम्। तस्माद्व्यङ्ग्यत्वमल्पव्यङ्ग्यत्वे पर्यवस्यति, अनुदरा कन्येतिवत्। अवरमित्युक्ते शब्दशक्त्या मध्यममपि प्रतीयेत्। तद्व्यपोहार्थमाह—अधममिति।

स्वच्छन्देति। अत्रानुप्रासोऽलङ्कारस्तदनुगुणमोजश्च गुण इति नातिदुर्ज्ञानम्। शान्तरसस्फुरत्ता च कदाचिदपि अपरिहार्या।

## सुधासागरः

शब्दचित्रमुदाहरति स्वच्छन्देति—

शार्दूलविक्रीडितं छन्दः। स्वच्छन्दम् उच्छलत् अच्छम् कच्छकुहरेषु छातेतरत् यदम्बु तस्य छटाभिर्मूर्च्छन्मोहो येषां तैर्महर्षिभिर्हर्षेण विहिते स्नानाह्निके यस्यां सा तथाभूता। स्वच्छन्दं यथास्यात्तथोच्छलत् न तु वातादिपारतन्त्र्यात्। तेन जलबाहुल्यं द्योत्यते। अच्छं निर्मलं कच्छस्य जलप्रायदेशस्य कुहरेषु तरङ्गकृतबिलेषु छाताद् दुर्बलादितरत् वेगातिशयेन बलवदित्यर्थः। छातमल्पमिति तु न सम्यक्। स्वच्छन्दोच्छलदित्यनेनैव बाहुल्यलाभात्। एतादृशं यदम्बु तस्य छटाः कणिकापरंपराः ताभिर्मूर्च्छन्नश्यन् मोहः संसारासक्तिरूपमणनं येषां तादृशैर्महर्षिभिर्हर्षेण ज्ञानलाभोत्पन्नानन्देन विहिते स्नानाह्निके यस्यां तादृशी। उद्यन्तः प्रकाशमाना उदारा महान्तो दर्दुरा भेकास्तेषां दर्यो निवासाय कृता गर्त्तविशेषास्तेषु दीर्घा प्रसृता, दरिद्राः शाखापत्रपुष्पादिसम्पन्नाः, जलसान्निध्यादिति भावः, द्रुमास्तरवस्तेषां द्रोहः पातनं तत्रोद्रेक आधिक्यं येषान्तादृशा महोर्मयो महातरङ्गास्त एव मेदुरो निबिडो मदो गर्वो यस्यास्तादृशी मन्दाकिनी गङ्गा वो युष्माकं मन्दतामज्ञानमह्नाय झटिति भिद्यात् नाशयत्वित्याशीः।

मन्दतां पापमिति केचित्।

पापेनापकृष्टतामित्यपरे।

अत्र दर्दुरः पापविशेषस्तस्य दर्यः कन्दरा इति व्याख्याय दर्दुरस्य गङ्गासम्बन्धाभावान्मन्दाकिनी नद्यन्तरमेवेति प्राञ्चः। तत्तुच्छम्। नद्यन्तरस्याप्रसिद्धत्वात्। अत्र यद्यपि द्रुमपातनादिना नद्यन्तरान्महर्षिसेवनेन च तीर्थान्तराद्व्यतिरेकः प्रतीयते तथापि वृत्त्यनुप्रासः शब्दालङ्कारः काव्यजीवातुः। प्राधान्येन व्यपदेश इति न्यायात्।

ननु कथमेतदव्यङ्ग्यमुच्यते। मन्दाकिनीविषयायाः प्रीतेरभिव्यक्तेः। किञ्च नास्त्येव स काव्यार्थो यस्य न व्यञ्जकत्वमन्ततो विभावत्वेनापीति चेत्। सत्यम्। किन्तु तद्व्यङ्ग्यमस्फुटतरम्। यद्वा तत्र न कवेस्तात्पर्यमनुप्रासमात्र एव तस्य संरम्भात्। तात्पर्यविषयीभूतव्यङ्ग्यविरहवत्त्वमेवात्र व्यङ्ग्यपदेन विवक्षितम्।

---

[१] ध्व० ३,३६ कारिकावृत्यन्ते।



## साहित्यचूडामणिः

विनिर्गतमिति। मानं द्यति ददातीति च मानदः। अत्रोत्प्रेक्षालङ्कारस्तदनुगुणं च माधुर्यं गुणः। शृङ्गाराभासशालिनो वीररसस्य सम्भावना नोत्कर्षप्राप्तिः। न खलु जेतव्यया नगर्या सह प्रविनेतुः शृङ्गारौचित्यम्। अनयोश्च कविविवक्षावैधुर्यादधमकाव्यकक्ष्यानिक्षेपः। सहृदयप्रतिपत्त्या तु काव्यकोटौ शक्तं क्रोडीकर्तुम्। ते हि नित्यं रसास्वादलालसाः तत्सम्भावनासत्तामपि सम्भुञ्जते। एतच्चोदाहरणद्वयं शब्दार्थालङ्कारयोरेकैकपक्षाङ्गीकारापेक्षया। मेलकपक्षस्तु गुणप्रधानभावप्रतिष्ठापनीयः इति षष्ठे वक्ष्यते इति सिद्धम्।

## सुधासागरः

यदुक्तं ध्वनिकृता—

रसभावादिविषयविवक्षाविरहे सति।
अलङ्कारनिबन्धो यः स चित्रविषयो मतः। इति।

अत्र पक्षे मध्यमकाव्यलक्षणे व्यङ्ग्यपदं विवक्षितव्यङ्ग्यपरं द्रष्टव्यम्।

अर्थचित्रमुदाहरति—'विनिर्गते'ति

वंशस्थं वृत्तम्। "जतौ तु वंशस्थमुदीरितं जरौ" इति लक्षणात्।

हयग्रीवनामा दैत्यो विष्णुना हत इति पुराणकथाश्रिते हयग्रीववधाख्यनाटके हयग्रीववर्णनप्रस्तावे पद्यमेतत्। यं प्रकृतं हयग्रीवं शत्रूणां मानं द्यति खण्डयति मित्राणां ददाति वा मानदस्तथाभूतमात्मनो मन्दिराद् गृहान् नगरात् यदृच्छयापि स्वेच्छया न युयुत्सया विनिर्गतं निःसृतं न तु प्रस्थितम् उपश्रुत्य कर्णाकर्णिकया श्रुत्वा न तु दूतमुखात्, ससंभ्रमेण सभयेन इन्द्रेण अव्याहतैश्वर्येण दौवारिकाह्वानविलम्बासहतया स्वयमेव द्रुतं शीघ्रं पातिता याकथंचिद्विनिक्षिप्ता न विस्रब्धं निहिता अर्गला द्वारपिधानकाष्ठं यस्यां सा तथाविधाऽमरावती नगरी भिया निमीलिते संकुचिते अक्षिणी यया सा तथाभूतेव भवतीत्यर्थः।

उपश्रुत्येति पातनक्रियासमानकर्तृकत्वामाश्रित्य बोध्यम्। अत्रामरावतीति स्त्रीत्वाध्यवसानमूलोत्प्रेक्षार्थालङ्कारश्चमत्कारविश्रामभूमिः। अत्रोक्तं प्रदीपकारैः—'रसादौ कथं तात्पर्यविरहो ऽस्फुटतरत्वं वा तत्र ज्ञायते हयग्रीवस्य वर्णनीयतया तत्प्रभावस्य स्फुटं प्रतीतेः इति। तत्र ब्रूमः—न खलु प्रभाववत्त्वं वीरलक्षणं किन्तु

## साहित्यचूडामणिः

सा गोष्ठी यत्र कविः
स कविर्यः सूक्तमाह, तत् सूक्तम् ।
यत्र रसः, स खलु रसो
येन सचेताश्चमत्क्रियां लभते ॥
श्लाघ्यं गुणैरनुगुणैरनवद्यसौम्य-
मङ्गेषु भूषितमभूषितमप्युदारम् ।
औचित्य-चारुचतुरं सरसं प्रकृत्या
काव्यं कलत्रमिव मित्रयितुं यतध्वम् ॥

इति साहित्यचक्रवर्तिलौहित्यभट्टगोपालविरचितायां
साहित्यचूडामणौ काव्यप्रकाशविमर्शिन्यां
प्रथम उल्लासः ।

## सुधासागरः

युद्धदानदयान्यतमविषयकोत्साहप्रकृतिकत्वम् । उत्साहश्च कार्यारम्भेषु संरम्भः । न चात्र हयग्रीवगतो यत्किञ्चिद्विषयकोऽप्युत्साहः प्रतीयते किं पुनर्युद्धादिविषयक इति कथं वीररसबोधः ।

किञ्च यदृच्छया स्वेच्छया विनिर्गतं न युयुत्सयेति प्रतिपादनाद् युयुत्साभावेन न वीरलेशावकाशः ।

अपि च न कदाचिदमरावत्याः वीरालम्बनता सम्भवति, अचेतनत्वात् । प्रकृते तु सुतराम् । न चानुभावादिरिति कुतस्त्यो वीरः । किञ्च अमरावत्यामुत्प्रेक्षितं त्रासवत्त्वं न सामाजिकरसोद्बोधजनकं प्रत्युत तदुद्बोधविरोधि । चमत्कारता त्वलङ्कारघटकतयेति ध्येयम् ।

किं बहुना सत्यपि हयग्रीवस्य युद्धविषयकोत्साहवत्त्वे न कथंचिद्वीरः समास्वाद्यते किन्तु स्थायिनस्तदेकाश्रयत्वेन वीराभास एव स्यात् । तस्माद् वाग्देवतावरोक्तिरनवद्यैवेति मन्तव्यम् ।

इति श्रीमत्पदवाक्यप्रमाणपारावारीणदीक्षितभीमसेनकृते
काव्यप्रकाशविवरणे सुधासागराऽऽख्ये ऽभिधेय-
प्रयोजनकारणस्वरूपभेदलक्षणनिर्णयः
प्रथम उल्लासः ।

# द्वितीय उल्लासः

क्रमेण शब्दार्थयोः स्वरूपमाह—

**स्याद् वाचको लाक्षणिकः शब्दोऽत्र व्यञ्जकस्त्रिधा ।**

अत्रेति काव्ये । एषां स्वरूपं वक्ष्यते ।

**वाच्यादयस्तदर्थाः स्युः—**

वाच्य-लक्ष्य-व्यङ्ग्याः ।

**तात्पर्यार्थोऽपि केषुचित् ॥१॥**

आकाङ्क्षा-योग्यता-सन्निधिवशाद् वक्ष्यमाणस्वरूपाणां पदार्थानां समन्वये तात्पर्यार्थो विशेषवपुरपदार्थोऽपि वाक्यार्थः समुल्लसतीत्यभिहितान्वयवादिनां मतम् । वाच्य एव वाक्यार्थ इत्यन्विताभिधानवादिनः ॥१॥

## साहित्यचूडामणिः

ओङ्कारकम्बुसम्भूता सा जयत्यमृताम्बुधौ ।
मुक्ताफलशलाकेव विशदा वाङ्मयी कला ॥

उल्लासान्तरसङ्गतिमुल्लिङ्गयति—क्रमेणेति । 'तददोषावि'-त्यत्र दोषहानादिसंपन्नौ शब्दार्थौ काव्यमित्यभाणि, तयोः स्वरूपमाहेति यावत्, धर्मिणि सिद्धे धर्मसिद्ध्यौचित्यात् ।

शब्दभेदानुद्दिशति—स्यादिति । तथेति । यथावाचकलाक्षणिकयोरङ्गीकारः एवं व्यञ्जकस्यापि । यदि च स नाङ्गीक्रियते, तद् वाचकलाक्षणिकावपि मा कदाचिदङ्गीकारिषातां, विशेषाभावात् । अत्रेति काव्य इति । व्यञ्जनविशिष्टः शब्दः शास्त्रे मा नाम भूत्, काव्ये तु स्वैरमूरीक्रियते । यदाह भोजः—[1]"तात्पर्यमेव वचसि ध्वनिरेव काव्ये'—इति । तर्हि निर्विलम्बममी लक्ष्यन्तामित्यत्राह—एषामिति । वक्ष्यते, अत्रैवोल्लासे, अर्थवैचित्र्यद्वारा तेषां लक्षणीयत्वात् ।

## सुधासागरः

अथ काव्यलक्षणपदार्थेषु स्वरूपलक्षणादिभिर्विवेक्तव्येषु शब्दार्थयोः प्राधान्यात् प्रथमं तयोः स्वरूपं निरूपणार्थमित्याशयेन वृत्तिकृदाह 'क्रमेणे'-ति—

क्रमस्तु काव्यलक्षणवाक्योपादानलभ्यः । स्वरूपमित्येकवचनं सामान्यमपेक्ष्येति सम्प्रदायः । तन्न । वाचकत्वादिषु वाच्यत्वादिषु च शब्दार्थयोः स्वरूपेषु अनुगतैकधर्माभावेनैकवचनानुपपत्तेः ।

---

[1] श्रृङ्गारप्रकाशारम्भे ।

## साहित्यचूडामणिः

क्रमादेषामर्थानुद्दिशति—'वाच्यादय' इति।

आदिशब्दं व्याचष्टे—वाच्येति। अत्र उक्तिर्लक्षणा व्यञ्जनमिति क्रमेण वृत्तयो वक्ष्यन्ते।

ननु तात्पर्यनिबन्धनोऽपि कश्चिदर्थः प्रवर्तत इत्याह—तात्पर्येति। तात्पर्यादागतोऽर्थस्तात्पर्यार्थः। केषुचिदिति लाक्षणिकमतेषु। तात्पर्यवृत्तिरस्मत्पक्षे कथञ्चिद् दूष्या कथञ्चिददूष्यापि।

तत्र प्रख्यातशास्त्रद्वयनिबन्धनां विप्रतिपत्तिमाह—आकाङ्क्षेति। पदानामन्योन्यसव्यपेक्षत्वमाकाङ्क्षा, या मुख्यया वृत्त्या प्रतिपत्तॄणां प्रतिपित्सारूपा, पदानां पुनरौपचारिकी। आकाङ्क्षितस्य योग्यत्वे सति पदान्तरेण सहानन्तर्यं सन्निधिः। बाधानुत्पादेन सम्बन्धार्हत्वं योग्यता, यदभावादङ्गुलीकोटौ कुञ्जरघटा विलुठतीत्यादेरप्रामाण्यम्। आसां वशः सामार्थ्यम्। 'पदार्थानां जातिगुणादीनामभिधेयत्व-

## सुधासागरः

इदमत्र तत्त्वम्। शब्दार्थवृत्तित्वेन व्यञ्जकत्वमेव निरूपणीयतयोद्देश्यम्। नोपाध्यन्तरम्। तस्य सर्वतन्त्रसिद्धत्वात्। केवलमेतदुपपत्तये तदनुवादः। तथा च तदपेक्षयैकवचनमिति। स्वरूपं चासाधारणो धर्मस्तन्निरूपणन्तु विभागानन्तरमेव सुकरमिति विभागमाह—

शास्त्रे व्यञ्जकः शब्दो न प्रसिद्ध इत्याशयेन 'अत्र'—पदं विवृणोति—

त्रिधेति। अत्रोपाधीनामेव त्रित्वं न तूपधेयानाम्। न हि कश्चिद् वाचक एव कश्चिल्लाक्षणिक एव कश्चिद् व्यञ्जक एवेत्यस्ति नियम इति बोध्यम्। शब्दस्वरूपमप्रपाद्यैव लाघवादर्थो विभजनीय इत्याशयेन वृत्तिकृदाह—

स्वरूपं लक्षणं तच्चार्थघटितमेवेति प्रथमं तज्ज्ञानमावश्यकमिति भावः।

वाच्यादयो वाच्यलक्ष्यव्यङ्ग्याः क्रमेण तेषां वाचकादीनामर्थाः स्युरित्यर्थः। निरुक्तवाचकादिप्रतिपाद्यत्वमेव वाच्यादेर्लक्षणमप्युक्तं वेदितव्यम्। तेनाग्रे वाच्यादयो न लक्षिता इति बोध्यम्।

श्लोकश्छन्दः। लक्षणमुक्तम्। केषुचिन्न्यायादिनयेषु न तु मीमांसकादिमतेष्वपि। एवं च सारबोधिनीकारैर्यदुक्तम्—केषुचिदिति षष्ठ्यर्थे सप्तमीति। तद् वृथैव।

आकाङ्क्षयोग्यतेत्यादिः। अभिधानापर्यवसानमानुपूर्वीविशेषरूपा चाकांक्षा। एकपदार्थेऽपरदार्थस्य प्रकृतसंसर्गवत्त्वादिरूपा योग्यता। अव्यवधानेनान्वयवारणाय योग्यतायाः, घाटमानय घटं पश्येत्यादौ दर्शने घटस्य कर्मत्वसंसर्गबोधवारणायाऽऽसत्तेरुपादानमिति बोध्यम्।

विशेषवपुर्विशेषाकारः। तस्यैव प्रवर्त्तकत्वात्। घटमानयेत्यादौ घटकर्मकानयनादौ भासमाने तात्पर्यवशाद् यत्किञ्चिद्घटानयनादिविशेषरूपः। अपदार्थः प्रत्येकपदवृत्त्यविषयः।

## साहित्यचूडामणिः

लक्षणानां समन्वये व्यपेक्षादिभिरेकार्थपरतयोपात्तानां मिथोऽभिग्रथनमन्वय' इत्युक्तत्वात् सम्बन्धे सति, पदार्थविलक्षणतया[1] तद्रूपो वाक्यार्थ इत्यङ्गीकारात्। विशेषः सरित्तीरफलसंसर्गादिर्वपुराकारो यस्य। अपदार्थोऽपीत्यपिशब्देन पक्षान्तरापेक्षया वैमत्यमुपक्षिप्यते।

एवमभिहितान्वयं प्रस्तुत्यान्विताभिधानं प्रस्तौति—वाच्य एवेति। न पुनस्तद्व्यतिरिक्तो वाक्यार्थः। आहुरिति शेषः॥ १॥

## सुधासागरः

अथैवं तद्धेतुशब्दज्ञानस्य तच्छब्दबोधे नियामकत्वात् संसर्गस्य कथं शाब्दबोधः इत्यत्राह—वाक्यार्थ इति। संसर्ग इत्यर्थः। घटपदाद् घटो बोद्धव्य इत्यादीच्छायाः घटपदादिवृत्तित्ववदेतद्वाक्यादेतत्संसर्गो बोद्धव्य इतीच्छारूपतात्पर्यस्य वाक्यवृत्तित्वात् संसर्गो वाक्यार्थ इति भावः। तात्पर्यस्य वृत्तित्वं तज्ज्ञानत्वेन प्रयोजकत्वाच्छब्दसम्बन्धत्वाच्चाक्षतम्।

अन्वये लक्षणेति भट्टमतमपि तात्पर्यस्यैव नामान्तरलक्षणत्वेन नेयम्। न तु प्राचीनलक्षणा मुख्यार्थबाधाभावात्। तात्पर्यवृत्तिज्ञानजन्यसंसर्गोपस्थितिर्नास्तीति चेत् किन्तेन। तत्तद्धर्मप्रकारकशाब्दबोध एव वृत्त्या तत्तद्धर्मप्रकारकोपस्थितेर्हेतुत्वात्। वृत्तिज्ञानरूपपदार्थोपस्थितेरेव लाघवेन हेतुत्वाच्च। वृत्त्यंशे उद्बुद्धसंस्कारस्य सर्वसिद्धत्वात्। वृत्तिसम्बन्धांशे तूद्बुद्धत्वाकल्पनात्। पदज्ञानस्यैव वृत्तेरप्युद्बोधकतया पदार्थोपस्थितेरवश्यं वृत्तिविषयत्वात्। एतेन शाब्दबोधहेतुपदार्थोपस्थित्यनुकूलसम्बन्धत्वं वृत्तित्वं न तात्पर्ये इत्यपास्तम्। शाब्दबोधहेतूपस्थितिविषयसम्बन्धत्वस्यैव तत्त्वादिति संक्षेपः।

केचित्तु—'वस्तुतस्तु पदार्थशक्तत्वेन ज्ञातं पदमेव स्वार्थस्मरणद्वाराऽऽकांक्षादिसाचिव्यात् समभिव्याहृतपदार्थेन सह स्वार्थान्वयं बोधयति। तथैव कार्यकारणभावकल्पनादिति किमनया तात्पर्याख्यवृत्त्या। इयमेव संसर्गमर्यादेति घुष्यत' इति वदन्ति।

एतदेवाभिप्रेत्योक्तं काव्यप्रदीपकारैः—लाघवात् पदानां पदार्थमात्रे शक्तिर्नत्वन्वयांशेऽपि गौरवादन्यलभ्यत्वाच्च। तदंशो हि तात्पर्यार्थो वाक्यार्थो वाच्याद्यर्थविलक्षणशरीर आकांक्षायोग्यतासन्निधिवशादपदार्थोऽपि प्रतीयते। न चापदार्थप्रतीतावतिप्रसङ्गः। स्वरूपसतः शक्यान्वयत्वस्य नियामकत्वादित्यभिहितान्वयवादिनां मतम्।

अन्वयरूपे वाक्यार्थेऽपि पदानां शक्तिः। व्यवहारेणैवान्वितस्यैवोपस्थापनात्। तत्रैव च शक्तिग्रहात्। किञ्च अन्वयभागस्याशक्यत्वेऽनुभवविषयत्वं न स्यात्, तद्विषयत्वे शक्यत्वस्य प्रयोजकत्वात्। अशक्यस्याप्यनुभवप्रवेशे ऽतिप्रसङ्गादित्यन्विताभिधानवादिनां मतमिति ॥१॥

---

[1] सतीत्यर्थोपलक्षाय तद्रूपो पा०।

**सर्वेषां प्रायशोऽर्थानां व्यञ्जकत्वमपीष्यते ।**

तत्र वाच्यस्य यथा—

माए घरोवअरणं अज्ज हु णत्थि त्ति साहिअं तुमए ।
ता भण किं करणिज्जं एमेअ ण वासरो ठाई ॥
[मातर्गृहोपकरणमद्य खलु नास्तीति साधितं त्वया ।
तद् भण किं करणीयमेवमेव न वासरः स्थायी ॥]

अत्र स्वैरविहारार्थिनीति व्यज्यते ।

लक्ष्यस्य यथा—

साहेन्ती सहि सुहअं खणे खणे दूम्मिआसि मज्झकए ।
सब्भावणेहकरणिज्जसरिसअं दाव विरइअं तुमए ॥
[साधयन्ती सखि, सुभगं क्षणे क्षणे दूनासि मत्कृते ।
सद्भावस्नेहकरणीयसदृशकं तावद् विरचितं त्वया ॥]

अत्र मत्प्रियं रमयन्त्या त्वया शत्रुत्वमाचरितमिति लक्ष्यम् ।
तेन च कामुकविषयं सापराधत्वप्रकाशनं व्यङ्ग्यम् ।

व्यङ्ग्यस्य यथा—

उअ णिच्चलणिप्पंदा भिसिणीपत्तम्मि रेहइ बलाआ ।
णिम्मलमरगअ-भाअणपरिट्ठिआ संखसुत्ति व्व ॥
[पश्य निश्चलनिष्पन्दा बिसिनीपत्रे राजते बलाका ।
निर्मलमरकतभाजनपरिस्थिता शङ्खशुक्तिरिव ॥]

अत्र निष्पन्दत्वेन आश्वस्तत्वं तेन च जनरहितत्वम्, अतः सङ्केतस्थानमेतदिति कयाचित् कश्चित् प्रत्युच्यते । अथवा मिथ्या वदसि, न त्वमत्रागतोऽभूरिति व्यज्यते ॥

---

## साहित्यचूडामणिः

प्रसङ्गात् सर्वाकारप्रसाध्यस्य व्यङ्ग्यस्य न क्वचित् भङ्गशङ्केत्याह-सर्वेषामिति। प्रायश इति। तज्जातीयत्वेन व्यञ्जकत्वनैयत्यं न तु तत्सर्वव्यक्तिनिष्ठत्वेनापि, त्रिष्वपि व्यभिचारात् ।

## सुधासागरः

व्यञ्जकत्वं न केवलं शब्दस्य किन्तु तदर्थस्यापि, तत्रापि नैकतरस्य, किन्तु सर्वस्यापीत्यभिधादिवैधर्म्यसिद्धये प्रतिपादयति—

## साहित्यचूडामणिः

माए इति ।

मातर्गृहोपकरणमद्य खलु नास्तीति शिष्टं[1] त्वया ।
तस्माद् भण किं करणीयमेवमेव न वासरस्तिष्ठति ॥

इति । साध्यं साधितं वा पुरुषविशेषाभिसारमभिलषन्त्या गणिकाया मातरमुद्दिश्योक्तिः । एवमेवेति प्रत्यक्षमुपलक्ष्यमाणः प्रकार उपपाद्यते ।

साहेन्तीति ।

साधयन्ती सखि ! सुभगं क्षणे क्षणे दूनासि मम कृते ।
सद्भावस्नेहकरणीयसदृशं तावद् विरचितं त्वया ॥

इति । एषा विपरीतलक्षणयोक्तिः । साधनमुपायैरनुकूलनम् । सद्भावः सौशील्यम्, स्नेहो भावविशेषः, करणीयं कर्तुं योग्यं कर्म, एषां सदृशमुचितं विरचितं कृतं त्वया । अत्र वक्तृप्रतिपाद्ययोरुपकारापकारपरायणयोः सौजन्यदौर्जन्यातिशयप्रख्यापनाय वैपरीत्याल्लक्षणा । सापत्न्यलक्षणो लक्षणीयश्चार्थः प्रयोजनभूतं वल्लभविषयाधमस्वभावताप्रकाशनमर्थान्तरमभिव्यनक्ति । विरोधः सम्बन्धः । शत्रुत्वं सापत्न्यं, यो हि यस्यापकारी स तस्यारिरित्युक्तत्वात् । नन्वेवं 'निश्शेषच्युते'त्यादावभिधामूलेऽप्यतिप्रसङ्गः येन तत्रापि व्यङ्ग्येन मुख्योऽर्थो बाध्यते । बाधितत्वमतिशयित्वमिति नार्थान्तरमिति चेत्, न, बाधातिशययोः स्वभावभेदात्, यदेकस्य प्रमाण-

## सुधासागरः

वक्त्रादिवैशिष्ट्यानवतारे अर्थान्तरव्यञ्जना न सम्भवतीति प्रायश इत्युक्तमिति श्रीवत्सलाञ्छनभट्टाचार्याः प्राहुः । वस्तुतस्तु रसादेः प्रधानस्य व्यञ्जकत्वाभावात् प्रायश इत्युक्तम् । तत्रेत्यादिना वाच्यार्थस्य व्यञ्जकतामुदाहरति ।

गाथाछन्दः ।

मातर्गृहोपकरणमद्य खलु नास्तीति साधितं त्वया ।
तद् भण किं करणीयमेवमेव न वासरः स्थायी ॥

इति संस्कृतम् । हे मातर्गृहसम्बन्धमुपकरणम् उपक्रियतेऽनेनेत्युपकरणमत्रेन्धनशाकादिसामग्री । अद्य खलु निश्चितं नास्तीति त्वया साधितं प्रतिपादितं तत् तस्माद् भण इन्धनादिसम्पादनार्थं वनगमनमाज्ञापय किं करणीयम् । किं क्षेपे । न किञ्चित्कर्तव्यमित्यर्थः । किञ्च एवमेव न वासरो दिवसः स्थायीति वाक्यार्थः । अत्र मातरित्यनेनालङ्घनीयाज्ञत्वम्, गृहेत्यनेनावश्यकत्वम्, उपकरणमित्यनेनान्यथासिद्धिपरिहारः, सकलस्य प्रतिवेशिगृहादपि लाभासम्भवात् । अद्येत्यनेनाद्यैव सम्पाद्यत्वं, साधितमित्यनेन सत्त्वशङ्काराहित्यम्, त्वयेत्यनेन स्वकल्पनाविरहः । तच्छब्देन हेत्वर्थेऽवश्यवक्तव्यत्वम् । भणेत्यनेन स्वसाधुत्वपर्यवसाय्याज्ञाकारित्वम् । किं करणीयमित्यनेन मात्रा प्रतारणम् । एवमेवेत्यनेन दिनावसाने त्वत्प्रेरणयापि कुलाङ्गनया मया न गन्तव्यमिति व्यज्यते ।

---

[1] कथितम् पा० ।

## साहित्यचूडामणिः

पराहृतत्वम् अन्यस्य न्यक्कृतत्वं चार्थ इति विवेकः। तद्भेदेऽपि प्रतीतिबाधयोः पौर्वापर्यपर्यालोचनात्। तथाहि—

क्वचिद् बाध्यतया ख्यातिः क्वचित् ख्यातस्य बाधनम्।
पूर्वत्र लक्षणा तस्मादुत्तरैकाभिधैव[१] हि॥ इति।

उवेति।

पश्य निश्चलनिष्पन्दा बिसिनीपत्रे राजते बलाका।
निर्मलमरकतभाजनप्रतिष्ठिता शङ्खशुक्तिरिव॥

इति। शङ्खोत्कीर्णा शुक्तिरङ्गरागाद्याधारः निश्चला निष्कम्पा। निष्पन्दत्वेनाश्वस्तत्वं व्यङ्ग्यम्, अनाश्वासे तदनुपपत्तेः। तेन जनराहित्यं व्यङ्ग्यम्। अत इति। अनेन व्यङ्ग्येन। सार्वविभक्तिकस्तसिः। सङ्केतोचितं स्थानमिति व्यङ्ग्यम्। इतीति। एवं व्यङ्ग्यानुगुण्येन कयापि हालिकस्नुषादिकया कञ्चिद् ग्रामतरुणप्रभृतिं प्रति, उच्यते कथ्यते। एवं व्यङ्ग्यपरम्परानुधावनेऽपि न प्रहेलिकाप्रायत्वमित्युपर्युद्घाटयिष्यते। तृतीयं व्यङ्ग्यपर्वं प्रकारान्तरेण व्याचष्टे—अथवेति—बिसिनीषण्डे त्वामन्विष्यागतोऽहमिति मिथ्यावादिनं युवानं काचिदाहेति। अत्र प्रत्यक्षं प्रेक्ष्यमाणे बिसिनीषण्डे त्वं नागतोऽभूः, बलाकाया आश्वासनिमित्तान्निष्पन्दत्वात्। अतस्त्वं मिथ्या वदसीति।

## सुधासागरः

अत्र तद् भण किंकरणीयमित्युत्तरवाक्येन मा गच्छेदानीं किञ्चित्कर्त्तव्यमस्ति, तदुत्तरं प्रेषयिष्यामीति श्वश्रूक्तस्य पूर्ववाक्यस्योन्नयनादुत्तरालङ्कारः। अत्र वाच्येनेव वाक्यार्थेन वक्तुर्वैशिष्ट्यादिन्धनाद्यानयनव्याजेनोपपतिसमागमार्थिनीति व्यज्यते। तदेतत्सर्वमभिप्रेत्य वृत्तिकृदाह अत्रेत्यादि। उपपतिसमागमस्यैवात्र स्वैरविहारत्वात्। व्यज्यत इति। स्वैरविहारेच्छायां वाक्यार्थग्रहोत्तरं प्रतीयमानायां शब्दस्य न व्यापारः, विरतत्वात्। अर्थस्य तु व्यापारान्तरासम्भवाद् व्यञ्जकत्वसिद्धिरिति भावः।

यत्तूदाहरणचन्द्रिकायां वेदनार्थेव्याख्यातम्—तत्तस्मात्किं करणीयं कर्तव्यं भणेति। तद्भावानवबोधात्। एवं हि किञ्चित्कार्यमाज्ञापयेति प्रतीयेत न, तु वनगमनमिति ध्येयम्।

यच्च कैश्चिदुक्तम्—प्रत्यहं गृहकार्यव्यापृततया स्वैरं विहर्तुमक्षमा काचिन्मातरं प्रत्याह—माए इति। गृहोपकरणं गृहकार्यम्। अद्य नास्ति। ननु अन्यदा तद्व्यापृताया मम कदाप्यवसर इत्यतिप्रसङ्गशङ्कानिवारणम्। एवमेव। व्यासङ्गं विना। तथा च व्यासङ्गं विना स्थातुमशक्यत्वाद् गृहे च कार्याभावात्किञ्चित्कार्यार्थं बहिः

---

[१] 'परत्र व्यञ्जनैव ही'—ति साहित्यदर्पणस्य तर्कवागीशटीकायां ६६ पृ० पाठभेदः।

[२] महिमभट्टमतमिति यावत्।

## सुधासागरः

प्रेषयेति तात्पर्यार्थ इति' तत् तदा सङ्गच्छते यदि वासरो न गच्छतीति पाठः स्यात्। किञ्च कार्यस्यावश्यकर्तव्यत्वज्ञापनं विना तथा शङ्कैव नोदेतीति सहृदयै-राकलनीयम्।

लक्ष्यार्थस्य व्यञ्जकत्वमुदाहरति 'साहेन्ती'-ति।

गाथाछन्दः। प्रियानुनयार्थं प्रहितां तमुपभुज्यागतां सखीं प्रति नायिकाया इयमुक्तिः।

शासती सखि सुभगं क्षणे क्षणे दूनासि मम कृते।
सद्भावस्नेहकरणीयसदृशं तावद् विरचितं त्वया॥

इति संस्कृतम्। साहयन्तीति पाठे साधयन्तीति संस्कृतम्। हे सखि मम कृते मदर्थं सुभगं सुन्दरं नायकं शासती मदनुकूलं कुर्वती क्षणे क्षणे दूनासि खिन्नासि तावत्त्वया तु सद्भावः साधुता स्नेहः प्रेम ताभ्यां करणीयं कार्यं तत्सदृशं ताभ्यां सदृशं विरचितम्। फलं तु दैवायत्तमिति वाच्यार्थोपकारिण्यां बाधावताराच्छ्रोत्रा प्रत्येतुं न शक्यत इति सद्भावस्नेहकरणीयविसदृशं मत्प्रियरमणेन शत्रुत्वाचरणरूपं विरचितमिति मुख्यविपरीतं लक्ष्यते। तेन च कामुकविषयसापराधत्वप्रकाशनं व्यङ्ग्यम्। तदेतत्सर्वमभिप्रेत्य वृत्तिकृदाह 'अत्र मम प्रिये'-ति।

व्यङ्ग्यस्य व्यञ्जकत्वमुदाहरति—'उअ'-इति। गाथा छन्दः। उवेत्यव्ययं पश्येत्यर्थे।

पश्य निश्चलनिष्पन्दा बिसिनीपत्रे राजते बलाका।
निर्मलमरकतभाजनपरिस्थिता शङ्खशुक्तिरिव॥

इति संस्कृतम्। काचिदुपनायकं प्रति वदति। बिसिनी पद्मिनीलता तस्याः पत्रे बलाका प्रसिद्धा पतगी राजते शोभते त्वं पश्येति वाक्यार्थस्य कर्मत्वेनान्वयः। समीहितसूचनाय विशिनष्टि—निश्चलेत्यादि। निश्चला चासौ निष्पन्देति कर्म-धारयः। निश्चलत्वं स्वप्रयत्नाधीनक्रियाशून्यत्वं, निष्पन्दत्वं स्वाधीनक्रियाशून्यत्व-मिति न पौनरुक्त्यम्। एवं च चलनं शरीरक्रिया स्थानान्तरप्रापिका। स्पन्दस्त्व-वयवक्रिया, स्पदि किञ्चिच्चलने इति धात्वनुसारात् इति वैद्यनाथोक्तं न मनोहरम्। तादृशवैजात्याभावात्।

निश्चलनिरुद्योगेति कामुकसम्बोधनमिति दीपिकाकाराः। तदपि न रमणीयम्। द्वितीयकल्पे सङ्केतस्थानरूपव्यङ्ग्यस्य वाच्यसिद्ध्यङ्गतापत्तेः।

एतत्सङ्केतस्थानं त्वया नानुसंहितं मयैवोन्नीतमिति ज्ञानेनैव निरुद्यमत्वसिद्धेरिति केचित्।

निश्चलोऽचलःपर्वतस्तद्वन्निष्पन्देत्यर्थ इति सारबोधिनीकाराः। तदयुक्तम्, निश्चलपदेन तथाप्रत्ययाभावात्।

निश्चला पृथिवीव निष्पन्देत्यर्थः इत्यन्ये। तदप्युक्तदोषग्रस्तमित्यनादेयम्। कथंचिल्लक्षणाङ्गीकारे नेयार्थत्वमिति नानवद्यम्।

वाचकादीनां क्रमेण स्वरूपमाह—

[ वाचकत्वम् ]

**साक्षात्सङ्केतितं योऽर्थमभिधत्ते स वाचकः ॥२॥**

इहागृहीतसङ्केतस्य शब्दस्यार्थप्रतीतेरभावात् सङ्केतसहाय एवशब्दोऽर्थविशेषं प्रतिपादयतीति यस्य यत्राव्यवधानेन सङ्केतो गृह्यते स तस्य वाचकः ॥२॥

---

## साहित्यचूडामणिः

वाचकं लक्षयति—साक्षादीति । अभिदधातिरत्र शब्दवृत्तिमात्रे प्रतिपादनलक्षणे वर्तते । यदाह भोजः[१]—"तेषु शब्दस्यार्थाभिधायिनी शक्तिरभिधा । तया स्वरूप एवाभिधेये प्रवर्तमानः शब्दो वृत्तित्रयेण वर्तते । ताश्च मुख्या गौणी लक्षणेति तिस्रः" इति । इतरथा पर्यायस्यापि लक्षणत्वापत्तिः पर्यायोऽपि लक्षणमित्यगतिका गतिः । तत्त्वे निघण्टुपाठादेवाशेषवैशेषिकार्थप्रतिपत्तिप्रसङ्गः ।

इह लोके ।

सर्वाकारपरिच्छेदशक्येऽर्थे वाचकेऽपि च ।
सर्वाकारार्थविज्ञानसमर्थो नियमः कृतः ॥ [श्लोकवा० १।१।४।२२८]

## सुधासागरः

यत्त्वत्रोदाहरणचन्द्रिकायां वैद्यनाथैरुक्तम्—अयुक्तमेतत् । उभयत्राचलपदस्य स्त्रीलिङ्गनियतत्वेन भाषितपुंस्कत्वाभावात्पुंवद्भावानुपपत्तौ निश्चलेति ह्रस्वतानुपपत्तेरिति । तदशुद्धमप्रयोजकं व्याकरणानभिज्ञत्वमात्रसूचकमिति द्रष्टव्यम् । निर्मलेत्यादि । निर्मले स्वच्छे मरकतस्य नीलमणेर्भाजने पात्रे परिस्थिता शङ्खस्य शुक्तिः शङ्खघटितं शुक्तिसदृशं चन्दनादिनिधानपात्रं न तु मुक्ताशुक्तिः । तस्याः बलाकावर्णसदृशवर्णत्वाभावात् । शङ्खशुक्तिपदस्य तत्रासामर्थ्याच्च । अत्र निष्पन्दत्वेनाश्वस्तत्वं तेन निर्जनत्वमतः सङ्केतस्थानमेतदिति कयाचित्कंञ्चित्संकेतस्थानाभिलाषिणं प्रति व्यञ्जनया प्रतिपाद्यते । अथवा निष्पन्दत्वेनाश्वस्तत्वं तेन जनागमनाभावोऽतो न त्वमत्रागत इति मिथ्या वदसीति कयाचिदुक्तसंकेता त्वं नागता अहं त्वागत इति वादिनं प्रति व्यज्यते । एतत्सर्वमभिप्रेत्य वृत्तिकृदाह 'अत्रे'-त्यादि ।

अत्रेदं बोध्यम्—सम्भोगविप्रलम्भभेदेन व्यङ्ग्यद्वयमुक्तम्, तत्र सम्भोगस्य प्राधान्यसूचनाय प्रागुपादानम् । विप्रलम्भस्य सम्भोगोत्कर्षद्वारा चमत्कारित्वात् । एवं च सम्भोगाद् विप्रलम्भोऽधिकमधुर इति वदन्तो भ्रान्ताः ।

केचित्तु नायिकाया विरहवेदनां कामुकं प्रति निगूढं निवेदयन्त्याः सख्याः इयमुक्तिः । हे निश्चल अलस निष्पन्दा निश्चेष्टा बलाका । पाण्डुतातिशयात्तत्त्वेनाध्यवसिता सखी बिसिनीपत्रे तापाच्छयिता विराजते त्वमेवागत्य पश्येति शङ्खशुक्तिरित्यनेन निश्चेष्टत्वातिशयस्तेन च विप्रलम्भातिशयो व्यङ्ग्य इत्याहुः । तत् क्लिष्टं वृत्तिविरुद्धञ्चेत्युपेक्ष्यम् ।

---

[१] शृङ्गारप्रकाशस्य सप्तमप्रकाशारम्भे ।

## साहित्यचूडामणिः

इति वृद्धपुरुषप्रवर्तितः शब्दार्थयोर्नियमरूपो यः संकेतः तद्ग्रहणशून्यस्य, पुंस इति शेषः। शब्दाद् अर्थक्रियार्थमुच्चारितात्। विशेषेति। अर्थसामान्यस्य तावदस्तु प्रतीतिः, यस्यामर्थक्रिया नास्ति। संकेतसहाय इति अभिधाया वृत्त्यन्तराद् वैधर्म्यम्। यस्य शब्दस्य। यत्रार्थे। अव्यवधानेन निरन्तरार्थतया। तदुक्तं—'व्यापारोऽर्थे ध्वनेः साक्षान्मुख्या वृत्तिरुदाहृता' इति। व्यवधानेनापि सङ्केते लक्षणायामतिव्याप्तिः। अन्विताभिधाने व्यवधानेनापि सङ्केतस्य सुग्रहत्वात्। यदुक्तं—"गुणवृत्तिरमुख्यत्वेन स्थितं वाचकत्वमेवोच्यते" इति। स शब्दः तस्यार्थस्य वाचकः॥ २॥

## सुधासागरः

एवमर्थं विभज्य वाचकादीनां स्वरूपं क्रमेणाह 'साक्षादि'-ति।

श्लोकश्छन्दः। अभिधत्ते प्रतिपादयतीत्यर्थः। अतो न विशेषणान्तरवैयर्थ्यम्। अभिधागर्भत्वे साक्षात्संकेतितमित्यस्य निरर्थकत्वम्। वाचकशक्तिरभिधा, अभिधयोपस्थापकत्वं वाचकत्वमित्यन्योऽन्याश्रयश्च स्यादिति भावः।

संकेतितं गृहीतसंकेतम्। इदं चेष्टायां साक्षादर्थप्रतिपादिकायामतिव्याप्तिवारणाय माधुर्यादिव्यञ्जकस्पर्शादिवर्णेऽतिव्याप्तिवारणाय वा।

न च साक्षादित्यधिकम्, 'यन्नामा यत्र चैत्यादिर्विषयोऽपि स तादृश' इत्यादिव्यवहितसंकेतसत्त्वेपि चैत्यादिनामकचैत्यादियोगिनि विषये प्रतिपाद्यचैत्यादिपरेऽतिव्याप्तिवारकत्वात्। तत्र शक्यसंकेतव्यवहितसंकेतत्वात्।

अयमाशयः—साक्षादित्यव्यवहितेत्यर्थकं संकेतविशेषणम्। अव्यवहितत्वं च कोशादितः शक्यान्तरसंकेतग्रहाप्रयोज्यग्रहविषयत्वम्। न च वटादिपदस्य ग्रामसंकेतस्तथावृक्षसंकेतग्रहप्रयोज्यग्रहविषयत्वात्। न च तत्र शक्तिरेवेति सम्यक्। तद्योगिनि तत्पदप्रयोगस्य लक्षणयैवोपपत्तेः। अत एव सर्वे गत्यर्थाः प्राप्त्यर्था इत्यादितो न गम्यादेः प्राप्त्यादौ शक्तिः किन्तु निरूढलक्षणैव।

यत्तु प्रयोगबाहुल्यान्न शक्तिरिति। तन्न। चन्द्रादिपदानां कर्पूरादौ शक्त्यापत्तेः। नानार्थत्वमेव धातूनामिति तु वैयाकरणाः। न च साक्षात्संकेतवान् वाचक इत्येतावतैव स्वस्थत्वेऽभिधत्ते इत्यस्य वैयर्थ्यम्। संयोगादिनाऽभिधायां नियमितायां वाच्यार्थव्यञ्जकतादशायामतिव्याप्तेर्वारणीयत्वात्। न च तथापि तत्रातिव्याप्तिरेवेति वाच्यम्। यस्य शब्दस्य यत्राव्यवहितसंकेतग्रहो यदर्थग्रहे उपयुज्यते तत्र स तदर्थवाचक इति हि लक्षणार्थः। अथ संकेतग्रहस्य शब्दसहकारितायां किं मानमिति चेत्, अगृहीतसंकेतस्य शब्दस्यार्थप्रत्ययाभावः। तदेतत्सर्वमभिप्रेत्य वृत्तिकृदाह—इहागृहीतसंकेतस्येत्यादि।

यत्त्वत्र नव्यमतमनुसृत्य गोविन्दमहामहोपाध्यायैरुक्तम्—'वृत्त्यनुरोधात्साक्षात्पदं संकेतविशेषणतया व्याख्यातम्। वस्तुतस्तु संयोगादिनाभिधायां

## सुधासागरः

नियमितायां यत्र शक्यान्तरध्वननं तत्र वाचकत्वं मा प्रसांक्षीदित्यभिधानक्रियाविशेषणं साक्षादिति। तत्र तु वाक्यार्थप्रतीतिव्यवधानेन तत्प्रतीतिरित्यप्रसङ्गः। न च संकेतित-पदवैयर्थ्यम्; लक्ष्यप्रतीतावपि वाच्यप्रतीतिव्यवधानाभावात्। स्पर्शादिवर्णानां साक्षादेव माधुर्यव्यञ्जकत्वाच्चेति। तदयुक्तम्। निर्दोषस्वारसिकयथाश्रुतव्याख्यानस्य परित्यागे साक्षात्पदस्य भक्त्याऽभिधानक्रियायां योजने च बीजाभावात्। प्रत्युतैवं संकेतितपदं निरर्थकं स्यात्।

यत्तूक्तं लक्ष्यप्रतीतावपि वाच्यप्रतीतिव्यवधानाभावादिति। तत्केनचित्स्वी-कृतमपि तुच्छम्। तदंशे खलूद्बुद्धसंस्कारः स्वीक्रियते नैतावता सर्वथा वाच्यप्रतीति-व्यवधानाभावः। वक्ष्यति च वृत्तिकारः शब्दव्यापारः सान्तरार्थनिष्ठो लक्षणेति। स्वीकृतं च स्वयमप्येतद्व्याख्यावसरे गङ्गादिशब्दानां नीरादिकमुपस्थाप्य तीरादिप्रति-पादनम्। न च लक्षणाया अर्थवृत्तित्वमेवेति मन्तव्यम्। शब्दवृत्तित्वसिद्धान्तव्याकोपा-दित्यलं बहुना।

एतेन श्रीवत्सलाञ्छनभट्टाचार्यैर्यदुक्तम्—'अभिधत्ते अभिधाग्रहाहितसंस्कार-सहकृतः सन् स्मारयति। तेन नानार्थव्यञ्जके नातिव्याप्तिः। तत्र तथाविध-संस्कारस्याहेतुत्वात्। साक्षात्संकेतितमव्यवधानेन गृहीतसंकेतम्। अस्माच्छब्दादय-मर्थो बोद्धव्य इत्युद्देशनं संकेतो न तु यन्नामा यत्र चैत्यादिस्तन्नामा विषयोऽपि स इतिवत् सान्तरतया यस्मिन्विषये देशे यन्नामकः प्रधानवृक्षः स देशोऽपि तन्नामक इत्युद्देशनं यन्नामेत्याद्यर्थः। यथा वटो ग्राम इत्यत्र तरुसंकेतेन ग्रामसंकेतस्य व्यव-धानान्नसाक्षात्संकेत इति तत्र तत्पदस्य लक्षणैव। नचापभ्रंशेऽतिव्याप्तिरिति वाच्यम्। तस्यापि वाचकत्वमिति मिश्रादिभिरङ्गीकरणात्तस्य लक्ष्यत्वात्। अन्यथा तन्मय-प्रबन्धस्य काव्यत्वं न स्यात्। वस्तुतस्तु लक्षणद्वयम्। यत्र यस्य साक्षात्संकेतः स तस्य वाचक इत्येकम्। यत्र यस्याभिधेत्यपरम्। अभिधा तु शक्तिः। सा चेश्वरेच्छाविशेषः पदार्थान्तरं वा। न च नानार्थव्यञ्जकेऽतिव्याप्तिरिति वाच्यम्। तस्य लक्ष्यत्वात्। किन्तु व्यञ्जकत्वदशायां नियन्त्रितयाऽभिधयाऽर्थान्तरस्याऽप्रति-पादकत्वमित्यस्यैवाङ्गीकृतत्वादिती'ति। तत्र लक्षणे द्वित्वकल्पनं वृथैवेति ध्येयम्।

किञ्च अपभ्रंशस्य वाचकत्वं मिश्रादिभिरङ्गीकृतमपि न निरवद्यम्, अव्यव-स्थापत्तेः। अपभ्रंशानामपि बोधकत्वमिति सत्यं, परन्तु तत्र वाचकत्वादिविचारो-ऽप्रामाणिकः। अन्यथा शापशब्दयोरविशेषः स्यात्। तथा च समानायामर्थावगतौ शब्दैश्चापशब्दैश्च भक्ष्याभक्ष्यादिवन्नियमः क्रियते इत्यादि निर्बीजमेव स्यात्। अपि च—

> यस्तु प्रयुङ्क्ते कुशलो विशेषे शब्दान् यथावद् व्यवहारकाले।
> सोऽनन्तमाप्नोति जयं परत्र वाग्योगविद् दुष्यति चापशब्दैः॥

इति पस्पशाह्निके महाभाष्यकारैरुदाहृतः श्रुतिस्थो भ्राजसंज्ञकश्लोकोऽप्येवं व्याकुप्येत।

उक्तं च वैयाकरणभूषणे—

**सङ्केतितश्चतुर्भेदो जात्यादिर्जातिरेव वा ।**

यद्यप्यर्थक्रियाकारितया प्रवृत्तिनिवृत्तियोग्या व्यक्तिरेव, तथाऽप्यानन्त्याद् व्यभिचाराच्च तत्र सङ्केतः कर्तुं न युज्यत इति 'गौः शुक्लश्चलो डित्थ' इत्यादीनां विषयविभागो न प्राप्नोतीति च तदुपाधावेव सङ्केतः।

उपाधिश्च द्विविधः—वस्तुधर्मो वक्तृयदृच्छासन्निवेशितश्च। वस्तुधर्मोऽपि द्विविधः-सिद्धः साध्यश्च। सिद्धोऽपि द्विविधः—पदार्थस्य प्राणप्रदो विशेषाधानहेतुश्च। तत्राद्यो जातिः। उक्तं हि वाक्यपदीये 'न हि गौः स्वरूपेण गौः नाप्यगौः गोत्वाभिसम्बन्धात्तु गौरि'-ति। द्वितीयो गुणः। शुक्लादिना हि लब्धसत्ताकं वस्तु विशिष्यते। साध्यः पूर्वापरीभूतावयवः क्रियारूपः। डित्थादिशब्दानामन्त्यबुद्धिनिर्ग्राह्यं संहृतक्रमं स्वरूपं वक्त्रा यदृच्छया डित्थादिष्वर्थेषूपाधित्वेन सन्निवेश्यत इति सोऽयं संज्ञारूपो यदृच्छात्मक इति। 'गौः शुक्लश्चलो डित्थ इत्यादौ चतुष्टयी शब्दानां प्रवृत्तिरि'ति महाभाष्यकारः।

---

## साहित्यचूडामणिः

अथार्थक्रियौचित्याद् व्यक्तौ संकेतं पूर्वपक्षयति—यद्यपीति विधिनिषेधविषयत्वात् प्रवृत्तावुपादाने निवृत्तौ हाने च समुचिता व्यक्तिरेव।

अथ व्यक्तिव्यतिरेकात् तदुपाधिषु संकेत इति सिद्धान्तयति—तथापीति। आनन्त्यं व्यक्तिशक्तिबाहुल्यम्। असङ्केतितार्थप्रतीतिर्व्यभिचारः। इतोऽपि प्रबलं दोषमाह गौरिति। आदिपदेन यादृच्छिकस्वीकारः। गोशुक्लादिशब्दानां व्यक्तिमात्रविश्रान्तौ वाच्यनिष्ठो विभागो न संगच्छते, पाणिहस्तादिवत् पर्यायितया परिशिष्यते। इतिर्हेतौ। चकारस्तृतीयदोषसमुच्चये तस्या व्यक्तेर्य उपाधिर्धर्मः तत्रैव सङ्केतः। एनं विभजते—उपाधिश्चेति। वस्तुभूतस्वदेहवाचकत्वप्रयुक्तो[१] धर्मः, वक्त्रा व्यवहर्त्रा निर्निबन्धनतया सन्निवेशितश्च। आदिमसुपाधिं भूयो विभजते—

## सुधासागरः

वाचकत्वाऽविशेषे वा नियमः पुण्यपापयोः। इति।

किञ्चैवं म्लेच्छापभ्रंशानामपि वाचकत्वं स्यादिति तच्छास्त्रस्य निर्मूलनत्वापत्तौ महाननर्थः स्यात्। तस्माद्वेदविरोधाद्भगवत्पतञ्जलिविरोधाद् वैयाकरणविरोधादनर्थापाताच्च न कथंचिदपभ्रंशानां वाचकत्वं मन्तव्यम्। यथोक्तं तन्मयप्रबन्धस्य-काव्यत्वं न स्यादिति, तदिष्टमेव। भाष्यकाव्यं-सहृदयैरुपसहनीयमेवेति दिक्।

यद्यप्यर्थक्रियाकारितयेत्यादि।

---

[१] स्वदेवाक प्रवा० पा१।

## साहित्यचूडामणिः

वस्त्विति। सिद्धो निष्पन्नः। साध्यो निष्पाद्यः। पुनः सिद्धं द्विविधमुपदर्शयति—सिद्धोऽपीति। पदार्थस्य अर्थाद् व्यक्तिरूपस्य प्राणप्रदः स्वरूपलाभहेतुः। विशेषस्य वैलक्षण्यस्य (आधाने) समर्पणे हेतुश्च। आद्य इति। प्राणप्रद उपाधिर्जातिश्च मतभेदव्यतिरेकेण नार्थान्तरम्। अत्र अभियुक्तोक्तिं संवादयति – उक्तं हीति। स्वरूपेण व्यक्त्यात्मना स्वलक्षणेन। न गौः गोत्वजात्यनाक्रान्तत्वात्। नाप्यगौः महिषत्वादिजात्यन्तरानाश्लिष्टत्वात्। गोत्वाभिसम्बन्धादेव गौः। तुरवधारणे। सिद्धभेदे विशेषाधायक उपाधिः द्वितीयो यः स गुणः। तस्य गुणत्वमुपपादयति—शुक्लादिनेत्यादि। लब्धा सत्ता सद्भावो येन, न तु खपुष्पादिवदसद्

## सुधासागरः

अर्थः प्रयोजनं जलाहरणादिक्रियानिर्वाहः।

अयमाशयः। नन्वयं विभागोऽनुपपन्नः। जात्यादेरसंकेतितत्वात्। आद्यसंकेतग्रहस्य व्यवहारमात्राधीनतया प्रवृत्तिनिवृत्तियोग्यायां व्यक्तावेव तदौचित्यात् इति। मैवम्, किं हि व्यक्तिषु सर्वासु सकेतग्रहो व्यवहाराङ्गमुत यस्यां कस्यां चित्। नाद्यः, आनन्त्यात्। नान्त्यः, व्यभिचारप्रसङ्गात्। यतोऽगृहीतसंकेतगोपिण्डस्येव वटादेरपि गोपदात्प्रतीतिः प्रसक्ता। अगृहीतसंकेतत्वस्य तुल्यत्वात्।

किञ्च न यत्र संकेतग्रहस्तस्यापि प्रतीतिरिति व्यभिचारान्न व्यक्तौ संकेतः।

ननु नैयायिकानां सामान्यलक्षणया सर्वासां व्यक्तीनामुपस्थितिर्भविष्यति मीमांसकानान्तु शक्तिग्रहान्वयबोधयोः समानप्रकारत्वस्य तन्त्रत्वादगृहीतसंकेतानामपि अन्वयबोधो भविष्यतीत्यतो दोषान्तरमाह। अतएवोक्तं जयरामतर्कपञ्चाननैः—नैयायिकैः सामान्यलक्षणास्वीकारान्मीमांसकैः शक्तिग्रहशाब्दबोधयोः समानप्रकारत्वेनैव कार्यकारणभावाङ्गीकारान्न दोषद्वयमप्यत आह गौः शुक्लश्चल इत्यादीति।

व्यक्तिसंकेतपक्षे गौ शुक्लश्चलो डित्थ इत्यादिशब्दानामर्थभेदो न प्राप्नोतीत्यर्थः। किमेवमनिष्टमिति चेत् सहप्रयोगानुपपत्तेः। अयं भावः—अर्थः प्रतिपाद्यस्तदभेदे पर्यायवत्सहप्रयोगानापत्तिः विशेष्यमात्रशक्तौ पर्यायत्वं स्याद् विशिष्टे शक्तौ तु नागृहीतविशेषणा बुद्धिर्विशिष्टेनोपजायते इति न्यायेन विशेषण एव सास्तु। विशेषणशक्तिग्रहजन्यार्थविशिष्टस्मृतेरेव विशिष्टशाब्दबोधहेतुत्वात्।

किञ्च कर्मविपर्यविभागश्च कर्त्रा न प्राप्नोति विषयस्य विशेषं विना संज्ञाभिधानं गौरित्यादिसंज्ञिना न सबध्नाति अर्थविशेषाभावात् इति।

सर्वमेतदभिप्रेत्य वृत्तिकृदाह–तदुपाधावेव संकेत इति। तस्मादुपाधौ विशेषण एव शक्तिरित्यर्थः। एवकारेण विशेष्यव्यवच्छेदः।

स्वभावतो वस्तुवृत्तिर्घटत्वादिः। वक्तुर्यदृच्छया सन्निवेशितश्च।

वक्तुर्या इच्छा यदृच्छेति निपातः, तया सन्निवेशितनामरूपः।

## साहित्यचूडामणिः

विशेष्यते। साध्य उपाधिः क्रियारूपः। क्रिया च कीदृशीत्युक्तं—पूर्वेति। एतेन जात्यादिलक्षणमुन्मीलितम्। यदाहुः

भिन्नेष्वभिन्नधीशब्दौ धवलादिषु यद्बलात्।
वर्तेते जातिरेषा स्यान्मालासूत्रवदन्विता॥
द्रव्याश्रयस्ततो भिन्नस्तत्प्रतीतेरपाश्रयः।
विपराद्यवृत्तिधर्मा च निर्गुणो गुण इष्यते॥
कर्त्रादिकारकग्रामनिर्वर्त्त्योऽसत्वधर्मतः।
पदार्थो व्याप्यकर्तृस्थः क्रियाविद्भिः क्रियेष्यते॥

## सुधासागरः

पदार्थस्य पदोद्देश्यस्य प्राणनं प्राणो व्यवहारयोग्यता तत्प्रदस्तन्निर्वाहकः। एवं च प्राणप्रदत्वं यावत्स्थितिसम्बन्धित्वं बोध्यम्। यद्यपि शुक्लादेर्नित्यत्वाभ्युपगमे गोत्वादिना समकालमेव सम्बन्धित्वं तथापि तस्य सम्बन्धः कदाचिदपैत्यपि न तु गोत्वादेरिति विशेषः। तथा चाद्यः प्राणप्रदो जातिः।

अयमर्थः—गौर्गोपदोद्देश्यो धर्मी स्वरूपेण उपाधिरहितव्यक्तिमात्रेण न गोव्यवहारप्रयोजकः, तदा हि घटोऽपि तथा स्यात् स्वरूपाविशेषात्। नाप्यगोव्यवहारप्रयोजकः तदा हि गौरपि तथा स्यात्। किन्तर्हि तत्प्रयोजकमित्यत्राह—गोत्वाभिसम्बन्धात्तु गौः। गोव्यवहारयोग्य इति।

गोत्वादिना लब्धसत्ताकं प्राप्तव्यवहारयोग्यताकं वस्तु शुक्लत्वादिना गुणेन विशिष्यते स्वाश्रयं सजातीयेभ्यो व्यावर्त्यत इति भावः। ननु प्राणप्रदत्वं शुक्लादावपि शुक्लमानयेति व्यवहारात्। तथा विशेषाधानहेतुत्वं जातावतिव्याप्तम्। गोत्वादीनां सास्नादिना लब्धप्राणेषु स्वाश्रयेष्वनुगतबुद्धेरिव तदितरव्यावृत्तबुद्धेरपि जनकत्वात्। मैवम्, यावदाश्रयसमवेतत्वं हि प्राणप्रदत्वं, नचैतच्छुक्लादौ, तेषां तन्मते नित्यत्वेऽपि तत्समवायस्यानित्यत्वात्। क्रियासमवायस्य नित्यत्व क्रियान्यत्वं निवेश्यम्। वस्तुतस्तस्याप्युत्तरसंयोगनाश्यत्वात्। अन्यथा सर्वदा क्रियोपलम्भः स्यात्। विशेषाधानहेतुत्वम्। यावदाश्रयसमवेतभिन्नत्वे द्रव्यक्रियान्यत्वे च सति समवेतत्वम्। नचैतज्जातौ यावदाश्रयकालमवस्थितेरिति गुणेष्वेव तत्सत्त्वम्।

यत्तु प्राणप्रदत्वं जातिलक्षणयोगित्वं विशेषाधानहेतुत्वं गुणलक्षणयोगित्वमिति। तन्न। परमाण्वादीनामित्यग्रिमग्रन्थविरोधात्। परमाणुत्वादौ जातिलक्षणसत्त्वाज्जातित्वाप्रसक्तेः। गुणलक्षणसत्त्वाच्च पारिभाषिकगुणत्वानुपपत्तेः।

साध्येत्यादि। साध्यस्तु पूर्वापरीभूतैकदेशत्वेन विवक्षितः क्रियारूपः क्लेदादिरित्यर्थः। पूर्वापरीभूतेति। चव्यर्थस्तु समूहस्यानतिरिक्ततया व्यापाराणां प्रत्येकं पाकत्वेन क्रमेण पाक इति भ्रम एवेत्यक्रमस्य क्रमप्राप्त्या बोध्यः। यदुक्तं वाक्यपदीये—

### साहित्यचूडामणिः

नामरूपेण संवित्तेः कश्चित् संज्ञी निगद्यते ।
नामेति तद्यथा चैत्रः संज्ञाशब्दश्च तद् ध्वनिः ।
प्रतीतिभेदमाश्रित्य द्रव्यशब्दात् पृथक्कृतः ॥ इति ।

द्रव्यशब्दस्य सर्वसाधारण्यान्न पृथग्लक्षणम् । यच्चाहुः—

यद्यद् विशेष्यते किञ्चित् तत्तद् द्रव्यमिहेष्यते ।
वस्तूपलक्षणं यत्र सर्वनाम प्रयुज्यते ।
द्रव्यमित्युच्यते सोऽर्थो भेद्यत्वेन विवक्षित ॥ इति ।

### सुधासागरः

यावत् सिद्धमसिद्धं वा साध्यत्वेन प्रतीयते ।
आश्रितक्रमरूपत्वात् सा क्रियेत्यभिधीयते ॥ इति ।

वक्तृयदृच्छासंनिवेशितशब्दस्वरूपं व्युत्पादयति—

डित्थादिशब्दानां प्रथमवर्णप्रतीत्या किञ्चित्प्रकाशितमन्त्यवर्णबुद्ध्या निःशेषतो ग्राह्यमित्यर्थः । संहृतक्रमं स्वरूपमिति । नानावर्णात्मकघटादिपदवर्णक्रमशून्यं शब्दस्वरूपमित्यर्थः । डित्थादिष्वर्थेषूपाधित्वेन वक्त्रा यदृच्छया कल्प्यत इति संज्ञारूपयदृच्छात्मको डित्थादिशब्द इत्यर्थः ।

अयमाशयः डित्थादिशब्दाश्रितमेव शब्दस्वरूपं ध्वन्यात्मकमर्थेषु निवेश्यते उपाधित्वेन संकेत्यते । स्फोटशक्तेरेव स्वाश्रयपदविशिष्टधर्मिप्रतीतिः । जातिशक्तेर्जातिविशिष्टव्यक्तिप्रतीतिवत् । डित्थादिपदस्य धर्मिणि बोध्यत्वमेव सम्बन्ध इति भावः ।

जयरामतर्कपञ्चाननास्तु स्फोटासहिष्णुतया प्राहुः—अयुक्तमेतत्, कल्पनगौरवात् । स्फोटस्य निरवयवत्वेन किञ्चित्प्रकाशनिःशेषप्रकाशादेरसम्भवात् तस्य प्राक् निराकृतत्वच्च । तस्मादयमर्थः, अन्त्यवर्णबुद्धौ पूर्ववर्णोपनयवशान्निःशेषतोविषयीभूतमत एव संहृतक्रमम् । तद्वर्णबुद्ध्यनन्तरं तद्वर्णबुद्धिरिति क्रमशून्यं यत्स्वरूपं डित्थादिपदरूपम् । तथा च डित्थादिपदस्य दुर्ज्ञेयत्वान्न तथात्वमिति परिहृतम् ।

यद्वा स्वज्ञानजन्यः स्वविशिष्टधर्मिप्रत्यय एवोत्तरवर्त्तित्वादन्त्यबुद्धिः तन्निर्ग्राह्यं तत्प्रकारीभूतम् । डित्थादिसंज्ञाज्ञानादनन्तरं डित्थादिसंज्ञाविशिष्टसंज्ञिस्मृतशाब्दबोधोदयात् । एतावतोपाधित्वावश्यकत्वं गवादिपदद् वैलक्षण्यं च सूचितम् । गवादिपदज्ञानाद् गोत्वादिविशिष्टस्यैव गोत्वादिप्रतीतेः ।

विशेषान्तरमाह—संहृतेति । पूर्वप्रयोगात्परपरप्रयोग इति जात्यादिशब्देषु क्रमः, सोऽत्र नास्ति, साक्षिप्रयोगत्वादिति भावः । उपाधित्वेन निवेश्यत इति । सङ्केताश्रयतया विशेषणत्वेन कल्प्यते ।

## साहित्यचूडामणिः

एवं वस्तुधर्मं विचार्य यादृच्छिकं व्याचष्टे—डित्थादीति। अन्त्यस्य सर्वपश्चिमस्य ध्वनेर्या बुद्धिस्तया साकल्येन स्वीकार्यम्। स्वरूपं स्फोटानुप्राणनस्वभावः। उक्तं च—

ध्वनिप्रकाशिते शब्दे स्वरूपमवधार्यते।
नादैराहितबीजायामन्त्येन ध्वनिना सह॥
आवृत्तपरिपाकायां बुद्धौ शब्दो विभाव्यते॥

इति। [वा० १।८४]

संहृतेति। व्यञ्जकानां ध्वनीनां क्रमवत्वेऽपि व्यङ्ग्यस्य स्फोटरूपस्य न क्रमः, इतरथा तस्य नैष्फल्यात्। क्रमवृत्तितया हि वर्णानामर्थप्रत्यायकतासामर्थ्यम्। इदमेव हि तद् यादृच्छिकत्वं यद् डित्थाद्यर्थे ध्वनीनां सङ्केते ध्वन्यस्वरूपव्यतिरेकादुपाधिरन्यो नानुरुध्यते जात्यादेरभावादिति।

एतच्च महतीं शास्त्रसरणिमनुसृत्येत्याह—चतुष्टयीति।

## सुधासागरः

डित्थादिष्वर्थेष्ववृत्तित्वात्कथं विशेषणत्वमित्यत्राह—

डित्थादिपदं डित्थादिनामविशिष्टं तत्तद्धर्मिविशिष्टबोधकं भवत्वितीच्छात्मकसंकेतसम्बन्धेन तद्वृत्तित्वात्तत्त्वमव्याहतमिति भावः। न च डित्थादिपदज्ञानस्य स्वज्ञानहेतुत्वे आत्माश्रयः, विशेषणज्ञानस्य विशेषणविषयकविशिष्टज्ञानहेतुत्ववत्स्वविशिष्टधर्मिज्ञानहेतुत्वेऽबाधात्। अवच्छेदकभेदात् डित्थादिपदज्ञानस्य तद्विशिष्टस्मृतिशाब्दबोधयोर्नैष्प्रत्यूहत्वात्। डित्थादिपदे शक्तिसद्धौ च द्रव्यशब्दत्वं भट्टमते शब्दस्य द्रव्यत्वादविरुद्धमिति वदन्ति।

वस्तुतस्तु नैयायिकोपपत्तिरियं न तु श्रुतिपुराणादिसिद्धे स्फोटेऽप्रामाण्यशङ्कोदेतीति मात्सर्यमन्तरा ध्येयम्।

चण्डीदासभट्टाचार्यास्तु—अन्त्यं स्वलक्षणं बुद्ध्या निःशेषतो ग्राह्यं यस्य तज्जातिप्रतीत्यनन्तरं व्यक्तिप्रतीतिरिति क्रमशून्यं च डित्थादीनां शब्दानां स्वरूपं डित्थादिष्वर्थेषूपाधित्वेन पदार्थोपस्थित्यनुकूलतया सङ्केत्यते। उपाध्यन्तरं तेषां नास्ति किन्तु धर्मिमात्रं ततः प्रतीयते इति वृत्त्यर्थमाह। तच्च भाष्यविरुद्धम्। तत्र शब्दस्यैवोपाधित्वेन व्यवस्थापनात्। डित्थादिशब्दाड्डित्थादिनामायमिति प्रतीतेः। एवं हि 'गौः शुक्ल' इति।

शब्दानां प्रातिपदिकानाम्।

परमाण्वादीनां गुणमध्यपाठात् पारिभाषिकं गुणत्वम्।

गुणक्रियायदृच्छानां वस्तुत एकरूपाणामप्याश्रयभेदाद् भेद इव लक्ष्यते, यथैकस्य मुखस्य खड्गमुकुरतैलाद्यालम्बनभेदाद्।

हिम-पयः-शङ्खाद्याश्रयेषु परमार्थतो भिन्नेषु शुक्लादिषु यद्वशेन शुक्लः शुक्ल इत्यभिन्नाभिधानप्रत्ययोत्पत्तिस्तच्छुक्लत्वादि सामान्यम्। गुडतण्डुलादिपाकादिष्वेवमेव पाकत्वादि। बालवृद्धशुकाद्युदीरितेषु डित्थादि-शब्देषु च प्रतिक्षणं भिद्यमानेषु डित्थाद्यर्थेषु वा डित्थत्वाद्यस्तीति सर्वेषां शब्दानां जातिरेव प्रवृत्तिनिमित्तमित्यन्ये।

तद्वान् अपोहो वा शब्दार्थः कैश्चिदुक्त इति ग्रन्थगौरवभयात् प्रकृतानुपयोगाच्च न दर्शितम्।

---

## साहित्यचूडामणिः

ननु यदुक्तं सिद्धोपाधिभेदे प्राणप्रदो जातिरिति तत्र गुणेऽतिव्याप्तिरित्याशङ्क्याह–परमाण्वादीनामिति। चतुर्विधं हि परिमाणम् अणुमहद्ध्रस्वदीर्घभेदात्। ततश्च गौः स्वरूपेण न गौरितिवत् परमाणुव्यवहारस्य पारिमाण्डल्यलक्षणपरमाणुत्वाधीनतया परमाण्वादीनामस्मदपेक्षया जातिशब्दत्वं वैशेषिकाणां तु स्वसिद्धान्तानुसारेण

## सुधासागरः

नन्वेवं परमाण्वादिशब्दानां जातिशब्दत्वं स्यान्न गुणशब्दत्वम्। परमाण्वादीनां प्राणप्रदत्वेन जातित्वात्। प्राणप्रदत्वं तु परमाणुत्वपरममहत्त्वैकत्वादेर्नित्यसम्बन्धत्वादित्याशङ्क्याह—परमाण्वादीनामित्यादि।

गुणमध्यपाठः अणु महद्दीर्घं ह्रस्वं चेति रूपः। पारिभाषिकमिति। परिभाषा च वैशेषिकमतसिद्धा। जातिशब्दा एवैते। वैशेषिकनयानुसारेण तु तत्र गुणशब्दव्यवहार इति भावः। ननु गुणादीनां प्रतिधर्मिवैधर्म्यदर्शनेन नानात्वेन तत्र शक्तौ व्यक्तिवदानन्त्यव्यभिचारापात इत्यत आह—गुणक्रियेति। वस्तुत इति। प्रत्यभिज्ञया धर्मभेदग्रहस्य बाधितत्वादाश्रयभेदनिबन्धन एव तद्भेद इत्यर्थः। अत एवोक्तं काव्यप्रदीपकारैः—

ननु पटादिनिष्ठानां शुक्लादिगुणानां तण्डुलादिनिष्ठानां पाकादिक्रियाणां च भेदस्य प्रत्यक्षतः सिद्धौ व्यक्तिसंकेतपक्षोक्तदोषः समान इति चेन्न। गुणादीनां स्वरूपत एकरूपाणामित्यादि।

## साहित्यचूडामणिः

गुणशब्दत्वमिति। ननु परमाणुत्वेन सह पार्थिवत्वादीनां कथमसाङ्कर्यम्, यदाहुः—

व्यक्तेरभेदस्तुल्यत्वं सङ्करोऽथानवस्थितिः।
रूपहानिरसम्बन्धो जातिबाधकसङ्ग्रहः॥

इति चेत्, न, भूषणादिमर्यादया सम्यक्त्वादिना सममनुभवत्वादिवदिति ब्रूमः।

ननु नैतद् घट्टकुट्यां प्रभातम्, येन व्यक्तौ सङ्केतं गृह्णतामानन्त्यादयो ये दोषाः ते सर्वानुस्यूतां जातिमेकामवधूय गुणक्रियायदृच्छात्रयमनुबध्नन्ति। घटस्य शुक्लः पटस्य शुक्लः इति ओदनस्य पाको गुडस्य पाक इति डित्थस्य यदृच्छा डवित्थस्य यदृच्छेत्यानन्त्यव्यभिचारयोरपरिहार्यत्वादिति चेत् तत्राह—गुणेति। वस्तुतत्त्ववृत्त्या आश्रयभेदात् गुणाद्याधाराणां वैलक्षण्यात्। भेद इवेति। न तु भेद एव लक्ष्यते। प्रत्येकमैकरूप्यमेव गुणक्रियायदृच्छानां स्वभाव इति यावत्। अत्र दृष्टान्तः—यथेति।

एवं जात्यादिरिति निरूप्य जातिरेवेति पक्षं प्रस्तौति—हिमेति। एकरूपयोरभिधानप्रत्यययोरुत्पत्तिर्यद्वशेन तत् सामान्यम्, अनुवृत्ताभिधानप्रतीतिनिबन्धनत्वात्। एवमिति। यत्सामार्थ्येन पाकः पाक इत्यभिन्नयोर्व्यपदेशप्रतीत्योरुत्पत्तिः तत् पाकत्वं सामान्यम्। बालेति। डिम्भाद्युदीरितानां डित्थादिशब्दानामुदीरणभेदाद् भेद इत्येकः पक्षः, तदर्थानां तावत्यंशे सौगतमतानुसारेण प्रतिक्षणं भेदात्

## सुधासागरः

अयमाशयः। भेदो वैधर्म्यमन्योन्याभावश्च। आलम्बनं प्रतिबिम्बाश्रयः। प्रत्यभिज्ञया अनुगतप्रत्ययेन लाघवेन च शुक्लादीनामैक्यसिद्धौ तद्भेदप्रतीतिराश्रयभेदौपाधिक्येव। यथा खड्गप्रतिबिम्बिते मुखे दर्पणादिप्रतिबिम्बात्तस्मादेव मुखाद् भेदप्रतीतिः प्रतिबिम्बाश्रयभेदोपाधिक्येवेति। एतन्मते च नीलपीतादीनामपि समवायस्यैव नाशोत्पादौ। तेषां च प्रलयेऽप्यवस्थानमनादेर्भावस्य नित्यत्वादिति बोध्यम्।

पाकाद्रूपपरावृत्तिदर्शनादबाधिततारतम्यदर्शनाच्च भिन्ना एव शुक्लादयः। अनुगतमतिस्तु शुक्लत्वादिसामान्यनिबन्धनेत्यभिप्रेत्य जातिरेवेति पक्षं व्यवस्थापयति हिमपय इत्यादि।

हिमपयःशङ्खादिषु शुक्लादिगुणाः परमार्थतो भिन्ना एव। पाकाच्छुक्लं रूपं नष्टं श्याममुत्पन्नमिति प्रतीतेः। नचेयं भ्रान्तिः, बाधकाभावात्। नचोत्पादविनाशौ समवायस्य प्रतीयेते इति युक्तम्, तदनुल्लेखात्। यथा चानुगतप्रत्ययानुरोधेन तत्रापि शुक्लात्वादिजातिः। लाघवाच्च तत्रैव संकेत इत्युपेयम्।

एवं गुडतण्डुलपाकादिष्वपि पाकत्वादिकम्। तथा तारत्वादिविरुद्धधर्माध्यासाद्बालवृद्धाद्युदीरितडित्थादिशब्देष्विव डित्थाद्यर्थेष्वपि बालाद्यवस्थापरिणतनानापरिमाणरूपविरुद्धधर्माध्यासाद्भिन्नेषु डित्थत्वादिकं जातिः। सैव च डित्थादिपद-

## साहित्यचूडामणिः

कथञ्चिद् व्यक्तिबाहुल्यमित्यपर इति डित्थादित्वसामान्यसिद्धिः।

सर्वेषां गवादीनामिव शुक्लपाकडित्थादीनामपि प्रवृत्तौ निमित्तं जातिरेव न गुणादिरित्यन्ये मन्यन्ते।

एवञ्च,

घटतीति घटो ज्ञेयो नाघटन् घटतामियात्।
अघटत्वाविशेषेण पटोऽपि स्याद् घटोऽन्यथा॥
घटना च घटात्मत्वापत्तिरूपा क्रिया मता।
यः कश्चिदर्थः शब्दानां व्युत्पत्तौ स्यान्निबन्धनम्।
प्रवृत्तौ तु क्रियैवैका सत्तासादनलक्षणा॥
[ व्यक्तिवि० १ ]

इति व्यक्तिविवेकपक्षः प्रत्यक्तेपि। तत्प्रपञ्चनमप्रस्तुतम्।

तद्वानिति जातिविशिष्टो विशेषः शब्दार्थ इति नैयायिकाः। अपोहस्तदितरव्यावृत्तिरिति सौगताः। तन्मतानुपन्यासे ग्रन्थविस्तरचाकित्यमेको हेतुः, प्रस्तुतानुपयोगो द्वितीयः।

## सुधासागरः

शक्या एकत्वादित्यङ्गीकर्तव्यम्। एतेन बालवृद्धेत्यादि व्याख्यातम्। इवार्थेन वाशब्देन चशब्दस्य स्थानविनिमयात् इति काव्यप्रदीपकाराः।

जयरामन्यायपञ्चाननास्तु—अयुक्तमेतत्, विकल्पार्थेन वाशब्देन स्थानस्थेनैवोपपत्तौ विनिमयस्यान्याय्यत्वात्। शब्देष्वपि भेदस्य साधनीयत्वेनासिद्धनयोपमानत्वायोगाच्च। तस्मादयमाशयः बालवृद्धेत्यादिभेदेन वैलक्षण्येन च भेदसूचनाय चकारः पूर्वोक्तसमुच्चयार्थः।

शब्द एवोपाधिरिति भाष्यमतेऽनुगममुक्त्वा यैर्डित्थादिसंज्ञानामाकाशादिपद इव धर्मिमात्रे शक्तिरुच्यते तन्मतेऽप्याह—प्रतिक्षणमिति। क्षणपदं लवमुहूर्तादिपरम्।

भिद्यमानेषु वेति। कालभेदेन स्थौल्यकृशत्वाद्युपलब्धेर्भेदसिद्धिः। नचैकत्रैव स्थौल्यादिना कृशत्वोत्पत्तिसंभवः परिमाणस्याश्रयनाशनाश्यत्वादिति भाव इत्याहुः।

यद्वा सर्वेष्वेव वाच्येषु साम्यमस्तीत्यत्र तद्वाक्यतात्पर्यम्।

अथवा भाष्यकारमते डित्थादिशब्द एवोपाधिरिति तन्मतेऽपि शब्दस्य नानात्वात्तन्निष्ठा जातिरेव शक्याङ्गीकार्येति तत्तात्पर्यम्।

सर्वेषामित्यादि।

प्रवृत्तिनिमित्तं संकेतविषयः।

अन्ये मीमांसकाः।

अत्रेदमवधेयम्। यो यत्राभियुक्तः स तद्विषयं सम्यग्जानातीत्यभियुक्तवचनं

**स मुख्योऽर्थस्तत्र मुख्यो व्यापारोऽस्याभिधोच्यते ॥३॥**

स इति साक्षात्सङ्केतितः । अस्येति शब्दस्य ॥३॥

## साहित्यचूडामणिः

स इति । मुख्यः प्राथमिकः न तु प्रधानभूतः । यस्मादभिधा मुख्यो व्यापारः एवमभिधायकः शब्दोऽपि मुख्यः ॥ ३ ॥

## सुधासागरः

ग्राह्यम् । शब्दविचारे चाभियुक्ता वैयाकरणाः । तेषु च भगवतो महाभाष्यकाराद-धिको न प्रसिद्ध इति तन्मतानुरोधेनोपाधावेव शक्तिं स्वीकृत्य मतान्तराण्यपि सन्तीति सूचयन् जातिरेव वेति मीमांसकमतमुक्तवान् सूत्रकारः । स एव च वृत्तिकारस्तन्मत-द्वयं व्याख्याय तद्वानिति नैयायिकमतं अपोहो वेति नास्तिकमतं कैश्चिदिति साक्षेपं दर्शयति—तद्वानिति । जातिमानित्यर्थः ।

अयं पक्षो जातिविशिष्टशक्तिवादरूपस्तार्किकादेः ।

तथा हि—नैयायिकादयस्तु न व्यक्तिमात्रं शक्यं न वा जातिमात्रम् । आद्ये आनन्त्याद्व्यभिचाराच्च । अन्त्ये व्यक्तिप्रतीत्यभावप्रसङ्गात् । नचाक्षेपाद्व्यक्तिप्रतीतिः तस्माद्विशिष्ट एव संकेतः । न चानन्त्यादशक्यता व्यभिचारो वा । गोत्वादि-सामान्यलक्षणया सर्वव्यक्तीनामुपस्थितौ सर्वत्र संकेतग्रहसौकर्यादित्याहुः ।

तथाहि—सौगतास्तावद् व्यक्तावानन्त्यादिदोषाद् भावस्य च देशकालानुगमा-भावात्तदनुगतायामतद्व्यावृत्तौ संकेत इत्याहुः । तथा च जातिमान् जातिविशिष्ट-घटस्यापोह इत्यर्थः । क्षणभङ्गवादिनां मते स्थिरस्य सामान्यस्याभावादपोहमात्रेणानु-गतव्यवहार इति तत्रैव शक्तिरिति भावः ।

इत्यादिमतानि ग्रन्थगौरवभयात् प्रकृतानुपयोगाच्च न सूत्रे दर्शितानि । उपाधिशक्तिवादे उपहितस्य व्यङ्ग्यत्वं संभवतीति तन्मतानुवादः प्रकृतोपयोगी । उपहितशक्तिस्तु प्रकृते प्रतिकूलप्रायेति न तदनुवाद इति भावः ।

किञ्च येषां मते संज्ञाशब्दानां शब्दो नोपाधिः किन्तु ततो धर्मिमात्रप्रतीतिस्तेषां मते मीमांसकमते चाकाशादिशब्दानां कथं जातौ संकेत इति चिन्त्यम् । नैयायिक-मतमप्यतिरिक्तसामान्यलक्षणागौरवग्रस्तम् । नास्तिकमतं तु वेदविरुद्धं तुच्छमेवेत्यु-पाधिशक्तिवाद एव ज्यायानिति दिक् ।

साक्षात्संकेतित एवार्थो मुख्यत्वेन प्रसिद्ध इत्यर्थः । अभिधाव्यवहारस्य 'नाभिधा समयाभावात्' इत्यादौ दर्शनात् लक्ष्यति—'तत्रे'-ति ।

श्लोकश्छन्दः । तत्र मुख्यार्थेऽस्य शब्दस्य यो व्यापारः सोऽभिधेत्युच्यते इत्यर्थः ।

[ लक्षकत्वम् ]

**मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात् ।**
**अन्योऽर्थो लक्ष्यते यत् सा लक्षणारोपिता क्रिया ॥९॥**

'कर्मणि कुशल' इत्यादौ दर्भग्रहणाद्ययोगाद्, 'गङ्गायां घोष' इत्यादौ च गङ्गादीनां घोषाद्याधारत्वासम्भवाद्, मुख्यार्थस्य बाधे, विवेचकत्वादौ सामीप्ये च सम्बन्धे, रूढितः प्रसिद्धेः, तथा गङ्गातटे घोष इत्यादेः प्रयोगाद् येषां न तथा प्रतिपत्तिः, तेषां पावनत्वादीनां धर्माणां तथा प्रतिपादनात्मनः प्रयोजनाच्च मुख्येनामुख्यो लक्ष्यते यत् स आरोपितः शब्दव्यापारः सान्तरार्थनिष्ठो लक्षणा ॥९॥

**स्वसिद्धये पराक्षेपः परार्थं स्वसमर्पणम् ।**
**उपादानं लक्षणं चेत्युक्ता शुद्धैव सा द्विधा ॥१०॥**

[क] 'कुन्ताः प्रविशन्ति' 'यष्टयः प्रविशन्ति' इत्यादौ कुन्तादिभिरात्मनः प्रवेशसिद्ध्यर्थं स्वसंयोगिनः पुरुषा आक्षिप्यन्ते, तत उपादानेनेयं लक्षणा ।

---

## साहित्यचूडामणिः

अथ लक्षणां लक्षयति—मुख्येति । बाधः प्रमाणपराहतत्वम् । तद्योगे तेन बाधितेन मुख्यार्थेन सह लक्षयितुमभिलषितस्यार्थस्य सम्बन्धे । दर्भेति । कुशं लातीति कुशलः । नहि गमनादौ कर्मणि दर्भग्रहणं समस्ति । सैषा रूढिमूला ।

## सुधासागरः

वाचकं निरूप्य लाक्षणिकं लक्षयितुं लक्षणां लक्षयति—

अथशब्दो विकल्पे । प्रयोजनादिति ल्यब्लोपे पञ्चमी प्रयोजनमुद्दिश्येत्यर्थः । प्रयोजनं च व्यङ्ग्यार्थप्रतिपादनरूपम् । अन्योऽमुख्यः लक्ष्यते प्रतिपाद्यते इत्यर्थः अतो नात्माश्रयाख्यो दोषः शङ्क्यः । यदिति । गुणीभूतलक्षणक्रियामात्रपरामर्शः । अत एव शक्यसंबन्धेनाशक्यप्रतिपत्तिर्लक्षणेति जरन्नैयायिकाः । प्रतिपत्तिः प्रतिपादनक्रिया न तु ज्ञानम् ।

ननु प्रतिपादनं चेल्लक्षणा न तर्हि शब्दधर्मः । गङ्गादिशब्दानां नीरादिकमुपस्थाप्य विरामे नीराद्यर्थेनैव संबन्धेन तीराद्यर्थप्रतिपादनात् इत्यत आह—आरोपिता क्रियेति । शक्यव्यवहितलक्ष्यार्थविषयत्वात् शब्दे आरोपित एव स व्यापारः । वस्तुतोऽर्थनिष्ठ एवेत्यर्थः । तदेतदुक्तं सान्तरार्थनिष्ठ इति । तथा च तात्पर्यविषयेतरपदार्थे मुख्यार्थतावच्छेदकावच्छिन्नबाधज्ञाने तत्कालीनप्रमाणान्तरानुमापकमुख्यसंबन्धे च सति भावाभावसहकृतप्रयोजनाभावादन्योऽमुख्योऽर्थो यत् लक्ष्यते प्रतिपाद्यते साऽऽरोपिता सान्तरार्थनिष्ठा क्रिया लक्षणेति वाक्यार्थः ।

## साहित्यचूडामणिः

प्रयोजनमूलामप्याह—गङ्गायामिति। गङ्गादीनां प्रवाहादिरूपाणां घोषाद्यधिकरणतायामयोग्यत्वान्मुख्यस्याभिधेयस्यार्थस्य भङ्गे सति। प्रथमस्य विवेचकत्वादौ द्वितीयस्य सामीप्ये च सम्बन्धे। तथेति अथशब्दं व्याचष्टे। प्रयोगान्मुख्यभूतात्। तथाप्रतिपादनेति। यथा स्रोतसि तथा तटेऽपीति यत् प्रख्यापनं तद्रूपात् फलात्। यदिति वाक्यार्थपरामर्शे। आरोपिता क्रियेति लक्षणाया लक्षणसंक्षेपः। क्रिया शब्दव्यापारः। अन्तरं व्यवधानं तत्सहितः सान्तरः तत्रार्थे निष्ठा तात्पर्यं यस्य। तथाहुः—"अतस्मिंस्तत्समारोपो भक्तेर्लक्षणमिष्यते" इति। प्रयोजनमूलायामेव लक्षणायां व्यञ्जनं, न रूढिमूलायाम्। यदाह—

रूढा ये विषयेऽन्यत्र शब्दाः स्वविषयादपि।
लावण्याद्याः प्रयुक्तास्ते न भवन्ति पदं ध्वनेः॥ [ध्व० १।१६]

इति। [1]ये तु काकुयोजनया भवन्त्येवेति व्याकुर्वते ते सत्यमाशागृहीताः।[2] कुशलपदमनुलोमप्रवीणाद्युपलक्षणम्॥ ४॥

प्रयोजननिबन्धनां भूयो विभजते—स्वसिद्धय इति। उपादानं लक्षणमिति

## सुधासागरः

रूढिलक्षणां दर्शयति—

कर्मणि कुशल इति। अत्र दर्भग्रहणायोग्यत्वात् मुख्यार्थबाध इति भावः। कुशं लातीति यौगिकार्थो मुख्यः, दक्षान्वये तात्पर्यमिति मुख्यार्थबाध इति भावः। विवेचकत्वं च सम्बन्धः। तथा च तैलङ्गादिजनपदशब्दा जने, त्वक्शब्दः त्वगिन्द्रिये। प्रयोजनाद् यथा—गङ्गायां घोष इत्यादौ। अत्र हि गङ्गातीरे घोष इति मुख्यशब्दात्तादृशं पावनत्वं न प्रतीयते यादृशं गङ्गायां घोष इति लाक्षणिकात्।

लक्षणा तावत् द्विविधा। शुद्धा गौणी च। तत्राद्या द्विविधा उपादानलक्षणा लक्षणलक्षणा च। ते अपि प्रत्येकं सारोपा साध्यवासना चेति द्विविधे इति शुद्धभेदाश्चत्वारः[3]। गौणी तु द्वेधा, सारोपा साध्यवासना। इति षड्विधत्वं कारिकात्रयेण प्रतिपादयति।

श्लोकश्छन्दः। स्वसिद्धये स्वार्थस्यान्वयप्रवेशसिद्धये पराक्षेपः परलक्षणं स्वार्थापरित्यागेन परार्थलक्षणमुपादानमित्यर्थः। अतः काकेभ्यो दधि रक्ष्यतामित्यस्य न तृतीयभेदत्वम्, काकपदेन दध्युपघातकं लक्ष्यत इति भावः।

एवं परार्थं स्वसमर्पणम्। परस्यान्वयप्रवेशसिद्ध्यर्थं स्वसमर्पणं स्वार्थसमर्पणं स्वार्थपरित्यागः, स्वार्थपरित्यागेन परार्थलक्षणं लक्षणमित्यर्थः। एताभ्यामुपाधिभ्यां शुद्धैव द्विविधोक्ता न तु गौण्यपीत्यर्थः। ते एव चान्यत्र जहत्स्वार्थाऽजहत्स्वार्थे इत्युच्येते। अत्र जहत्स्वार्था यां सा जहत्स्वार्थेति द्वितीयान्तान्यपदार्थे बहुव्रीहिः। तदन्याऽजहत्स्वार्थेति समासो बाध्यः।

---

[1] महिमभट्टादयः [2] माशागृहीताः पाठा० [3] मूलविरुद्धमिदम् सं०

'गौरनुबन्ध्य' इत्यादौ श्रुतिचोदितमनुबन्धनं कथं मे स्यादिति जात्या व्यक्तिराक्षिप्यते, न तु शब्देनोच्यते 'विशेष्यं नाभिधा गच्छेत् क्षीणशक्ति-र्विशेषणे' इति न्यायाद्—इत्युपादानलक्षणा तु नोदाहर्त्तव्या। न ह्यत्र प्रयोजनमस्ति न वा रूढिरियम्। व्यक्त्यविनाभावित्वात्तु जात्या व्यक्तिराक्षिप्यते; यथा क्रियतामित्यत्र कर्त्ता, कुर्वित्यत्र कर्म, प्रविश पिण्डीमित्यादौ गृहं भक्षयेत्यादि च।

'पीनो देवदत्तो दिवा न भुङ्क्ते' इत्यत्र च रात्रिभोजनं न लक्ष्यते। श्रुतार्थापत्तेरर्थापत्तेर्वा तस्य विषयत्वात्।

[ख] 'गङ्गायां घोष' इत्यत्र तटस्य घोषाधिकरणत्वसिद्धये गङ्गाशब्दः स्वार्थमर्पयति इत्येवमादौ लक्षणेनैषा लक्षणा।

[ग] उभयरूपा चेयं शुद्धा उपचारेणामिश्रितत्वात्।

[घ] अनयोर्लक्ष्यस्य लक्षकस्य च न भेदरूपं ताटस्थ्यम्, तटादीनां गङ्गादिशब्दैः प्रतिपादने तत्त्वप्रतिपत्तौ हि प्रतिपिपादयिषितप्रयोजन-सम्प्रत्ययः। गङ्गासम्बन्धमात्रप्रतीतौ तु 'गङ्गातटे घोष' इति मुख्यशब्दा-भिधानाल्लक्षणायाः को भेदः।

---

### साहित्यचूडामणिः

च भेदकेनोपाधिना व्यपदेशः। लक्ष्यलक्षकयुगलमेलकाध्यवसायो हि लक्षणा। तस्यां च तादात्म्यपर्यवसायिन्यां मुख्यार्थभङ्गकलशातिलङ्घननिबन्धनात् चमत्कारात् स्वसिद्धये पराक्षेपः, प्रयोजनोत्पत्तिनिमित्ताच्च तस्मात् परार्थं स्वसमर्पणम्। सम्बन्धः पुनरुभयोरविशेषेण सहकारीति विवेकः। कुन्ता इति। अचेतनत्वात् प्रवेशानौचित्यम्। संयोगः सम्बन्धः। पुरुषाणां शीघ्रप्रहर्तृत्वादिप्रकाशनं फलम्। आक्षिप्यन्त लक्षणाशक्त्यानीयन्ते। स्वप्रवेशसिद्ध्यर्थं, कुन्तैः यत् पुरुषाणामुपादानं तदेव निष्कृष्टं वपुरस्या लक्षणायाः।

प्रसङ्गादुपादानाभासं[1] दूषयति—गौरिति। श्रुतिचोदितं प्रभुसम्मितत्वाद् गवानुबन्धनस्यावश्यकर्तव्यत्वात् कथं मे (तत्) स्यादिति जातेरभिप्रायः प्रकाश्यते। जात्या गोत्वाकारया व्यक्तिः अनुबन्धनयोग्यः पिण्ड आक्षिप्यते लक्षणयावरुध्यते।

### सुधासागरः

उपादानलक्षणां दर्शयति—

कुन्ताः प्रविशन्ति यष्टयः प्रविशन्ति इत्यादौ कुन्तादयः स्वतोऽसम्भवत्प्रवेशाः तत्सिद्धय स्वसंयोगिपुरुषान्तरं लक्षयन्ति।

---

[1] मुकुलभट्टाभिमतम् इति यावत्।

## साहित्यचूडामणिः

नन्वभिधैवास्तु इति चेन्नेत्याह—नत्विति। अत्र युक्तिं संवादयति—विशेष्य-मिति। जातिर्विशेषणं व्यक्तिर्विशेष्यम्। तत्र जातौ सङ्केतस्य प्रतिपादितत्वाद् गोशब्दस्याभिधावृत्तिस्तत्रैव परिसमाप्तसमस्तसामर्थ्या सती व्यक्तेर्वार्तामपि न वेदितुमर्हेति, अतिप्रसङ्गात्। अतो जातिर्व्यक्तिरित्युभयमपि शब्दशक्त्या समर्प्यते इति न युक्तं वक्तुम्। किञ्चात्र लक्षणासामग्री न विद्यत इत्याह—नहीति लक्षणावृत्तेरङ्गं प्रयोजनं नास्ति। न च रूढिमूलत्वं मुख्यार्थभङ्गाभावादित्याह—नचेति। अथ कथं व्यक्तेः प्रतीत्युपाय इत्यत्राह—व्यक्तीति। आक्षेपोऽत्र सामर्थ्यादाकर्षः। अविनाभावमूल आक्षेपे किं लक्षणानिबन्धेन। आक्षेप्यतया सम्प्रतिपन्नं सामान्यादुपदर्शयति—क्रियतामिति। विशेषतोऽप्युपपादयति—प्रविशेति। क्रमेण योजना। यद् वा किं बहुनोक्तेन क्रियाकारकयोरपि यत्रौचित्या-दवगतिस्तत्रान्येषां कथैव केत्युक्तत्वात्। अथार्थापत्तावपि युक्तिमेनां योजयति—पीन इति। न लक्ष्यते न लक्षणया प्रकाश्यते प्रमाणान्तरेण समर्पणीयत्वात्। श्रुतेति। अनुपपद्यमानस्य पीनत्वादेः शब्दप्रमाणाधीनत्वे श्रुतार्थापत्तिः। तस्यैव प्रत्यक्षादि-प्रमाणान्तरग्राह्यत्वे दृष्टार्थापत्तिः। शब्दस्य प्राधान्यप्रतिपादनाय प्रागुपादानम्। यदाहुः—"दृष्टः श्रुतो वार्थोऽन्यथा नोपपद्यत इत्यर्थान्तरकल्पनमर्थापत्तिः" इति। अर्थापत्तेरनुमानान्तर्भावादविनाभावनिमित्तक एवाक्षेपः।

## सुधासागरः

अन्ये पुनर्जातिपदार्थवादिनः उपादानलक्षणामुदाहरन्ति तद् दर्शयति—

गौरनुबन्ध्य इति। विशेष्यमित्यादि। अयमाशयः। ननु व्यक्तिरभिधेयैव न तु लक्ष्येति चेत्, व्यक्तौ केवलायामेवाभिधा जातिविशिष्टायां वा? आद्ये आनन्त्यव्यभिचारौ, अन्त्ये नागृहीतविशेषणन्यायेन जातावेवाभिधा, व्यक्तिप्रतीतेरा-क्षेपादेव सम्भवात्। तदुक्तं विशेष्यं नाभिधा गच्छेदित्यादि। तदेतदपेशलं प्रयोजनस्य रूढेर्वा तृतीयलक्षणाहेतोरभावात्।

लक्षणलक्षणां दर्शयति—

'गङ्गायां घोषः'—इत्यत्र तटस्य घोषाधिकरणत्वसिद्धये गङ्गाशब्दः स्वार्थमर्प-यति—स्वार्थं परित्यज्य तत्रैव वर्तते।

उभयरूपा चेयमुदाहृता न तु गौणी, उपचारमिश्रा हि गौणीत्युच्यते। उपचारश्च सादृश्यसम्बन्धेन प्रवृत्तिः, सादृश्यातिशयमहिम्ना भिन्नयोर्भेदप्रतीतिस्थगनं वा। नचाक्तयोः तत्सम्भवः।

केचित्पुनराचक्षते, उपचारामिश्रत्वं न शुद्धायै मिश्रातो भेदकं किन्तु तटस्थत्वं, तच्च कस्य? मुख्यार्थस्य लक्ष्यस्य च न भेदप्रतीतिः। तथाहि—गौर्वाहीकः गौरय-मित्यादौ भेदेऽपि शक्यलक्ष्ययोरभेदः प्रतीयते, न तु गङ्गायां घोष इत्यादौ, तत्र भेद-मात्रप्रतीतेरिति। तदसत्। अस्ति हि गङ्गादिपदैः तीरादिप्रतिपादने गङ्गादिविशिष्ट-

## साहित्यचूडामणिः

एवमुपादानं परीक्ष्य लक्षणं व्याख्याति—गङ्गायामिति। स्वार्थे स्रोतोलक्षणम्, इतरथा तत्र पावनत्वादिकं न प्रतीयेत।

लक्षणेनेति। गङ्गास्वलक्षणेन ह्येषा लक्षणा गङ्गायामित्यधिकरणनिर्देशात्। शुद्धिं विवृणुते उभयेति—उपचारेणामिश्रणं शुद्धिरिति संक्षेपः।

उपक्रान्तं प्रमेयं स्पष्टयति—अनयोरित्यारभ्य ताटस्थ्यमित्यन्तम्।

लक्ष्यस्य सान्तरार्थस्य तटादेः लक्षकस्य गङ्गाद्यर्थस्य तच्छब्दस्य तदुभयस्य वा भेदरूपमन्योन्याभावस्वभावं ताटस्थ्यलक्षणं माध्यस्थ्यं न विद्यते। तत्सम्भावनायामभेदव्यवहारकौतूहलेऽपि भेदप्रथाशङ्कोरनुद्धारः स्यात्। एतदेवोपचारेणामिश्रत्वं यदनयोः सादृश्यप्रयोजितात् स्वशब्दप्रयोगादैकात्म्ययोजनायामप्रागल्भ्यम्। तत्र हेतुमाह—तटेति।

तस्य भावस्तत्त्वं तादात्म्यं तटादेर्गङ्गात्वादिरूपं तस्य प्रतिपत्तौ। हिर्हेतौ। प्रतिपादयितुमिष्टस्य प्रयोजनस्य शीघ्रप्रहारातिपावनत्वादिरूपस्य सम्प्रत्ययः अन्यथा मुख्यशब्दप्रयोगाल्लक्षणाया विशेषापलापप्रसङ्ग इत्याशयवानाह—गङ्गेति। तादात्म्यप्रतिपत्तिनियमनिरासेन गङ्गासम्बन्धमात्रस्य सातिशयपावनत्वनिरपेक्षस्य प्रतीतौ विवक्षितायां गङ्गायाः सम्बन्धिनि तीरे घोष इत्येवंरूपान्मुख्यशब्दाभिधानाद् गङ्गायां तटे घोष इति सप्तमीद्वयसामानाधिकरण्य लक्षणाया लक्षणायाः किं वैलक्षण्यं वृत्त्यन्तरपरिग्रहप्रयास एव फलम्॥ ५॥

## सुधासागरः

पावनत्वादिरूपप्रतिपिपादयिषितप्रयोजनप्रत्ययः, तत्र गङ्गात्वादिप्रतीतिरेव बीजं, न तु तीरत्वादिप्रतीतिः। एवं तीरे घोष इत्यत्रापि तत्प्रतीतिप्रसङ्गात्।

अथ गङ्गाशब्देन तटप्रतिपादने गङ्गासम्बन्धस्तत्र प्रतीयते तदेव तद्बीजमिति चेन्न। एवं हि गङ्गातटे घोष इति मुख्यशब्दप्रयोगेऽपि तत्प्रतीतिः स्यात्, तत्सम्बन्धप्रतीतौ विशेषाभावात्।

अथ वाच्ये जागरूके कथं गङ्गाशब्दादिभिर्गङ्गात्वादिकं तीरे बोध्यते इति चेत् उच्यते—शब्देन लक्ष्येऽर्थे प्रतिपादिते तत्रामुख्याभेदो व्यञ्जनया प्रतिपाद्यते। तदेतदुक्तम्—तटादीनां गङ्गादिशब्दैरित्यादि।

अत्र प्रतिपादने इति सप्तम्या प्रत्ययस्यानन्तर्यं बोध्यते न चेद् व्यञ्जने बाधः प्रतिबन्धक इति काव्यविदां पन्थाः। वक्ष्यति हि सारोपसाध्यवसानयोर्गौणभेदेऽप्यभेदावगमः सर्वथैवाभेदप्रतीतिश्च फलमिति। किं बहुना, बाधित एव पावनत्वादिविशेषस्तटादौ प्रतीयते, तत्सूत्रयिष्यति योगः फलेन नो इति।

**सारोपाऽन्या तु यत्रोक्तौ विषयी विषयस्तथा ।**

आरोप्यमाणः आरोपविषयश्च यत्रानपह्नुतभेदौ सामानाधिकरण्येन निर्दिश्येते, सा लक्षणा सारोपा ।

**विषय्यन्तःकृतेऽन्यस्मिन् सा स्यात् साध्यवसानिका ॥६॥**

विषयिणाऽऽरोप्यमाणेनान्तःकृते निगीर्णे अन्यस्मिन्नारोपविषये सति साध्यवसाना स्यात् ।

**भेदाविमौ च सादृश्यात् सम्बन्धान्तरतस्तथा ।**

**गौणौ शुद्धौ च विज्ञेयौ—**

---

## साहित्यचूडामणिः

अथ गौणीमपि लक्षणायामन्तःपातयितुं पुनर्विभागमाह—सारोपेति आरोप्यमाणः गवादिः आरोपविषयश्च वाहीकप्रभृतिः ।

तथाशब्दं व्याचष्टे—अनपह्नुतेति । येन प्रकारेण द्वयोः स्वलक्षणस्फुरणं तथोक्तौ गोत्ववाहीकत्वादिस्वलक्षणयुगलविशेषानपलापपूर्वकमुपन्यस्तौ । एतदार्थं तथात्वम् । शाब्दं तु सामानाधिकरण्येन निर्देशः । एतद्विपर्ययलक्षणामन्यामपि गौणीं लक्षणायां निमज्जयति—विषयीति । आरोप्यमाणो गवादिर्विषयः तेनारोपविषये वाहीकादौ कवलिते साध्यवसाना नाम लक्षणा ॥६॥

अनयोः प्रत्येकं गौणशुद्धविभागमाह—भेदाविति । यथोद्देशमिति सादृश्याद् गौणौ सम्बन्धान्तरतः शुद्धौ । एतदेवानयोः शुद्धत्वं यत् सादृश्यमात्रानुप्राणनाया

## सुधासागरः

अन्या अर्थात् गौणी आरोपाध्यवसानाभ्यां भिद्यते नतूपादानलक्षणाभ्यां इति तुशब्दार्थः । अयमर्थः । विषयी आरोप्यमाणो गवादिः । विषयः आरोपस्य वाहीकादिश्च । यत्र तथानपन्हुतभेदौ सामानाधिकरण्येनोक्तौ शब्दप्रतिपाद्यौ सा लक्षणा सारोपा । विषयविषयिणोर्भेदेनोपन्यासस्यात्रारोपपदार्थत्वात् ।

श्लोकच्छन्दः । विषयिणा आरोप्यमाणेन अन्यस्मिन्नारोपविषयेऽन्तर्वाहीकादौ कृते निगीर्णे भेदेनानुपस्थिते इति यावत् । विषयिमात्रं यत्र निर्दिश्यते न तु विषयोऽपि सा साध्यवसाना । विषयिणा विषयतिरोभावस्यात्राध्यवसायपदार्थत्वात् । एतौ भेदौ शुद्धभेदेऽपि भवत इति प्रतिपादयन्नेव शुद्धायाः गौण्याश्च लक्षणमाह—

भेदाविमाविति । इमौ आरोपाध्यवसानरूपौ भेदौ । तौ यदि सादृश्यात्तदा गौणौ, अथ सम्बन्धान्तरात्तदा शुद्धौ । तत्र सादृश्यात् यथा गौर्वाहीक इति सारोपः ।

[क] इमावारोपाध्यवसानरूपौ सादृश्यहेतू भेदौ 'गौर्वाहीक' इत्यत्र 'गौरयम्' इत्यत्र च ।

अत्र हि—

स्वार्थसहचारिणो गुणाः जाड्यमान्द्यादयो लक्ष्यमाणा अपि गोशब्दस्य परार्थाभिधाने प्रवृत्तिनिमित्तत्वमुपयान्तीति केचित् ॥

स्वार्थसहचारिगुणाभेदेन परार्थगता गुणा एव लक्ष्यन्ते, न तु परार्थोऽभिधीयत इत्यन्ये ॥

साधारणगुणाश्रयत्वेन परार्थ एव लक्ष्यत इत्यपरे ।

---

## साहित्यचूडामणिः

गौणताया अवधीरणम् । ननु स्वशब्दप्रयोगवत्यो लक्षणा गौण्य इति प्राङ् निरणायि, इदानीं तु सादृश्यवती वृत्तिर्गौणीति पूर्वापरविरोध इति चेत् । न । अन्यपक्षापेक्षया स्वशब्दप्रयोगवती गौणी स्वमतेन तु सादृश्यवतीति न कश्चिद् विरोधः । तत्र पक्षत्रयमुपक्षिपति अत्र हीति । स्वार्थेति । गोशब्दस्य यः स्वार्थः सास्नादिमद्रूपः तेन सह चरितुं शीलं येषाम् । लक्ष्यमाणा अपीत्यपिशब्देन यत्नगौरवदोषः सोढव्य इत्युद्भाव्यते । परो वाहीकशब्दः, गोशब्दस्येति प्रस्तुतत्वात् । तदर्थस्य वाहीकस्याभिधाने प्रवृत्तिनिमित्तभावं प्रतिपद्यन्ते इति केचित् । अत्र गोशब्दस्यैकस्य जडिमादिगुणेषु लक्षणा वाहीकशब्दार्थे पुनरभिधा इति यत्नगौरवम् । असम्मतमर्थं प्रत्यभिधायाः प्रवृत्तिरित्यपि दोषः । एतत् परिहर्तुमन्ये मन्यन्त इत्याह—स्वार्थेति । स्वार्थसहचारिभ्यो गुणेभ्यो यस्तज्जातीयत्वादभेदः तेन परार्थगता गुणा एव लक्ष्यन्ते, न स्वार्थगताः । एवकारव्यावर्त्यमाह—नत्विति । अत्राभिधाया अनङ्गीकारान्न यत्नगौरवं किन्तु यद्यपि जडिमादिगुणलक्षणा तथापि वाहीकादिगुणवत्पदार्थप्रतीतिरनिबन्धना स्याद् इति शङ्कमानाः परे संगिरन्त इत्याह—साधारणेति । गवि वाहीके च वर्तमानानां गुणानामाश्रयणेन परार्थ एव लक्ष्यते नतु जडिमादयो गुणाः । अथ परार्थो लक्ष्यत एव न कदाचिदभिधीयते इत्युभयतोमुखमवधारणम् । एवञ्च न कश्चिदुक्तदोषावकाशः । किञ्च शब्दारोपपूर्वकोऽर्थारोप इति केचित् । अर्थारोपपुरस्सरः शब्दारोप इत्यन्ये । समप्राधान्याद् द्वयोरारोप इत्यपरे । इयमेव समीचीना सरणिः काव्यव्यवहारे सर्वत्र शब्दार्थयोरविनाभावात् । यदाहोद्भटः—

## सुधासागरः

गौरयमिति साध्यवसानः । यद्यपि वाहीकस्य वाहीकत्वेन इदंतया वोपस्थितौ सारोपत्वमेवोचितं, तथापीदंत्वस्यारोप्यविशेषणतया तदुदाहरणं द्रष्टव्यम् । अत एव वक्ष्यते निश्चयरूपसंकरावसरे 'नयनानन्ददायीन्दोर्बिम्बमेतत्प्रसीदति' इत्यत्र एतदिति बिम्बविशेषणतया किमियमतिशयोक्तिः किञ्चैतदिति वक्त्रं निर्दिश्य बिम्बमित्यारोपाद् रूपकमिति ।

वादिभेदेन लक्ष्यविकल्पमाह । अत्र स्वार्थेत्यादिना ।

उक्तञ्चान्यत्र [ मानान्तरविरोधे तु मुख्यार्थस्यापरिग्रहे ]
अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते ।
लक्ष्यमाणगुणैर्योगाद् वृत्तेरिष्टा तु गौणता ॥ इति ॥

अविनाभावोऽत्र सम्बन्धमात्रम्, न तु नान्तरीयकत्वम्। तत्त्वे हि मञ्चाः क्रोशन्तीत्यादौ न लक्षणा स्याद्। अविनाभावे चाक्षेपेणैव सिद्धेर्लक्षणाया नोपयोग इत्युक्तम्।

## साहित्यचूडामणिः

"केचिच्छब्दारोपपूर्वमर्थारोपं ब्रुवते। अपरे विपर्ययम्। अन्ये यौगपद्यम्। एष एव युक्तः पक्ष" [२]इति। यच्चोक्तं लोचने—"लक्षणा तावद् गौणीमपि व्याप्नोति। केवलं शब्दस्तमर्थं लक्षयित्वा तेनैव सह सामानाधिकरण्यं भजते। अर्थो वार्थान्तरं लक्षयित्वा स्ववाचकेन तद्वाचकं समानाधिकरणं करोति। शब्दार्थौ वा युगपद् लक्षयित्वा ताभ्यामेव शब्दार्थाभ्यां मिश्रीभवतः" इति[३]। सर्वथा गौणे शब्दप्रयोगो न लक्षणायामिति स्वशब्दप्रयोगो नियमभावी[४]। एतेन,

यस्तु तत्त्वसमारोपस्तत्संबन्धनिबन्धनः।
मुख्यार्थबाधे सोऽप्यार्थं सम्बन्धमनुमापयेत्॥
तत्साम्यतत्सम्बन्धौ हि तत्त्वारोपैककारणम्।
गुणवृत्तेर्द्विरूपायास्ततप्रतीतिरतोऽनुमा ॥
गुणवृत्तौ गिरां यावत् सामग्रीष्टा निबन्धनम्।
सैव लिङ्गतयास्माभिरिष्यतेऽर्थान्तरं प्रति ॥

किञ्च,

तुल्यादिषु हि लोकोऽर्थेष्वर्थं तद्दर्शनस्मृतम्।
आरोपयेन्न शब्दं तु स्वार्थमात्रानुयायिनम्॥
इत्थमर्थान्तरे शब्दवृत्तेरनुपपत्तितः।
फले लिङ्गैकगम्ये स्यात् कुतः शब्दः स्खलद्गतिः॥
प्रधानेतरभावेनावस्थानादर्थशब्दयोः।
समशीर्षिकयारोपो न तयोरुपपद्यते ॥ [व्यक्तिवि० १]

इति ध्वनिवादनिराकरणे पादप्रसारिकायमाणो व्यक्तिविवेकखण्डः प्रत्याख्यातः, यस्मादभिधाया उपरि लक्षणा तदुपरि व्यञ्जनम् एवमभिधाया उपरि व्यञ्जनमिति तृतीयोऽपि शब्दव्यापारः समर्थयिष्यते। तस्य चानुमानानन्तःपातः प्रपञ्चेन पञ्चमे प्रपञ्चयिष्यते।

## सुधासागरः

अत्रेदं बोध्यम्। केचिदन्यपदाभ्यां तत्पक्षयोर्दौर्बल्यं संसूच्यापरे इत्यनेन चरमपक्षो वृत्तिकारैरङ्गीकृतः। तथा च न परे अपरे अस्मत्सगोत्रा इत्यर्थ इति।

[१] ०'ते प्रवृत्ति' इति तु तन्त्रवार्तिके मूलम्। [२] उद्भटग्रन्थो लुप्तः।
[३-४] ध्वन्यालोकस्य 'वाचकत्वाश्रयेणैवे'ति २.१८ कारिकाया लोचने

[ख] आयुर्घृतम् आयुरेवेदमित्यादौ च सादृश्यादन्यत् कार्यकारणभावादि सम्बन्धान्तरम् ।

एवमादौ च कार्यकारणभावादिलक्षणपूर्वे आरोपाध्यवसाने ।

[ग] अत्र गौणभेदयोर्भेदेऽपि ताद्रूप्यप्रतीतिः सर्वथैवाऽभेदावगमश्च प्रयोजनम् । शुद्धभेदयोस्त्वन्यवैलक्षण्येनाव्यभिचारेण च कार्यकारित्वादि ।

क्वचित् तादर्थ्यादुपचारः, यथा इन्द्रार्था स्थूणा इन्द्रः ।

क्वचित् स्वस्वामिभावाद्, यथा राजकीयः पुरुषो राजा ।

क्वचिदवयवावयविभावाद्, यथा अग्रहस्त इत्यत्राग्रमात्रेऽवयवे हस्तः ।

क्वचित् तात्कर्म्याद्, यथा अतक्षा तक्षा ।

लक्षणा[१] तेन षड्विधा ॥७॥

आद्यभेदाभ्यां सह ॥७॥

## साहित्यचूडामणिः

संवादग्रन्थं विमृशति अविनाभाव इति । नान्तरीयकत्वं व्याप्तिः प्रतिबन्धोऽनौपाधिकः सम्बन्धोऽविनाभाव इत्यादिरेकोऽर्थः । विपक्षे बाधकमाह—तत्त्व इति । मञ्चस्य पुरुषाणां च व्याप्तेरभावात् । संभवे दोषमाह—अविनाभाव इति । सिद्धेरिति । अर्थाल्लक्षणीयस्यार्थस्याविनाभावनिबन्धनाक्षेपाल्लाभे निष्फलो लक्षणामूलाक्षेप इत्युक्तम् । इत्थं च लक्षणाया अनुमानान्तर्भावो न घटते, तस्याविनाभावव्यतिरेकेऽनुत्थानात्, लक्षणायास्तु संबन्धमात्रेणापि प्रवृत्तिदर्शनादिति व्यक्तिविवेकवितथीकारार्थः प्रयासः ।

## सुधासागरः

अभिधेयाविनेति । लक्ष्यमाणा जाड्यादयः तैरेव यदि योगः शक्यसम्बन्धः तदा गौणी वृत्तिरिति । अविनाभावश्चात्र सम्बन्धमात्रमभिमतं न तु व्याप्तिः । मञ्चाः क्रोशन्तीत्यादावभावात् ।

संबन्धात्सारोपो यथा—आयुर्घृतमिति ।

साध्यवसानो यथा—आयुरेवेदमिति ।

एवमादौ सादृश्यादन्यो यः कार्यकारणभावादिसम्बन्धः तत्पूर्वके सारोपाध्यवसाने ।

अत्र गौणभेदे सारोपभेदेऽपि ताद्रूप्यप्रतीतिः । साध्यवसाने सर्वथैवाभेदावगमः प्रयोजनम् । शुद्धभेदे सारोपे अन्यवलक्षण्येन कार्यकारित्वादेः, साध्यवसाने त्वव्यभिचारेण कार्यकारित्वादेः प्रतीतिः फलं, तदुभयत्राभेदप्रतीतिपूर्वकमित्युक्तम् । क्वचित्तादर्थ्यादुपचारः प्रयोजनकत्वेनोपचार इत्यर्थः । यथा इन्द्रार्था इन्द्रपूजाप्रयोजनिका स्थूणा इन्द्रः ।

[१] प्रयोजनवतीति यावत् ।

**व्यङ्ग्येन रहिता रूढौ सहिता तु प्रयोजने ।**

प्रयोजनं हि व्यञ्जनव्यापारगम्यमेव ॥

**तच्च गूढमगूढं वा**

तच्चेति व्यङ्ग्यम् ।

गूढं यथा–

मुखं विकसितस्मितं वशितवक्रिम प्रेक्षितं
समुच्छलितविभ्रमा गतिरपास्तसंस्था मतिः ।
उरो मुकुलितस्तनं जघनमंसबन्धोद्धुरं
बतेन्दुवदनातनौ तरुणिमोद्गमो मोदते ॥

अगूढं यथा—

श्रीपरिचयाज्जडा अपि भवन्त्यभिज्ञा विदग्धचरितानाम् ।
उपदिशति कामिनीनां यौवनमद एव ललितानि ॥

अत्रोपदिशतीति ।

**तदेषा कथिता त्रिधा ॥८॥**

अव्यङ्ग्या, गूढव्यङ्ग्या, अगूढव्यङ्ग्या च ॥८॥

**तद्भूर्लाक्षणिकः—**

शब्द इति सम्बध्यते । तद्भूस्तदाश्रयः ।

---

## साहित्यचूडामणिः

अथ संबन्धान्तरत इत्येतत् पर्यालोचयति आयुरिति । इयं सारोपा । आयुरेवेदमिति साध्यवसाना । सादृश्यादन्यदिति । गौणत्वव्यतिरेकेण शुद्धत्वमनयोः स्वभावः । आयुः कार्यं घृतं च कारणम् । यथाहुः—“शस्तं धीस्मृतिमेधाग्निबलायुःशुक्रचक्षुषाम्” इति । ननु गौणभेदयोः “लक्ष्यमाणगुणैर्योगाद् वृत्तेरिष्टा तु गौणता” इत्युक्तयुक्त्या विषयविषयिसाधारणजाड्यमादिगुणग्रहणपूर्वकमारोपणमध्यवसानं चासीत्, कथं पुनः सम्बन्धान्तरनिबन्धनयोरित्यत्राह—एवमादाविति । गौणभेदयोः फलमुपदिशति—अत्रेति । गोवाहीकयोर्वैलक्षण्येऽपि शब्दशक्तिसमर्पिततादात्म्यप्रतिपत्तिः फलं सारोपायाः । साध्यवसानायास्तु वस्तुस्वभावाधीनभेदप्रथा-

## सुधासागरः

अत्र च स्फुटा एव लक्षणाः । तेन षड्विधा ।

श्लोकश्छन्दः । उपादानलक्षणरूपशुद्धभेदाभ्यां सह अत्रोपादानलक्षणाभ्यामर्थान्तरसंक्रमितात्यन्ततिरस्कृतवाच्यौ विवक्षितवाच्यध्वनिभेदौ गौणीभ्यां सारोपसाध्यवसानाभ्यां रूपकातिशयोक्ती, शुद्धाभ्यां ताभ्यां हेत्वलंकारं निरूपयिष्यतीति षड्विधनिरूपणफलमिति दिक् ॥७॥

## साहित्यचूडामणिः

व्यतिरेकेण प्रतिपत्तिदशातारतम्यव्यपोहादेकतरस्योपलम्भः। शुद्धभेदयोरप्याह—शुद्धेति। अन्यवैलक्षण्येन सारोपायाः, साध्यवसानायाः पुनरव्यभिचारेण कार्यकारित्वं फलम्।

अथ आदिपदोपात्तानि सम्बन्धान्तराणि दर्शयति क्वचिदिति। सोऽर्थः प्रयोजनं यस्य तद्भावादुपचारः स्थूणा लोहप्रतिमा सेवेन्द्रः। अग्रमात्र इति। पूर्णावयवे हस्ते हस्तशब्दस्य सङ्केतः, अङ्गुल्यादाववयवमात्रे पुनरुपचारः। यदाह वामनः "हस्ताग्राग्रहस्तादयो गुणगुणिनोर्भेदाभेदाद्" इति। तात्कर्म्यात् तादर्थ्यादितिवत्। अतक्षापि कश्चिद् ब्राह्मणादिस्तक्षा वास्यादिशालितया तत्कर्मत्वात्।

निगमयति—लक्षणेति। ननु सारोपा साध्यवसानेति द्वे गौण्यौ द्वे च शुद्धे इति ताश्चतस्रः तत् कथं वा षाड्विध्यमित्यत्राह—आद्ये ति। प्रागुक्तौ भेदावुपादानलक्षणलक्षणौ ताभ्यां सहेति ॥ ७ ॥

इति लक्षणां परीक्ष्य तन्मूलं व्यञ्जनं प्रतिष्ठापयितुमुपक्रमते—सा चेति। रूढौ प्रसिद्धिनिबन्धने कुशलादिप्रयोगे लक्षणा व्यङ्ग्येन रहिता। उक्तं हि—

"निरूढा लक्षणाः काश्चित् सामर्थ्यादभिधानवत्" इति।

वाच्यवाचकभावप्राय एव हि तत्र लक्ष्यलक्षकभावः क्वचित् प्रयोजननिबन्धने सा व्यङ्ग्येन सहिता।

कथं फलसाहित्ये व्यङ्ग्यसाहित्यमित्यत्राह प्रयोजनं हीति। लक्षणायां फलं व्यञ्जनेनैव बोद्धव्यम्। यच्च तादृक् फलं तदेव व्यङ्ग्यमिति यावत्।

तच्चेति। गूढव्यङ्ग्यत्वे ध्वनित्वं, विपर्यये गुणीभूतव्यङ्ग्यता। यद् वक्ष्यति–"अगूढमपरस्याङ्गम्" इति। चाकारः समुच्चये।

मुखमिति। अत्र विकासः पुष्पधर्मः स्मितस्य नोपपद्यत इति मुख्यार्थभङ्गः। किञ्चिदुच्छूनावस्थत्वं लक्ष्यम्। संकोचव्युदासलक्षणं साधर्म्यं सम्बन्धः। सौरभवत्त्वादि व्यङ्ग्यं फलम्। वशितत्वं चेतनस्वभावः, स नयनक्रियायां वक्रिमणि न घटते इति मुख्यार्थबाधः। स्वाधीनता लक्ष्या। यथाभिलषितं हि मूर्तधर्मः, तद्

## सुधासागरः

एवमारोपादिकृतं प्रकारषट्कं प्रतिपाद्य व्यञ्जनकृतं प्रकारत्रयमाह—

व्यङ्ग्येनेति। लक्षणेत्यनुवर्तते। ननु प्रयोजनस्थले कथं व्यङ्ग्यसाहित्यनियम इति चेत्, प्रयोजनस्य व्यञ्जनामात्रगम्यत्वात्।

तदिति व्यङ्ग्यम्। लक्षणाभेदप्रयोजक आरोपादिर्यथा भिद्यते तथा तत्प्रयोजकं व्यङ्ग्यमपीति तस्यार्थः।

काव्यभावनापरिपक्वबुद्धिः सहृदयः तन्मात्रवेद्यं गूढं तदितरवेद्यमगूढं सहृदयासहृदयवेद्यत्वमगूढत्वमित्यर्थः। तत्र गूढं यथा—मुखं विकसितेति। पृथ्वी छन्दः। जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः इति तल्लक्षणात्। इन्दुवदनाया-

## साहित्यचूडामणिः

विभ्रमे भावविशेषे नोपपद्यते । अतिशयितत्वं लक्ष्यम् । कार्यकारणभावः सम्बन्धः अनतिशयितस्य कस्यचिदुच्चलनाभावात् । अभियोगयोग्यत्वं व्यङ्ग्यम् । संस्था स्वलक्षणसम्बन्धिन्यवस्था । तत्त्यागश्चेतनधर्मो मतौ चित्तवृत्तौ न सम्भवति । तादात्विकं वैदग्ध्यं लक्ष्यम् कार्याकारणभावः सम्बन्धः, बाल्यपरित्याग एव वैदग्ध्यस्यौचित्यात् । गुरुसमीपे व्यलीकगोपनं व्यङ्ग्यम् । मुकुलनमपि पुष्पधर्मः । तदङ्गनास्तनयोः प्रयुज्यमानः तयोरुज्जृम्भणौन्मुख्यं लक्षयति । अनुद्भूतावयवत्वरूप साधर्म्यं सम्बन्धः । रूपातिशयो द्योत्यः ।[१] अंसबन्धो देहस्य स्वभावः । नतु तदवयवस्य । जघनमात्रस्य मांसलत्वं लक्ष्यम् । गुणगुणिभावः सम्बन्धः । अंसस्य हि गुणो मांसलत्वम् । उपभोगयोग्यवयस्कत्व व्यङ्ग्यम् । उद्गम उच्चलनवन्मूर्तधर्मः । स तारुण्ये कथमुपपद्यते इति तेन तत्प्रथमा समुद्भूतिलक्ष्यते । कार्यकारणभावः सम्बन्धः, उद्भूतिमन्तरेणोद्गन्तुमशक्यत्वात् । विभक्तावयवत्वं व्यङ्ग्यम् । मोदत इति । मोदोऽपि चेतनस्वभावः स तरुणिमोद्गमे न सम्भवतीति तेन प्रसरद्रूपता लक्ष्या । सामान्यविशेषभावः सम्बन्धः । चित्तस्य प्रसरद्रूपताविशेष एव हि सुखाद्यनुभवः । अनितरसाधारणत्वं यौवनारम्भस्य व्यङ्ग्यम् । एवं च सर्वत्र गूढतया चमत्कारकारित्वं व्यङ्ग्यस्येति ।

## सुधासागरः

स्तनौ शरीरे तरुणिम्न उद्गम आविर्भावो मोदते स्वकार्यजननेऽनियन्त्रितोऽस्तीत्यर्थः । प्रकृत्यवेन्दुवदना तत्राप्येवंविधयौवनाविजृम्भणमिति कष्टमापतितं विदग्धयुवजनस्येत्येवं खेदो बतेत्यनेन प्रतिपाद्यते । भाग्येन परमोत्सवस्थानमुपसंपन्नं युवजननयनानामिति हर्षो वा । कथमित्यपेक्षायामाह मुखमित्यादि । यतो मुखं विकसितं प्रसृत स्मितम् 'ईषद्विकासि नयन स्मितं स्यात्स्पन्दिताधरम्' इत्युक्तलक्षणहास्यविशेषरूपम् एवं प्रेक्षितं प्रेक्षणम् । भाव क्तः । वशितो वशीकृतः स्वायत्तीकृतस्वसम्बद्ध इति यावत्—वक्रिमा वक्रत्वं यत्र तथाभूतम् । मतिगमनम् । समुच्छलिता धारारूपेण प्रादुर्भूता विभ्रमा विलासा यस्यां तथाभूता । मतिः बुद्धिरपास्ता त्यक्ता संस्था परिमितविषयत्वं यया तादृशी । अनेकविषयसंचारिणीति यावत् । उरो वक्षःस्थलं मुकुलितौ उद्भिन्नौ स्तनौ यत्र तादृशम् । जघनं कटिपुरोभागः अंसस्य बन्धोऽविभक्ततासम्पादनं[१] तेनोद्धुरम् उत्कृष्टं पीनमिति यावत् । तथा चासाधारणस्मिताद्युन्मेषः स्फुटमेव यौवनमोदमवगमयतीति भावः ।

अत्र च विकासस्य पुष्पधर्मस्य स्मिते, वशीकरणस्य चेतनधर्मस्य प्रेक्षणे, ऊर्ध्वगतिविशेषरूपसमुच्छलनस्य मूर्तद्रवधर्मस्य विभ्रमे, संस्थायाः मर्यादायास्त्यागस्य चेतनधर्मस्य मतौ, मुकुलितत्वस्य पुष्पधर्मस्य स्तनयोः, उद्धुरत्वस्योत्कृष्टधुरावत्त्वरूपस्य चेतनधर्मस्य जघने, मोदस्य हर्षस्य चेतनधर्मस्य यौवनोद्गमे बाधितत्वात् विकसितादिपदैः स्ववाच्यसम्बन्धाश्रयणेनोपदर्शितपदार्था लक्ष्यन्ते । तत्र विकासस्य पुष्पप्रसृतत्वस्य प्रसृतत्वमात्रेण सामान्यविशेषभावः सम्बन्धः । मनोहारित्वं

[१] अंसबन्धः सुरतासनविशेषः इति संप्रदायः

## साहित्यचूडामणिः

स्त्रीति । पामरादयोऽपि स्त्रीणामभ्यासाच्छेकव्यवहारविदो भवन्ति । स्त्रीणां पुनस्तानि ललितानि तारुण्यदर्प एवोपदिशति । अत्रोपदेश आचार्यधर्मः तारुण्यमदस्य नोपपद्यते । अज्ञातज्ञापकत्वं लक्ष्यम् । सामान्यविशेषभावः सम्बन्धः । अज्ञातज्ञापनविशेषत्वाद् उपदेशस्य । अनायासेन शिक्षादानं गम्यम् । एतदभिधेयवत् प्रकटं भवदगूढं चमत्कारशून्यं प्रतीयते । तदिति । अव्यङ्ग्या रुढिमूलत्वे, प्रयोजनमूलत्वे तु गूढव्यङ्ग्या अगूढव्यङ्ग्या चेति त्रिधा । ननु किन्निबन्धनेयं व्यङ्ग्यार्थोद्भूतिरित्यत्राह—तद्भूरिति । कोऽयमिदानीं लाक्षणिक इत्याख्यायते इत्याकाङ्क्षायां प्रकरणलभ्य इत्याह—शब्द इति । तदाश्रयः तस्य व्यङ्ग्यस्योत्पत्तिस्थानम् ।

## सुधासागरः

व्यङ्ग्यम् । वक्रत्वस्य सम्बन्धित्वेन सामानाधिकरण्यं सम्बन्धः । पूर्वं मौग्ध्यात्सर्वत्र वक्रता प्रेक्षितस्यासीदिदानीं त्वभिमत एवेति युक्तानुरागित्वं व्यङ्ग्यम् । समुच्छलनस्य प्रादुर्भूतत्वेन सामानाधिकरण्यंसम्बन्धः । सकलवशीकारित्वं व्यङ्ग्यम् । मर्यादात्यागस्यापि अपरमितविषयत्वेनैकाधिकरण्यं सम्बन्धः । अनुरागातिशयो व्यङ्ग्यः तस्य तादृशमिति प्रयोजकत्वात् । मुकुलितत्वस्य पुष्पसंस्थानस्योद्भिन्नत्वेन सामानाधिकरण्यं सम्बन्धः । आलिङ्गनयोग्यत्वं व्यङ्ग्यम् । उन्मुखत्वरूपस्योत्कृष्टत्वेन कार्यकारणभावः सम्बन्धः । उत्कर्षस्योन्मुखत्वहेतुत्वात् । रमणीयत्वं व्यङ्ग्यम् । एवं मोदस्यानियन्तृत्वेन समं हेतुहेतुमद्भावः सम्बन्धः । मोदस्यानियन्तृत्वेन समं हेतुत्वात् । स्पृहणीयत्वं व्यङ्ग्यम् । एतानि च काव्यभावनापरिपक्वबुद्धेः सहृदयस्यैव प्रकाशन्ते ।

दीपिकाकृत्तु—विकासेनाऽसंकुचितत्वसम्बन्धेन सातिशयत्वं लक्ष्यते । सौरभादि व्यङ्ग्यम् । वशीकरणेन स्वाधीनत्वं लक्ष्यते । अभिमतविषयप्रवृत्तिः सम्बन्धः । समुच्छलनेन बाहुल्यं लक्ष्यते । हेतुहेतुमद्भावः सम्बन्धः । पूर्वं मुग्धतया गुरुजनसन्निधौ प्रियतमेऽप्यङ्गीकृतमर्यादामतिरासीदिदानीं तु मौग्ध्याभावान्न तथेत्यनुरागातिशयो व्यङ्ग्यः । समुच्छलितत्वेन काठिन्यं लक्ष्यते निबिडावयवत्वं सम्बन्धः । कठिनं हि तद्भवतीत्याहुः ।

श्रीपरिचयादिति । गाथा छन्दः । जडा अनभिज्ञा अपि जनाः श्रियो लक्ष्म्याः परिचयात्सम्बन्धाद् विदग्धानां चतुराणां यानि चारितानि चेष्टितानि तेषामभिज्ञा ज्ञातारो भवन्तीत्यन्वयः । अत्र दृष्टान्तमाह—उपदिशतीत्यादि । यथा यौवनस्य मद उत्कर्षो भर इति यावत् स एव कामिनीनां स्त्रीणां ललितानि, 'सुकुमारतयाऽङ्गानां विलासो ललितं भवेत्' इत्युक्तलक्षणलक्षितप्रभृतीन बिब्बोकादिहावान् बहुवचनस्याऽऽद्यर्थत्वात सञ्चरणदर्शनवचनहसितादिगतभङ्गिविशेषानिति केचित् । यत्तु ललितानि विभ्रमानिति व्याख्यातम्' यच्च तत्र 'विभ्रमा ललितं तथा' इत्यपर इति प्रमाणोपन्यसनं तत्, भ्रान्तिविलसितम् । 'स्त्रीणां विलासबिब्बोकविभ्रमा ललितं तथा ।

[ व्यञ्जकत्वम् ]

**तत्र व्यापारो व्यञ्जनात्मकः ।**

कुत इत्याह

**यस्य प्रतीतिमाधातुं लक्षणा समुपास्यते ॥९॥**

**फले शब्दैकगम्येऽत्र व्यञ्जनान्नापरा क्रिया ।**

प्रयोजनप्रतिपिपादयिषया यत्र लक्षणया शब्दप्रयोगस्तत्र नान्यतस्तत्प्रतीतिः, अपि तु तस्मादेव शब्दात् । न चात्र व्यञ्जनादृतेऽन्यो व्यापारः । तथा हि—

**नाभिधा समयाभावाद्**

'गङ्गायां घोष इत्यादौ' ये पावनत्वादयो धर्मास्तटादौ प्रतीयन्ते न तत्र गङ्गादिशब्दाः सङ्केतिताः ।

**हेत्वभावान्न लक्षणा ॥१०॥**

मुख्यार्थबाधादित्रयं हेतुः ॥१०॥

---

## साहित्यचूडामणिः

ननु लाक्षणिक एव शब्दो यदि व्यङ्ग्यार्थप्रसाधकः स्यात् तर्हि कीदृशो व्यापारः । लक्षणादेरेव स्वीकारे व्यङ्ग्यस्य लक्षणीयत्वादिप्रसङ्ग इत्याशङ्क्याह—तत्रेति । यस्य व्यङ्ग्यभूतस्य प्रतीतिमुपजनयितुं लक्षणाशक्तिराद्रियते, अत्र प्रयोजने लाक्षणिकशब्दैकप्रतिपाद्ये व्यञ्जनव्यतिरिक्ता क्रिया वृत्तिरन्या नास्तीति संक्षेपः ।

प्रयोजनेति । फलस्य प्रतिपादनेच्छया, अन्यथा लक्षणाप्रयोगस्य नैष्फल्यात् । शब्दैकगम्यत्वं विवृणुते—नान्य इति । अत्र युक्तिं वक्ति—तथाहीति तदेतद्

## सुधासागरः

हेलालीलेत्यमी हावाः क्रियाः शृङ्गारभावजाः' इति कोशवाक्यस्य विलासादिपु हावपदशक्तिप्रतिपादनार्थत्वात् ।

उपदिशति अज्ञातानि ज्ञापयति । अत्र शब्दकरणकज्ञापनं मदे बाधितमिति ज्ञापनमात्रं लक्ष्यते । लक्षितज्ञानेऽनायासो व्यङ्ग्यः । प्रयोजनं सहृदयासहृदयवेद्यम् । उपदेशादनायासेन ज्ञानमित्यस्य प्रसिद्धत्वात् । यत्तु ज्ञानेऽन्यनिरपेक्षत्वं व्यङ्ग्यमिति तन्न तस्य मद एवेत्येवकारवाच्यत्वात् ।

तदेतत्सर्वमभिप्रेत्य गोविन्दमहामहोपाध्यायैरुक्तम्—अत्रोपदेशकत्वं शब्दविशेषप्रयोक्तृत्वं मदेऽनुपपन्नमित्याविष्कारं लक्षयता उपदिशतिपदेनाऽनायासेन शिक्षादानमभिव्यज्यते । तच्च सहृदयासहृदययोरप्यभिधेयवत्प्रकाशते इति ।

श्लोकश्छन्दः ।

तथा च—

लक्ष्यं न मुख्यं नाप्यत्र बाधो योगः फलेन नो ।
न प्रयोजनमेतस्मिन् न च शब्दः स्खलद्गतिः ॥११॥

यथा गङ्गाशब्दः स्रोतसि सबाध इति तटं लक्षयति, तद्वद् यदि तटेऽपि सबाधः स्यात् तत् प्रयोजनं लक्षयेत् । न च तटं मुख्योऽर्थः । नाप्यत्र बाधः । न च गङ्गाशब्दार्थस्य तटस्य पावनत्वाद्यैर्लक्षणीयैः सम्बन्धः । नहि प्रयोजने लक्ष्ये किञ्चित् प्रयोजनम् । नापि गङ्गाशब्दस्तटमिव प्रयोजनं प्रतिपादयितुमसमर्थः ॥११॥

---

## साहित्यचूडामणिः

घोषस्यातिपवित्रत्वादिकं प्रमाणान्तराप्रतिपन्नं वाहीके वा जाड्यातिशयवत्त्वम् । तत्र शब्दस्य तावन्न व्यापारः तत्सामीप्यादिना तद्धर्मकत्वनुमानमनैकान्तिकं गोशब्दवाच्यत्वं च वाहीकस्य न युक्तमिति । एतद् विशदयति—नाभिधेति ।

तटादाविति । अतिशयवन्तो ये पावनत्वादयस्तटादौ प्रतीयन्ते तेषु गङ्गादिशब्दा न सङ्केतिताः, किं तर्हि, स्रोतःप्रभृताविति नाभिधा ।

ननु तत्र लक्षणास्तु अलं व्यञ्जनेनेत्यत्राह—हेत्वभावादिति ।

एतदुन्मीलयति—लक्ष्यमिति । गङ्गाशब्दः स्रोतसि सामयिके सबाध इति हि तटलक्षणोन्मुख्यम्, नान्यथा । तद्वद् यदि तटेऽपि बाधितः स्यात् तदा पावनत्वादिकं व्यञ्जननिरासाय लक्षयेत् । तर्हि तत्र कः प्रत्यूह इत्यत्राह—तटेति । तटं हि मुख्योऽर्थो न भवति, असंकेतितत्वात् । मुख्यार्थबाधो हि तस्याः प्रथमं निबन्धनम् । लक्ष्यस्य तटस्य मुख्यतैव नास्ति, का नाम कथा बाधशङ्कायाः । सम्बन्धाभावं प्रकटयति न चेति । यदि च लक्षणासमर्पणीयैः पावनत्वादिभिस्तटस्य सम्बन्धः

## सुधासागरः

तत् तस्मात् त्रिधा । अव्यङ्ग्या गूढव्यङ्ग्या अगूढव्यङ्ग्या चेति ।

लक्षणां निरूप्य तया लाक्षणिकं लक्षयति तद्भूरिति [ पृ० ६८ ] ।

स्याद्वाचको लाक्षणिक इति सूत्रस्य शब्द इत्यनुपज्यते । तद्भूः । तस्या लक्षणाया आश्रयः । अथ व्यञ्जकशब्दलक्षणाय व्यञ्जना निरूपणीया । सा च द्वेधा । शब्दनिष्ठाऽर्थनिष्ठा च । तत्राऽन्त्या शब्दलक्षणेऽनुपयुक्ता इत्यग्रे विवेचनीया । आद्या तु द्वेधा । अभिधामूला लक्षणामूला च । तत्र यद्यप्य-भिधायाः प्राथम्यादुपजीव्यत्वाच्च तन्मूला प्रथमं निरूपयितुमुचिता तथापि सुप्रसिद्धत्वात् तस्या लक्षणायाः प्रकृतत्वाच्च तन्मूलामेव प्रथमं निरूपयति 'तत्र व्यापार' इति ।

लाक्षणिकशब्दे व्यापारो व्यङ्ग्यप्रकाशानुकूलः । लक्षणादिनैव तत्प्रतीतौ किंतयेत्यत आह—'यस्ये'ति [ पृ० ७२ ] ।

**एवमप्यनवस्था स्याद् या मूलक्षयकारिणी।**

**एवमपि प्रयोजनं चेल्लक्ष्यते तत् प्रयोजनान्तरेण, तदपि प्रयोजनान्तरेणेति प्रकृताप्रतीतिकृद् अनवस्था भवेत्।**

## साहित्यचूडामणिः

स्यात्, तदायं तटशब्दस्यैवार्थोऽस्तु, कृतं गङ्गाशब्दार्थत्वानुभवव्यसनेनेत्याह—गङ्गाशब्दार्थस्येति। फलेनेति जातावेकवचनमिति भावः। किञ्चात्र न शब्दस्य गतिस्खलनमित्युद्भावयितुं 'न च शब्दः स्खलद्गतिरि'-तिकारिकापुच्छं व्याचष्टे—नापीति। स्खलन्ती बाधेन विधुरीक्रियमाणा गतिरवबोधनशक्तिर्यस्य। गङ्गाशब्दो यथा तटं प्रतिपादयितुं लक्षणाया अभावे प्रगल्भो न भवति, न तथा फलं प्रतिपादयितुम्, स्खलद्गतित्वाभावात्। व्यञ्जनावलम्बिनो गङ्गाशब्दस्य फलविषया प्रतिपादनशक्तिर्न स्खलति यथा तस्यैवाभिधावलम्बिनः स्रोतोविषया। यदाह—

मुख्यां वृत्तिं परित्यज्य गुणवृत्त्यार्थदर्शनम्।
यदुद्दिश्य फलं तत्र शब्दो नैव स्खलद्गतिः॥ [ध्व० १।२० ]

इति। तटमिवेत्यत्रेवशब्दो वैधर्म्यदृष्टान्ते।

ननु यदुक्तं न प्रयोजनमेतस्मिन्नति न तद् युक्तं प्रयोजनानन्तराभ्युपगमादित्याशङ्क्याह—एवमपीति। विशिष्टलक्षणायां बन्ध्यो व्यञ्जनप्रयास इत्याशङ्क्ते-नन्विति। पावनत्वादिभिर्धर्मैरपृथग्भूतमेव सत् तटं लक्ष्यते न तु पूर्वं तटादौ लक्षिते पश्चादमीषां लक्षणा। ननु प्रयोजनविशिष्टतया तटादिलक्षणायां पुनरपि केनचिद् भाव्यं प्रयोजनेन लक्षणाङ्गतया, तच्च नास्तीति कथं विशिष्टे लक्षणेत्यत्राह—गङ्गाया इति। गङ्गायास्तटे घोष इति मुख्यात् प्रयोगाद् गङ्गायां घोष इत्यस्य यद् वैलक्षण्यं तत्प्रतीतिः फलमस्तु।

## सुधासागरः

यस्य पावनत्वादेः फलस्य प्रतीतये लक्षणाश्रयशब्दप्रयोगः तत्फलं तस्मादेव शब्दाद् गम्यते न तु प्रमाणान्तरात् व्याप्तिस्मृत्यादेरनपेक्षणात्। न च तत्र शब्दस्य व्यञ्जनं विनान्या क्रिया व्यापारः।

पावनत्वादौ फले संकेतग्रहाभावात्। अभिधा हि संकेतग्रहसहायैवोपयुज्यते। न स्वरूपत इति वक्ष्यते [पञ्चम उल्लासे]। श्लोकश्छन्दः। मुख्यार्थबाधः, तद्योगः, रूढिप्रयोजनान्यतरदिति त्रयं लक्षणाहेतुः [पृ० ७२]।

तदभावमेवोपपादयति लक्ष्यं नेति—[पृ० ७३]

श्लोकश्छन्दः। यथा गङ्गाशब्द इत्यादि। अयमाशयः। यथा गङ्गाशब्दस्य नीरं मुख्योऽर्थः तत्र च बाधः। तीरे च तत्सम्बन्धः। तीरस्य च लक्षणयोपस्थापने मुख्यशब्देन प्रतिपादयितुमशक्यस्य पावनत्वादेः प्रतीतिश्च प्रयोजनमिति गङ्गाशब्देन तटं लक्ष्यते, तद्वत् यदि तटमपि मुख्यं स्यात्, तत्र च बाधो भवेत्, प्रयोजनस्य च गङ्गादिगतपावनत्वादिविशेषस्य तटेन सम्बन्धः स्यात्, लक्षणया प्रयोजनप्रतिपादनस्य प्रयोजनान्तरं सम्भवेत्तदा गङ्गाशब्दः प्रयोजनं लक्षयेत्। नचैतदेकमप्य-

[ विशिष्टलक्षणावादः ]

ननु पावनत्वादिधर्मयुक्तमेव तटं लक्ष्यते, गङ्गायास्तटे घोष इत्यतोऽधिकस्यार्थस्य प्रतीतिश्च प्रयोजनमिति विशिष्टे लक्षणा, तत् किं व्यञ्जनयेत्याह—

**प्रयोजनेन सहितं लक्षणीयं न युज्यते[1] ॥१२॥**

---

## साहित्यचूडामणिः

तावन्मात्रविश्रान्त्या विनानवस्थेति परिहरति—प्रयोजनेनेति। न युज्यते प्रमाणेन न साध्यते।

## सुधासागरः

त्रेत्यर्थः। न केवलं मुख्यार्थबाधादीनामभावमात्रं, किन्तु तेषामपेक्षापि नास्तीत्याह—न च शब्दः स्खलद्गतिरिति। मुख्यार्थबाधादित्रयमपेक्ष्य बोधकत्वं स्खलद्गतित्वम्। स्खलन्ती मुख्यार्थबाधाद्यनुसन्धानेन विलम्बिता भवन्ती गतिः प्रसरणं बोधकत्वं यस्य तादृशो गङ्गाशब्दः प्रयोजन इत्यर्थः। तीरबोधानन्तरमेव प्रयोजनप्रतीतिरिति भावः। एवं नापि गङ्गाशब्दः तटमिव प्रयोजनं प्रतिपादयितुमसमर्थ इत्यादिवृत्तौ बाधादिकमनपेक्ष्येति शेषो द्रष्टव्यः। समर्थ इति पाठे तु बाधादित्रयमपेक्ष्यैवेति शेषः।

नन्वस्ति प्रयोजनेऽपि लक्ष्ये प्रयोजनान्तरमिति वजात्यादिति यदि ब्रूयात्तत्राह 'एवमि'ति [ पृ० ७४ ]।

मूलं प्रकृतार्थप्रतीतिः। बीजाङ्कुरादाविवानवस्था न दूषणमित्यत्राह—या मूलेति। तदुक्तम्—'मूलक्षयकरीमाहुरनवस्थां हि दूषणम्' इति। अयं भावः, प्रयोजनं चेत् लक्ष्यते तत्प्रयोजनान्तरेण तदपि प्रयोजनान्तरेण तदपि प्रयोजनान्तरेणेत्येवं प्रयोजनपरम्परया लक्षणापरम्परायां विषयान्तरसञ्चारेण यतो निवृत्तिस्तस्या अग्रिमलक्षणाया निष्प्रयोजनत्वेन मूलभूतप्रयोजनलक्षणायामपि प्रयोजनवैमुख्यं स्यात्। तदुक्तं सर्वं प्रयोजनं चेत् लक्ष्यत इत्यादिवृत्त्या ध्वनितमिति बोध्यम्।

ननु पावनत्वादिविशिष्टमेव तीरं लक्ष्यतामिति किं व्यञ्जनया। नचैवं प्रयोजनस्यापि लक्ष्यकोटौ प्रवेशाल्लक्षणाप्रयोजनं नास्तीति वाच्यम्। गङ्गातटे घोष

---

[1] 'सहितं यत्, तल्लक्षणीयमिति वक्तुं न युज्यते' इति योजना। एवं च विशिष्टलक्षणावादे विवक्षितं 'प्रयोजनसाहित्यस्य पूर्ववर्तित्वं लक्षणायाश्च परवर्तित्वमेतेन निराचिकीर्ष्यते। अत्र दोषः कारणकार्य-गत-पूर्वपश्चाद्भावित्वौपयिक-भेद-विलोप-प्रसक्तिः। सिद्धमिदं यल्लक्षणाज्ञानस्य प्रयोजनरूपं ज्ञानं प्रति कारणत्वमिति। प्रयोजनसहितस्य लक्ष्यत्वे तु 'शीत-तटादिकं' लक्ष्येत। जायेत च तटज्ञानस्येव शैत्यादिज्ञानस्यापि लक्षणाज्ञानात्मकत्वमेव, विशिष्टबुद्धौ विशेषणबुद्धेरपरिहार्यत्वात्। एवं चाऽभिन्नायेताऽत्र 'प्रयोजनात्मकं लक्षणात्मकं चे'-त्युभयमपि ज्ञानम्। सोऽयं महाननुपप्लवः सांसिद्धिकस्य कार्यकारणभेदनियमस्य विशिष्ट-लक्षणावादे।

कुत इत्याह—

ज्ञानस्य विषयो ह्यन्यः फलमन्यदुदाहृतम् ।

प्रत्यक्षादेर्नीलादिर्विषयः, फलं च प्रकटता संवित्तिर्वा[१] ।

विशिष्टे लक्षणा नैवम्—

व्याख्यातम् ।

विशेषाः स्युस्तु लक्षिते ॥१३॥

तटादौ ये विशेषाः पावनत्वादयस्ते चाभिधा-तात्पर्य-लक्षणाभ्यो व्यापारान्तरेण गम्याः । तच्च व्यञ्जन-ध्वनन-द्योतनादिशब्द-वाच्यमवश्यमेषितव्यम् ।

एवं लक्षणामूलं व्यञ्जकत्वमुक्तम् ॥१३॥

---

## साहित्यचूडामणिः

ज्ञानस्य हि प्रत्यक्षप्रमुखस्य नीलसुखादिर्गोचरः। प्रयोजनं तु प्राकट्यं संवित्तिर्वा। तद्वल्लक्षणाया अपि तटादिर्विषयः पावनत्वादिकं तु फलमिति कथं विशिष्टे लक्षणा। प्राकट्यं विषयवर्ती धर्मः। संवित्तिस्तु विषयस्फुरणसम-

## सुधासागरः

इत्यतोऽधिकस्यार्थस्य प्रतीतेरेव प्रयोजनत्वादित्यत आह प्रयोजनेनेति। श्लोकश्छन्दः। कुत इत्याकाङ्क्षायामाह 'ज्ञानस्ये'ति।

अत्र चक्रवर्तिनः—ज्ञानस्य लक्षणाजन्यज्ञानस्य विषयः तटादिरूपः,

---

१. क. विषयित्वसंबन्धेन ज्ञानं प्रति तादात्म्यसंबन्धेन विषयस्य कारणत्वमित्येको नियमः। पूर्वपश्चाद्भावितया कार्यकारणयोर्भेद इति च द्वितीयः। एवं हि ज्ञानस्य विषयो यथा कारणत्वेन हेतुना स्वकार्याज्ज्ञानादन्यस्तथैव यदा ज्ञानं कारणं तदा तस्माज् ज्ञानात् तस्य कार्यरूपं यत् फलं तदप्यन्यदि'-त्यत्रान्वय-घण्टापथः। ततश्चायुक्त एष कार्य-कारणाभेद-श्वभ्र-पातौपयिको विशिष्टलक्षणाग्रह इति निजिगमिष्यतेऽत्र मिताक्षरेण ग्रन्थकारेण।

'हेतुर्यथा तथा ज्ञानात् फलं ज्ञानस्य भिद्यते' इति त्वत्र भावः।

ख. सर्वो हि विषयः शैवशास्त्ररीत्या नीलपदव्यपदेश्यः। प्रकटता ज्ञातता। सा च नीलादिगतो धर्म-विशेषः, यदालम्बनकं 'नीलादिकं ज्ञातमि'-ति ज्ञानम्। एवं प्रत्याख्यातोऽत्र 'ज्ञानमेवानुमानिकम्, नीलादिर्विषय एव च वस्तुतः सन् प्रत्यक्षविषयं' इति सिद्धान्तयता वैदिकेन भाट्टमीमांसकेन 'नीलादि न वस्तुसत्, अपितु वस्तुसतो विज्ञानस्य प्रातीतिको विषयः, विज्ञानं पुनर्निरालम्बनमेवे'-ति विप्रतीपमूचिवान् विज्ञानवादी नास्तिकः। स्पष्टमेतत् श्लोकवार्तिके।

ग. संवित्तिर्नाम 'नीलमहं जानामी'-ति न्यायमतेऽनुव्यवसायपदवेद्यं ज्ञानविषयकं ज्ञानम्।

## साहित्यचूडामणिः

नन्तरभाविन्यर्थक्रिया। दर्शनभेदप्रदर्शनाय वाशब्दः। निगमयति—विशिष्ट इति। एवमुपपादितया युक्त्या।

व्याख्यातमिति। आशङ्काग्रन्थ एव समर्थितत्वात्। अथ कथं तत्र पावनत्वादिप्रतीतिरित्यत्राह—विशेषा इति। लक्षिते तटादाविति कारिकावृत्त्यो-रेकवाक्यच्छाययोपादानम्।

परमं प्रकरणार्थमुपसंहरति—ते चेति।

समयापेक्षा पदार्थावगमनशक्तिरभिधा।

सैव तदन्यथानुपपत्तिसहाया तात्पर्यम्।

मुख्यार्थबाधादिसव्यपेक्षा लक्षणा।

तच्चेति व्यापारान्तरम्।

उक्तशक्तित्रयोपजनितार्थान्तरमूलतत्प्रतिभासपवित्रितप्रतिपत्तृप्रतिभाससहाया पदार्थावबोधनशक्तिर्व्यञ्जनम्।

यस्य ध्वननाद्यनेकपर्यायत्वं तदनिरुद्धयाप्यनुमन्तव्यमिति।

ननु 'स्याद्वाचक' इत्यत्र त्रय एव व्यापारा उद्दिष्टाः, अत्र तु तात्पर्यमित्यपि पर्यगण्यतेति चेत्। तन्न। 'तात्पर्यार्थोऽपि केषुचिदि'ति सूचितत्वात्॥ १३॥

अभिहितमभिधास्यमानं च प्रमेयं प्रकटयति एवमिति—लक्षणामूलमिति यन्मूलोऽविवक्षितवाच्यस्कन्धः प्रपञ्चयिष्यते।

## सुधासागरः

व्यावहारिकफलं तटादिज्ञानस्य घोषादिसहकृतस्य पावनत्वादिकमन्यत् अनिर्वचनीयम्। तथा च तटादिज्ञानोत्तरं जायमानस्यानिर्वचनीयपावनत्वादेः प्रागसतो न तटादि-ज्ञानविषयतासम्भव इति वेदान्तिसिद्धान्तेन व्याकुर्वन्ति।

प्रकटता ज्ञातता संवित्तिरनुव्यवसाय इति भाट्टनये।

उपसंहरति 'विशिष्टे लक्षणा नैवमि'ति।

एवमुक्तयुक्त्या।

श्लोकश्छन्दः।

विशिष्टे प्राक्सम्बन्धाग्रहणान्न लक्षणा, किन्तु नीरादौ व्यञ्जनोपस्थिताः शैत्यादयो भेदेनान्वयबोधविषया भवन्ति व्यङ्ग्यस्य भेदेनाप्यन्वयादिति भावः।

अत एवोक्तं काव्यप्रदीपकारैः—तटादौ लक्षिते सति पावनत्वादयो विशेषाः प्रतीतिविषयाः स्युः, ते च प्रसिद्धातिरिक्तव्यापारगम्या एवेति।

एवं लक्षणामूलव्यञ्जकत्वं वर्णायितम्॥ १३॥

अभिधामूलं त्वाह—

अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते ।
संयोगाद्यैरवाच्यार्थधीकृद् व्यापृतिरञ्जनम् ॥१४॥

संयोगो विप्रयोगश्च साहचर्यं विरोधिता ।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः ।
सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः ॥

इत्युक्तदिशा

'सशङ्खचक्रो हरिः' 'अशङ्खचक्रो हरिरि'-त्युच्यते ।
'रामलक्ष्मणावि'-ति दाशरथौ ।
'रामार्जुनगतिस्तयोरि'-ति भार्गवकार्त्तवीर्ययोः ।
'स्थाणुं भज भवच्छिद' इति हरे ।
'सर्वं जानाति देव' इति युष्मदर्थे ।
'कुपितो मकरध्वज' इति कामे ।
'देवस्य पुरारातेरि'-ति शम्भौ ।
'मधुना मत्तः कोकिल' इति वसन्ते ।
'पातु वो दयितामुखमि'-ति साम्मुख्ये ।
'भात्यत्र परमेश्वर' इति राजधानीरूपाद् देशाद् राजनि ।
'चित्रभानुर्विभाती'-ति दिने रवौ, रात्रौ वह्नौ ।
'मित्रं भाती'-ति सुहृदि, 'मित्रो भाती'-ति रवौ ।
'इन्द्रशत्रुरि'-त्यादौ वेद एव, न काव्ये स्वरो विशेषप्रतीतिकृत् ।

---

## साहित्यचूडामणिः

अभिधामूलमिति । विवक्षितान्यपरवाच्यस्कन्धप्रभवभूतम् ।

अनेकार्थस्य बह्वभिधेयस्य हर्यादेः शब्दस्याभिधायकत्वे परिगणयिष्यमाणे संयोगादिभिः शृङ्खलितेऽपि भूयस्तटाकसलिलोपस्नेहन्यायादनभिधेयस्यार्थान्तरस्य

## सुधासागरः

अभिधामूलमप्याह—'अनेकार्थे'ति ।

श्लोकश्छन्दः । अनेकार्थस्य शब्दस्य वाचकत्वे संयोगाद्यैर्नियन्त्रिते सति अवाच्यार्थधीहेतुर्व्यापारोऽञ्जनं व्यञ्जनमित्यर्थः अनेकार्थोऽनेकाभिधानशक्तिः ।

## साहित्यचूडामणिः

या धीः संवित् तां करोति तादृशी व्यापृतिर्व्यञ्जनमेव नान्यत्। संयोगाद्यैरित्युक्तं ग्रन्थान्तरेण पूरयति—संयोग इति शब्दार्थस्यानेकार्थस्य शब्दस्य योऽर्थः तस्यानवच्छेदे नियन्त्रणाभावे प्रसक्ते विशेषस्मृतिहेतवः अवच्छेदप्रतीतिनिबन्धनानि। संयोगः सम्बन्धः, विप्रयोगो विश्लेषः, साहचर्यं सान्निध्यं, विरोधिता वध्यघातकभावादिः, अर्थः प्रयोजनं, प्रकरणं प्रस्तावः, लिङ्गं वस्तुचिह्नम्, अन्यशब्दसन्निधिः पदान्तरसाचिव्यं, सामर्थ्यं युक्तिः, औचिती औचित्यं, देशोऽद्रिवनराष्ट्रादि, कालो नक्तंदिनर्तवः, व्यक्तिः स्त्रीपुंनपुंसकादिकं लिङ्गं, स्वर उदात्तादिः। क्रमादुदाहरति—सशङ्खेति। हरिशब्द इन्द्राद्यनेकाभिधेयः, सशङ्खचक्रसम्बन्धरूपया नियन्त्रणया केवलमच्युते पुरुषोत्तमे वर्तते। अशङ्खेति। शङ्खचक्रविप्रयोगेणापि हरिशब्दस्याच्युते नियन्त्रणा। विप्रयोगो हि संयोगसमानयोगक्षेमः तत्पूर्वकत्वनैयत्यात्। रामशब्दोऽपि बलभद्राद्यनेकार्थः। स सौमित्रिसाहचर्याद् दाशरथौ मैथिलीपतौ वर्तते। रामार्जुनशब्दयोरनेकार्थयोर्मिथोविरोधाद् भार्गवे रैणुकेये कार्तवीर्ये हैहयाधिपतौ च वृत्तिः। तयोरिति। विरुद्धतया प्रक्रान्तयोः कयोश्चित्। एषां विप्रयोगाद्यन्यतरसाहचर्यमपरिहार्यम्, प्रधानेन व्यपदेशः। स्थाणुशब्दो दारुविशेषस्य शङ्करस्य च वाचकः। स भवस्य संसारस्य या छित् छेदः तस्यै इति प्रयोजनोपन्यासेन शम्भौ पर्यवस्यति। सर्वमिति। देवपदमिन्द्राद्यनेकाभिधेयं तदिह चक्रवर्तिनं प्रति कश्चिदाचष्ट इति

## सुधासागरः

वाचकत्वमभिधा। अवाच्यार्थः तदभिधाव्यापाराविषयः। नियन्त्रणं नियमनम्, एकतरमात्रस्मरणानुकूलत्वमपरार्थस्मृतिप्रतिबन्धकत्वं वा। संयोगाद्यैरित्याद्यपदसङ्ग्राह्यं विप्रयोगादि।

संयोगादयः शब्दार्थस्यानवच्छेदे नानार्थशब्दप्रयोगे कतमोऽर्थोऽत्र विवक्षित इति सन्देहे विशेषस्मृतेः प्रकृतार्थोपस्थितेः हेतव इत्यर्थः। सशङ्खचक्रइत्यादेरयमाशयः। संयोगः प्रसिद्धार्थस्य गुणविशेषरूपः सम्बन्धः तेनाभिधानियमनम्। यथा सशङ्खचक्रो हरिः इत्यत्र शङ्खादिसंयोगेनानेकार्थस्य हरिशब्दस्याच्युतेऽभिधा नियम्यते अन्यहरिपदार्थे तत्संयोगाभावात्। विप्रयोगः तादृशसम्बन्धध्वंसः, तेन यथा अशङ्खचक्रो हरिरित्युच्यते ध्वंसस्य प्रतियोगिपूर्वकत्वात्। साहचर्यं सहचरता। तेन यथा रामलक्ष्मणाविति रामपदस्य लक्ष्मणसाहचर्येण दाशरथौ। विरोधः सहानवस्थानं वध्यघातकभावश्च। तेन यथा छायातपाविति छायापदस्यातपाभावे। विरोधिनोः कयोश्चित्तत्त्वोपमायां रामार्जुनगतिस्तयोरित्यत्र रामार्जुनपदयोः भार्गवकार्तवीर्ययोः। अर्थः प्रयोजनम्। तेन यथा स्थाणुं भज भवच्छिदे इत्यत्र भवच्छेदनरूपप्रयोजनवशात् स्थाणुशब्दस्य हरे। प्रकरणं वक्तृश्रोतृबुद्धिस्थता। तेन यथा सर्वं जानाति देव इत्यत्र देवपदस्य राजनि। यत्तु युष्मदर्थे इति व्याख्या, तस्यापि प्रकृते राजादावित्यर्थः। लिङ्गं संयोगातिरिक्तसम्बन्धेन परपक्षव्यावृत्तो धर्मः। तेन

## साहित्यचूडामणिः

प्रकरणाद् युष्मदर्थे विश्राम्यति। मकरध्वजशब्दो मन्मथे समुद्रे च वर्तते। स चैतन्यविनाभूतात् कोपरूपाल्लिङ्गात् कन्दर्प एव प्रसर्पति। देवस्येति। उक्तयुक्त्या नानार्थस्य देवशब्दस्य पुरारातेरित्यन्यशब्दसान्निध्यादीश्वरे पर्यवसानम्। मधुशब्दो माक्षिकं मासविशेषं चाभिधत्ते। तत्र कोकिलमदजननसामर्थ्यं मासविशेषस्यैव न क्षौद्रस्येति तस्य वसन्ते प्रतिष्ठा। अवयवावयविनोरभेदविवक्षायां मधोर्वसन्तत्वम्। पात्विति। रक्षणं सुखसमर्पणदुःखनिबर्हणादिद्वारानेकार्थम्। तत्र दयितावदनस्य पूर्वत्रैव तात्पर्यमिति तत्साम्मुख्येऽवस्थानम्। परमेश्वरशब्दश्चन्द्रशेखरं नरेन्द्रं चाभिधत्ते। तत्रात्रेति प्रत्यक्षं प्रतिपाद्यमानान्नगरीलक्षणाद् देशात् स राजनि वर्तते। चित्रभानुशब्दस्य सूर्ये वह्नौ च सङ्केतः। तत्र यदि दिवसः कालः तदा सूर्ये, यदि च रात्रिः तदा वह्नौ तस्य प्रवृत्तिः। अविवक्षितलिङ्गकस्य मित्रशब्दस्य सुहृदादित्ययोः समयः। तस्य नपुंसकत्वे सुहृदि, पुंस्त्वे रवौ तात्पर्यम्। एवं करुण इति रसः करुणेत्यनुक्रोश इत्यादि मन्तव्यम्। इन्द्रेति। शत्रुशब्दो हि शातयतेरुपजायते। इन्द्रः शत्रुः शातयिता यस्येति बहुव्रीहौ पूर्वपदप्रकृतिस्वरात् शातयितृत्वमिन्द्रस्य, इन्द्रस्य शत्रुरिति तत्पुरुषे शातयितृत्वं वृत्रस्येति शब्दैक्यमर्थभेदश्च। तत्र बहुव्रीहौ पूर्वपदप्रकृतिस्वरादिन्द्रपदादेरिकारस्योदात्तत्वं, तत्पुरुषे

## सुधासागरः

यथा कुपितो मकरध्वज इत्यत्र मकराकारध्वजसमुद्राभ्यां व्यावृत्तेन समवायसम्बन्धवता कोपेन मकरध्वजशब्दस्य कामे। यत्तु लिङ्गं चिह्नमिति, तन्न, कोपस्य कामचिह्नत्वाभावात् असाधारणधर्मस्य चिह्नत्वात् सशङ्खचक्र इत्यत्रातिव्याप्तिप्रसंगात्। शब्दस्यान्यस्य सन्निधिः नियतार्थकशब्दान्तरसामानाधिकरण्ये च शक्तिनियमनम्। यथा देवस्य त्रिपुरारातेः इत्यत्र त्रिपुरारातिशब्दसामानाधिकरण्याद् देवशब्दस्य शम्भुरूपेऽमरे। अन्यस्य देवशब्दार्थस्य राज्ञस्त्रिपुरारातित्वाभावात्। सामर्थ्यं कारणत्वम्। तेन यथा मधुना मत्तः कोकिल इति। अत्र मधुशब्दस्य वसन्ते, अन्यस्य मधुशब्दार्थस्य कोकिलमादनाऽसामर्थ्यात्। औचिती अर्हता। तथाऽऽह यथा पातु वो दयितामुखमिति अत्युत्कण्ठितमनोरथसाधनौचित्येन मुखशब्दस्य सांमुख्ये नतूपायादौ। देशेन यथा—भात्यत्र परमेश्वर इति। अत्रेति राजधानीरूपाद् देशात्परमेश्वरपदस्य राजनि। कालेन यथा—चित्रभानुर्विभातीत्यत्र चित्रभानुपदस्य दिवा दिवाकरे, रजन्यामाशुशुक्षणौ। व्यक्तिर्लिङ्गं पुंस्त्वादि। तथा मित्रं भाति इत्यत्र नपुंसकात् लिङ्गात् मित्रपदस्य सुहृदि मित्रो भातीत्यत्र पुंलिङ्गात् सूर्ये। स्वरस्तूदात्तादिः वेदे बाहुल्येनार्थप्रतीतिकृद् दृश्यते। इन्द्रशत्रो वर्धस्वेति। अत्र इन्द्रशत्रौ इन्द्रस्यान्तोदात्तत्वे षष्ठीतत्पुरुषव्यक्तौ इन्द्रस्य शातनकर्मत्वं लभ्यते। पूर्वपदान्तोदात्तत्वे इन्द्रः शातयिता यस्येति बहुव्रीहिलाभादिन्द्रस्य शातनकर्तृत्वं लभ्यते। स्वरादय इत्यादिग्रहणादभिनयापदेशौ गृह्येते। अन्ये चोक्तान्तर्भूताः।

आदिग्रहणात्—

एद्दहमेत्तत्थणिआ एद्दहमेत्तेहिं अच्छिवत्तेहिं ।
एद्दहमेत्तावत्था एद्दहमेत्तेहिं दिअएहिं ॥
[एतावन्मात्रस्तनिका एतावन्मात्राभ्यामक्षिपत्राभ्याम् ।
एतावन्मात्रावस्था एतावन्मात्रैर्दिवसैः ॥]

इत्यादावभिनयादयः ।

---

## साहित्यचूडामणिः

समासान्तोदात्ततया शत्रुशब्दान्तर्वर्तिन उकारस्येति । एवं च स्वरनिर्णयादर्थनिर्णयः । यदाहुः—

मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह ।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥ इति ।

नन्वेवं भ्रातृव्यादिप्रयोगे स्वरानवसायान्न विवक्षितार्थोपलम्भ इत्यत्राह—वेद एवेति । काव्ये स्वरो नात्यन्तमादरणीयः, मात्रया श्लेषादावादरणीयश्च ।

एतावन्मात्रस्तनी एतावन्मात्राभ्यामक्षिपत्राभ्याम् ।
एतावन्मात्रावस्था एतावन्मात्रैर्दिवसैः ॥ इति ।

अत्रैतावन्मात्रशब्दस्य तत्र तत्र स्तनादावभिनयभेदादर्थभेदः । अभिनयादय इत्यादिपदेन पाठधर्मस्वीकारः । यथा—

यस्यारिजातं नृपतेरपश्यदवलम्बनम् ।
ययौ निर्झरसम्भोगैरपः श्यदवलं वनम् ॥

## सुधासागरः

अभिनयश्च साक्षादेवार्थाऽऽकारादिप्रदर्शिका हस्तादिक्रिया ।
तया यथा—एद्दहमेत्तत्थणिए इति ।

एतावन्मात्रस्तनिका एतावन्मात्राभ्यामक्षिपत्राभ्याम् ।
एतावन्मात्रावस्था एतावन्मात्रैर्दिवसैः ॥

इति संस्कृतम् । सौन्दर्यातिशयशालिन्याः नयनगोचरमागताया गुणश्रवणमात्रेण जनितानुरागे संभावितपरिणयनायके कस्याश्चिदभिनयः । परिमाणे दघ्नप्रत्ययः । एतावत्परिमाणौ आमलकादिपरिमाणौ स्तनौ यस्याः सा तथाभूता । एवं एतावत्परिमाणं ययोस्ते एतावन्मात्रे विवक्षितकमलदलादिपरिमाणे ताभ्यामक्षिपत्राभ्यां नयनदलाभ्यामुपलक्षिते इत्यर्थः । उपलक्षणे तृतीयानुशासनात् । तथा एतावद्

इत्थं संयोगादिभिरर्थान्तराभिधायकत्वे निवारितेऽप्यनेकार्थस्य शब्दस्य यत् क्वचिदर्थान्तरप्रतिपादनं तत्र नाभिधा नियमनात् तस्याः, न च लक्षणा मुख्यार्थबाधाद्यभावाद्, अपि त्वञ्जनं व्यञ्जनमेव व्यापारः।

यथा—

भद्रात्मनो दुरधिरोहतनोर्विशाल-
वंशोन्नतेः कृतशिलीमुखसंग्रहस्य।
यस्यानुपप्लुतगतेः[१] परवारणस्य
दानाम्बुसेकसुभगः सततं करोऽभूत्॥१४॥

**तद्युक्तो व्यञ्जकः शब्दः—**

तद्युक्तो व्यञ्जनयुक्तः।

**यत् सोऽर्थान्तरयुक् तथा।**
**अर्थोऽपि व्यञ्जकस्तत्र सहकारितया मतः॥१५॥**

तथेति व्यञ्जकः॥१५॥

इति काव्यप्रकाशे शब्दार्थस्वरूपनिर्णयो नाम
द्वितीय उल्लासः॥२॥

---

## साहित्यचूडामणिः

अत्रावलम्बनशब्दे दन्त्योष्ठ्यकेवलोष्ठ्ययोः पौर्वापर्यादुच्चारणे पदमेकमास्पदार्थं, विपर्यये पदद्वयम् अबलं परिकरशून्यम्, अरिजातमरातिवर्गः, वनं काननं ययौ। किंभूतम्, अवलम्बनमाश्रयम् अपश्यद् अवीक्षमाणम्। पुनश्च किंभूतं, निर्झर-सम्भोगैः अपः सलिलानि दयत् कृशीकुर्वदिति तात्पर्यात्।

अथानेकार्थस्यादिकारिकाव्याख्यां निर्वहति—इत्थमिति। क्वचिन्महा-कविप्रयोगेऽर्थान्तरस्यानभिधेयभूतस्य यत् प्रकाशनं तत्र व्यञ्जनशरणतैव। तत्र

## सुधासागरः

विवक्षितं परिमाणं दैर्घ्यादि यस्याः सा तथाभूताऽवस्था स्वरूपं यस्याः सा तथा। एवमेतावत् बुद्धिस्थपरिमाणं संख्या एषां तथाविधैर्दिवसैः लक्षणया सम्वत्सरैरुप-लक्षिता परिच्छिन्नेति यावत्। वर्षकथनस्यैव प्रायशो लोकव्यवहारसिद्धत्वात्। दिवसैः इति करणे तृतीया।

---

[१] यस्य कपिफणस्य। कफ्फिणाभ्युदये १.३८ पद्यम्। 'अनुपप्लवे'ति पाठे।

## साहित्यचूडामणिः

शब्दस्य नत्वभिधा लक्षणा वा। अभिधालक्षणा वा भवत्विति पूर्ववत् प्रतिपत्तिसौकर्यार्थमाशङ्क्याह—नाभिधेति। अपितुविति। पारिशेष्याद् व्यञ्जनमेव। अञ्जनं व्यञ्जनमित्युपसर्गस्य कारिकायां नात्यन्तनिर्बन्ध इति यावत्।

भद्रेति। भव्यस्वभावस्य व्यूढोरस्कत्वादिना दुरधिरोहा दुर्धर्षा तनुर्यस्य। विशाला बहुसन्ताना वंशोन्नतिरन्वयमहत्ता यस्य। कृतः शिलीमुखानां शराणां संग्रहः सञ्चयो येन। असङ्कीर्णा वर्णाश्रमादिमर्यादा यस्य। परवारणस्य वैरिनिवारकस्य दानाम्बु विश्राणनोदकं तेन सुभगः करः पाणिर्यस्य इति वाच्योऽर्थः। अत्रैव प्रकरणादिप्राबल्यादभिधायाः शृङ्खलनम्। यत् पुनः परवारणत्वमुत्कृष्टकुञ्जरता तदानुगुण्येन मन्दमृगव्यतिरिक्तजातित्वं कृच्छ्राक्रमणीयवर्ष्मत्वं विस्तीर्णपृष्ठास्थिसमुच्छ्रयता विरचितचञ्चरीकस्वीकारवत्त्वं विलक्षणगतित्वं दानाम्बु मदजलं करश्च शुण्डेत्यर्थान्तरं तत्र व्यञ्जनाद् ऋते नान्यस्य व्यापारस्यौचित्यम्। अतः स्थितमेतद् यदभिधालक्षणोभयमूला काचित् प्रसिद्धप्रस्थानातिक्रान्ता शक्तिरस्ति शब्दस्येति, व्यञ्जकस्य शब्दस्य विवक्षार्पितत्वात् ॥१४॥

प्रकृतमुपसंहरति—तद्युक्त इति।

ननु शब्दव्यञ्जकत्वे यस्तस्याभिधेयोऽर्थः स किमजागलस्तनन्यायेनास्ते। नेत्याह—'यदि'ति। स इति व्यञ्जकः शब्दः अर्थान्तरयुक् अभिधेयेन लक्ष्येण

## सुधासागरः

अत्रानुकूलाकारहस्ताभिनयेन स्तनपरिमाणविशेषे, पद्मदलाकृतिना तेन नेत्रपरिमाणविशेषे, उच्चतापुष्टिप्रदर्शकेन तद्विशेषे, अङ्गुल्यङ्कधारणादिरूपेण च दिवससंख्याविशेषे बुद्धिस्थमात्रशक्ता एतावच्छब्दा नियमितशक्तयः।

यत्तु प्रोषितं प्रति तत्कलत्रावस्थाकथनमिदमिति, तन्नातिसमीचीनम्, दिवससंख्याकथनस्याऽसामञ्जस्याऽऽपत्तेः।

अपदेशोऽभिमतनिर्देशः। तेन यथा—

इतः स दैत्यः प्राप्तश्रीर्नेत एवार्हति क्षयम्।
विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसाम्प्रतम् ॥ [कुमारसं० २]

स्पष्टम्। अत्रेत इत्यात्मनिर्देशो हृदयनिहितहस्तेन प्रतीयते। न चायमभिनयः अनुकरणाभावात्। तथा चेदंशब्दस्याभिधा वक्तरि नियम्यते।

इत्थं संयोगादिना ऽर्थान्तराऽभिधायकत्वे निवारिते यदनेकार्थशब्देन क्वचिदर्थान्तरस्य प्रतिपादनं तत्र नाभिधा शब्दस्य व्यापारः, नियमनात्तस्याः, नापि लक्षणा मुख्यार्थबाधादिविरहात्। किन्त्वञ्जनं व्यञ्जनमेव व्यापारः। यथा भद्रात्मन इति। वसन्ततिलका छन्दः। उक्ता वसन्ततिलका तभजा जगौगः इति लक्षणम्।

राजपक्षे भद्रः शोभन आत्मा स्वरूपमन्तःकरणं यस्य। दुरधिरोहाऽधृष्या तनुर्यस्य, विशाले महति वंशे कुले उन्नतिमहत्त्वं यस्य, कृतः शिलीमुखानां बाणानां सम्यक् ग्रहो ग्रहणं समन्त्रकाऽऽदानमभ्यासदार्ढ्यं वा येन तस्य, अनुपप्लुतानां

## साहित्यचूडामणिः

वा यथोचितेन केनचिदर्थेन युक्तो भूत्वा तथा व्यञ्जको भवति। अतो हेतोरर्थोऽपि तत्र व्यञ्जने सहायतयाभ्युपगतः। ततश्च प्रधानकारणतया परिगृहीतस्य शब्दस्यैव सहकारितया तदर्थस्यापि व्यञ्जकत्वं विहितमिति सिद्धम् ॥ १५ ॥

प्रयोगयाग्ये विषये प्रयोज्यं शक्तित्रयं यः क्षमते विवेक्तुम्।
साहित्यसाम्राज्यधुरन्धरः सन् निष्कण्टकां सम्पदमश्नुते सः ॥

इति साहित्यचक्रवर्तिलौहित्यभट्टगोपालविरचितायां साहित्यचूडामणौ काव्यप्रकाशविमर्शिन्यां द्वितीय उल्लासः।

## सुधासागरः

निर्दुष्टानां गतिः हितकर्त्ता तस्य, परान् वारयतीति परवारणः तस्य करः पाणिः सततमनवरतं दानसम्बन्धि यदम्बु वितरणोपयुक्तं नीरं तस्य सेकेन सुभगः शोभनोऽभूदिति।

गजपक्षे—भद्रजातीयस्य 'भद्रो मन्द्रो मृगश्चैव' इत्युक्त्वा 'एतेष्टौ गजयोनयः' इत्युक्तेः। दुःखेनारोहणं यस्या अत्युच्चत्वात्तादृशी तनुर्यस्य विशाला वंशस्य पृष्ठदण्डस्योन्नतिर्यस्य, कृतः शिलीमुखानां भ्रमराणां संग्रह आकर्षणं येन तथाभूतस्य, अनुपप्लुतगतः धारगमनस्य परवारणस्योत्कृष्टगजस्य करः शुण्डा दानाम्बुनो मदजलस्य सेकेन सुभगाऽभूदिति।

अत्राभिधया प्रकृतराजबोधः। गजान्वयस्तु तात्पर्याविषयोऽपि तद्ग्राहकप्रकरणाद्यनवतारात् व्यङ्ग्य एव। नरपतिगजयोर्मिथः सम्बन्धः उपमानोपमेयभावोपि व्यङ्ग्य एव।

ननु शब्दश्लेषतो भेदेऽपि योऽसकृत्परगोत्राणाम् इत्याद्यर्थश्लेषतः कुतोऽस्य भेदः, अथश्लेषे उभयत्र शक्तेरेव न व्यञ्जनेति चेद् उच्यते—यत्राभयार्थयोस्तात्पर्यं स श्लेषः, यत्र त्वेकस्मिन्नेव तत्, सामग्रीमहिम्ना तु द्वितीयार्थप्रतीतिः सा व्यञ्जनेति।

एवं व्यञ्जनां निरूप्य तया शब्दं लक्षयति—'तद्युक्त' इति

अञ्जनमिति प्रस्तुतेपि अर्थगत्या तच्छब्देन व्यञ्जनं परामृश्यते, तेन व्यञ्जनयुक्तो व्यञ्जक इति संपद्यते। अन्यथा अञ्जनयुक्तोऽञ्जक इति स्यात्। तदेतदुक्त वृत्तिकारैः अञ्जनयुक्तो व्यञ्जनयुक्तः।

ननूक्तस्थलेऽर्थस्य व्यञ्जकत्वे कथं शब्दार्थयुगलरूपस्य काव्यस्य ध्वनित्वं स्यात् इत्यत आह 'यत् सोऽर्थे'ति। श्लोकश्छन्दः। स इति शब्दः। तथा व्यञ्जकः। अयमाशयः, स शब्दः स्वार्थान्तरयुक् तत्प्रत्यायनमन्तरेणाऽप्रत्यायकः अतो नौदासीन्यमित्याह-अर्थोऽपीति। सहकारितया प्रधानतया शब्दस्यान्वयव्यतिरेकानुविधायितया प्राधान्यात् अत एव शब्दमूलको व्यपदेश इति।

इति श्रीमत्पदवाक्यप्रमाणपारावारीण-दीक्षितभीमसेनकृते काव्यप्रकाशविवरणे सुधासागराऽऽख्ये काव्यशरीरभूतशब्दार्थविभागनिर्णयो द्वितीय उल्लासः।

# तृतीय उल्लासः

अर्थाः प्रोक्ताः पुरा तेषाम् ।

अर्था वाच्य-लक्ष्य-व्यङ्ग्याः ।

तेषां वाचक-लाक्षणिक-व्यञ्जकानाम् ।

अर्थव्यञ्जकतोच्यते ।

कीदृशीत्याह—

वक्तृबोद्धव्यकाकूनां वाक्यवाच्यान्यसन्निधेः ॥१॥
प्रस्तावदेशकालादेर्वैशिष्ट्यात् प्रतिभाजुषाम् ।
योऽर्थस्यान्यार्थधीहेतुर्व्यापारो व्यक्तिरेव सा ॥२॥

बोद्धव्यः प्रतिपाद्यः । काकुर्ध्वनेर्विकारः । प्रस्तावः प्रकरणम् । अर्थस्य वाच्य-लक्ष्य-व्यङ्ग्यात्मनः ।

---

## साहित्यचूडामणिः

उल्लिखामि महाकाव्यरत्नकोशमहाखनिम् ।
अव्यक्तलोचनालोकैरनालोच्यां सरस्वतीम् ॥

उल्लाससङ्गतिं कारिकाकारः स्वयमेवोद्घाटयति अर्था इति ।

पुरेति । अतीतोल्लासे ।

तेषां वाचकादीनाम् अर्थव्यञ्जकतोच्यते इदानीमिति शेषः । इदमत्राकूतं-द्वितीय उल्लासे वाचकलाक्षणिकोभयपर्यालोचनपूर्वकं शब्दस्य व्यञ्जकत्वं निरटाङ्कि, इदानीमर्थस्यापि समर्थ्यत इति ।

तदनुकूलां सहायसंपदं व्युत्पादयति-कीदृशीति ।

## सुधासागरः

एवं शब्दे निरूपिते उपोद्घातेन शब्दव्यञ्जनायां निरूपितायां प्रसङ्गेनार्थव्यञ्जना निरूपणीया । तत्रेदमाशङ्क्यते—शब्दे निरूपितेऽवसरोयमर्थनिरूपणस्य । किञ्च अर्थे धर्मिणि निरूपिते तद्धर्मो व्यञ्जना सुनिरूपिता भवति, तत्कुतस्तमनादृत्य व्यञ्जनानिरूपणमिति । तदेनां शङ्कामपनिनीषन्नुक्तं स्मारयति 'अर्थाः प्रोक्ता'इति ।

अर्थाः वाच्यलक्ष्यव्यङ्ग्याः । अर्थस्य सन्निकृष्टतरत्वेऽपि तेषामित्यनेन योग्यतया वाचकादयः शब्दाः परामृश्यन्ते ।

शिष्यावबोधाय प्रतिजानीते 'अर्था वाच्ये'-ति ।

## साहित्यचूडामणिः

प्रतिभाजुषामित्यनेन पामरप्रभृतयोऽपि वाच्यमर्थमनायासादवबुध्यन्ते, व्यङ्ग्यसंवेदनवैदग्ध्ये तु कतिचिदेवाधिकारिण इति ध्वन्यते।

व्यक्तिरेव, शब्दवृत्त्यन्तरशङ्काया एवानौचित्यात्। यद्वा नोत्पत्तिरित्यवधारणम्।

बोद्धव्य इत्यन्तर्भावितण्यर्थः।

'कक लौल्य' इति धातोः काकुः, प्रकृतादर्थादर्थान्तरे शब्दस्य चलत्स्वभावत्वात्। यद्वा ईषदर्थे कुशब्दः। तस्य कादेशः। कुर्भूमिः हृदयस्थवस्तु प्रतीतेरीषद्भूमिः काकुरिति यावत्।

## सुधासागरः

ननु सर्वेषामित्यादिना पूर्वमर्थानां व्यञ्जकता प्रोक्तैव तदन्या कीदृशी सेति काव्यप्रदीपकाराः। तत्रायमाशयः। कीदृशी किंस्वरूपा नियन्त्रितार्थधीजनकत्वे शब्दव्यञ्जनायाः स्वरूपमस्याः किमिति।

बोद्धव्य इत्यादि।

प्रतिपाद्यः प्रतिपादनीयो जनः, अन्तर्भावितण्यर्थत्वात्। अतो न वाच्येनाभेदः।

काकुः शोकभयादिभिर्ध्वनेर्विकारः।

वाक्यवाच्याभ्यां सहितोऽन्यसन्निधिः वाक्यवाच्यान्यसन्निधिः। अतो न द्वन्द्वैकवद्भावे नपुंसकत्वप्रसङ्गः।

प्रस्तावः प्रकरणम्।

वैशिष्ट्यम् वैलक्षण्यम्, तच्च वक्त्रादिषु प्रत्येकमभिसम्बध्यते।

अन्यार्थो वाच्यलक्ष्यव्यतिरिक्तः।

यत्तु श्रीवत्सलाञ्छनभट्टाचार्यैर्व्याख्यातम्—अन्यो वक्तृबोद्धव्यभिन्नो जन इति। तद् भ्रान्तिविलसितम्। नहि वक्तृबोद्धव्ययोर्व्यङ्ग्यबोधाभावः, न वा सत्यपि वक्त्रादिवैशिष्ट्ये सामान्यतस्तृतीयजनस्यार्थोपस्थापने व्यापारान्तरस्याऽहेतुत्वम्। किं बहुना प्रतिभाजुषामित्यनानन्वितमेव स्यादिति ध्येयम्। व्यक्तिर्व्यञ्जना, करणव्युत्पत्तेः। अर्थस्य त्रिविधस्यापि, नतु कस्यचिदेव। एवं वक्त्रादीनां वैशिष्ट्यात् वैलक्षण्यात्प्रतिभाजुषां सवासनानां योऽन्यार्थधीहेतुरर्थस्य व्यापारः व्यङ्ग्यप्रत्यायकस्त्रिविधार्थनिष्ठो नत्वर्थविशेषनिष्ठो व्यापारविशेषः सा व्यक्तिरेव व्यञ्जनैवेत्यर्थः। एवकारेण व्यापारान्तरप्रमाणान्तरयोर्व्युदासः। नाभिधादिरित्युक्तम्। अनुमानादिकं निरस्यते। प्रतिभाजुषामित्यनेन नवोन्मेषशालिनी प्रज्ञा प्रतिभा या वासनेत्युच्यते तस्यां सत्यामेव वक्तृवैशिष्ट्यादिसत्त्वेऽपि व्यङ्ग्यप्रतीतिरिति प्रतिपादितम्। अतएव वैयाकरणानां न तथा रसप्रतीतिः। तथाचोक्तम्—

सवासनानां नाट्यादौ रसस्यानुभवो भवेत्।
निर्वासनास्तु रङ्गान्तर्वेश्मकुड्याश्मसन्निभाः॥ इति।

क्रमेणोदाहरति—

१. अइपिहुलं जलकुंभं घेत्तूण समागदह्मि सहि तुरिअम् ।
समसेअसलिलणीसासणीसहा वीसमामि खणम् ॥
[अतिपृथुलं जलकुम्भं गृहीत्वा समागताऽस्मि सखि, त्वरितम् ।
श्रमस्वेदसलिलनिःश्वासनिःसहा विश्राम्यामि क्षणम् ॥]
अत्र चौर्यरतगोपनं गम्यते ।

२. ओण्णिद्दं दोब्बल्लं चिन्ता अलसत्तणं सणीससिअम् ।
मम मन्दभाइणीए केरं सहि तुहवि अहह परिहवइ ॥
[औन्निद्र्यं दौर्बल्यं चिन्तालसत्वं सनिःश्वसितम् ।
मम मन्दभागिन्याः कृते सखि त्वामपि अहह! परिभवति ॥]
अत्र दूत्यास्तत्कामुकोपभोगो व्यज्यते ।

---

## साहित्यचूडामणिः

अइपिउलमिति ।

अतिपृथुलं जलकुम्भं गृहीत्वा समागतास्मि सखि ! त्वरितम् ।
श्रमस्वेद-सलिलनिःश्वासनिस्सहा विश्राम्यामि क्षणम् ॥

इत्युपपतिना सद्योभुक्तमुक्तायाः कस्याश्चिदुक्तिः । चौर्यप्रधानं रतं चौर्यरतं यत् सरित्तीरलताकुञ्जादावेव सिद्ध्यति तस्य गोपनं प्रच्छादनं गम्यते । अत्र वक्तृजनवैशिष्ट्यादर्थस्यार्थान्तरव्यञ्जकत्वम् ।

## सुधासागरः

वक्ष्यमाणोदाहरणेषु वैशिष्ट्यविशेषोऽविदग्धानां दुर्ज्ञेय इति तत्सूचयन्वृत्तिकृदाह क्रमेणेति ।

सूत्रक्रमेणोदाहरणेषु वक्त्राद्येकैकवैशिष्ट्यानामिति भावः ।

गाथा छन्दः । लक्षणमुक्तं प्राक् ।

अतिपृथुलं जलकुम्भं गृहीत्वा समागताऽस्मि सखि त्वरितम् ।
श्रमस्वेदसलिलनिःश्वासनिःसहा विश्राम्यामि क्षणम् ॥

इति संस्कृतम् । अन्वयो यथाश्रुत एव । निःसहा निर्बला चलितुमक्षमेत्यर्थः । सखीत्यनेनाऽप्रतार्यत्वम् । अतिपृथुलमित्यनेन दुर्वहत्वम् । त्वरितमित्यनेन स्वेदातिशययोग्यता । सलिलत्वोक्त्या स्वेदबाहुल्यं च व्यज्यते । अत्र वक्त्री कामिनी तस्याः दुःशीलत्वरूपवैशिष्ट्यं विजानतां चौर्यरतगोपनं व्यक्तीभवति ।

## साहित्यचूडामणिः

ओण्णिद्दमिति ।

औन्निद्र्यं दौर्बल्यं चिन्तालसत्वं सनिःश्वसितम् ।
मम मन्दभागिन्याः कृते सखि ! तवाप्यहह परिभवति ॥

इत्येककामुकाभिलाषिणीं दूतीं प्रति कस्याश्चिदुक्तिः । तवपरिभवतीति न माषाणामश्नीयादितिवद्, 'धातुसम्बन्धे प्रत्ययाः' इत्युक्तत्वात् ।

तत्कामुकेति । या खल्वेवमाचष्टे तत्कामुकोपभोगो व्यज्यते ।

## सुधासागरः

बोद्धव्यवैशिष्ट्यमुदाहरति—

औन्निद्र्यं दौर्बल्यं चिन्ताऽलसत्वं सनिःश्वसितम् ।
मम मन्दभागिन्याः कृते सखि ! अहह त्वामपि परिभवति ॥

इति संस्कृतम् ।

तुहेति द्वितीयान्तमेव तथैवानुशासनादिति दीपिकाकाराः । तथाच षष्ठ्यन्तत्वेन कैश्चित् व्याख्यातम्, तन्नादरणीयम् ।

तुहवीत्यनन्तरमहहेति क्वचित्पाठः, स न युक्तः, वृत्तहानिदोषादिति केचित् । तन्न । गाथाभङ्गेपि छन्दोन्तराऽभङ्गादिति चण्डीदासभट्टाचार्याः ।

इदं च वैद्यनाथेनोदाहरणचन्द्रिकायामुक्तम् । तत्र दोषोद्भावनं, तत्समाधानं, तत्प्रदर्शनं च सर्वं प्रामादिकमेव । अहह तुहवीति समुदायस्य ह्रस्वघटितत्वेन तत्र वर्णव्यत्यये गाथाभङ्गासम्भवाच्छन्दोन्तरत्वासंभवाच्चेति छन्दोविद्भिर्द्रष्टव्यम् । गाथा लक्षणं पिङ्गले यथा 'पढमं बारहमत्ता बीए अट्ठारहेहिं संजुत्ता, जह पढमं तह तीअं पंचदहविहूसिया गाहा'इति । संस्कृते तु गाथाया नामान्तरमार्येति, तल्लक्षणं चोक्तम् यथा—'यस्यां प्रथमे पादे द्वादशमात्रास्तथा तृतीयेपि । अष्टादश द्वितीये पञ्चदश चतुर्थके सार्या'इति । तस्मादहह तुहवीत्यत्र पौर्वापर्ये कामचार एव ।

हे सखि ! सनिःश्वसितमौन्निद्र्यादिकं कर्त्तृ मन्दभागिन्या मम कृते मदर्थं त्वामपि परिभवति । निःश्वसितं निःश्वासस्तत्सहितम् । उन्निद्रस्य भाव औन्निद्र्यम् । मन्दोऽल्पो भागो भागधेयं यस्यास्तादृश्याः । मां तावत्परिभवत्येव, मत्कार्यार्थं गमनागमनादिना कामुकप्रसादनव्यापारेण त्वामपीत्यपिशब्दलभ्योऽर्थः । अत्र दूती प्रतिपाद्या । तस्या अन्यदापि दृष्टदुष्टचेष्टाया वैशिष्ट्येन तत्कामुकोपभोगो व्यज्यते ।

अत्राऽन्यदीयमुन्निद्रतादिकमन्यत्र बाधितमिति तत्सदृशमुन्निद्रतादिकं लक्ष्यते इति केचित् । तदबोधात् । सख्यास्तदीयोन्निद्रतान्वयस्याऽवाक्यार्थत्वात् ।

३. तथाभूतां दृष्ट्वा नृपसदसि पाञ्चालतनयां
वने व्याधैः सार्धं सुचिरमुषितं वल्कलधरैः ।
विराटस्यावासे स्थितमनुचितारम्भनिभृतं
गुरुः खेदं खिन्ने मयि भजति नाद्यापि कुरुषु ॥

अत्र मयि न योग्यः खेदः, कुरुषु तु योग्य इति काक्वा प्रकाश्यते । न च वाच्यसिद्ध्यङ्गमत्र काकुरिति गुणीभूतव्यङ्ग्यत्वं शङ्क्यम्, प्रश्नमात्रेणापि काकोर्विश्रान्तेः[१] ।

## साहित्यचूडामणिः

तथाभूतामिति । केशग्रहणादिक्लेशयोगिनीम् । वल्कलधरैरित्यत्रास्माभिरित्यध्याहार्यम् । इत्थं मयि खिन्नेऽपीत्यध्याहारः । मयि कुरुष्विति सप्तमीद्वयं काकुस्थानम् ।

ननु काकुव्यतिरेके विवक्षितं वाच्यमेव न सिध्यति । काकुर्हि शब्दस्यैव कश्चन धर्म इति तया स्पृष्टं शब्देनैवोक्तं स्यात् । वाच्यसामर्थ्याक्षिप्तत्वादर्थस्य व्यङ्ग्यत्वं वाचकशब्दस्पृष्टत्वात्तु गुणीभाव इत्याशङ्क्याह—न चेति । प्रश्नमात्रेणापीति । न खलु वाक्यार्थघटनापर्यन्तमत्र काकुरुद्दीप्यते । केवलं कुशस्थलं वृकस्थलमित्यादि प्रतिसन्धिप्रस्ताविनमवरजमुद्दिश्य सस्नेहोपालम्भहसितगर्भायाः काकोः 'कथमेवंविधा आर्ययुधिष्ठिरस्य राजकार्यचिन्ते'ति प्रश्नमात्रेणापि पर्यवसानात् । एतेन वाच्यसिद्ध्यङ्गविशेष एव काक्वाक्षिप्तं, वैचित्र्यान्तराय पृथक्कारो वक्ष्यते इति व्याख्यातम् । दण्डापूपिकया काक्वाक्षिप्तत्वयापि न गुणीभूतव्यङ्ग्यत्वमिति ।

## सुधासागरः

काकोर्वैशिष्ट्यमुदाहरति 'तथाभूतामि'ति ।

शिखरिणी छन्दः । 'रसै रुद्रैश्छिन्ना यमनसभलागः शिखरिणी'इति लक्षणात् । वेणीसंहरणनाटके 'आर्य! कदाचित् खिद्यते गुरुः' इति सहदेवोक्त्यनन्तरं 'गुरुः खेदमपि जानाति' इत्युपक्रम्य भीमसेनोक्तिरियम् । अयमर्थः । नृपैरेव सदः सभा तस्यां पाञ्चालतनयां पाञ्चालदेशाधिपद्रुपदस्य राज्ञः पुत्रीं द्रौपदीम् । राजकन्यात्वेन जन्मप्रभृत्यपरिभूतायामस्मत्परिग्रहेणैव तादृशः परिभव इति ध्वन्यते । तथाभूतां स्त्रीधर्मिणीं दुःशासनेन केशाकर्षणेनाऽऽनीतां तेन दुष्टेन विकृष्यमाणमलिनाम्बरां विशिष्य भवत्सन्निधावपि कथयितुमयोग्यां दृष्ट्वा, वल्कलधरैरस्माभिर्वने व्याधैः सार्धं न तु वानप्रस्थैः सुचिरमुषितम् । गुरोर्भीत्येति भावः । किञ्च विराटस्य राज्ञः आवासे गृहे अनुचितारम्भेण सूदादिकर्मणा निभृतं गुप्तं यथा स्यात्तथा स्थितम् ।

[१] व्यङ्ग्यं प्रश्नश्चेति द्वयं काकोर्घटकम् । अनयोः काकोः प्रश्नमात्रेणापि काकुघटितस्य वाच्यस्य विश्रान्तेरलं व्यङ्ग्यस्यापि तद्विश्रान्तये कदर्थनमित्यत्र भावः ।

## सुधासागरः

राजपुत्राणां स्पर्द्धायोग्यस्यान्यराज्ञो गृहे दैन्यं मरणादप्यतिरिच्यत इति ध्वन्यते। गुरुः साक्षादनभियोज्यो युधिष्ठिरः, इत्थं खिन्ने—तन्मूलकक्लेशादत्यन्तदुःखिते, मयि, अत्रास्माभिरिति पञ्चानां क्लेशलाभेऽप्युद्धतनायकत्वेन तत्पराभवं सर्वं स्वकीयमेव मन्यमानो मयीत्येकवचनेन स्वखेदातिशयं व्यञ्जयति, खेदं भजति, अत्र खिद्यतेऽनेनेति खेदो मात्सर्यं, नाद्यापि कुरुषु दुर्योधनादिषु इति।

यत्तु सारबोधिनीकारानुसारेण वैद्यनाथैर्व्याख्यातम्—दृष्ट्वेति भजनक्रियया समानकर्तृकम् उषितं स्थितमिति च भावे क्तप्रत्ययसिद्धं द्वितीयान्तं दृष्ट्वेत्यस्य कर्मेति। तन्न रमणीयम्। उषितमित्यनेनैव समानकर्तृकत्वोपपत्तेः। किञ्च तथा सति तादृगवस्थद्रौपदीदर्शने युधिष्ठिरस्यैवान्वयेनेत्थं खिन्ने मयीति वाक्यार्थस्य स्वरसभङ्गापत्तेः वाग्देवतावतारवृत्तिकारस्वीकृतस्येत्थमित्यध्याहारस्यानुपपत्तेः, प्रकारान्तरेण खिन्ने प्रकारान्तरेण खेदभजनानौचित्यापत्तेश्चेति सूक्ष्मदृशाऽवधारणीयमिति दिक्।

अत्र खेदं मयि भजति नाद्यापि कुरुष्विति काकोर्वैशिष्ट्यान्मयि न योग्यं कुरुषु पुनर्योग्यं मात्सर्यमिति व्यज्यते।

ननु अत्रोक्तेन काकुव्यङ्ग्येन वाच्यस्य सिद्धिः शोभनत्वनिष्पत्तिः क्रियते। तथाच पराङ्गतया व्यङ्ग्यं गुणीभूतम् अतो न ध्वन्यङ्गं काकुरिति चेत्, उक्तव्यङ्ग्यस्य क्रोधप्रकर्षपर्यवसन्नतया वाच्यस्यैव तदङ्गत्वात्। तदेतदुक्तं वृत्तिकारैः—न च वाच्यसिद्ध्यङ्गमत्र काकुरिति गुणीभूतव्यङ्ग्यत्वं शङ्क्यमिति, तथापि काक्वाक्षिप्तव्यङ्ग्यरूपगुणीभूतव्यङ्ग्यप्रभेदता कथमपनेयेति चेत् न, अत्र नेति प्रश्नकाक्वापि वाक्यार्थप्रतीतिपर्यवसानात्। यां काकुं विना वाक्यार्थबोध एव नोपपद्यते तयैवाऽऽक्षिप्तस्य गुणीभावात्, यथा 'मथ्नामि कौरवशतं समरे न कोपात्' इत्यादौ भीमसेनादौ तादृशे वक्तरि। तदेतदुक्तं वृत्तिकारैः—प्रश्नमात्रेणापि काकोर्विश्रान्तेः इति।

अन्ये तु कुरुषु न योग्य इति नञ्काकुः किमर्थः। ततः प्रश्नरूपः किमर्थ एव हठाक्षिप्त इति तस्यैव गुणीभावो न्याय्यः, न तु क्रमेणापि काक्वा गुणीभूतविभागे काक्वाक्षिप्तमिति हठार्थगर्भाक्षिप्तपदप्रयोग इति तात्पर्यमाहुः।

४. तइआ मह गण्डत्थलणिमिअं दिट्ठिं ण णेसि अण्णत्तो।
एण्हिं सच्चेअ अहं ते अ कवोला ण सा दिट्ठी॥
[तदा मम गण्डस्थलनिमग्नां दृष्टिं नानैषीरन्यत्र।
इदानीं सैवाहं तौ च कपोलौ न सा दृष्टिः॥]

अत्र 'मत्सखीं कपोलप्रतिबिम्बितां पश्यतस्ते दृष्टिरन्यैवाभूत्, चलितायान्तु तस्यामन्यैव जातेत्यहो प्रच्छन्नकामुकत्वं ते' इति व्यज्यते।

---

## साहित्यचूडामणिः

तइआ इति।

तदा मम गण्डस्थलनिमितां दृष्टिं नानैषीरन्यतः।
इदानीं सैवाहं तौ च कपोलौ न सा दृष्टिः॥

इति प्रत्यक्षदृष्टकपोलप्रतिबिम्बावलोकनव्यलीकं कान्तमुद्दिश्य कस्याश्चिदुक्तिः।

अविचित्रस्य वाच्यस्य सर्ववाक्यसाधारण्याद् व्यञ्जनसहकारोचितं वैचित्र्यमासूत्रयति—अत्रेति। अन्यैव सद्भावस्नेहादिधर्मिण्यभूत्। अन्यैव दाक्षिण्यादिना ताटस्थ्यशालिनी जाता।

## सुधासागरः

वाक्यवैशिष्ट्यमुदाहरति—'तइआ'इति।

गाथा छन्दः। नेदमग्रे लिखिष्यामः लिखितत्वात् स्पष्टत्वाच्च।

तदा मम गण्डस्थलनिमग्नां दृष्टिं न नयस्यन्यत्र।
इदानीं सैवाऽहं तौ च कपोलौ न सा दृष्टिः॥

इति संस्कृतम्। नायिकाभयेन निकटवर्त्तिनीमन्यां साक्षादपहाय नायिकाकपोलगतं तत्प्रतिबिम्बं नायिकामुखावलोकनमिषेण पश्यन्तं नायकं प्रति बिम्बापगमे दृष्टिविकारेण ज्ञातरहस्याया नायिकाया इयमुक्तिः।

तदा यदा सा कामिनी मत्सन्निधावासीत्। निमग्नाम्—अनिमेषतया तथाभूतामिवेत्यर्थः। सैवाहं तदवस्थैवेत्यर्थः। सा स्निग्धाऽनिमेषेत्यर्थः। वाक्यमनेकपदम्। तेनात्र तदेदानीं पदात्मवाक्यवैशिष्ट्यात् मत्सखीं कपोलप्रतिबिम्बितां पश्यतस्ते दृष्टिरन्यादृशी, चलितायान्तु तस्यामन्यादृशीत्यहो प्रच्छन्नकामुकत्वं तवेति व्यज्यते।

८. उद्देशोऽयं सरसकदलीश्रेणिशोभातिशायी,
कुञ्जोत्कर्षाङ्कुरित-रमणीविभ्रमो नर्मदायाः ।
किञ्चैतस्मिन् सुरतसुहृदस्तन्वि ते वान्ति वाताः
येषामग्रे सरति कलिताऽकाण्डकोपो मनोभूः ॥

अत्र रतार्थं प्रविशेति व्यङ्ग्यम् ।

---

## साहित्यचूडामणिः

उद्देश इति । कुञ्जोत्कर्षेषु अङ्कुरितो निःशङ्कमुत्पन्नो रमणीनां विभ्रमो गमनविडम्बनादिविलासो यत्र । यद्यपि "यश्चाप्सरोविभ्रममण्डनानाम्' इतिवद् "विभ्रमस्त्वरया काले भूषास्थानविपर्ययः" इति परिभाषा, तथापि कविभिः शृङ्गारचेष्टामात्रेऽपि विभ्रमशब्दः प्रयुज्यते । किञ्चेत्यनेन वाक्यान्तरत्वमुत्तरार्धस्य स्पष्टं प्रकाश्यते यद्वैशिष्ट्यात् संभोगार्थं प्रविशेति व्यङ्ग्यमुपपद्यते ।

## सुधासागरः

वाच्यवैशिष्ट्यमुदाहरति—'उद्देश'इति ।

मन्दाक्रान्ता छन्दः । 'मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ ताद् गुरू चेत्' इति लक्षणात् । नायिकां प्रति कामुकस्योक्तिरियम् । हे तन्वि कन्दर्पकदर्थिते ! अयं पुरो दृश्यमानः । नर्म ददातीति नर्मदा न तु यथाकथंचिन्नदी तस्याः उद्देशः ऊर्ध्वप्रदेशः स्खलनभयेन संचरतामनवलोकनीयस्तिष्ठतीत्यन्वयः ।

उद्दिश्यते दूरादेव जनैर्न पुनर्गम्यते इति निर्जनत्वं सूच्यत इति दीपिकाकाराः ।

विशिनष्टि—सरसेत्यादि । सरसानां स्निग्धानां कदलीनां श्रेण्या पङ्क्त्या या शोभा तयाऽतिशायी अतिशयितः ।

अत्र सरसत्वेन शुष्कपर्णध्वनिराहित्यम् । श्रेणित्वेन च वेष्टनं गम्यते । तथा कुञ्जानामुत्कर्षेण गुञ्जन्मधुकरकरम्बितकुसुमसमृद्ध्यादिरूपेणाङ्कुरितोऽभूतपूर्वः प्रादुर्भूता रमणीनां विभ्रमो विलासो यत्र तादृशः । तथा चानुत्पन्नविलासानामपि नवनवोन्मेषशालिविलासोदयाद् भवत्याः कामवैमुख्ये दुरुत्तरं व्यसनं स्यादिति भावः । न केवलमेतावदेव वैमुख्ये बाधकं किं त्वन्यदपि बलवदस्तीत्याह—किञ्च इति । एतस्मिन्प्रदेशे शैत्यमान्द्यसौगन्ध्यवत्तया प्रसिद्धा वाता वान्ति । कीदृशाः, सुरतस्य सुहृदः श्रमघर्माद्यपनोदेन निरतिशयानन्दमयस्वरूपसुरतोत्कर्षहेतवः ।

श्रमापनयनेन पुनः पुनः प्रवर्त्तनया सुहृद इत्यन्ये ।

येषां वातानामग्रे मनोभूः कामः सरति चलति मनोभूत्वेन सचेतसां दुःपरिहर इति ध्वन्यते ।

६. णोल्लेई अणद्दमणा अत्ता मं घरभरम्मि सअलम्मि ।
खणमेत्तं जई संझाइ होइ ण व होइ वीसामो ॥
[नुदत्यनार्द्रमनाः श्वश्रूर्मां गृहभरे सकले ।
क्षणमात्रं यदि सन्ध्यायां भवति न वा भवति विश्रामः ॥]
अत्र सन्ध्या सङ्केतकाल इति तटस्थं प्रति कयाचिद् द्योत्यते ।

## साहित्यचूडामणिः

णोल्लईति ।

नोदयत्यनार्द्रमनाः श्वश्रूर्मां गृहभरे सकले ।
क्षणमात्रं यदि सन्ध्यायां भवति न वा भवति विश्रमः ॥

इति शुष्कहृदयायाः श्वश्वाः प्रभावान्मम गृहकार्याद् विरतिर्भवति वा न वेति सन्देहः । यदि च दैवाद् भवति, केवलं सन्ध्यायां, तत्रापि क्षणमात्रमिति तटस्थमन्यं सन्निहितं प्रति कयाचिच्चलितचारित्रया प्रकाश्यते ।

## सुधासागरः

मर्मज्ञेति केचित् । कलितो धृतोऽकाण्डेऽनवसरे निमित्ताभावेऽपीति यावत्, कोपो येन सः सुरतवैमुख्ये तु दृढं कुपितः किमिव न करिष्यतीति व्यज्यते ।

अत्र नर्मदोद्देशरूपस्य तद्विशेषणीभूतवातकुञ्जादिरूपस्य च वाच्यस्य यथोक्तविशेषणस्य वैशिष्ट्यात् सुरतार्थं प्रविशेति व्यज्यते ।

अन्यसन्निधेर्वैशिष्ट्यमुदाहरति—'णोल्लेइ' इति ।

काचित् सङ्केतार्थिनं तटस्थतयैव सन्निहितमुपपतिं प्रति सङ्केतकालसूचनाय प्रतिवेशिनीं प्रत्याह—

नुदत्यनार्द्रमनाः श्वश्रूर्मां गृहभरे सकले ।
क्षणमात्रं यदि सन्ध्यायां भवति न वा भवति विश्रामः ॥

इति संस्कृतम् । अयमर्थः हे सखि ! अनार्द्रमकरुणं मनो यस्यास्तादृशी श्वश्रूर्मां सकलगृहभरे सर्वस्मिन्गृहकार्यनिर्वाहे नुदति प्रेरयति ।

अनार्द्रमना इत्यनेन श्रमादिव्याजावलम्बनेनापि नावकाश इति । सकल इत्यनेन सार्वकालिकी व्यग्रता च ध्वन्यते । यदि क्षणमात्रं विश्रामो भवति तर्हि संध्यायाम् । अथवा न भवति विश्राम इति । अन्यसन्निधिः सन्निहितोऽन्यः । तेनात्र प्रतिवेशिनीं प्रति प्रवर्त्तितवाक्ये प्रच्छन्नपुरुषरूपस्यान्यस्य सन्निधेर्वैशिष्ट्यात् सन्निहितं प्रति सन्ध्या सङ्केतसमय इति व्यज्यते ।

प्रस्ताववैशिष्ट्यमुदाहरति—'सुज्जइ'ति ।

७. सुव्वई समागमिस्सदि तुज्झ पिओ अज्ज पहरमेत्तेण।
एमेअ किंत्ति चिट्ठसि ता सहि सज्जेसु करणिज्जम् ॥
[श्रूयते समागमिष्यति तव प्रियोऽद्य प्रहरमात्रेण।
एवमेव किमिति तिष्ठसि तत् सखि, सज्जय करणीयम् ॥]

अत्रोपपतिं प्रत्यभिसर्तुं प्रस्तुता न युक्तमिति कयाचिन्निवार्यते।

८. अन्यत्र यूयं कुसुमावचायं कुरुध्वमत्रास्मि करोमि सख्यः।
नाहं हि दूरं भ्रमितुं समर्था प्रसीदतायं रचितोऽञ्जलिर्वः ॥

अत्र विविक्तोऽयं देश इति प्रच्छन्नकामुकस्त्वयाऽभिसार्यतामिति आश्वस्तां प्रति कयाचिन्निवेद्यते ॥

## साहित्यचूडामणिः

सुव्वइ इति।

श्रूयते समागमिष्यति तव प्रियोऽद्य प्रहरमात्रेण।
एवमेव किमिति तिष्ठसि तस्मात् सखि सज्जय करणीयम् ॥ इति।

अभिसर्तुं प्रस्तुतेत्यनेन प्रकरणवैशिष्ट्यं प्रकटयति।

अन्यत्रेति। अस्मीत्यहमर्थे विभक्तिप्रतिरूपको निपातः।

देशस्य विविक्तत्वं व्यञ्जकभागः। प्रच्छन्नकामुकस्य विसर्जनीयत्वं व्यङ्ग्यांशः।

## सुधासागरः

उपगीतिश्छन्दः 'आर्याद्वितीयकेऽर्द्धे यद्गदितं लक्षणं तत्स्यात्।
यद्युभयोरपि दलयोरुपगीतिं तां मुनिर्ब्रूते' ॥ इति लक्षणात्।

श्रूयते समागमिष्यति तव प्रियोऽद्य प्रहरमात्रेण।
एवमेव किमिति तिष्ठसि तत् सखि सज्जय करणीयम् ॥

इति संस्कृतम्। उपपतिं प्रत्यभिसर्त्तुं प्रस्थितां नायिकां निवारयितुं सख्या इयमुक्तिः। अन्वयः स्पष्टः। अद्य न तु दिनान्तरे, प्रहरमात्रेण नतु विलम्बेन, एवमेव तदीयभोजनाद्युपयोगिव्यापाररहित्येनैव करणीयं रन्धनादिकं सज्जय साधयेत्यर्थः। अत्र प्रकरणस्य प्रस्तावस्याभिसारसम्बन्धित्वरूपवैशिष्ट्याद् उपपतिं प्रत्यभिसर्त्तुं न योग्यमिति व्यज्यते।

देशवैशिष्ट्यमुदाहरति—'अन्यत्रे'-ति।

इन्द्रवज्रा छन्दः 'स्यादिन्द्रवज्रा यदि तौ जगौ गः' इति लक्षणात्। हे सख्यः। यूयमन्यत्र इतो दूरं कुसुमावचायम्, 'हस्तादाने चेरस्तेये' इति घञ्, कुसुमानां हस्तेनाऽऽदानं कुरुध्वम्। अवचायशब्देनान्यत्र हस्तग्राह्यकुसुमबाहुल्यमिति प्रलोभनं व्यज्यते। अस्मीत्यहमर्थकमव्ययम्। अत्राहमवचायं करोमि। हेतुमाह—नाहं हीति। हि यस्माद् दूरं भ्रमितुं सञ्चरितुं न समर्था। प्रसीदत प्रसन्ना भवत।

६. गुरुअणपरवस पिअ किं भणामि तुह मंदभाइणी अहकम् ।
अज्ज पवासं वच्चसि वच्च सअं जेव्व सुणसि करणिज्जम् ॥
[गुरुजनपरवश प्रिय, किं भणामि तव मन्दभागिन्यहम् ।
अद्य प्रवासं व्रजसि व्रज स्वयमेव श्रोष्यसि करणीयम् ॥]

अत्राद्य मधुसमये यदि व्रजसि तदाऽहं तावद् न भवामि, तव न जानामि गतिमिति व्यज्यते ।

---

## साहित्यचूडामणिः

गुरुअणेति ।

गुरुजनपरवश ! प्रिय ! किं भणामि तव मन्दभागिनी खल्वहम् ।
अद्यप्रवासं व्रजसि व्रज स्वयमेव जानासि करणीयम् ॥ इति ।

प्रवासोऽत्र लक्षणया गन्तव्यो देशः । अद्येति कालनिर्देशको व्यञ्जकः । न भवामीति मरणमात्रशरणता प्रकाश्यते, यतस्तव गतिं प्रवासं न जानामीति ।

## सुधासागरः

अयं वो युष्मभ्यमञ्जली रचितः प्रणामाञ्जलिः कृतः । सर्वाभ्य एकोऽञ्जलिरप्य-सामर्थ्यादेव । अत्र देशस्यातिविविक्ततादिरूपवैशिष्ट्याद् वक्तृवैशिष्ट्यादिसहितात् प्रच्छन्नकामुकप्रेषणमाश्वस्तां प्रति व्यज्यते ।

यत्तु काव्यप्रदीपे गोविन्दमहामहोपाध्यायैरुक्तम्—

'प्रच्छन्नकामुको युष्माभिः प्रहेय इति प्रियसखीः प्रति व्यज्यते' इति, तन्न, वृत्तिविरोधात्, रहस्यस्य बहुविषयत्वेनानौचित्यापाताच्चेति ध्येयम् ।

कालवैशिष्ट्यमुदाहरति—'गुरुअण' इति । गीतिश्छन्दः ।

आर्याप्रथमदलोक्तं यदि कथमपि लक्षणं भवेदुभयोः ।
दलयोः कृतयतिशोभां तां गीतिं गीतवान्भुजङ्गेशः ॥ इति लक्षणात् ।
गुरुजनपरवश प्रिय किं भणामि त्वां मन्दभागिनी खल्वहम् ।
अद्य प्रवासं व्रजसि व्रज स्वयमेव श्रोष्यसि करणीयम् ॥

इति संस्कृतम् ।

अयमर्थः । गुरुर्जनमात्रं न तु विदग्धः । स एव वसन्ते प्रेषणात्परः शत्रुस्तस्य अधीनेति सम्बोधनविशेषणम् । तेनानिवार्यत्वम् । प्रियेत्यनेन दुःखौत्कट्यम् । त्वां किं भणामि वदामि, परायत्ते निरर्थकत्वादिति भावः । मन्दभागिनी अल्पभाग्या खल्वहम् । किं मया क्रियते तत्राह—अद्येत्यादि । अद्य प्रकरणाद् वसन्ते प्रवासं व्रजसि यत्र प्रवासिनो गृहमायान्ति । व्रजेति रोषोक्तिः । स्वयमेव श्रोष्यसि करणीयम् । मया कर्त्तुमर्हं मरणमिति यावत् । सुणसि इति प्राकृतस्य श्रोष्यसीति परिहृत्य जानासीति संस्कृतं लिखितं श्रीवत्सलाञ्छनप्रभृतिभिः सर्वैस्तत्र बीजं न विद्मः ।

आदिग्रहणाच्चेष्टादेः। तत्र चेष्टाया यथा—

द्वारोपान्तनिरन्तरे मयि तया सौन्दर्यसारश्रिया,
प्रोल्लास्योरुयुगं परस्परसमासक्तं समासादितम्।
आनीतं पुरतः शिरोंऽशुकमधः क्षिप्ते चले लोचने,
वाचस्तत्र निवारितं प्रसरणं सङ्कोचिते दोर्लते॥

अत्र चेष्टया प्रच्छन्नकान्तविषय आकूतविशेषो ध्वन्यते। निराकाङ्क्षत्वप्रतिपत्तये प्राप्तावसरतया च पुनः पुनरुदाह्रियते। वक्त्रादीनां मिथः संयोगे द्विकादिभेदेन।

**अनेन क्रमेण लक्ष्यव्यङ्ग्ययोश्च व्यञ्जकत्वमुदाहार्यम्॥२॥**

**शब्दप्रमाणवेद्योऽर्थो व्यनक्त्यर्थान्तरं यतः।**
**अर्थस्य व्यञ्जकत्वे तच्छब्दस्य सहकारिता॥३॥**

शब्देति न हि प्रमाणान्तरवेद्योऽर्थो व्यञ्जकः॥३॥

इति काव्यप्रकाशेऽर्थव्यञ्जकतानिर्णयो नाम
तृतीय उल्लासः॥३॥

---

## साहित्यचूडामणिः

आदिग्रहणसंग्राह्या चेष्टेत्याचष्टे—आदीति।

द्वारोपान्ते नैरन्तर्यं भवनप्रवेशौन्मुख्यम्, पुरतः ललाटे। अधः चरणमूले। तच्चेति। यत् स्वरससँल्लापरूपम्।

आकूतविशेषो विलक्षण आशयः। चेष्टादेरित्यादिपदेन निर्विकारत्वस्वीकारः। यथा—

## सुधासागरः

अत्राद्यपदप्रतिपाद्यमधुसमयवैशिष्ट्याद् वक्तुरवस्थाविशेषसहितादिदानीं यदि व्रजसि तदाहं तावन्न जीवामि तव तु न जानामि गतिमिति पत्युनुरक्तया व्यज्यते।

आदिग्रहणाच्चेष्टालीलादेः।

तत्र चेष्टावैशिष्ट्यमुदाहरति—'द्वारोपान्ते-'ति। शार्दूलविक्रीडितं छन्दः। लक्षणमुक्तम्। मित्रं प्रति नायकस्योक्तिरियम्। मयि द्वारस्योपान्ते समीपे निरन्तरे निर्व्यवधाने सति तया नायिकया सौन्दर्यस्य साराणां श्रीः संपत्तिर्यत्र तथाभूतया ऊरुयुगं प्रोल्लास्य प्रसार्य, परस्परेण समासक्तं संबद्धं समासादितं स्थापितम्। अथवा भावे क्तप्रत्ययः। तथाच समासादितं—प्रापितमित्यर्थः। तथा शिरःसम्बध्यंशुकं पुरतो मुखोपरि आनीतम्। चले चपले लोचने अधःक्षिप्ते सञ्चारिते। वाचो वचनस्य तन्नानाविधं प्रसरणं सखीषु प्रवर्तनं

## साहित्यचूडामणिः

दिट्ठाए जं ण दिट्ठो सरलसहावाए जं अणालत्तो।
उवआरो जं ण कओ तं चिअ कलिअं छइल्लेहिं॥ इति।

[दृष्टया यन्न दृष्टः सरलस्वभावया यदनालपितः।
उपचारो यन्न कृतस्तदेव कलितं विदग्धेन॥]

ननु "सर्वेषां प्रायशोऽर्थानां व्यञ्जकत्वमपीष्यते" इत्यत्र वाच्यादीनामर्थान्तरव्यञ्जनसामर्थ्यं समर्थितमुदाहृतं च, किं पौनरुक्त्येनेत्याशङ्क्याह—निराकाङ्क्षेति-न खलु तत्र वक्त्रादिवैशिष्ट्यपुरस्सरं व्यञ्जकत्वादि निरणायि, अत्र तु तथेति। प्रतीतेर्नैराकाङ्क्ष्यम्। किञ्च प्रासङ्गिकतया तत्रैतत् प्रमेयम्, अत्र तु प्राप्तकालतयेत्याह—प्राप्तेति। एकैकशो वक्त्रादीनां यद् वैलक्षण्यं तन्मात्रमेतावता प्रतिष्ठितम्। तेषां परस्परसंयोगमेलकेऽप्ययमेव न्याय इत्याह—वक्त्रादीनामिति।

द्विकादिर्भेदो यस्य।

अनेनैव क्रमेण एकैकोक्तया युक्त्या व्यञ्जकत्वं बहिर्द्रष्टव्यम्। यथा—

## सुधासागरः

निवारितम्। दोर्लते भुजलते सङ्कोचिते सङ्कुच्य मिथःसंयोजिते इत्यर्थः।

अत्रोरुसमासङ्गादिचेष्टावैशिष्ट्यात्प्रच्छन्नकामुकविषय आकूतविशेषो ध्वन्यते। आकूतश्च भावः। तत्र प्रथमार्द्धेन स्पृष्टकमालिङ्गनम्। शिरोंऽशुकं पुरत आनीतमित्यनेन गूढमागच्छेरिति। अधः क्षिप्ते चले लोचने, वाचस्तत्र निवारितं प्रसरणम् इत्येताभ्यां सूर्यास्तसमये कोलाहलरहिते काले समागन्तव्यमिति। सङ्कोचिते दोर्लते इत्यनेन पारितोषिकमालिङ्गनं करोमीति व्यज्यते।

स्पृष्टकालिङ्गनस्वरूपं तु असमागतयोः प्रीतिलिङ्गद्योतनार्थमालिङ्गनचतुष्टयम्। स्पृष्टकं विद्धकं उद्घृष्टकम् पीडितकमित्युपक्रम्य 'संमुखागतायां प्रयोज्यायामन्यापदेशेन गच्छतो गात्रेण गात्रस्पर्शनं स्पृष्टकम्' इति वात्स्यायनसूत्रे दर्शितम्। दूरस्थस्यैव प्रियस्य दूरात् स्वाङ्गैः स्वाङ्गान्येव मेलयित्वा स्पृष्टकनामालिङ्गनमिति बहवः।

यद्यप्येकत्रैवोदाहरणे भेदान्तराण्यपि सम्भवन्तीति तदेवोदाहरणान्तरं सम्भवति, तथापि निःसन्देहव्युत्पत्तये प्राप्तावसरतया च पुनः पुनरुदाहरणीयमित्याशयेन वृत्तिकृदाह—निराकाङ्क्ष इत्यादि। एवञ्च मिलितेषु कस्य व्यञ्जकत्वमिति सन्देहे यत्र यस्य प्राधान्यं तत्र तस्य व्यञ्जकत्वमन्येषामानुगुण्यमात्रमिति प्रतिपादनेन अइपिहुलम् इत्यत्र पृथुलरूपवाच्यवक्तृबोद्धव्यानां, गुरुअण इत्यत्र काकुवक्तृबोद्धव्यकालादीनां वैशिष्ट्यसङ्करेण द्वित्रोदाहरणेनैव निर्वाहो भवति किमेतावद्भिरिति न शङ्कनीयमिति निर्गलितोऽर्थः।

## साहित्यचूडामणिः

दृष्टिं हे प्रतिवेशिनि ! क्षणमिहाप्यस्मद्गृहे दास्यसि
प्रायेणास्य शिशोः पिता न विरसाः कौपीरपः पास्यति ।
एकाकिन्यपि यामि तद्वनमदीस्रोतस्तमालाकुलं
नीरन्ध्रा वपुरालिखन्तु जरठच्छेदा नलग्रन्थयः ॥ इति ।

अत्र कस्याश्चित् सरित्तटतमालवनविहितसङ्केतायाः परपुरुषोपभोगलौल्यलक्षणमर्थान्तरमभिव्यज्यते । तत्र तावत् तस्या वक्तृत्वम् । प्रतिवेशिन्या बोद्धव्यत्वम् । प्रायेणेत्यादि वाच्यम् । नीरन्ध्रा इति वाक्यम् । तद्वनेति देशः । क्षणं दृष्टिं दास्यसीति कालः । इहापीत्यभिनयः । सङ्केतकालजिज्ञासोः कामुकस्यापि सन्निधिः सम्भवी । किञ्चानेन क्रमेण वाच्यस्येव लक्ष्यव्यङ्ग्ययोरप्युदाहार्यत्वम् ।

तत्र लक्ष्यस्य यथा ममैव—

गामउड-घरपडोहर-सनीड-रच्छाए वच्छा मा वच्च ।
जत्थ वइवेढ-मूले दिट्ठिविसो अत्थि सुव्वए सप्पो ॥[१] इति ।

[ ग्रामीण-गृह-पृष्ठान्तर-सनीड-रथ्यायां वत्स मा व्रज ।
यत्र वृतिबन्धमूले दृष्टिविषोऽस्ति श्रूयते सर्पः ॥ ]

अत्र हालिकस्नुषायाः सर्प इति साध्यवसाना लक्षणा । तन्मूलं च तस्याः परिहरणीयत्वप्रख्यापनं व्यङ्ग्यम् । तत्र च मातुर्वक्तृत्वं, पुत्रस्य बोद्धव्यता, गामउडेत्यादिना देशः, जत्थेत्यादिना वाच्यम् , मा वच्चेति निषेधे व्रजनस्य प्रकृतत्वात् प्रस्ताव इति ।

## सुधासागरः

यत्त्वत्र श्रीवत्सलाञ्छनभट्टाचार्यैरुक्तम् 'द्वयोः प्राधान्यं यथा—अइपिहुलमित्यत्र वक्तृबोद्धव्ययोः । त्रयाणां यथा—गुरुअण इत्यत्र वक्तृबोद्धव्यकालानाम् , एवमन्यत्रेति, अत्ताएत्थेत्युदाहरणन्तु न संमतमिति' च, तत्प्राधान्याप्राधान्यानुभवविरहविलसितमित्यनादेयम् । न खलु वाग्देवतावतारोक्तौ वर्णमात्रेऽप्यनावश्यकत्वं भवति, किं पुनरेतावत्युदाहरणे इति विद्वद्भिर्ध्येयम् ।

प्राधान्येन वक्तृबोद्धव्यादीनां प्रत्येकमेव न व्यञ्जकत्वं किन्तु मिलितानामपीति द्रष्टव्यम् ।

तत्र प्राधान्येन द्वयोर्व्यञ्जकत्वं यथा—

---

१. गामउड = ग्रामणीः । अत्र तु हालिकेत्यनुवादाद् ग्रामीणः । पडोहर = गृहपृष्ठभागः । वइ = वृतिः, वेढ = वेष्टनम्, सेयं वीप्सा लोकोक्तिस्वभावः, बन्धेतिच्छन्दःपूर्त्यै ।

## साहित्यचूडामणिः

व्यङ्ग्यस्य यथा ममैव—

चुम्बसि जप्पावेन्ती दूरं सहि ! कीस करपओट्ठगअं ।
मा मण्ण ईसालुभत्ता बिम्बोट्ठि ! तुज्झ पाविट्ठं ॥
[चुम्बसि जल्पयन्ती दूरं सखि कथं करप्रकोष्ठगतम् ।
मा मन्येतेर्ष्यालुभर्त्ता बिम्बोष्ठि तव पापिष्ठम् ॥]

इति ।

अत्र बिम्बभ्रान्त्या शुकस्तवाधरं खण्डयिष्यतीति व्यज्यते । ततश्च 'कस्स वण होई रोसो' इतिवदनेकधा व्यङ्ग्यमुज्जृम्भते ।

तत्र सख्या वक्तृत्वं नायिकायाः श्रोतृत्वम्, कस्मात् चुम्बसीतिनिषेधे चुम्बनस्य प्रकृतत्वात् प्रस्तावः, बिम्बोष्ठीति वाच्यम्, मा मण्ण इति वाक्यम्, अन्यस्योपपतेः सन्निधिश्च सम्भवी ।

एवमन्यत्रापि ॥ १,२ ॥

## सुधासागरः

अत्ता एत्थ णिमज्जइ एत्थ अहं दिअसअं पलोएहि ।
मा पहिअ रत्तिअंधअ सज्जाए मह णिमज्जहिसि ॥
[श्वश्रूरत्र निमज्जति अत्राहं दिवसकं प्रलोकय ।
मा पथिक रात्र्यन्धक शय्यायामावयोर्निमङ्क्ष्यसि ॥]

इति संस्कृतम् ।

स्वयंदूत्या इयमुक्तिः। अयमर्थः ।

हे पथिक ! रात्र्यन्धकेत्यनुकम्पायां कप्रत्ययः ।

दिवसकं निद्रायां कप्रत्ययः । दिवसस्य समागमप्रतिकूलत्वात् । दिवसकं वर्त्तते तत् प्रलोकय सम्यगवलोकय । मद्दशां स्थलविशेषं च सम्यगवधारयेति ।

किञ्च यद्यपि भवान् मदनशरासारदीर्यमाण उपेक्षितुं न युक्तस्तथापि किङ्करोमि पापो दिवसकोऽयं बलवत्प्रतिबन्धक इति भाव इति च गूढाभिप्रायः । प्राकृते पुंनपुंसकयोरनियमः ।

श्वश्रूरत्र निमज्जति स्वपिति । जरत्तरत्वेन निःस्पन्दं शेते न तु जाग्रद्रूपा तेन निःशङ्कमागच्छेति गूढाभिप्रायो निमज्जतिपदेन । श्वश्रूपदेन तु प्रतिपन्नमात्रायां रात्रौ अन्धीभूतो मदीयायां शय्यायां मा शयिष्ठा अपितु निभृतनिभृतमेतदत्ता-भिधान-निकटकण्टकनिद्रान्वेषणपूर्वकं प्रयत्नेनानिभृतसंयोगपरिहारेण ममोपभोग उचित इति व्यज्यते । अत्र ततो भिन्नस्थले अहमहमेव नान्यसहिता । अत्र स्वापबोधकपदानुक्त्या निद्राराहित्यं स्वस्य ध्वन्यते ।

## साहित्यचूडामणिः

अथ यथा शब्दस्य व्यञ्जकत्ववेलायामर्थस्य साहाय्यदायित्वम्, एवमथ प्रत्यपि शब्दस्येत्याह—शब्देति। व्यञ्जकाभिमतस्यार्थस्य तद्वाचकशब्दव्यतिरेकेण किं प्रमाणान्तरान्वेषणप्रयासेनेति सिद्धम् ॥ ३ ॥

लोकोत्तराः केचन लोचनेन
सिद्धाञ्जनं व्यञ्जनमाददानाः।
अदृष्टपूर्वं रमणीयमर्था-
दर्थान्तरं द्रष्टुमुपक्रमन्ते ॥

इति साहित्यचक्रवर्ति-लौहित्य-भट्टगोपाल-विरचितायां
साहित्यचूडामणौ काव्यप्रकाशविमर्शिन्यां
तृतीय उल्लासः ॥३॥

## सुधासागरः

किञ्च अत्राहमित्यनेन अत्रैवाहं नान्यतो गच्छामि, तदन्योन्यवदनावलोकन-विनोदेन दिनं तावदतिवाहयाव इति गूढाशयः सूच्यते। आवयोः शय्यायां मा निमङ्क्ष्यसि मा पत। महेत्यावयोरित्यर्थे निपातः। स्वमात्रोपादाने रहस्यप्रकाशापत्तेः। पथिकत्वेन श्रमाद्विस्मरणयोग्यतायाः रात्र्यन्धत्वेन स्वशय्यापतनस्य प्रसक्तिः, अन्यथाऽप्रसक्तनिषेधे रहस्यभङ्गापत्तेरिति।

अत्र सत्यपि पदानां व्यञ्जकत्वे तुल्यप्राधान्येन विरहिणोर्वक्तृबोद्धव्ययोस्तादृशतारुण्यलम्पटत्वादिवैशिष्ट्यबलाद्वाक्यार्थो निःशङ्कं मम शय्यायामागच्छेति व्यञ्जयतीति द्विकप्राधान्यमर्थव्यञ्जनाप्राधान्यं च द्रष्टव्यम्।

एवं त्रिकादिभेदाः स्वयमवगन्तव्याः।

ननु अर्थमात्रव्यञ्जकत्वे शब्दार्थयुगलरूपकाव्यस्य व्यञ्जकत्वं न सिद्धमित्यत आह—

अर्थप्राधान्येन व्यञ्जकत्वे व्यञ्जकोऽर्थः स्वयं शब्दप्रमाणवेद्य एव न तु प्रमाणान्तरगम्यः। तथाचार्थो व्यञ्जने शब्दसाहाय्यमपेक्षते। एवं शब्दार्थयुगल-रूप-काव्यस्य व्यञ्जकत्वं निर्बाधमिति भावः।

सर्वमिदमभिप्रेत्य वृत्तिकृदाह—शब्देत्यादि।

इति श्रीमत्पदवाक्यप्रमाणपारावारीण-दीक्षित-भीमसेनकृते
काव्यप्रकाशविवरणे सुधासागरेऽर्थव्यञ्जकता-
निर्णयस्तृतीय उल्लासः ॥३॥

# चतुर्थ उल्लासः

यद्यपि शब्दार्थयोर्निर्णये कृते दोषगुणालङ्काराणां स्वरूपमभिधानीयं तथाऽपि धर्मिणि प्रदर्शिते धर्माणां हेयोपादेयता ज्ञायत इति प्रथमं काव्यभेदानाह—

**अविवक्षितवाच्यो यस्तत्र वाच्यं भवेद् ध्वनौ ।**
**अर्थान्तरे संक्रमितमत्यन्तं वा तिरस्कृतम् ॥१॥**

लक्षणामूलगूढव्यङ्ग्यप्राधान्ये सत्येव अविवक्षितं वाच्यं यत्र स ध्वनौ इत्यनुवादाद् ध्वनिरिति ज्ञेयः ।

---

## साहित्यचूडामणिः

ब्रह्माण्डकेतकीषण्डे सहकारयुवा कविः ।
तदुपघ्ना जयत्येका माधवीव सरस्वती ॥

उल्लासद्वयसौहार्द्रमुन्निद्रयति—यद्यपीति । व्याख्यातपूर्वमेतत् । [१९ पृष्ठे]

अविवक्षितेति । वाकारः समुच्चये । यदाह—

अर्थान्तरे संक्रमितमत्यन्तं वा तिरस्कृतम् ।
अविवक्षितवाच्यस्य ध्वनेर्वाच्यं द्विधा मतम् ॥ [ध्व० २-१] इति ।

लक्षणेति । लक्षणामूलत्वाभावे विवक्षितान्यपरवाच्यत्वं यत्राभिधाव्यापारहेतुत्वम् । अगूढत्वे गुणीभूतव्यङ्ग्यता । प्राधान्याभावे रसवदाद्यलङ्कारतया गुणीभूतव्यङ्ग्यत्वं प्रसज्येत ।

## सुधासागरः

यद्यपि काव्यलक्षणं विभागं च विधाय लक्षणपदार्थेषु विवेचनीयेषु विशेष्यपदार्थौ ] शब्दार्थौ विचारितौ इदानीं विशेषणपदार्थानां दोषगुणालङ्काराणां निरूपणमुचितं न तु काव्यभेदस्य ध्वन्यादेर्भेदानाम्, तथापि ध्वन्यादेर्भेदेषु ज्ञातेषु दोषादीनां हेयोपादेयतयाऽवगमो भवति । तयोर्विशेषनिष्ठत्वात् । यथा श्रुतिकटुत्वं दोषः ध्वनिविशेषे शृङ्गारादिध्वनौ हेयो रौद्रादिध्वनौ चित्रभेदे चाहेयः । एवं माधुर्यादिर्गुणः शृङ्गारादिध्वनावुपादेयः रौद्रादिध्वनौ त्वनुपादेय एव । अलङ्कारोऽपि यमकादी रसादिध्वनावनुपादेयः चित्रभेदे तूपादेय एव । तथा च दोषादिनिरूपणोपयोगिषु काव्यविशेषप्रभेदेषु निरूप्यमाणेषु प्रसङ्गादनुपयोगिनोऽपि निरूपणीया इत्युल्लासत्रयेण काव्यभेदत्रयभेदो निरूपणीयः । तत्र प्रथमो ध्वनिभेदः । तत्र तावत् ध्वनिर्द्विधा-अविवक्षित-

## सुधासागरः

वाच्यो विवक्षितान्यपरवाच्यश्च । 'तत्र यद्यप्यभिधायाः प्राथम्यात्तन्मूलको विवक्षितान्यपरवाच्य एव प्रथमं निरूपयितुमुचितस्तथापि लक्षणमूलव्यञ्जनायाः प्राङ्निरूपणात् पशूनलक्षीत्यत्रेव प्रावृत्तिकं क्रममुपादाय सूचीकटाहन्यायेन वा प्रथममाद्यमुद्दिश्य विभजते [प्रदीपः]। तदेतदाह वृत्तिकारः—यद्यपि शब्दार्थयोरित्यादि । धर्मिणि प्रदर्शित इत्यत्र सामस्त्येनेति भावः । काव्यभेदानित्यत्र काव्यपदं ध्वनिकाव्यपरम् । अन्यथा काव्यप्रभेदानित्युक्तं स्यात् ।

वाच्यो वाच्यजात्यादिधर्माणां धर्मी । अविवक्षितो वाच्येन रूपेणान्वयबोधविषयतयाऽनपेक्षितो यत्र सः । तत्र यद्यप्यविवक्षितमात्रस्य नाऽयं विभागः किन्तु तद्विशेषस्य ध्वनेः, न तु शब्दात्तथाऽवगमः, तथापि यत्तदोरेकार्थपरामर्शकतया तत्र ध्वनाविति तच्छब्दार्थस्य ध्वन्यभेदेन यच्छब्दार्थोऽपि ध्वनिरेव लभ्यते । अतएव जयपञ्चाननाः प्राहुः—अविवक्षितं वाच्यतावच्छेदकावच्छिन्नं, यत्र ध्वनिर्ज्ञेयः । तत्र ध्वनौ वाच्यमर्थान्तरे सङ्क्रमितमत्यन्ततिरस्कृतं च भवेदित्यन्वय इति ।

वस्तुतस्त्वविवक्षितवाच्येत्यत्र ध्वनौ तात्पर्यं ध्वनावित्यनुवादादेव गम्यते, अनुवादस्य पुरोवादितात्पर्यग्राहकत्वात् ।

अयं च ध्वनिभेदो लक्षणामूलगूढव्यङ्ग्यप्राधान्ये सति सम्भवति। अविवक्षितत्वं वाच्यस्यान्वयानुपपत्तेः सा च वाच्यास्यानुपयुक्तत्वेन तदुपयोगिनि रूपान्तरे तात्पर्याद्वा स्वत एवान्वयायोग्यत्वाद्वा । अनुपयुक्तत्वमपि पुनरुक्तत्वाद्वाविशेषानाधायकत्वमात्राद्वा । तत्रोभयत्रापि वाच्यमर्थान्तरे उपयोगिनि लक्ष्यतावच्छेदके सङ्क्रमितम् आश्रयत्वेन परिणमितो वाच्योऽप्यर्थो रूपान्तरे लक्ष्यत इत्यर्थः ।

द्वितीये तु वाच्यमत्यन्ततिरस्कृतम् न केनापि रूपेणाऽन्वयप्रविष्टम् । तदेतत्सर्वमभिप्रेत्य वृत्तिकृदाह—लक्षणमूल इत्यादि ।

तत्राऽर्थान्तरसङ्क्रमितवाच्यं पुनरुक्तेर्यथा प्रदीपकारैः उदाहृतम्—

ताला जाअंति गुणा जाला दे सहिअएहिं घेप्पन्ति ।
रइकिरणाणुग्गहिआइं होन्ति कमलाइं कमलाइं ॥

अत्र द्वितीयकमलशब्दः सौरभादिगुणयुक्तत्वरूपे लक्ष्ये सङ्क्रमितवाच्य इति। नचैतत् प्रदीपकारोक्तमेवेति शङ्क्यम् । सप्तमोल्लासे क्वचिद्दोषोऽपि गुण इत्युपक्रम्य वाग्देवतावतारैरेव कथितपदस्याऽर्थान्तरसङ्क्रमितवाच्ये गुणत्वेनोदाहरिष्यमाणत्वात् । अत्रापि किं नोदाहृतमिति चेत् एकोदाहरणेन प्रकरणभेदेऽपि अर्थान्तरसङ्क्रमितवाच्यमेव व्यवहरणीयमिति सूचनायेत्यवेहि । तथापीदमेव किं नोदाहृतमिति चेत् अन्यत्राप्युपयुक्तत्वेनाऽमुख्यत्वादित्यलं बहुना ।

यत्तु अत्र वैद्यनाथैः'ताला जाअन्ति' इत्यादि व्याख्यायोक्तम्—काव्यप्रदीपगतमिदं पद्यमिति, तत्प्रामादिकम् , प्रकाशकारैरेवाऽग्रे लिखितत्वात् , प्रकृतग्रन्थाऽलिखितस्य व्याख्यानानौचित्याच्च, प्राकृते पद्यव्यवहाराभावाच्चेति सुधीभिर्ध्येयम् ।

१. तत्र च वाच्यं क्वचिदनुपयुज्यमानत्वादर्थान्तरे परिणमितम्। यथा—

त्वामस्मि वच्मि विदुषां समवायोऽत्र तिष्ठति।
आत्मीयां मतिमास्थाय स्थितिमत्र विधेहि तत्॥

अत्र वचनादि उपदेशादिरूपतया परिणमति॥

२. क्वचिदनुपपद्यमानतया अत्यन्तं तिरस्कृतम्। यथा—

उपकृतं बहु तत्र किमुच्यते सुजनता प्रथिता भवता परम्।
विदधदीदृशमेव सदा सखे सुखितमास्स्व ततः शरदां शतम्॥

एतदपकारिणं प्रति विपरीतलक्षणया कश्चिद् वक्ति।

---

## साहित्यचूडामणिः

यत्रेति। बहुव्रीहिणा व्यङ्ग्यार्थप्राधान्यं ध्वन्यते। ननु ध्वनाविति सिद्धविभक्त्या सप्तम्या कथं निर्देशः अविहितपूर्वत्वात् तस्य, पूर्ववाक्ये विधिपूर्वकत्वनैयत्याचोत्तरवाक्यानुवादस्येत्यत्राह—ध्वनाविति। अनुवादेन विधिरनुमेयः अस्त्यविवक्षितवाच्यो नाम ध्वनिः। तत्र वाच्यं द्विधेति। अनुपयुक्तिरनुपपत्तिश्चेति द्वैविध्यं वाच्यस्य। आद्यायामर्थान्तरसङ्क्रमणम् अन्यत्रात्यन्ततिरस्कारः योऽर्थ उपपद्यमानोऽपि तावतानुपयोगाद् धर्मान्तरसंवलनादन्यतामिवावलम्बमानः स्रक्सूत्रन्यायेनास्ते सोऽर्थान्तरपरिणमितः। यः पुनरनुपपद्यमान एवोपायतामात्रेण कस्यचिदर्थान्तरस्य प्रतीतिं विधाय पलायत इव सोऽत्यन्ततिरस्कृत इति विवेकः। संक्रमितमिति णिचा व्यञ्जनसहकारिवर्गस्यायं प्रभाव इत्युद्भाव्यते। एवं तिरस्कृतशब्देऽप्यूह्यम्। त्वामिति। अत्र त्वामहं वच्मि भणामीति वक्तुर्वचनं

## सुधासागरः

विशेषानाधायकत्वमात्राद् यथा—अस्मीत्यहमर्थकमव्ययम्। यतोऽत्र विदुषां समवायस्तिष्ठति तत्कारणादात्मीयां मतिमास्थायाऽत्र स्थितिं विधेहीति वाक्यार्थस्य त्वामहं वच्मीत्युपदेशक्रियाकर्मत्वेनाऽन्वयः।

अत्र त्वामित्यनुपयुक्तार्थम्, सम्बोध्यतयैव युष्मदर्थस्य वचनकर्मताऽवगतेरित्युपदेशार्हत्वं लक्षयति। तत्र वाच्यार्थः सङ्क्रमितः। उपदेशार्हत्वेनाऽवश्योपदेश्यहिताहितत्वं व्यज्यते। एवमस्मीत्यनुपयुक्तार्थं वच्मीत्युत्तमपुरुषेणैवाऽस्मदर्थस्य तत्कर्तृत्वप्रत्ययादित्याप्तत्वं लक्षयति। तत्र वाच्यार्थः सङ्क्रमितः। आप्तत्वेनाऽलङ्घनीयाज्ञत्वं व्यज्यते। वच्मीत्यनुपयुक्तार्थम्, अनुपादानेऽपि वचनक्रियाप्रतीतेः। अत उपदेशत्वं लक्ष्यम्। तत्र वाच्यार्थः सङ्क्रमितः। उपदेशत्वेन वचनस्याऽऽदरणीयता व्यज्यते। विद्वदधिष्ठानेनैव सभात्वाद्विद्वत्पदमनुपयुक्तमसाधारणज्ञानवत्त्वं लक्षयति।

## साहित्यचूडामणिः

पुनरुक्तिप्रायत्वादनुपयुक्तमिति मुख्यार्थभङ्गः। योग्यताविरहवदाकाङ्क्षाविरहोऽपि तद्भङ्गहेतुः, अन्वयविघटनाविशेषात्। तस्मादनुपयुक्तावाकाङ्क्षावैकल्यम्, अनुपपत्तौ योग्यताव्यत्यासः। अतश्च वचनेनोपदेशो लक्ष्यते। सामान्यविशेषभावः सम्बन्धः, वचनविशेषत्वादुपदेशस्य प्रतिपाद्यस्य शिक्षादानं व्यङ्ग्यं फलम्। आदिग्रहणान्मत्याद‍ानपरिग्रहः।

उपकृतमिति कस्यचिदपकारकर्तुरुक्तिः। तत्रेत्यपकारस्य वर्णनाविस्तारसंरम्भेण भणितिः। किमुच्यत इति धीरोदात्तत्वेन वक्तुराक्षेपालङ्कारच्छायया वक्तुमुपक्रान्तस्य निषेधः। वैपरीत्यनिमित्ता चेयं लक्षणा। यस्मादुपकारेणापकारः, सौजन्येन दौर्जन्यम्, ईदृशविधानेनानीदृशविधानं, सख्येन शात्रवं संवत्सरशतासिकया तदायुष्मत्तायाः क्षणमप्यनौचित्यं च लक्ष्यते। विरोधः सम्बन्धः। उपकर्तुरुदात्तप्रकृतित्वादपकर्तरि सपदि विपदौचित्यं व्यङ्ग्यम्॥ १॥

## सुधासागरः

तत्र वाच्यार्थः सङ्क्रमितः। तेनाऽऽशु परपराभवो व्यज्यते। विद्वांसस्तिष्ठन्तीत्यनेनैव समुदायप्रतीतौ समवायपदमेकवाक्यतापन्नसमुदायं लक्षयति। तत्र वाच्यार्थः सङ्क्रमितस्तेन परानभिभवनीयत्वं व्यज्यते।

अतएवोक्तं श्रीवत्सलाञ्छनभट्टाचार्यैः—प्रत्यक्षावगतौ विदुषामित्यादेश्चानुपयुज्यमानतेति। तथाऽऽत्मीयाया एव मतेः सर्वैरास्थानादनुपयुक्तत्वेनात्मीयशब्देन प्रमाणपरिगृहीतत्वे लक्ष्यमाणे तद्वाच्यं सङ्क्रमितम्। तेन परैरप्रतार्यत्वं व्यज्यते। स्थितिपदेन सावधानस्थितिर्लक्ष्यते। तत्र वाच्यं सङ्क्रमितम्। विपक्षच्छिद्रप्रेक्षित्वं व्यङ्ग्यम्। एवञ्च लक्षणामूलगूढव्यङ्ग्यप्राधान्यं द्रष्टव्यम्। तदेतत्सर्वमभिप्रेत्य वृत्तिकृत् आह—अत्र वचनाद्युपदेशादि इत्यादि।

अत्यन्ततिरस्कृतम् शक्यस्य सर्वथाऽनन्वयित्वादन्वयाऽप्रतियोगित्वं तिरस्कारः। यथा—'उपकृतमि'-ति।

द्रुतविलम्बितं वृत्तम्। 'द्रुतविलम्बितमाह नभौ भरौ' इति लक्षणात्। अयमर्थः। त्वया यद्बहु उपकृतं तत्र तद्विषये किमुच्यते किं वाच्यम्। बहुत्वाद्वक्तुं न शक्यमित्यर्थः। भवता परं केवलं सुजनता प्रथिता प्रकटिता। तथा च सौजन्ययुक्त एवैतावानुपकारो न तु प्रत्युपकारलाभाद्युपाधिप्रयुक्त इति भावः। हे सखे। ततः यस्मात्सुजनता प्रथिता तस्मादीदृशमेव सदा विदधत् कुर्वन् शरदां वर्षाणां शतं व्याप्य सुखितं सुखयुक्तं यथा स्यात्तथाऽऽस्व तिष्ठेति मुख्योर्थः। स च प्रकरणादिनोपकारिभावे प्रबाधितो विपरीतं लक्षयति। तद्यथा उपकृतमपकृतम्। सुजनता दुर्जनता। सखे शत्रो। सुखितं दुःखितमिति। नचात्र वाच्यस्य कथञ्चित्प्रवेशः। त्वयैवमपकारेऽपि क्रियमाणे मयापि प्रियमेवोच्यत इति स्वसाधुत्वं व्यङ्ग्यम्, तवोपकाराऽपकारविवेको नास्तीति वा।

**विवक्षितं चान्यपरं वाच्यं यत्रापरस्तु सः।**

**अन्यपरं व्यङ्ग्यनिष्ठम्।**

**एष च—**

**कोऽप्यलक्ष्यक्रमव्यङ्ग्यो लक्ष्यव्यङ्ग्यक्रमः परः॥२॥**

---

## साहित्यचूडामणिः

अभिधामूलान् भेदान् प्रदर्शयितुमाह—विवक्षितं चेति। चकारोऽप्यर्थे। विवक्षितत्वे सत्यन्यपरं व्यङ्ग्यनिष्ठं वाच्यं यत्र। व्यङ्ग्यतात्पर्यादेव वाच्यविवक्षा राजतात्पर्येण राजपुरुषसेवावत्। ननु 'विवक्षितं चान्यपरं चेति विरुद्धमिति' चेन्न। अन्यपरत्वेन विवक्षणात् को विरोधः। एतेन

'परस्परविरुद्धत्वाद् विवक्षातत्परत्वयोः' [ व्य०वि० १ ] इति महिमोक्तमवद्यमपोद्यते।

एवं चेति। अयमलक्ष्यक्रमो लक्ष्यक्रमश्चेति प्रथमं द्विविधः।

यदाह—

असंलक्ष्यक्रमद्योत्यः क्रमेण द्योतितः परः।
विवक्षिताभिधेयस्य ध्वनेरात्मा द्विधा मतः॥ [ ध्व० २.२ ] इति।

अत्र च पूरणाय क्रमपदव्युत्क्रमः।

ननु कस्मादलक्ष्यक्रम उच्यते न पुनरविद्यमानक्रम इत्यत्राह—अलक्ष्येति। न खलु कश्चिद् विपश्चिन्निश्चिनोति यद् विभावादीनां रसस्य च तादात्म्यं सम्बन्ध

## सुधासागरः

द्वितीयं ध्वनिभेदं कारिकार्द्धाभ्यामुद्दिश्य विभजते—'विवक्षितमि'ति।

ध्वनिरिति प्रकरणाल्लभ्यते। अन्यपरं व्यङ्ग्योपसर्जनीभूतम्। तदेतदाह वृत्तिकारः—अन्यपरं व्यङ्ग्यनिष्ठम् इति। अयं भेदोऽभिधामूलगूढव्यङ्ग्यप्राधान्ये सति द्रष्टव्यः। अथैनं—एष च इति विभजते।

कोऽपीत्येक इत्यर्थः। 'अत्र सूचीकटाहन्यायमाश्रित्य लक्ष्यक्रमव्यङ्ग्यस्य पूर्वमुद्देशः तस्यैकत्वात्। द्वितीयस्य तु पञ्चदशभेदत्वात्' इति प्रदीपकाराः प्राहुः। तन्नाऽतिरमणीयम्। उभयोस्तुल्यकक्षते खल्वयं न्यायः प्रवर्त्तते। अत्र तु भावाऽभावयोः पौर्वापर्यनियमाल्लक्ष्यक्रमस्यैव प्राङ्निरूपणं प्राप्नोतीति।

वयन्तु प्रतीमः—सर्वमेव व्यङ्ग्यं यद्यपि सुखदं तथापि रसस्य निरतिशयानन्दत्वेन प्राधान्यमाविष्कर्त्तुमलक्ष्यक्रमस्य प्रागुपादानमिति। अलक्ष्योऽज्ञेयः क्रमो यस्य तथाभूतं व्यङ्ग्यं यत्र स तथोक्तः।

**अलक्ष्येति। न खलु विभावानुभावव्यभिचारिण एव रसः, अपि तु रसस्तैरित्यस्तिक्रमः। स तु लाघवान्न लक्ष्यते।**

## साहित्यचूडामणिः

इति, किं तर्हि व्यङ्ग्यव्यञ्जकभाव इत्यस्ति क्रमः। रसस्तैरिति साधारण्येनोक्तिः उत्पत्त्यभिव्यक्त्यादिपक्षनिष्कर्षाभावात्।

स त्विति। उत्पलदलदशशतसूचीवेधवत्। यदाह—

रसभावतदाभासभावशान्त्यादिरक्रमः।
ध्वनेरात्माङ्गिभावेन भासमानो व्यवस्थितः॥ [ ध्व० २.३] इति।

यः खल्वत्यन्तसहृदयो न भवति तस्यैव स्फुटसंवेद्यः क्रमः। यथा अत्यन्तशब्दवृत्तज्ञो यो न भवति तस्य पदार्थवाक्यार्थक्रमः।[१] काष्ठाप्राप्तसहृदयभावस्य तु वाक्यवृत्तकुशलस्येव क्रमः संभवन्नपि चिरपरिचितानुमातुः स्मृतिक्रमवदसंवेद्यः। अत एव घटप्रदीपदृष्टान्तेन[२] व्यङ्ग्यप्रतीतिकाले वाच्यप्रतीतिर्न विघटते केवलं चमत्कारावस्थायां व्यङ्ग्यप्राधान्यानुरोधादनुदिततयानुभूयते। उपकारिणो हि पूर्वभाविता, पश्चाद्भाविता चोपकार्यस्य। 'विषयत्वमनापन्नैः शब्दैर्नार्थः प्रकाश्यते।'-इति नीत्या पूर्वं वाचकस्य शब्दस्य प्रतीतिः, ततो वाच्यस्येत्युपायकक्ष्यायामौचित्यम्[३]॥ २॥

## सुधासागरः

नन्वक्रम इत्येवोच्यतां नत्वलक्ष्यक्रम इति शङ्कां निराकुर्वन् वृत्तिकृत् अलक्ष्येति प्रतीकमादायाह—न खलु इत्यादि रसस्तैः इत्यादि च। अयमाशयः अभिव्यज्यत इत्यध्याहार्यम्। तथाच तैः इत्यनेन हेतुत्वकथनात् व्यङ्ग्यव्यञ्जकयोः पौर्वापर्यक्रमोऽस्ति स तु न लक्ष्यते कालसौक्ष्म्यात्। आस्वादने झटिति चित्ताऽऽकर्षणादयोग्यस्य सूक्ष्मकालतयाऽनुपलब्धेर्नाभावसाधकत्वमित्यलक्ष्यक्रम इत्युक्तं नाक्रम इति। एतदेवाऽभिप्रेत्य प्रदीपकारैः उक्तम्—विभावादय एव न रसः किन्तु रस्तैर्निष्पद्यत इत्यस्ति विभावादिरसप्रतीत्योः क्रमः स तु न लक्ष्यत इति क्रमस्याऽलक्ष्यत्वलक्ष्यत्वकृतं भेदद्वयमित्यर्थ इति ॥२॥

१. यथा पदार्थद्वारेण वाक्यार्थः संप्रतीयते।
वाच्यार्थपूर्विका तद्वत् प्रतिपत् तस्य वस्तुनः॥ ध्व० १.१०॥
वाच्या प्रकारणादिभ्यो बुद्धिस्था वा यथा क्रिया।
वाक्यार्थः कारकैर्युक्ता स्थायी भावस्तथेतरैः॥ दशरू० ४.३७॥

२. ध्वन्यालोक ३.३२ वृत्तिः

३. स्वसामर्थ्यवशेनैव वाक्यार्थं प्रथयन्नपि।
यथा व्यापारनिष्पत्तौ पदार्थो न विभाव्यते॥
तद्वत् सचेतसां सोऽर्थो वाच्यार्थविमुखात्मनाम्।
बुद्धौ तत्त्वार्थदर्शिन्यां झटित्येवावभासते॥ ध्व० १.११-१२॥

तत्र—

[ असंलक्ष्यक्रमव्यङ्ग्यध्वनिकाव्यम् ]

**रस-भाव-तदाभास-भावशान्त्यादिरक्रमः ।**

**भिन्नो रसाद्यलङ्कारादलङ्कार्यतया स्थितः ॥३॥**

आदिग्रहणाद् भावोदय–भावसन्धि–भावशबलत्वानि ।

प्रधानतया यत्र स्थितो रसादिस्तत्रालङ्कार्यः, यथोदाहरिष्यते । अन्यत्र तु प्रधाने वाक्यार्थे यत्राङ्गभूतो रसादिस्तत्र गुणीभूतव्यङ्ग्ये रसवत्प्रेय-ऊर्जस्वि-समाहितादयोऽलङ्काराः । ते च गुणीभूतव्यङ्ग्याभिधाने उदाहरिष्यन्ते ।

---

## साहित्यचूडामणिः

भूयो विभागमाह—तत्र चेति ।

अक्रमः व्याख्यातात् प्रकारादसंलक्ष्यक्रमः । अत्र ध्वनिगुणीभूतव्यङ्ग्यसङ्करशङ्कानिरासार्थमाह—भिन्न इति । भेदमेवोल्लेखयति—अलंकार्यतयेति ।

रसादेः कुत्रालङ्कार्यता अलंकारता च कुत्रेति विविनक्ति 'प्रधानतये'-ति । उदाहरणपृष्ठपरीक्षणीयस्य प्रमेयस्य ग्रन्थशय्यापूरणार्थमाह—'यथोदाहरिष्यते' इति । अलंकारतापक्षमुपक्षिपति—'अन्यत्रे'ति । यदाह—'प्रधानेऽन्यत्र वाक्यार्थे' इति । अलंकारो मान्थर्येण [प्रतीतेः] । 'समाहितादय इत्यादि'-पदेन कविभिः कल्पयिष्यमाणमन्यदनुमन्यते । अलंकारा इति । भावादीनामलंकार्याणामिति शेषः । उदाहरिष्यन्ते 'अपरस्याङ्गम्' [पञ्चमोल्लासारम्भे] इत्यत्र ॥ ३ ॥

## सुधासागरः

अलक्ष्यक्रमं विभजते—'तत्र रसभावे'-ति ।

अत्र रसभावतदाभासशान्त्यादिरिति वक्तव्ये भावग्रहणं रसशान्त्यादिप्रतिषेधार्थं व्यभिचारिपरञ्च । तथाहि—रसस्य विभावादिजीविताऽवधित्वेन तदपगम एव शान्तिर्वक्तव्या । न च तदनुपकृतो व्यञ्जनया प्रतिपाद्यते । नचाऽव्यक्तश्चमत्कुरुते इति रसशान्तिर्नोक्ता । रसोदयस्तु रसाऽभिव्यक्तिपर्यवसन्न एव, तस्य नित्यत्वात् । रससन्धिशबलते अप्यसम्भवदुक्तिके, रसानां विगलितवेद्यान्तरत्वात् ।

नापि स्थायिनां विभावाद्यसंवलने रसः । तथा तेषामनभिव्यक्तेः । तत्संवलने रसतापर्यवसानेन विगलितवेद्यान्तरत्वात् । अतएवोक्तं सारबोधिनीकारैः—अत्र भावशब्देन व्यभिचारिभाव एवोक्त इति बोध्यम् । रत्याद्यभावस्य शान्त्यादेरचर्वणीय-

तत्र रसस्वरूपमाह—

कारणान्यथ कार्याणि सहकारीणि यानि च ।
रत्यादेः स्थायिनो लोके तानि चेन्नाट्यकाव्ययोः ॥४॥

विभावा अनुभावास्तत् कथ्यन्ते व्यभिचारिणः ।
व्यक्तः स तैर्विभावाद्यैः स्थायी भावो रसः स्मृतः ॥५॥

---

## साहित्यचूडामणिः

अथ सर्वोत्तीर्णं रसध्वनिमालोचयितुमाह—रसस्वरूपमिति ।

कारणानीति । लोके दाम्पत्यादिव्यवहारे नाट्यकाव्ययोः दृश्यश्रव्ययोः । कविशक्त्या समर्प्यन्त इति चेत् तदा क्रमेण कारणानि विभावाः कार्याण्यनुभावाः सहकारीणि व्यभिचारिण इति कथ्यन्ते । एतैर्व्यक्तः न पुनरुत्पादितो ज्ञापितो वा स्थायी भावो रसः स्मृतः । नाट्यकाव्ययोरित्यत्र काव्यशब्दो गोबलीवर्दन्यायेन श्रव्यमेवाचष्टे । यथाहुः—

## सुधासागरः

त्वादिति । व्याख्यातञ्चैतदभिप्रेत्य काव्यप्रदीपकारैः—आदिशब्दात् भावोदय-भावसन्धि-भावशबलत्वानि । न चाऽऽभासवद्रसस्य शान्त्यादयः किं नोक्ताः । निरन्तरगृह्यमाणविभावाद्यवयवकस्य देशतः कालतश्चाऽपरिच्छिन्नस्य निरतिशयस्य वेद्यान्तरसम्पर्कशून्यस्य तदभावात् । आभासत्वं तु तिर्यगाद्यधिकरणतयाऽविरुद्धमिति । तदेतत्सर्वमभिप्रेत्य श्रीवाग्देवतावतार आह—आदिग्रहणाद्भावोदय-भावसन्धिभावशबलत्वानीति ॥

ननु रसादयो रसवदलङ्काराः, ते गुणीभूताभिधानेऽभिधातुमर्हा न तु ध्वन्य-भिधान इत्यत आह—भिन्न इति । तथा च रसादीनां यत्राऽपराङ्गता तत्र गुणीभूत-व्यङ्ग्यत्वमन्यत्र प्रधानतया ध्वनित्वमित्युभयत्राऽभिधानमविरुद्धमिति भावः । उक्तञ्च—

प्रधानेऽन्यत्र वाक्यार्थे यत्राऽङ्गन्तु रसादयः ।
काव्ये तस्मिन्नलङ्कारो रसादिरिति मे मतिः ॥ [ध्व० २.५] ॥ इति ।

अतएव काव्यप्रदीपकारैर्व्याख्यातम् 'यत्र प्रधानं रसादिस्तत्र ध्वनिः, यत्र त्वप्रधानं तत्राऽलङ्कार इति भाव इति । तदेतदाह वृत्तिकारः—प्रधानतया यत्रेत्यादि ।

तत्राऽसंलक्ष्यक्रमव्यङ्ग्यविषये रसस्वरूपमाह—'कारणान्ये'-ति ।

अयमर्थः । अथशब्दः समुच्चये । कारणानि प्रमदेन्दूदयपवनवसन्ततुकुसुम-समीरणसुगन्धादीनि कारकोद्दीपकरूपाणि । कार्याणि—'स्वेदः स्तम्भोऽथ रोमाञ्चः

## साहित्यचूडामणिः

अनुभावविभावानां वर्णना काव्यमुच्यते।
तेषामेव प्रयोगस्तु नाट्यं गीतादिरञ्जितः॥ [व्य० वि० १] इति।

यं कान्तादिमालम्ब्य रत्यादिश्चित्तवृत्तिविशेष उन्मिषति तद् आलम्बनं विभावः। लोके हि कारणमेवाभिधीयते न विभावः। यथाह—'विभाव इति विज्ञानार्थे' इति। येन वसन्तेन्दूदयादिना सोऽनुबध्यते तदुद्दीपनम्। य उत्पाद्यते रत्यादिः स स्थायी। यथोक्तम्—

विरुद्धैरविरुद्धैर्वा भावैर्विच्छिद्यते न यः।
आत्मभावं नयत्यन्यान् स स्थायी लवणाकरः॥ [दशरू० ४.३४] इति।

## सुधासागरः

स्वरभङ्गोऽथ वेपथुः। वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विका मताः' इति। वाङ्मनोबुद्धिशरीराऽऽरम्भरूपाणि च कटाक्षभुजाक्षेपादीनि। सहकारीणि- तेषु जनयितव्येषूत्कण्ठादीनि। विभावा आलम्बनोद्दीपनरूपाः। चेत् यदेत्यर्थः। तत् तदेत्यर्थः।

यद्यप्युद्दीपकस्य स्थायिनि न कारणत्वं किन्तूत्पन्ने तस्मिन्नीषदुत्कर्षाधायकत्वरूपमुद्दीपकत्वन्तथाप्यनुद्दीपितोऽप्यजातप्राय एवेत्युद्दीपकत्वेऽपि कारकत्वोपचारात्तत्राऽपि विभावव्यवहारः। विभावनादिसंज्ञा च विभावादिव्यापारयोगात्। तद्यथा—वासनारूपतया स्थितान् रत्यादीन् स्थायिनो विभावयन्ति रसास्वादाङ्कुरयोग्यतां नयन्तीति विभावाः। अनुभावयन्ति च तानित्यनुभावाः। पोषकतया विशेषेणाऽभितः कार्ये स्थायिनं चारयन्ति विशेषेणाऽऽभिमुख्येन चरन्ति वा व्यभिचारिणः।' व्याख्यातं च सारबोधिनीकारैः—अथ विभावः,

बहवोऽर्था विभाव्यन्ते वागङ्गाऽभिनयाश्रिताः।
अनेन यस्मात्तेनाऽयं विभावः परिकीर्त्तितः॥ [ना० शा० ७]
आलम्बनन्तु स रसो यमालम्ब्य प्रवर्त्तते।
उद्दीप्यते रसो येन स चोद्दीपनसंज्ञकः॥

अथ चाऽनुभावाः—

स्थायिभावाननुभावयन्तः कटाक्षभुजक्षेपादयो रसपोषका अनुभावाः। अतएव भरतः—'अनुभावो विकारस्तु भावसंसूचनात्मकः' इति। [दशरू० ४.३] सात्त्विका अप्यष्टौ स्तम्भादयोऽनुभावरूपा एवेति न पृथगुक्ताः।

अथ व्यभिचारिणः,—

विशेषादाभिमुख्येन चरन्तो व्यभिचारिणः।
स्थायिन्युन्मग्ननिर्मग्नाः कल्लोला इव वारिधौ॥ [दशरू० ४.७]

## साहित्यचूडामणिः

तत्र स्रक्सूत्रकल्पे यः सहकारितयोदेति स व्यभिचारी विविधमाभिमुख्येन चरतीति। स चोदयस्थित्यपायत्रिधर्मकः। सति स्थायिनि ये कटाक्षादयो विकाराः तेऽनुभावाः। यदाह 'यदयमनुभावयतीति वागङ्गाहार्यसत्त्वकृतोऽभिनयः तस्मादनुभाव' इति। लौकिकरसापेक्षया कार्यत्वमनुभावानाम्। तान्त्रिके तु रसे व्यञ्जकतया कारणकोटिप्रवेश एव। अनुभावविशेषा एवाष्टौ सात्त्विकाः। सत्त्वं मनः तत्प्रभवम्, यदवहितचित्तत्वादुत्पद्यते। यथोक्तम्—

पृथग्भावा भवन्त्येतेऽनुभावत्वेऽपि सात्त्विकाः।
सत्त्वादेव समुत्पत्तेस्तच्च तद्भावभावनम्॥ [दश० ४.४] इति।

विभावकारणादीनां काव्यलोकविषयतया विषयभेदः।

तदुक्तम्—

कविशक्त्यर्पिता भावास्तन्मयीभावयुक्तितः।
यथा स्फुरन्त्यमी काव्यान्न तथाध्यक्षतः किल॥ [व्य० वि० १] इति।

## सुधासागरः

वस्तुतो विभावनाऽनुभावनसञ्चारणात्मकव्यापारत्रयत्वमेव विभावादित्वम्। तेषां व्यापाराणां रत्यादेरीषत्प्रकाशः स्फुटतरप्रकाशः स्फुटतमप्रकाशः फलमिति। अतएवाऽलौकिक-विभावनादिव्यापारवत्त्वादिति वदद्भिः श्रीवाग्देवतावतारैर्वृत्तिकारैः विभावनाऽनुभावनसञ्चारणव्यापारवत्त्वं विभावाऽनुभावसञ्चारिलक्षणं कटाक्षितमिति ध्येयम्।

व्यक्त इति। व्यक्तिश्चर्वणेति पर्यायः। सा च विशेषणम्। तथा च व्यक्तिविशिष्ट एव स्थायी रसः। नन्वन्तःकरणवृत्तिविशेषस्य रत्यादेरभिव्यक्तावेव कथं परमानन्दस्वरूपरसोद्बोध इति चेत् उच्यते।

काव्ये हि विभावादिभिर्व्यज्यते स्थायी। तस्यां चाभिव्यक्तावन्तःकरणवृत्तिरूपायां चैतन्याऽऽनन्दस्वरूप आत्माऽपि भासते। वेदान्तिनये सर्वस्मिन्नेव ज्ञाने आत्मभाननैयत्यात्। आत्मनो योगघटिताया आत्मभानसामग्र्याः सत्त्वात्। सर्वस्यैव कल्पितत्वेन रज्जे इदं रजतमित्यत्रेव आत्मचैतन्यरूपाऽधिष्ठानानुबोधसम्भवाच्च। अज्ञातस्याऽऽत्मनो भानं विना प्रत्यक्षादीनां प्रामाण्याऽनुपपत्तेश्च। तथाहि—अज्ञातज्ञापकत्वं हि प्रामाण्यम्। अज्ञानविषयश्चाऽऽत्मैव तथा चाऽऽत्मा चेन्न भासेत कथं तेषां प्रामाण्यमिति। तथा च काव्यदर्शनश्रवणमहिम्ना उक्तयाऽभिव्यक्त्या चैतन्यस्याऽऽनन्दांशे आवरणभङ्गोऽपि क्रियते। तथा च रत्याद्यवच्छिन्नं चैतन्यमानन्दांशे भग्नावरणतयाऽऽनन्दरूपतया प्रकाशमानं रस इति निर्गलितोऽर्थ इति। आवरणन्त्वज्ञानमेव। ज्ञानान्तरे त्वानन्दांशे आवरणभङ्गाभावान्न रसोद्बोधः। अतएव वक्ष्यति चर्व्यमाणतैकप्राण इति। चर्वणा त्वानन्दांशाऽभिव्यक्तिः। न च कथं सैव ज्ञानान्तरे न भवतीति वाच्यम्। विभावादिज्ञानाभावात्। अतएव वक्ष्यति—विभावादिजीवितावधिरिति। अस्यां चाभिव्यक्तौ

उक्तं हि भरतेन—

'विभावाऽनुभाव-व्यभिचारि-संयोगाद् रसनिष्पत्तिरि'-ति। एतद् विवृण्वते—

१. विभावैर्ललनोद्यानादिभिरालम्बनोद्दीपनकारणै रत्यादिको भावो जनितः, अनुभावैः कटाक्षभुजाक्षेपप्रभृतिभिः कार्यैः प्रतीतियोग्यः कृतः, व्यभिचारिभिर्निर्वेदादिभिः सहकारिभिरुपचितो मुख्यया वृत्त्या रामादावनुकार्ये तद्रूपतानुसन्धानान्नर्त्तकेऽपि प्रतीयमानो रस इति भट्टलोल्लटप्रभृतयः।

---

## साहित्यचूडामणिः

अत्र भरतसूत्रं संवादयति—उक्तं चेति।

विभावानुभावेत्यादिसूत्रे संयोगनिष्पत्तिशब्दयोर्व्याख्यातृविप्रतिपत्तिं प्रकटयन्नादौ लोल्लटादीनां मतमुन्मीलयति विभावैरिति। आलम्बनं ललना पुरुषो वा। उद्यानमन्दानिला उद्दीपनम्। स्थायिनो विभावैः सह जन्यजनकभावः संयोगः। 'प्रतीतियोग्य' इति। अनुभावैः सह गम्यगमकभावः, तद्व्यतिरेके तस्यासत्कल्पत्वात्। योग्यत्वं स्थायिनो रसभावौचित्यम्। निर्वेदादिभिः वक्ष्यमाणैस्त्रयस्त्रिंशद्व्यभिचारिभिरुपचितः। व्यभिचारिभिः सह स्थायिन उपचाय्योपचायकभावः सम्बन्धः। एवं विभावादित्रये तस्य त्रयः संयोगाः। रसप्रतिष्ठास्थानमाह—'मुख्यतये'-ति। 'अवस्थानुकृतिर्नाट्यमिति' रामादावभिनेतव्ये रसो मुख्यया वृत्त्या प्रतीयते। सादृश्यमात्रभीवितया तु गौण्या नटेऽपीत्याह—'तद्रूपते'-ति।

## सुधासागरः

विभावादिसम्भेदोऽप्यावश्यकः। लिङ्गोपहितलिङ्गिभानवदिति। अतएवोक्तम्—'स्वादः काव्यार्थसम्भेदो ब्रह्मानन्दसमुद्भवः' इति। पानकरसन्यायेन इत्यादि वक्ष्यति च श्रीवाग्देवतावतारः स्वयमपीति दिक्।

एवञ्च स्थायी न रसः किन्तु ब्रह्मैव। अन्यथा न कार्य इत्यादि ग्रन्थविरोधादित्यादिप्रलापमात्रमनादेयम्। विशेषान्तरमपि वक्ष्यामः।

केचित्तु विभावादिभिर्भावनायां प्रवर्त्तिते सामाजिके बाह्यविषयेभ्यो व्यावृत्ते मनसि ज्ञानसुखात्मको रत्यादिः स्वयं प्रकाश्यते। चिदानन्दस्वरूपब्रह्मप्रकाशेऽविद्यायास्तत्त्वज्ञानस्येव बाह्यविषयसम्बन्धस्याऽपगमाय विभावादेरपेक्षणीयत्वादिति वदन्ति। ते पुनरालङ्कारिकसर्वस्वायितं श्रीवाग्देवतावताराद्दृतं रसस्य व्यङ्ग्यत्वं समुद्रमध्ये क्षिपन्तो वन्दनीया एव।

स तैरिति। यस्य यानि कारणादीनि स तैस्तज्जातीयैरित्यर्थः।

स्थायीति। विरुद्धैरविरुद्धैर्वा भावैरतिरस्कृतप्रवाहो भावः स्थायी। यदुक्तम्—

## सुधासागरः

विरुद्धा अविरुद्धा वा यं तिरोधातुमक्षमाः।
आनन्दाऽङ्कुरकन्दोऽसौ भावः स्थायिपदास्पदम्॥ इति।

श्रीवत्सलाञ्छनभट्टाचार्यैरपि व्याख्यातम्—'आप्रबन्धं विरुद्धाऽविरुद्धभावैरविच्छिन्नश्चित्तवृत्तिसन्तानविशेषः स्थायीत्यर्थः। न च तस्याऽऽशुविनाशित्वेन कथं स्थायित्वमिति वाच्यम्। वासनारूपतया सूक्ष्मरूपेणाऽवस्थानसम्भवादिति।

अन्येऽप्याहुः—

विरुद्धैरविरुद्धैर्वा भावैर्विच्छिद्यते न यः।
आत्मभावं नयत्यन्यान् स स्थायी लवणाकरः॥ इति।

रविभट्टाचार्यैरप्युक्तम्—

चिरं चित्तेऽवतिष्ठन्ते सम्बध्यन्तेऽनुबन्धिभिः।
रसत्वं ये प्रपद्यन्ते प्रसिद्धाः स्थायिनोऽत्र ते॥ इति।

भावत्वन्तु वर्णनीयमयीभवनयोग्यव्यापारविषयत्वमिति प्रतीमः।

सूत्रे भरतसम्मतिमाह—'उक्तंहि भरतेने'-ति।

एतदित्यादि। विवृण्वते[1]—भट्टलोल्लट—श्रीशङ्कुक—भट्टनायक—अभिनवगोपानलीगुप्तपादाश्चत्वारो भरतटीकाकारा इति सम्बन्धः। अत्रेदं बोध्यम्। चतुर्णां क्रमेणोत्पत्तिरनुमितिर्भुक्तिरभिव्यक्तिश्चेति मीमांसान्यायसांख्यालङ्कारमतप्रधानाश्चत्वारः पक्षाः तत्राऽऽद्यं प्रदर्शयति—विभावैरित्यादि। स्थायिनां विभावेनोत्पाद्योत्पादकभावरूपादनुभावेन गम्यगमकभावरूपाद् व्यभिचारिणा पोष्यपोषकभावरूपात् सम्बन्धाद्रसस्य निष्पत्तिरुत्पत्तिर्ज्ञप्तिः पुष्टिश्चेत्यर्थः। तथाहि—ललनादिभिरालम्बनविभावैः स्थायी रत्यादिको जनितः, उद्यानादिभिरुद्दीपनविभावैरुद्दीपितः, अनुभावैः कटाक्षभुजक्षेपणादिभिः प्रतीतियोग्यः कृतः व्यभिचारिभिरुत्कण्ठादिभिः परिपोषितो रामादावनुकार्ये रसः। नटे तत्तुल्यरूपताऽनुसन्धानवशादारोप्यमाणः सामाजिकानां चमत्कारहेतुरिति भट्टलोल्लटानुयायिनामाशयः।

---

1. क. नाट्यशास्त्रव्याख्यातॄणामत्रोल्लेख इति भट्टनायकात् पूर्वमभिव्यक्तिवादाय प्रसक्तस्यापि नात्रानन्दवर्धनस्योलेखः, तस्यातद्व्याख्यातृत्वात्।

ख. इदमत्र निध्येयम्—रसो हि द्विस्कन्धविचारः। तत्रैकः प्रमेयस्कन्धः, अपरश्चानुभूतिस्कन्धः। प्रमेयं च प्रकृते काव्यशरीरं नाट्यशरीरं वा सपरिकरम्। तत्र लोल्लटः प्रमेयविचारमात्रसीमितमतः। ततश्चात्र 'नटादीनां प्रत्यक्षं, विविधं चेष्टमानेषु च तेषु रामाद्यारोपेण रामादिगतानां चित्तवृत्तीनां प्रतीतिरि'-त्येतावन्मात्रगात्रो रसविचारः। एवं च 'प्रतीयमानः स्थायी रसः, तस्य च काव्ये बुद्धितन्त्रमात्रत्वम्, वस्तुतन्त्रत्वं तु लोक एवेति लोल्लटमतनिगर्वः। इत्थंच नास्त्यर्थः सामाजिकानुभवेन लोल्लटस्य प्रमेयपरमे रसविचारे। तत्रात्र प्राचां रसवदलंकारवद् रसस्थितिः काव्ये नाट्ये च।

२. राम एवायम् अयमेव राम इति, न रामोऽयमित्यौत्तरकालिके बाधे रामोऽयमिति, रामः स्याद् वा न वाऽयमिति, रामसदृशोऽयमिति च सम्यङ्मिथ्यासंशयसादृश्यप्रतीतिभ्यो विलक्षणया चित्रतुरगादिन्यायेन रामोऽयमिति प्रतिपत्त्या ग्राह्ये नटे—

सेयं ममाङ्गेषु सुधारसच्छटा सुपूरकर्पूरशलाकिका दृशोः ।
मनोरथश्रीर्मनसः शरीरिणी प्राणेश्वरी लोचनगोचरं गता ॥
दैवादहमद्य तया चपलायतनेत्रया वियुक्तश्च ।
अविरलविलोलजलदः कालः समुपागतश्चायम् ॥

इत्यादिकाव्यानुसन्धानबलाच्छिक्षाभ्यासनिर्वर्त्तितस्वकार्यप्रकटनेन च नटेनैव प्रकाशितैः कारणकार्यसहकारिभिः कृत्रिमैरपि तथाऽनभिमन्यमानैर्विभावादिशब्दव्यपदेश्यैः 'संयोगाद्' गम्यगमकभावरूपाद् अनुमीयमानोऽपि

**साहित्यचूडामणिः**

अथ शङ्कुकमतमभिधत्ते—'राम एवे'ति । अयोगान्ययोगव्यवच्छेदाभ्यां

**सुधासागरः**

अत्रेदं रहस्यम् । लौकिकसामग्रीतो रामादावेव रसस्य निष्पत्तिः । सा चैतन्मते त्रिविधा—विभावैरुत्पत्तिरनुभावैर्ज्ञप्तिर्व्यभिचारिभिः पुष्टिरित्येवं भेदात् । स रसो नटादौ सादृश्यानुसन्धानवशात् सामाजिकैरारोप्यमाणश्चमत्करोतीति । न पुनरिदं रमणीयम् । सामाजिकेषु तदभावे तत्र चमत्काराऽनुभवविरोधात् । नच तज्ज्ञानमेव चमत्कारहेतु । लौकिकश्रृङ्गारादिदर्शनेनाऽपि चमत्कारप्रसङ्गात् । नचाऽनुभावादिविज्ञानबलाऽऽयात आरोपस्तथा न तु साक्षात्कारमात्रमिति वाच्यम्, चन्दनसुखादौ वैपरीत्यदर्शनात् । अन्यथैवोपपत्त्या तादृशकल्पनायां मानाभावाच्च ।

तदेतत्सर्वमभिप्रेत्य स्वरूपव्याक्रिययैवैतत्पक्षं निराकृत्य द्वितीयमनुमितिपक्षं दर्शयन् श्रीशङ्कुकव्याख्यानमवतारयति—राम एवाऽयमित्यादिना ।

→श्रीशङ्कुक-भट्टनायकाभिनवगुप्ताः पुनरनुभूतिस्कन्धपरमाः । तत्र 'प्रतीयते धातुरिवेहितं फलैरि'-त्यादिप्रयोगाल्लोल्लटस्य प्रतीतिशब्दमनुमितिपरत्वेन नयन् 'रामाद्यनुकार्य-स्थाय्यनुमितिरेव रसानुभूति'रिति शङ्कुकः । अनुमानप्रक्रिया चास्य-'चित्रतुरगन्यायेन रामाद्यनुकार्यरूपतया गृहीतस्य नटस्य पक्षता, तच्चेष्टानां हेतुत्वम्, साध्यत्वं च रत्यादीनां स्थायिनामि'-ति । एवं च 'सामाजिककर्तृका रामादिगत-रत्याद्यनुमितिरेव रस' इति शङ्कुकमतस्य सर्वस्वम् । लोकस्थितावन्यथात्वेऽपि काव्ये नाट्ये वा वस्तुनः सौन्दर्यादनुमीयमानस्याप्यनुभूतिरिति चात्र प्रौढिवादः ।

ध्वनिकारः पुना 'रसस्य सामाजिकगतत्वेनाभिव्यक्तिरि'-ति मिताक्षरामक्षररचनामुपजीव्य रसस्य निष्पत्तिप्रक्रियामुपेक्षते ।→

**वस्तुसौन्दर्यबलाद् रसनीयत्वेनान्यानुमीयमानविलक्षणः स्थायित्वेन संभाव्यमानो रत्यादिर्भावस्तत्राऽसन्नपि सामाजिकानां वासनया चर्व्यमाणो रस इति श्रीशङ्कुकः ।**

---

### साहित्यचूडामणिः

प्रतीतिगतं सम्यक्त्वमुपपाद्यते । भ्रान्तिरपि हि रामोऽयमित्येव प्रवर्तते । तस्याः प्रमासकाशादयं विशेषः यदुत्तरवेलायां नायं राम इति बाधोदय इत्यभिसन्धायाह—'न रामोऽयमि'-ति । रामः स्याद् वा नवेत्ययं कोटिद्वयावगाढः सन्देहः । रामसदृशोऽयमिति सादृश्यज्ञानं स्पष्टम् । इत्थं सम्यङ्मिथ्यादिविलक्षणया प्रतिपत्त्या नटे ग्राह्ये वर्तमाने । ताटस्थ्यं रसस्य सूचयितुं सप्तमीप्रयोगः । अत्र निदर्शनमाह—चित्रेति । आलेख्यवर्त्ती यस्तुरगो मातङ्गो वा तत्प्रतीतिरलौकिक्येव । नहि सा मिथ्या भवितुमर्हति औत्तरकालिकस्य बाधस्याभावात् । सा हि पूर्वोत्तरकालयोरेकरूपा । नापि संशयः अवधृत्यैव प्रतीत्युदयात् । न च सादृश्यसंवित्, सत्यचित्रतुरगयोर्गोगवययोरिव भूयोवयवसाम्ययोगाभावात् । तेन यथा तत्प्रतीतिः प्रतीत्यन्तरविलक्षणा एवं नटे राम-प्रतीतिः । उक्तं च,

प्रतिभाति न सन्देहो न तत्त्वं न विपर्ययः ।
धीरसवायमित्यस्ति नासावेवायमित्यपि ॥
विरुद्धबुद्ध्यसंभेदादविवेचितविक्रियः ।
युक्त्या पर्यनुयुज्येत स्फुरन्ननुभवः कथम् ॥ [ इति ] ।

तत्र श्रव्यस्य वाचिकाभिनयतया सहकर्तृतां प्रकाशयन् संभोगविप्रलम्भभिन्नशृङ्गारमुदाहरति—सेयमति । संयोगात् त्रयाणामप्येकरूपाद् गम्यगमकभावात् । ननु यदि विभावादयो नर्तकेनैव निर्वर्त्यन्ते, न तु रामादिना, नाट्यमण्डपे तस्याभावात्, तत् कथमत्र रामरूपतानुसन्धानमिति चेत् तत्राह—'कृत्रिमैरपी'-ति । अभिमाननिबन्धनत्वात् सर्वव्यवहारस्य । गम्यगमकभावश्चायमनुमान एव विश्राम्यतीत्याह—'अनुमीयमान'-इति । नन्वनुमागोचरत्वे पर्वतनितम्बसंभिन्न-वीतिहोत्र-साधारण्यादस्य सारस्याकारचमत्कारकारिता नोपपद्यत इत्यत्राह—वस्त्विति । सारस्यवैरस्यादिप्रयोजकत्वमनुमीयमानवस्तुस्वभावायत्तं न पुनरनुमानाधीनम् । अत एवान्यस्मादनुमीयमानादहृदयङ्गमाद् विलक्षणः । तत्रासन्नपि नटेऽविद्यमानोऽपि । चर्वणाबलेन लब्धसत्ताकः स्थायी भावो रसः । सामाजिकानामिति सम्बन्धमात्रे षष्ठी । इत्थं च रसस्य न क्वचिन्नियमेनावस्थानं यावदस्य

### सुधासागरः

अयं भावः । श्रीशङ्कुकमते स्थायिनो विभावादिभिरनुमाप्यानुमापकभावरूपात् सम्बन्धाद् रसस्य निष्पत्तिरनुमितिरित्यर्थः । तथा हि—नियमविषया धीः सम्यग्बुद्धिः, यथा राम एवाऽयमयमेव राम इत्ययोगाऽन्ययोगव्यवच्छेदविषये । अनन्तरावतीर्णविपरीतप्रतीतिर्मिथ्याप्रतीतिः । यथा—न रामोऽयमित्यौत्तरकालिके

## साहित्यचूडामणिः

सर्वतोमुखस्फुरत्ताकस्य ताटस्थ्यमेव पक्षः किमधिकरणविशेषगवेषणक्लेशेन। सामाजिकैश्चर्व्यमाण इत्युक्तौ तेषां चवर्णक्रियां प्रति कर्तृत्वे नैयत्यात् सामाजिकेषु चर्वयितृषु चर्व्यमाणो रस इत्युक्तं स्यात्। तच्चानिष्टम्।

## सुधासागरः

बाधे। उभयकोट्यवलम्बिनी प्रतीतिः संशयप्रतीतिः। यथा—रामः स्याद्वा न वाऽयमिति संशयविषये। तुल्यादिपदघटिता प्रतीतिः सादृश्यप्रतीतिः। यथा—रामसदृशोऽयमिति सादृश्यविषये। चित्रतुरगादिन्यायेन इत्यादि। यथा—चित्रे तुरगोऽयमिति पूर्वोक्तप्रतीतिचतुष्टयवैलक्षण्येन प्रतीतिरुदेति तथा रामत्वप्रकारकपुरोवर्त्तिमात्रविशेष्यकप्रतीत्या विषयीकृते नटे इति पक्षोक्तिः, अस्याऽग्रिमेणाऽनुमीयमानोऽपीत्यनेनान्वयः इति। पूर्वमेव रोमाञ्चाद्याविर्भावेण गुरुशिक्षामासाद्य कृताऽतिशयिताऽभ्यासेन नटेन। सेयमित्यादि। इन्द्रवंशाछन्दः। 'स्यादिन्द्रवंशा ततजैरसंयुता' इति लक्षणात्। अयमर्थः। सेयं प्राणेश्वरी मम मनसः सकाशात् लोचनगोचरं गतेति सम्बन्धः। सा यदनुध्यानसन्तानेनैतावान् कालो गमितः। गोचरमिति भावप्रधाननिर्देशाद्गोचरत्वमित्यर्थः। पूर्वं मनस्येवाऽऽसीत् अधुना बहिरपि दृष्टेत्यर्थः। कीदृशी? अङ्गेषु, नैकत्राऽङ्गे—सुधारसस्याऽमृतसारस्य छटा वृष्टिः, परिरम्भेण सन्तापशान्त्या सौहित्योत्पादनात्; दृशोरिति सप्तमीद्विवचनम्, शोभनः पूरो द्रवो यस्य तथाभूतस्य कर्पूरस्य शलाकिका अञ्जनतूलिका, अतिशयिताऽऽनन्दहेतुत्वात्। शरीरिणी मूर्तिमती। मनोरथस्य श्रीः संपत्तिः। केचित्तु मनसः शरीरिणी मनोनिर्मितशरीरेत्याहुः। परिरम्भस्य चरमत्वेऽपि प्राधान्यात् प्रागुपादानम्। भ्रान्तिमानलङ्कारः।

इत्थं सम्भोगमुक्त्वा विप्रलम्भमाह—दैवादहमित्यादि। अद्याऽहम्। तया—अनुभवैकवेद्यसमागमसुखया। चपले चञ्चले आयते दीर्घे च नेत्रे यस्यास्तथाभूतया। आगमनसमये कातरदृष्टिदर्शनात् पुरःस्फूर्त्तिकत्वेन तन्मात्रप्रकर्षोक्तिः। वियुक्तश्च अभूवमिति शेषः। अविरला निबिडाः विलोलाः सर्वदिक्सञ्चारिणो जलदा यत्र एवम्भूतोऽयं दृश्यमानप्रकर्षः कालः समयः स एव कालोऽयम् इति श्लेषमूलाऽभेदाऽध्यवसानम्। सम्यक् प्रतिदिनोपचीयमानः उपागतश्च। प्रियवियोगाऽप्रियसंयोगयोरेककालतारूपः समुच्चयाऽलङ्कारः। इत्यादिवाक्यार्थानुसन्धानबलादालम्बनोद्दीपनव्यक्तौ तदनुगुणस्य रोमाञ्चादेर्दर्शनीयस्याऽऽविर्भावनेन व्यञ्जनीयस्योत्कण्ठादेस्तत्कार्यप्रकटनेन च प्रकाशनात्। अथ तैः कृत्रिमत्वेनाऽतल्लिङ्गैरपि कृत्रिमत्वेनाऽज्ञानात् स्थायी रत्यादिरनुमीयते। सैव चाऽनुमितिश्चमत्काररूपा चर्वणा। अतस्तया विषयीक्रियमाणः स्थायी रस इत्युच्यते। चर्वणा च सामाजिकानामिति तेष्वेव रस इति व्यवहारः। अनुमानप्रयोगश्चैवम्। रामोऽयं सीताविषयकरत्यादिमान् सीताद्यात्मकविभावादिसम्बन्धित्वात् सीताविषयककटाक्षादिमत्त्वाद् वा, यन्नैवं तन्नैवम्, यथाऽहमिति। अस्मिन्कल्पे निरुक्ताऽनुमितिरूपा चर्वणा सामाजिकनिष्ठा चमत्कारकारिणी रस इति फलितम्।

**३. न ताटस्थ्येन नात्मगतत्वेन रसः प्रतीयते नोत्पद्यते नाभिव्यज्यते, अपि तु काव्ये नाट्ये चाभिधातो द्वितीयेन विभावादिसाधारणीकरणात्मना भावकत्वव्यापारेण भाव्यमानः स्थायी सत्त्वोद्रेकप्रकाशानन्दमयसंविद्विश्रान्ति-सतत्त्वेन भोगेन भुज्यत इति भट्टनायकः[1] ।**

---

## साहित्यचूडामणिः

इदानीं भट्टनायकमर्यादां पर्यालोचयति—'न ताटस्थ्येने'-ति । अनन्तरवादिनिर्व्यूढो रसस्य ताटस्थ्यपक्षो नोपपद्यते असत्कल्पत्वप्रसङ्गात् तस्य । नात्मगतत्वेनेति । अनुकार्यो रामादिरनुकर्ता नटश्चात्रात्मानौ, सामाजिकानां स्वीकारात्[2] । अथवा प्रतीत्यपेक्षया त्रयोऽपि निषिध्यन्ते तद्गतत्वेन न प्रतीयते । किं बहुना रसो न केनचिदप्याकारेण प्रतीयते केवलं भाव्यत इति समर्थयिष्यमाणत्वात् । अस्तु तर्हि

## सुधासागरः

ननु साक्षात्कार एव सचमत्कारो नत्वनुमित्यादिरपि । अन्यथा सुखादावनुमीयमानेऽपि सा स्यात् । न स्यात्, वस्तुसौन्दर्यबलाद् रसनीयत्वेन निरतिशयसुखरूपत्वेनेति यावत्, स्थायिनामन्यानुमेयवैलक्षण्यात् । तथापि स्थायिनां नटेऽसत्त्वाद्बाधावतारेऽनुमितिरेव कथं स्यादिति चेन्न, अभावनिश्चयाभावात्, स्थायितया सम्भाव्यमानत्वादिति ।

एतदप्यहृदयग्राहि । यतः प्रत्यक्षमेव ज्ञानं सचमत्कारं नाऽनुमित्यादिरिति लोकप्रसिद्धिमवधूयाऽन्यथा कल्पने मानाभावः । सूत्रस्याऽन्यथैव योजनाऽसम्भवादित्याशयेनैतत्पक्षमपि पूर्ववदुपेक्ष्य तृतीयं भुक्तिपक्षं दर्शयन् भट्टनायकमतं अवतारयति न ताटस्थ्येन इत्यादिना ।

अयमाशयः । भट्टनायकमते न तावन्नटगतत्वेन रामगतत्वेन च रस उत्पद्यते । नचाऽनुमीयते, न सामाजिकगतत्वेन व्यज्यते । आद्यपक्षयोरुक्तदोषात् । अन्य-

---

→[1]भट्टनायकस्तु 'भुज्यमानः स्थायी रस' इति प्रतिपद्य 'किंगतोयं स्थायी, अनुकार्यगतो भोक्तृगतो वे'-ति कुतूहलमर्थापत्त्योपशमयन् विघ्नभूतपरकलत्रत्वागम्यात्वाद्यसाधारण्य-निराकरण-रूप-साधारणीकरण-द्वाराऽनुकार्यस्यैव स्थायिनः सामाजिकेनानुभूतिरि'-ति सुबहून् भ्रामयति । वस्तुतस्तु 'विभावत्वं नाम सामाजिकगतानां रत्यादीनामुन्मेषकत्वम् । तच्च दुष्यन्तरमणीत्वाद्यासाधारण्यनिराकरणेन साधारणीकृतानाम्, अत एव सामाजिकगम्यानामेव शकुन्तलादीनामिति साधारणीकरणस्य सामाजिकमनःसमवेतानामेव भावानामनुभवे सार्थकत्वं योगस्येव परमनःसमवेतानाम् । ततश्च सत्त्वोद्रेकप्रकाशानन्दमयसंविद्विश्रान्तिरूपेण भोगेन 'भुज्यमानः सामाजिकगत एव स्थायी रस'इति भट्टनायकमतनिष्कर्षः ।

[2] वस्तुतस्तु आत्मा रसिकः । तत्र रसस्य प्रतीत्यादीनामसंभवः । प्रतीतिरनुमितिः ।

## साहित्यचूडामणिः

तस्योत्पत्तिरित्याशङ्क्याह—'नोत्पद्यत' इति। अथाभिव्यज्यतामिति चेन्नेत्याह—नाभिव्यज्यत इति। का तर्हि गतिरित्यत्राह—'अपितु'-ति। भोगकृत्त्वरूपतृतीयापेक्षया अभिधातो द्वितीयेन। 'काव्य'इति। शास्त्रादिष्वभिधैवेत्यस्तु नाम। काव्यनाट्ययोस्तु भावकत्वं भोगकृत्त्वं च वैशेषिकम्। अथ किमेतद् भावकत्वं नामेत्यत्राह—'विभावादी'-ति। विभावानुभावादीनामनुकार्यापेक्षया पूर्वमसाधारणानां सहृदयेषु यत् साधारणीकरणं तत् स्वभावेन भाव्यमानः साधारणीक्रियमाणः स्थायी।

अथ भोगकृत्त्वमाह—'सत्त्वे'-ति। 'रजस्तमोभ्यामस्पृष्टं मनः सत्त्वमिहोच्यते' इति दुःखमोहवार्त्तानभिज्ञं चित्तं सत्त्वम्, तस्य य उद्रेक उच्चलत्ता तेन प्रकाशा प्रथमाना आनन्दप्रकृतिकायाः संविदो या विश्रान्तिः स्वप्रतिष्ठितत्वरूपं नैश्चिन्त्यं सैव सतत्त्वं स्वभावो यस्य तादृशेन भोगेन भुज्यते रैपोषं पुष्णातीतिवत्।

## सुधासागरः

गतेनाऽन्येषां चमत्काराभावाच्च। अन्त्ये सिद्धस्यैव व्यङ्ग्यत्वात्। रसस्य चाऽसिद्धत्वात्। सर्वेषामेवाऽभिव्यक्तिप्रसङ्गाच्च। तस्माद् विभावादिभिः संयोगाद् भोज्यभोजकभावसम्बन्धाद् रसस्य निष्पत्तिर्भुक्तिरिति सूत्रार्थः। नच भोगपक्षेऽपि दोषावकाशः। भोगस्याऽलौकिकत्वात्। तथाप्यन्यनिष्ठः स्थायी अन्निष्ठैरेव विभावादिभिः कथमन्येन भोक्तव्योऽतिप्रसङ्गादिति चेत् उच्यते—

शब्दात्मनः काव्यस्य त्रयो व्यापाराः। अभिधा भावकत्वं भोजकत्वं च। तत्राभिधा निरन्तरसान्तरार्थनिष्ठत्वेन द्विधा। भावकत्वं साधारणीकरणम्। तेन हि व्यापारेण विभावादयः स्थायी च साधारणीक्रियन्ते। साधारणीकरणञ्चैतदेव यत् सीतादिविशेषाणां कामिनीत्वादिसामान्येनोपस्थितिः। स्थाय्यनुभावादीनां च सम्बन्धिविशेषाऽनवच्छिन्नत्वेन। अन्त्यं व्यापारद्वयं नाट्येऽपि। एवं काव्ये नाट्ये द्वितीयव्यापारेण साधारणीकृतैर्विभावादिभिस्तृतीयव्यापारसाहित्येन तथाकृत एव स्थायी भुज्यते। भोगश्च सत्त्वगुणोद्रेकात् प्रकाशते य आनन्दस्तत्स्वरूपाऽनन्यालम्बना या संवित्तत्स्वरूपोऽलौकिकसुखानुभवविलक्षणः। सत्त्वरजस्तमसां गुणानामुद्रेकेण क्रमात् सुखदुःखमोहाः प्रकाश्यन्ते। उद्रेकश्च स्वेतरानभिभूयाऽवस्थानामिति।

तदपि न सम्यक्। एतादृशव्यापारद्वयकल्पने प्रमाणाभावात्। भुक्तेर्ज्ञानातिरेकस्याऽनुभवबाधितत्वेन निष्पीड्यमानस्य चाऽभिव्यक्तिपक्ष एव पर्यवसानात् इत्याशयेनैतत्पक्षमपि पूर्ववदुपहस्य श्रीमत् इत्यनेनाऽऽलङ्कारित्वं स्वाऽभिमतत्वं च सूचयन् गुप्तं नामाचार्यस्य प्रकाशयन्नेव चतुर्थं व्यक्तिपक्षं सिद्धान्तयितुं बालवलभीभुजङ्गाऽऽचार्यव्याख्यामवतारयति 'लोके प्रमदादिभिः कारणादिभिः' इत्यादिना।

४. लोके प्रमदादिभिः स्थाय्यनुमानेऽभ्यासपाटववतां काव्ये नाट्ये च तैरेव कारणत्वादिपरिहारेण विभावनादिव्यापारवत्त्वादलौकिक-विभावादिशब्दव्यवहार्य्यैर् 'ममैवैते, शत्रोरेवैते, तटस्थस्यैवैते ; न ममैवैते, न शत्रोरेवैते, न तटस्थस्यैवैते इति सम्बन्धविशेषस्वीकारपरिहारनियमानध्यवसायात् साधारण्येन प्रतीतैरभिव्यक्तः, सामाजिकानां वासनात्मतया स्थितः, स्थायी रत्यादिको नियतप्रमातृगतत्वेन स्थितोऽपि साधारणोपायबलात् तत्काल-विगलित-परिमितप्रमातृभाववशोन्मिषित-वेद्यान्तर-संपर्कशून्याऽपरिमितभावेन प्रमात्रा सकलसहृदयसंवादभाजा साधारण्येन स्वाकार इवाभिन्नोऽपि गोचरीकृतश्चर्व्यमाणतैकप्राणो विभावादिजीवितावधिः पानकरसन्यायेन चर्व्यमाणः, पुर इव परिस्फुरन्, हृदयमिव प्रविशन्, सर्वाङ्गीणमिवालिङ्गन्, अन्यत् सर्वमिव तिरोदधद्, ब्रह्मास्वादमिवानुभावयन्नलौकिकचमत्कारकारी शृङ्गारादिको रसः।

स च न कार्यः, विभावादिविनाशेऽपि तस्य संभवप्रसङ्गाद् ; नापि ज्ञाप्यः, सिद्धस्य तस्यासंभवात्, अपि तु विभावादिभिर्व्यञ्जितश्चर्वणीयः। कारकज्ञापकाभ्यामन्यत् क्व दृष्टमिति चेद्, न क्वचिद् दृष्टमित्यलौकिकत्वसिद्धेर्भूषणमेतन्न दूषणम्।

चर्वणानिष्पत्त्या तस्य निष्पत्तिरुपचरितेति कार्योऽप्युच्यताम्। लौकिकप्रत्यक्षादि-प्रमाणताटस्थ्यावबोधशालि-मितयोगिज्ञान-वेद्यान्तरसंस्पर्श-रहित-स्वात्ममात्रपर्यवसित-परिमितेतर—योगि--संवेदन-विलक्षणलोकोत्तरस्वसंवेदनगोचर इति प्रत्येयोऽप्यभिधीयताम्।

तद्ग्राहकं च न निर्विकल्पकम्, विभावादिपरामर्शप्रधानत्वात्। नापि सविकल्पकम्, चर्व्यमाणस्यालौकिकानन्दमयस्य स्वसंवेदनसिद्धत्वात्। उभयाभावस्वरूपस्य चोभयात्मकत्वमपि पूर्ववल्लोकोत्तरतामेव गमयति न तु विरोधमिति श्रीमदाचार्याभिनवगुप्तपादाः।

---

→लोल्लटस्य प्रमेयपक्षः शङ्कुकस्यानुमितिपक्षश्च साधनात्मा प्रक्रियापक्षः, आनन्दवर्धनस्याभिव्यक्तिपक्षो भट्टनायकस्य भुक्तिपक्षश्च साध्यात्माऽनुभूतिपक्षः। तत्रानन्दवर्धनस्याभिव्यक्तिवाद एव श्रेयानिति तु समन्वयनदीष्णोऽभिनवगुप्तः।→

## साहित्यचूडामणिः

अथाभिनवगुप्तसरणिमनुसरति—'लोक'-इति। लौकिकी व्युत्पत्तिरनुमानादिसहकारिणी रसचर्वणाया रसिकस्याधिष्ठानभूता केवलं सत्तयोपयोगिनी न तु तादात्विकसमावेशानुप्रविष्टेति प्रकटयति—स्थायीति। स्थायिनोऽनुमानाभ्यासे यत् पाटवं व्याप्तिस्मरणादौ निर्विलम्बता तद्वतां सहृदयानाम्। एतेनानुमानपक्षस्य केवलं तावत्युपयोग इत्युक्तं भवति। तैरेव प्रमदादिभिः कारणादिभिरेव कारणत्वादिपरिहारेण लौकिकस्वभावव्युदासेन विभावनमनुभावनं विविधमभितश्चरणं चेति ये व्यापाराः तद्वत्त्वाद् अलौकिकेन तान्त्रिकैकपरिगृहीतेन विभावादिशब्देन व्यपदेश्यैः सामाजिकहृदयेषु वासनानुस्यूतत्वादकृत्रिमैः सत्यतया स्फुरद्भिरिति भावः। संबन्धिविशेषा ये शत्रुमित्रादयः तेषामुपादाने परित्यागे च यो नियमः तस्यानध्यवसायाद् अनिश्चयात्। सम्बन्धिनश्च संक्षेपात् त्रिधा—स्वीयः शत्रुरुदासीनश्चेति, ये ममेत्यादिना निर्दिश्यन्ते। तत्र भावरूपमसाधारणत्रयं स्वीकारणौचित्यात्,

## सुधासागरः

इदमत्र रहस्यम्। पुरा किल काचिद्वलभी पठतां बहूनां ब्राह्मणबालानामध्ययनशालाऽऽसीत्। तत्र पठन् कश्चिद् गौडबालोऽतिसौबुद्ध्यान्मुखरत्वाच्च निखिलबालानां भयप्रदत्वेन बालवलभीभुजङ्ग इति गुरुणा व्यपदिष्टः। स चाऽऽचार्यतामुपगत इति सकलरहस्याभिज्ञः श्रीवाग्देवतावतारो गूढं तन्नामाऽभिनवगोपानसीगुप्तपाद इति वैदग्ध्यमुखेनाऽभिव्यनक्तीति। अत एव मधुमत्यां रविभट्टाचार्यैरुक्तम्। अभिनवपदेन ध्वनिटीकाकर्तृपुराणगुप्तपादलिखनविरोधोऽत्र न देय इति।

प्रकृतग्रन्थस्याऽयमाशयः। स्थायिनां विभावादिभिः समं व्यङ्ग्यव्यञ्जकभावरूपात् सम्बन्धाद् विभावादीनामेव परस्परं संयोगान्मिलनाद्रसस्य निष्पत्तिः। तथा हि—

---

→अत्र विचारे साधारण्यं नाम 'संबन्धविशेषस्वीकारपरिहारनियमानवगमः'। तच्च क्रमेण शकुन्तलादिः, सामाजिकः, सामाजिकचित्तवृत्तिजातं चेत्येतत्त्रितय-निष्ठम्। एवं च विगलितदुष्यन्तरमणीत्वाद्यसाधारणधर्मा रत्यादिमत्त्वेन च गृहीतः शकुन्तलादिरेव विभावः। तेन ह्यनुकार्यगतत्वेन प्रतीयमानानां रत्यादीनां विभावतावच्छेदककोटावेव निवेशः। अभिव्यक्तिश्च सामाजिकानां हृदयेषु वासनात्मतया स्थितानामेव रत्यादीनाम्। एवं चाभिनवगुप्तमते सामाजिकरत्यादिरेव काव्यरसः। काव्यं च नाट्यादभिन्नमिति स एव नाट्यरसः।

इत्थं लोल्लटो दण्ड्याद्यभिमत-रसवदलंकारन्यायेन नाट्यप्रयोगमात्रं, शङ्कुकस्तेन सह चित्रतुरगन्यायेन सामाजिकस्य संबन्धमात्रम्, भट्टनायकश्च त्रैगुण्यन्यायेन सामाजिकस्यानुभूतिमपि विसिनोति रसविचारे। अभिनवगुप्तः पुनस्तानेतान् सर्वानपि वादान् सोपानक्रमेण शरणीकृत्य समारोहतितरां स्वाभिमतं रसाभिव्यक्तिवादसौधम्। तदुक्तमेतेनाभिनवभारत्याम्—'तस्मात् सतामत्र न दूषितानि मतानि तान्येव तु शोधितानी-'ति॥

## साहित्यचूडामणिः

निषेधाकारं तु परिहारानुगुण्येन। इत्थं साधारण्येन प्रतीतैः। अभिव्यक्त इति सर्वत्र व्यङ्ग्यव्यञ्जकभाव एव संयोगो नान्यः कश्चित्। सामाजिकानां वासनात्मकतया संस्काराकारतया। स्थित इति स्थायिशब्दनिर्वचनम्। स्थातुं शीलमस्येति स्थायी।

नियतोऽनुकार्यरूपः प्रमाता तद्गतत्वेन स्थितोऽपि साधारण्यं साधारणमिति धर्मप्रधानो निर्देशः साधारणीकरणमिति यावत्। तत्र य उपाय आङ्गिकादिचतुर्विधाभिनयानुप्राणनं नाट्यं तद्रूपाद् बलात् सामर्थ्यात्। रसः सामाजिकैकवर्तीत्यत आह 'तत्काले'-ति। तस्मिन् काले नाट्यानुभूतिवेलायां विगलिता त्रुटिता या परिमितप्रमातृता परिच्छिन्नप्रमातृभावः तद्वशेनोन्मिषित उद्घुरीभूतः अथ च तदेकव्यतिरिक्तवेद्यविकल्पवार्तानभिज्ञोऽपरिमितभावो यस्य तादृशेन प्रमात्रा गोचरीकृत इति सम्बन्धः। द्विविधं हि प्रमातृत्वं परिमितमपरिमितं च। तत्र प्रथममहमिदमिति स्वपरविकल्पोपकल्पितम्, अपरं तु स्वात्मस्फुरत्तामात्रक्रोडीकृतविश्वव्यवहारम्। तत्र परिमितं कदाचित् तिरोधीयते अन्यत् तु सकृत् प्रभातं परिस्फुरति। यदाहुराचार्याः—

## सुधासागरः

लोके प्रमदादिकारणादिभिः स्थायिनो रत्यादेरनुमानेऽभ्यासेन यत् पाटवं झटिति प्रवृत्तिस्तद्वतां सामाजिकानां सूक्ष्मतयाऽन्तःस्थितो रत्यादिः स्थायी काव्ये नाट्ये च गुणालङ्कारयोगाच्चतुर्विधाभिनयेन च यथोक्तविभावनादिव्यापारवत्त्वादलौकिकविभावादिशब्दव्यपदेशयोग्यदशाविशिष्टैस्तैरेव कारणादिभिर्व्यज्यते।

नन्वेवं येषां पूर्वं रत्यादिर्नोत्पन्नस्तेषां तद्विरहिणां किं रसाऽभिव्यक्तिर्नास्त्येव? कः सन्देहः। अतएव शृङ्गारिणामेव शृङ्गारस्य निर्विण्णस्वभावानामेव शान्तस्याऽभिव्यक्तिरित्याद्यनुभूयते।

किञ्च अपराऽपि स्वाभाविकी वासना सहकारिणी। यां विना शृङ्गारिणामपि मीमांसकवैयाकरणानां न रसाऽभिव्यक्तिः। तदुक्तम्—'वासना चेन्न हेतुः स्यात् स स्यान्मीमांसकादिषु' इति।

ननु तथाऽप्यन्यनिष्ठैर्विभावादिभिः कथमन्यनिष्ठस्य स्थायिनोऽभिव्यक्तिः? उच्यते। ममैवैते शत्रोरेवैते तटस्थस्यैवैते इति सम्बन्धिविशेषस्वीकारनियमस्य न ममैवैते च शत्रोरेवैते न तटस्थस्यैवैते इति सम्बन्धिविशेषपरिहारनियमस्य चाज्ञानात् तेषां साधारण्येन प्रतीतेः।

अत्रेदमवधेयम्। आत्मा प्रियः शत्रुर्द्वेष्यः उभयाऽन्यस्तटस्थ इति वर्णनीयस्य

## साहित्यचूडामणिः

अवस्थायुगलं चात्र कार्यकर्तृत्वशब्दितम् ।
कार्यता क्षयिणी तत्र कर्तृत्वं पुनरक्षयम् ॥
कार्योन्मुखः प्रयत्नो यः केवलं सोऽत्र लुप्यते ।
तस्मिन् लुप्ते विलुप्तोऽस्मीत्यबुधः प्रतिपद्यते ॥
न तु योऽन्तर्मुखीभावः सर्वज्ञत्वगुणास्पदम् ।
तस्य लोपः कदाचित् स्यादन्यस्यानुपलम्भनात् ॥

[स्पन्दकारिका १४-१६] इति ।

रसस्फुरत्तावस्थायां यथा चैत्रस्य चित्तवृत्तिः तथा मैत्रस्यापीति सर्वेषामेकहृदयत्वमित्याह—सकलेति । ननु चर्वणीयोऽर्थः सामाजिकाद् भिन्नो वा न वा । अलौकिकप्रमातृताभङ्गप्रसङ्गात् । न द्वितीयः चर्वयितृव्यतिरेकेण चर्वणीयावश्यंभावाद् इत्याशङ्क्याह—स्वाकार इवेति । यथात्मनः स्वरूपं स्वस्मादभिन्नमपि स्वेन विषयीक्रियते । यथोक्तम् 'आत्मानमात्मन्यवलोकयन्तम्' इति । यच्चाहुराचार्याः—

आत्मानमत एवायं ज्ञेयीकुर्यात् पृथक् स्थितम् ।
ज्ञेयं न तु तदौन्मुख्यात् खण्ड्येतास्य स्वतन्त्रता ॥

[ईश्वरप्र० १-५-१५] इति ।

एवं रसचमत्कारोऽपि । किञ्च येयं चर्व्यमाणता पुनः पुनरुपभुज्यमानता

## सुधासागरः

त्रैविध्यात्त्रिविधोपादानम् । मित्रस्याऽऽत्मपक्षे निक्षेपान्नाधिक्यमिति । साधारण्येन प्रतीतिश्च न सर्वसम्बन्धितया प्रतीतिः । किन्तु सम्बन्धिविशेषीयत्वेनाऽप्रतीतौ प्रतीतिः । यद्वा—अमुकस्यैवेत्यवधारणं विनाऽमुकस्येत्येवं प्रतीतिः । अतएवोक्तं ममैवैते इति । नियमानध्यवसायादिति । तथा च स्वीयत्वाऽसंसर्गाग्रहात् स्वीयत्वसंसर्गग्रहप्रयोजनं सम्पद्यते । एवञ्च वाक्यार्थबोधे सम्बन्धिविषयत्वाऽनुभवोऽपि न विरुध्यते । संसर्गबोधे सम्बन्धी न विषयः किन्तु पदार्थस्मरण एवेत्यनुभवविरोधाद् विचाराऽसहत्वाच्चानुपादेयम् ।

ननु तथापि सीतात्वादिज्ञाने कथं साधारण्यं कथञ्चाऽऽराध्यत्वज्ञाने सामाजिकनिष्ठरत्युद्बोध इति चेत् । नैवम् । परिहृतजनकतनयत्वादिविशेषाः कामिनीमात्ररूपाः शब्देनाऽभिनयेन वा प्रतीयमाना विभावादितां प्राप्नुवन्ति । अयं विशेषपरित्यागो वाक्यार्थबोधकाले ततो रसोद्बोध इति ।

नन्वेवं विभावादीनां साधारण्यं विनाऽभिव्यञ्जकत्वव्याघातादस्तु साधारण्यम् । स्थायिनस्तु तत्कथं स्यात्, तस्य तत्तदात्मनिष्ठत्वात् । यद्यप्यसाधारण्येऽपि तस्य न रसप्रतीतिविरोधस्तथापि तदंशे सहृदयहृदयसंवादो न स्यात् । स एव चाऽलौकिकताद्दशचमत्कारस्वीकारकारणमिति । उच्यते—उपायानां विभावादीनामुक्तरूपसाधारण्य-

## साहित्यचूडामणिः

तदेकप्राणः तद्व्यतिरेके निस्सारत्वात्। विभावादीति। यावन्तं कालं विभावादि-स्फुरत्ता तावन्तमेव रसचर्वणा नान्यम्। गुडमरिचकर्पूरादीनां माधुर्यसौरभादि-समष्टिस्वभावो यद्वद्नपह्नुतमिथश्चमत्कारो लौकिको रसश्चर्वणीयः तद्वद्यमपि। पुर इवेति नटे रामप्रतीतिदार्ढ्यं, हृदयमिवेति इत्यादेः स्थायित्वादनुकार्यरामहृदयात् सामाजिकहृदयानामभेदं, सर्वाङ्गीणमिति तस्य नृत्तगीतादिबहुविधनाट्यधर्मगर्भीकृत-त्वम्, अन्यत् सर्वमिति विगलितवेद्यान्तरत्वं, ब्रह्मानन्देति लोकोत्तरचमत्कारकारितां च प्रत्याययति। यदाहुः—

पाठ्यादथ ध्रुवागानात् ततः संपूरिते रसे।
तदास्वादभरैकाग्रो हृष्यत्यन्तर्मुखः क्षणम्॥
ततो निर्विषयस्यास्य स्वरूपावस्थितौ निजः।
व्यज्यते ह्लादनिःष्यन्दो येन तृप्यन्ति योगिनः॥
[व्यक्तिवि० १] इति।

अथाभिव्यक्तिमेव स्थापयितुमुत्पत्तिज्ञप्ती निराकरोति स चेति। कार्यतापक्षे विभावादयः कारणानीति स्यात् न तु व्यञ्जका इति। ततश्च विभावादिषु कारणेषु

## सुधासागरः

बलाद् रसाऽनुभवकाले स्थायिनां प्रमातृविशेषनिष्ठत्वलक्षणायाः परिमितप्रमातृताया यद्विगलनमज्ञानं तद्वशेनोन्मिषितो वेद्यान्तरसम्पर्कशून्योऽपरिमितो भावो यस्य तेन प्रमात्रा सकलसहृदयहृदयसंवादकारिणा प्रमातृविशेषसम्बन्धाऽग्रहरूपेण साधारण्येन स्थायी चर्व्यते। रत्यादेः साधारण्येन ग्रहश्चेन्न स्यात्तदा स्वगतत्वेन सीताद्यालम्बनक-रत्यादिप्रतीतौ सभ्यानां व्रीडाऽऽतङ्कादिः स्यात्। अपरगतत्वेऽरस्यतापात इति ध्येयम्।

अतएव देवनाथतर्कपञ्चाननैर्व्याख्यातम्—ननु 'शून्यं वासगृहम्' इत्यादौ अस्तु तथा। यत्र तु रामसीतादयः स्वपदोपात्तास्तत्र पदार्थतावच्छेदकं विना कथं प्रतीति-रिति चेत् सत्यम्। प्रथमं शक्तिलक्षणाजन्यबोधे विशेष्यैव प्रतीतिः। उत्तरकालं तु समासोक्त्यलङ्कारमहिम्ना नायकनायिकासामान्यविषयवृत्तान्तानां व्यञ्जनया शब्दा-दुपस्थितौ सामाजिकानां स्वस्वविषयकरत्यादौ स्वचर्वणम्। अन्यथा काव्यादितः साधारण्येन विहिताऽविहितव्युत्पत्तिर्न स्यात्। ततश्च रामादिष्वपि तत्तद्विशेष-मपहाय धीरोदात्तादिसामान्याऽवभासो न विरुद्धः। एवञ्च काव्यनाट्यादौ यावदयं राम इयं सीतेत्यादिबुद्धिस्तावन्न चमत्कारः, अनौचित्यात्। यदा तु सामान्यतो भानं तदा स इति सर्वाऽनुभवसिद्धमिति।

## साहित्यचूडामणिः

नष्टेष्वपि तस्य रसस्य सम्भवः प्रसज्येत, असमवायिकारणविनाशे कार्यविनाशानुपगमाद् व्यञ्जकविनाशे व्यङ्ग्यविनाशोपगमाच्च। नापि ज्ञाप्यः। कुतः? सिद्धस्य तस्याभावात्, चर्वणायां तत्तादृकचर्व्यमाणताव्यतिरेकेण कालान्तरेण तस्याभावात् पारिशेष्यादभिव्यक्तिरेवेत्याह—अपित्विति। ननूत्पत्तिर्ज्ञप्तिर्वा लौकिको धर्मः तत्कथमुभयकोटिवैधुर्यमित्याशङ्कते—कारकेति। परिहरति—न क्वचिदिति। रसविषये यद्यदलौकिकत्वं साधयति तत्तदशेषं भूषणं विपरीतं तु दूषणम्।

ननु रस उत्पद्यते रसः प्रतीयते इति व्यवहारः कथमिति चेदुपचारादित्याह—चर्वणेति। एवमुपचारबलात् प्रत्येयोऽप्यभिधीयतां ज्ञाप्योऽप्युच्यताम्। उपचारे मूलमाह—लौकिकेति। परिमितापरिमितयोगिद्वयविज्ञानविलक्षणस्य प्रागुक्तयुक्त्या लोकोत्तरस्य स्वसंवेदनस्य विषय इति लौकिकानां प्रत्यक्षादीनां प्रमाणानां यत् ताटस्थ्यं नातिपरित्यागो नातिस्वीकारश्च तदवबोधेन यः शालते स मितयोगी लौकिकप्रमाणावधीरणायामसामर्थ्यात् तस्य यद् ज्ञानं तस्माद् वेद्यानां लौकिकप्रत्यक्षादिप्रमाणप्रतिपाद्यानां संसर्गेणापि रहितः अत एव स्वात्ममात्रपर्यवसितः तादृशस्य परिमितेतरस्यापरिमितस्य योगिनो यत् संवेदनं तस्माच्च विलक्षणस्य लोकोत्तरस्य स्वसंवेदनस्य गोचरः इति। अयं भावः—विभावादिषु चर्वणोत्पत्तिरद्भुतपुष्पावलोकनन्यायेन तत्कालसारैव, न पूर्वापरकालानुबन्धिनी। तेन लौकिकाद् योगिविषयाच्च स्वसंवेदनादन्य एवायं रसास्वाद इति।

## सुधासागरः

काव्यश्रवणादिदशायां स्वपरादिविभाग एव नास्ति अन्यथा व्रीडाऽऽतङ्कादिप्रसङ्गात्। अतएव तद्दशायामद्वैतभानमिति वेदान्तिनः प्राहुः।

जयरामन्यायपञ्चाननाः अपि व्याचख्युः। ननु शब्दाद् विभावादीनां ज्ञानम्, अथ रत्यादेरित्यत्र न विवादः। परन्तु लोकविलक्षणाद्रत्यादिज्ञानाल्लोकविलक्षणः प्रबलाऽऽनन्दो जायते स एव रसोऽस्तु। रसस्य जन्यत्वे भरतसूत्रे संयोगादिति पञ्चम्या जनकत्वरूपमुख्यताऽपीति चेत् न। रसप्रतीतौ नियमतो विभावादिविषयकत्वमानुभाविकम्। तच्च रसस्य जन्यसुखरूपत्वेन सम्भवति। तथा हि—शब्दाद्विभावादेर्ज्ञानमथ रत्यादेस्ततः सुखोत्पत्तिरथास्याऽनुभव इति व्यवधानात्। तदुक्तम्—विभावादिज्ञानाऽभावेऽपि तज्ज्ञानप्रसङ्गादिति। नच विभावादिज्ञानाऽधीनसमूहविषयकरत्यादिबोधस्योपनायकस्य सुखोत्पत्तिकाले सत्त्वात्तत्साक्षात्कारे विभावादिभानमविरुद्धमिति वाच्यम्। सुखसाक्षात्कारसामग्र्या इतरज्ञानविरोधित्वेन तदयोगादिति भाव इति।

## साहित्यचूडामणिः

अथ तस्य यद् ग्राहकं प्रमाणं तत् किं निर्विकल्पकम् उत सविकल्पकम् इति विकल्प्य तदुभयविलक्षणमिति सिद्धान्तयति तद्ग्राहकमिति। विभावादिपरामर्शो हि शब्दनस्वभावो विकल्पकक्ष्यां नातिक्रामति। तत्प्राधान्यान्न निर्विकल्पकम्। न च तत् सविकल्पकमित्याह—चर्व्यमाणस्येति। यदि रसः सविकल्पेन गृह्येत तस्य लोकोत्तराह्लादरूपत्वं न स्यात् लोकयात्रापथप्रविष्टत्वाद् विकल्पस्य। स्वसंवेदनसिद्धता च तस्य विघटेत, विकल्पाधीनस्यार्थस्य परसंवेदनेनापि साध्यत्वात्।

ननु निर्विकल्पकसविकल्पकोभयग्राह्यत्वाभावस्वरूपस्य यदेतत् स्वसंवेदनसिद्धत्वविभावादिपरामर्शप्राधान्योभयस्वभावत्वं तद् विरुद्धधर्माध्यासवीथीमध्यमध्यास्त इति चेन्नेत्याह—उभयेति। तस्य निर्विकल्पकग्राह्यत्वाभावे स्वसंवेदनसिद्धत्वनियमो न स्यात्, सविकल्पकग्राह्यत्वप्रतिक्षेपे विभावादिपरामर्शप्राधान्यं प्रणश्येदिति येयं शुष्कशास्त्रशय्यया विरोधोद्भवविभीषिका सा तस्य पूर्ववत् कारकज्ञापकविकल्पोक्तयुक्त्या लोकोत्तरतामवगमयति न पुनर्विरोधम्। यदुक्तं—'ननु यदि न ज्ञप्तिः न वा निष्पत्तिः तत् किमेतत्। नन्वयमसावलौकिको रसः। ननु विभावादिरत्र किं ज्ञापकः उत कारकः। न ज्ञापकः न कारकः अपितु चर्वणोपयोगी। ननु क्वैतद् दृष्टम्। अन्यत्र यत एव न दृष्टं तत एवालौकिकत्वमित्युक्तमिति।

## सुधासागरः

ननु चर्वणाविशिष्टः स्थायी रस इत्युच्यते। चर्वणया च स्थायी विषयीक्रियतां न तु सुखात्मक आत्मेति न रसस्य व्यक्तिरिति चेत् न। स्वप्रकाशनये स्वप्रकारवदभिन्नस्याऽऽत्मनो विषयीकरणात्। स्वस्य ज्ञानस्याऽऽकारो विषय अभिन्नो ज्ञानस्वरूपाद् यथा। एवमन्तःकरणावच्छिन्नस्य चैतन्यस्य प्रमातृत्वाद्रत्याद्यवच्छिन्नस्य तस्य रसत्वाच्चैतन्यांऽशमादायाऽभिन्न इति भावः। अभिव्यक्तिविशिष्टश्च रत्यादिः स्थायी चर्व्यमाणतैकप्राणतया चर्वणानाशे विनष्टो रस इति प्रतीतिविषयो, विभावादिजीविताऽवधित्वेनाऽनित्यचर्वणः, जीवितस्य चर्वणाया विभावादिरेवाऽवधिः। परिहृतविशेषाः सीतारामादयो विभावनापन्ना यावत्तावदेव स्वविषयस्थाय्यिव्यक्तिरूपां चर्वणां कुर्वन्ति। विशेषज्ञानादिना तन्निवृत्तौ चर्वणानिवृत्तिरिति भावः। एवं सत्यपि विभावादिज्ञाने बलवत्तरविषयव्यासङ्गादपि चर्वणानिवृत्तिरिति बोध्यम्। पुर इव परिस्फुरन् हृदयमिव प्रविशन् सर्वाङ्गीणमिवालिङ्गन्नन्यत्सर्वमिव तिरोदधद् ब्रह्मास्वादमिवाऽनुभावयन्नत एवाऽलौकिकचमत्कारकारी शृङ्गारादिको रस इत्युच्यते।

अत्रेदं रहस्यम्। चतुर्वर्गप्रदं सेवनात् इति प्रकृतग्रन्थस्य मोक्षोपायरूपत्वमुक्तम्। प्रतिपादितञ्च इदमुत्तममतिशयिनि इति सूत्रव्याख्याऽवसरेऽस्माभिः। तदत्र श्रीवाग्देवतावतारैर्ब्रह्मसहोदररसाऽऽविर्भावप्रकारप्रदर्शनेन ब्रह्माऽवबोधोऽपि

## सुधासागरः

सति तादृशेऽधिकारिणि सति च तादृशसामग्रीसमवधाने सद्गुरूपदिष्टयत्किञ्चिद्वाक्यनिष्ठया तत्त्वमस्याद्युपनिषद्वाक्यनिष्ठया वा व्यञ्जनयैव भवतीति ध्वनितम्। ब्रह्मैव रस इति तु प्रलपितमात्रम्। मुक्तिदशायां ब्रह्ममात्रं प्रकाशते। रसे तु विभावादिसन्देशोऽपीति भेदेन ब्रह्माऽऽनन्दमिवेति दृष्टान्तदार्ष्टान्तिकभावस्य दर्शितत्वात्। एवञ्च व्यञ्जनाया अलौकिकत्वादवाग्गोचरत्वमपि ब्रह्मणो निर्बाधमिति।

प्रकृतमनुसरामः। नन्वेवं स्थायिविभावादिसमूहालम्बनात्मिका रसस्य प्रतीतिरिति पर्यवसन्नम्। तच्च न युक्तम्। विभावादीनां पार्थक्येन प्रतीतिप्रसङ्गात्। घटपटाविति समूहालम्बनवदिति चेत् न। पानकरसन्यायेन चर्वणात्। यथा पानके कर्पूराद्यंशो न पार्थक्येनाऽनुभूयते तथाऽत्रापि विभावाद्यंशः। अत एवाऽलक्ष्यक्रमत्वमुक्तम्।

ननु विभावादीनां परामर्शस्याऽन्वयव्यतिरेकात् तत्कार्य एव रसः किं नोच्यत इति चेत् न। विभावादिपरामर्शस्य कारणत्वं यदि स्यात् तदा निमित्तकारणत्वमेव, समवाय्यसमवायिकारणत्वाऽसम्भवात्। न च तन्नाशस्य कार्यनाशकता दृष्टा। तथा च विभावादिज्ञाननाशे रसप्रतीतिः स्यात्। नचैवम्। विभावादौ भासमान एव रत्युद्बोधस्य रसत्वाऽभ्युपगमात्। ननु द्वित्वादिरूपकार्याणामपेक्षाबुद्धिरूपनिमित्तकारणनाशनाश्यत्वं दृश्यते इति चेत्, मैवम्। द्वित्वादीनान्तथात्वाऽनभ्युपगमात्। तथा हि—द्वित्वादेर्जातित्वाङ्गीकारात्तत्र निमित्तकारणनाशनाश्यत्वं नास्ति। किन्तु द्वित्वमपेक्षाबुद्धिव्यङ्ग्यं न तु तत्कार्यमित्यपेक्षाविगमे द्वित्वादिकं न प्रतीयते। यावद्व्यञ्जकं व्यङ्ग्योपलम्भात्। चन्दनादिस्पर्शजन्यसुखादन्यायो भविष्यतीति चेत् न। न हि तत्र स्पर्शाभावेन सुखं विनाश्यते। किन्तु तदभावे कारणाभावात् कार्यं नोत्पद्यते। उत्पन्नस्य सुखस्य तर्हि कथं विनाश इति चेत्, विरोधिगुणान्तरात्। अत्राऽपि तथैवाऽस्त्विति चेत् न। रसस्य वेद्यान्तरसम्पर्कशून्यतया ज्ञानान्तरादेस्तत्कालेऽभावात्। नन्वेष दोषो व्यक्तावपि समान इति चेत्, न समानः। व्यक्तेर्लोकोत्तरतया दोषाऽसंस्पर्शात्।

किञ्च चर्वणाविशिष्टः स्थायी रसः। न च काव्याद्युपस्थाप्यो विभावादिर्विशिष्टे हेतुः। तर्ह्यस्तु ज्ञाप्य इति चेत् न। विभावादिपरामर्शं विना तत्सिद्धेरभावात्। अयमाशयः। लोके पूर्वसिद्धा एव घटादयः प्रदीपादिभिर्व्यज्यन्ते। नचैवं रसे। यतो विभावादिज्ञानजनिताऽभिव्यक्तिविषयीभूतस्य रत्यादेः रसत्वं, स कथं विभावादिज्ञाप्य इति।

श्रीवत्सलाञ्छनभट्टाचार्यैरपि व्याख्यातम्। रसस्य चैतन्यस्वरूपस्य स्वप्रकाशत्वेन प्रमाणान्तरसिद्धत्वं नास्तीति प्रमाणान्तरसिद्धे घटादावेव ज्ञाप्यत्वं न तु स्वप्रकाशे रसे इति भाव इति।

## सुधासागरः

प्राञ्चस्तु ज्ञाप्यः फलव्याप्यः। भग्नाऽऽवरणचित्सम्बन्धित्वरूपफलव्याप्यत्वं घटादावेव न तु किंचित्स्वरूपे रसे। स्वस्मिन्स्वसम्बन्धाभावादित्याहुः। नचैकैव सामग्री निष्पादिका ज्ञापिका चेति सम्भवति।

किञ्च—स्वभिन्नतज्जन्यज्ञानविषयस्य हि तज्जन्यज्ञानविषयतयैव तु तज्ज्ञाप्यत्वं न निषेधामः। किन्तु विभावादिभिर्व्यञ्जितश्चर्वणीयः। व्यञ्जितश्चित्स्वरूपोऽभिव्यक्ताऽऽनन्दांशो भवतीति भावः। रसस्य व्यङ्ग्यत्वाद् व्यञ्जकत्वमेवाऽत्र पञ्चम्यर्थ इति बोध्यम्। कारक-ज्ञापकाभ्यामन्यो हेतुर्न लोकसिद्ध इति चेत्, अलौकिकत्वसिद्धेर्भूषणमेतन्न दूषणम्। अलौकिककार्यहेतावलौकिकत्वस्योचितत्वात्। कथं तर्हि विभावादिभिरुत्पन्नो रसो ज्ञेयो रस इत्यादिव्यवहार इति चेत्, आद्यस्तावच्चर्वणोत्पत्त्या तत्रोत्पत्त्युपचारात्। द्वितीयोऽपि गुणाऽलङ्कारा‌द्यसंभिन्नरसादिविषया लौकिकी प्रमितिः। तचाऽपरिपक्वयोगिनां युञ्जानपदवाच्यानां जगद्भेदविषयकत्वशालि विज्ञानम्। यच्च परिपक्वयोगिनां युक्तपदाऽभिधेयानां बाह्यार्थसंस्पर्शरहितं स्वात्ममात्रविषयं संवेदनं तेभ्यो गुणाऽलङ्कारयुक्तरसादिमात्रविषयतया विलक्षणं यत्संवेदनं तद्गोचरतयेति मन्तव्यम्।

अत्रेदं बोध्यम्। द्विविधाः खलु योगिनो भवन्ति। युञ्जाना युक्ताश्च। तत्र युञ्जानयोगिनां समाधिसत्त्वे योगजधर्मप्रत्यासत्त्या भेदविषयकमतीताऽनागतसर्वविषयकं ज्ञानं समाधेः काचित्कतया परिमितं कादाचित्कम्। युक्तयोगिनां तु च्छिन्नसवासनमिथ्याज्ञानतया स्वात्ममात्रविषयकं समाधिदार्ढ्यात्परिमितेतरदिति।

न केवलमसत्त्वादज्ञाप्यो रसः। किन्त्वितोपि यतस्तद्ग्राहकं न निर्विकल्पकम् विभावादिपरामर्शस्य निर्विकल्पकजननाऽयोग्यत्वात्। निर्विकल्पकस्य ज्ञानान्तरसापेक्षत्वाभावादिति भावः। नाऽपि स्वभिन्नसविकल्पकम्। चर्व्यमाणस्याऽलौकिकानन्दस्य तस्य स्वसंवेदनमात्रसिद्धत्वात्। स्वप्रकाशत्वादिति भावः। तत्त्वन्तु स्वव्यवहारसंविदन्तरानपेक्षत्वम्। ननु तर्हि कथं वृत्तिव्याप्यत्वमिति चेत् आवरणभङ्गार्थमित्यवेहि। एवञ्च तत्त्वमसीत्यत्रैव सम्बन्धाऽग्राहिण्यपि वृत्तिरावरणभञ्जिकेति। वस्तुतस्तत्रापि अलौकिकवृत्त्या व्यञ्जनयैव ब्रह्मबोधः न खलु व्यञ्जनातिरिक्तवृत्तेरावरणभञ्जकत्वं क्वचिदनुभूतमिति सुधीभिर्न विस्मर्तव्यम्। किञ्च चर्वणादशायां ज्ञानान्तराभावः। अयं घट इत्यादिव्यवसाये यथा स्वभिन्नाऽनुव्यवसायविषयता तथा न चर्वणादशायां, चर्वणानन्तरं हि चर्वणाया एवोत्पादो न तु मानसज्ञानस्य। व्याञ्जनिकसामग्र्या बलवत्त्वात्। चर्वणायाश्च व्यङ्ग्यत्वात् स्वाऽभिन्नसविकल्पकविषयत्वेन ज्ञाप्यत्वमिष्टमेव।

## सुधासागरः

सारबोधिनीकारास्तु विकल्पो विशिष्टज्ञानम्। धर्मिग्राहकमानेन समूहालम्बनत्वेन सिद्धस्य रसाऽवबोधस्य विभावादिविषयाणां परस्परसम्बन्धाऽग्रहान्न सविकल्पकत्वमित्यर्थ इत्याहुः।

ननु निर्विकल्पस्वभिन्नसविकल्पयोरन्यतरविषयत्वाभावोऽपरविषयत्वपर्यवसन्नः। तथा चैकविषयत्वाभावेऽपरविषयत्वप्रसक्तिरित्युभयत्वाभावे उभयविषयत्वं प्रसज्येतेति चेन्न। एवं ह्युभयरूपत्वमापाद्यमानं स्वाऽभिन्नसविकल्पकविषयत्वरूपतृतीयकोटिशालितया लोकोत्तरं चमत्कारमेवाऽवगमयति न पुनर्विरोधमिति।

अयमाशयः। याभ्यां हेतुभ्यामुभयाभावरूपत्वं ताभ्यामेव क्रमेण सविकल्पकत्वं निर्विकल्पकत्वं च। तथा च कञ्चिद्धर्मं पुरस्कृत्योभयाऽभावरूपत्वमुभयरूपत्वं चेति। अतएव जयरामपञ्चाननैरुक्तम्—विभावादिसमूहालम्बनरूपे रसे विभावादेर्विभावत्वादिना भानात्तदंशे सविकल्पकत्वम्, अनावृतचैतन्यस्य स्वरूपतो भानात्तदंशे निर्विकल्पकत्वमिष्टमेवेति भाव इति।

एवञ्च काव्योपनिबन्धमहिम्ना परिहृतसीतात्वादिविशेषैः साधारण्येन प्रतीतैर्विभावादिभिर्व्यञ्जितं वर्णनीयसाधारण्येन गृहीतसामाजिकरत्याद्यवच्छिन्नमानन्दांऽशे भग्नावरणमानन्दरूपतया प्रकाशमानं समूहालम्बनोपनीतविभावादिसमूहविषयकमात्मचैतन्यं रस इति निष्कृष्टोऽर्थः। तत्र सीतादीनां साधारण्यग्रहं विना न कदाचिदपि विभावादित्वम्। तथा रत्यादिभावस्याऽपि साधारण्यग्रहं विना रत्युद्बोधस्य स्वप्नेऽपि न रसत्वमिति च न विस्मर्त्तव्यम्।

अपि च तत्त्वमस्यादिवाक्यावच्छेदेनाऽर्थेन च विभावादिव्यापारमहिम्ना रसाऽभिव्यक्तिः साक्षात्काररूपैव जायते। तेन रससाक्षात्कार इति व्यवहारः। 'यत्साक्षादपरोक्षाद् ब्रह्म' इति श्रुतेः चैतन्यांऽशे साक्षात्त्वाच्च। रसस्य व्यङ्ग्यत्वव्यवहारश्च चैतन्यांऽशे रत्याद्यवच्छिन्नचैतन्यस्मृतिरूपव्यक्त्याऽऽवरणभङ्गाद्रत्याद्यंशे तच्छक्तिभग्नावरणकचित्सम्बन्धित्वात्। घटादेश्चाक्षुषवृत्त्या भग्नावरणकचित्सम्बन्धित्वेन चाक्षुषत्वादिव्यवहारवदिति सूक्ष्मदृशाऽवधातव्यम्।

इदं त्ववधेयम्। परमकारुणिकश्रीवाग्देवतावतारैरत्र लोकोत्तररसनिरूपणमिषेणाऽरूपसरूपं प्रकाशाऽप्रकाशं सकलप्रत्ययप्रत्यायनक्षमं सर्वस्थमपि दुर्ज्ञेयं लोकलीलाललितमप्यलौकिकं सगुणमप्यगुणं 'नेह नानास्ति किञ्चन' 'आत्मा वै श्रोतव्यो मन्तव्यः' 'एकमेवाद्वितीयं ब्रह्म' तत्त्वमस्यादिश्रुत्युपस्थापितमप्यवाच्यं सच्चिदानन्दब्रह्मादिपदव्यपदिष्टमप्यदृष्टं प्रत्यक्षादिप्रमाणाऽवेद्यमपि प्रामाणिकं सदसद्विलक्षणं वस्तु तादृशवैदग्ध्योपोद्बलितैर्व्यञ्जनैकवेद्यमिति ध्वनितमिति।

व्याघ्रादयो विभावा भयानकस्येव वीरा-द्भुत-रौद्राणाम्, अश्रुपाता-दयोऽनुभावाः शृङ्गारस्येव करुणभयानकयोः, चिन्तादयो व्यभिचारिणः शृङ्गारस्येव वीर-करुण-भयानकानामिति पृथगनैकान्तिकत्वात् सूत्रे मिलिता निर्दिष्टाः ।

वियदलिमलिनाम्बुगर्भमेघं मधुकरकोकिलकूजितैर्दिशां श्रीः ।
धरणिरभिनवाङ्कुराङ्कटङ्का प्रणतिपरे दयिते प्रसीद मुग्धे ॥

इत्यादौ,

---

## साहित्यचूडामणिः

इतोऽपि काञ्चित् सूत्रशिक्षामाह—व्याघ्रादय इति । यदि किल सूत्रे विभावेनानुभावेन व्यभिचारिणा वा व्यक्तिनिष्ठेन तदुचितस्य व्यक्तिनिष्ठस्य स्थायिनः संयोग इत्यभ्यधास्यत तदानैकान्तिकत्वमापत्स्यत व्यभिचारात्, तन्मूलश्च सर्वस्यापि रसप्रपञ्चस्य सङ्करप्रसङ्ग इति विभावादयो मिलिताः सामान्याकारेणोपात्ताः । वीराद्भुतेति । व्याघ्रादिं हिंस्रमालोक्य यथा कश्चित् कातर्याद् बिभेति तथान्यो विक्रमादुत्सहते अपरः कुतूहलेन विस्मयते इतरः क्रूरतया क्रुध्यतीति विभावव्यभिचारः ।

करुणेति । यथा कश्चिद् रतिमनुभवन्नभिलाषेण रोदिति एवमपरः परदुःखेन शोचति अन्यः सर्पादिदंशाद् बिभ्यदपीत्यनुभावव्यभिचारः ।

## सुधासागरः

प्रकृतमनुसरामः—

ननु विभावादयो मिलिताः किमिति व्यञ्जकत्वेन निर्दिष्टाः एकैकस्य व्यञ्जकत्वे व्यभिचारात् । अथैकैकस्मादन्यद्वयाऽऽक्षेपात्तत्राप्यस्येव रसव्यक्तिरित्यव्यभिचार इति चेत्, न । व्याघ्रादयो हि विभावा भयानकस्येव रौद्राद्भुतवीराणाम् । अश्रुपातादयोऽनुभावा शृङ्गारस्येव करुणभयानकयोः । चिन्तादयो व्यभिचारिणः शृङ्गारस्येव वीरकरुणभयानकानामित्यन्यद्वयाऽऽक्षेपाऽनियमात् । एते व्याघ्रादयो भीरूणां भयमिव वीराणामुत्साहमपूर्वदर्शिनां विस्मयं व्यापादितबन्धूनां क्रोधं जनयन्ति । एवमनुभावसञ्चारिणोरप्यनैयत्यमिति भावः ।

नन्वेवं मिलितस्येव व्यञ्जकत्वे एकैकोपस्थितौ रसव्यक्तिर्न स्यात् । दृश्यते चाऽसौ । यथा वियदलीत्यादौ । पुष्पिताग्रा छन्दः । 'अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रे'-ति लक्षणात् । मानवतीम्प्रति सख्या इयमुक्तिः ।

अयमर्थः । हे मुग्धे मानभङ्गावश्यम्भावे दयितप्रणामोपेक्षणाद् विवेक-रहिते । प्रणतिपरे मुहुः प्रणामशालिनि । दयिते इति विषयसप्तमी प्रेमपात्रे

परिमृदितमृणालीम्लानमङ्गं, प्रवृत्तिः
कथमपि परिवारप्रार्थनाभिः क्रियासु ।
कलयति च हिमांशोर्निष्कलङ्कस्य लक्ष्मी-
मभिनवकरिदन्तच्छेदकान्तः कपोलः ॥

इत्यादौ,

दूरादुत्सुकमागते विवलितं सम्भाषिणि स्फारितं
संश्लिष्यत्यरुणं गृहीतवसने किञ्चाञ्चितभ्रूलतम् ।
मानिन्याश्चरणानतिव्यतिकरे बाष्पाम्बुपूर्णेक्षणं
चक्षुर्जातमहो प्रपञ्चचतुरं जातागसि प्रेयसि ॥

इत्यादौ च,

यद्यपि विभावानामनुभावानामौत्सुक्य-व्रीडा-हर्ष-कोपा-ऽसूयाप्रसादानां च व्यभिचारिणां केवलानामेव[1] स्थितिः, तथाऽप्येतेषामसाधारणत्वमित्यन्यतमद्वयाक्षेपकत्वे सति नानैकान्तिकत्वमिति ।

---

## साहित्यचूडामणिः

वीरेति । रममाणस्य चिन्ता एवमुत्सहमानस्याशोचतोऽविभ्यतोऽपीति व्यभिचारिव्यभिचारः इत्यनैकान्तिकभीत्या मेलकेन व्यपदेशः ।

नन्वितोऽप्यनैकान्तिकत्वं यद् विभावादीनामेकैकश-स्त्रयाणामवस्थानमुदाहरणेष्ववलोक्यत इत्याशङ्क्य परिहरति—यियदिति । अत्र हि केवलानामनुभावादिशून्यानामालम्बनोद्दीपनरूपाणां विभावानामवस्थानम् ।

परिमृदितेत्यादौ विभावादिशून्यानामङ्गग्लानिक्रियाप्रवृत्त्यभावादिरूपाणामनुभावानामवस्थानम् ।

## सुधासागरः

न तु स्वामिमात्रे । प्रसीद तद्विषयं प्रसादं कुरु । मानभङ्गसामग्रीमाह—वियदित्यादि । वियदाकाशम् । अलयो भ्रमराः तद्वन्मलिना अत्यन्तकृष्णाश्च तेऽम्बु गर्भे येषां तथाभूता मेघा यत्र तादृशं द्रष्टुमशक्यमिति भावः । अस्तीति शेषः सर्वत्र बोध्यः । अम्बुगर्भत्वेन दृष्टत्वात् स्थैर्यं व्यज्यते । मधुकरकोकिलयोः सहितयोः कूजितैर्दिशां श्रीः शोभा । वर्षायां कोकिलकूजिताभावेऽपि मुग्धायां भयप्रदर्शनार्थं सख्याः प्रतारणोक्तिरियमिति केचित् । मधुकरा एव कोकिला इति रूपकम् । तथाच यथा वसन्ते कोकिलाः कान्तिहेतवः तथेदानीं मधुकरा इति भावः ।

---

[1] ० 'मत्रे'-ति प्रसिद्धः पाठः ।

## साहित्यचूडामणिः

दूरादिति। प्रेयसि दूरवर्तिन्युत्सुकम्, 'एष्यत्युत्सुकामि'-ति क्वचित् पाठः। संकथाप्रवृत्ते स्फारितम्। किञ्चेति। नायकस्य धृष्टतया नायिकायाः पादप्रणामपरायणत्वमिति यावत्। चरणानतौ व्यतिकरः संबन्धो यस्य। प्रेयसि दूरदृष्टे सत्यौत्सुक्यम् आगते विवलनेन व्रीडा सम्भाषिणि स्फारणेन हर्षः संश्लिष्यत्यारुण्येन कोपः गृहीतवसने भ्रूवल्लीवेल्लनेनासूया चरणप्रणते बाष्पाम्बुपूर्णतया चक्षुषः प्रसाद इत्यनुभावादिशून्यानामौत्सुक्यादीनां व्यभिचारिणामेव यद्यप्यवस्थानं, तथापि एकैकशो निर्दिष्टानामन्यतमद्वयापेक्षत्वादाक्षेपकत्वे सति नानैकान्तिकता। तथाहि विभावोदाहरणे तदविनाभूतानामश्रुपातकर्णोत्पलताडनादीनामनुभावानां निर्वेदालस्यादीनां व्यभिचारिणामप्याक्षेपः। द्वितीये मालत्या माधवलक्षणमालम्बनं भवनवलभीवातायनाद्युद्दीपनं, निर्वेदादयो व्यभिचारिणश्चाक्षिप्यन्ते। तत्र तृतीये पादप्रहारप्रत्यालिङ्गनादेरनुभावस्य तदुचितानामालम्बनोद्दीपनानां चाक्षेपः असाधारण्यात् सजातीये रसान्तरे विजातीये रोगादौ वा साधारण्याभावात्॥ ४, ५॥

## सुधासागरः

यद्वा क्वचन केचन कोकिलाः प्रावृष्यपि माद्यन्तीति यथाश्रुतमेव सम्यगिति चण्डीदासादयः। धरणिः भूमिः। अभिनवा नूतना अङ्कुरा एवाङ्के उत्सङ्गे टङ्का पाषाणदारकाः मर्मभेदित्वात् पाषाणप्रायकठिनमानभञ्जकत्वाद्वा यस्यां सा तादृशी। अभिनवाः अङ्कुरा यत्र एवंविधोऽङ्को मध्यो यस्य स तथाभूतष्टङ्कः पाषाणप्रायकठिनस्थानं यस्यां सेति चक्रवर्त्तिभट्टाचार्याः आहुः। अभिनवाङ्कुरा अङ्कश्चिह्नं यत्र तथाविधष्टङ्कः पाषाणप्रायदेशो यत्रेति गोविन्दमहामहोपाध्यायाः। एवमूर्ध्वमधस्तिर्यग्वा उद्दीपनप्रवृत्त्या तद्रहितदृष्टिसञ्चारस्थलाभावात् प्रणतिपरे प्रेयसि दृष्टिपातं कुर्विति भावः।

इत्यादौ कामिनीगताया रतेरालम्बनोद्दीपनविभावमात्रस्योपस्थितौ।

एवं परिमृदितेत्यादि। मालिनी छन्दः। 'ननमयययुतेयं मालिनी भोगिलोकैरि'-ति लक्षणात्। मालतीमाधवाख्यनाटके तथाह्यस्या इत्युपक्रमे श्लोकोऽयम्। अयमर्थः। अस्या इत्यनुषज्यते। परिमृदिता करतलद्वयमर्द्दनेन शिथिलीकृता या मृणाली बालमृणालः तद्वन्म्लानमङ्गम्। जात्यभिप्रायमेकवचनम्। तथा क्रियासु—शरीरधारणमात्रोपयोगिनीषु बह्वीषूपन्यस्तासु। परिवारस्य सखीसार्थस्य प्रार्थनाभिरनेकाभिः। कथमप्यनिच्छन्त्या अपि बलात्कारेण प्रवृत्तिः क्वचिदुपक्रममात्रम्। चकारोऽप्यर्थे। कपोलोऽपि, निष्कलङ्कस्य कलामात्रावशिष्टस्य हिमांशोश्चन्द्रस्य लक्ष्मीं शोभा कलयति धारयति। शोभामित्यनेनैवमपि न शोभाच्युतिरिति गम्यते। कपोल इत्येकवचनादेक एव पाण्डुः सौकुमार्येणाऽऽशु सर्वतः पाण्डिमोदयात्। अपरस्त्वभिनवस्य करिणो यो दन्तच्छेदः छिद्यते इति छेदः कर्मणि घञ्, छिन्नो

## सुधासागरः

भागस्तद्वत्कान्तः अलक्तकमिश्रदुग्धवर्णः। नूतनकरिदन्तस्य कोमलत्वेनाऽऽरक्तसम्बन्धेन तल्लाभादिति चक्रवर्त्तिनः। जात्यभिप्रायमेकवचनमिति केचित्। अन्ये त्वभिनवो यः करिदन्तच्छेद इत्यन्वयस्तेन शौक्ल्याधिक्यं तेन च विप्रलम्भोत्कर्षः। तथा च कालिदासः—'सद्यः कृत्तद्विरददशनच्छेदगौरस्य तस्य' इत्यत्र कर्तनस्य सद्यस्त्वमाहेत्याहुः।

इत्यादौ अङ्गमालिन्यविषयवैतृष्ण्यपाण्डुत्वक्षामतारूपाणामनुभावमात्राणामुपस्थितौ।

दूरादुत्सुकमित्यादि। शार्दूलविक्रीडितं छन्दः। अयमर्थः। जातागसि जाततम् आगोऽपराधो यस्मात् प्रमादतः, तथाभूते न तु कृतागसि। अतएव प्रेयसि प्रीतिपात्रे, मानिन्याश्चक्षुः, अहो इत्याश्चर्ये, प्रपञ्चे विचित्रव्यापारसन्ताने चतुरं जातमित्यन्वयः। प्रपञ्चचातुर्यमेव प्रपञ्चयति दूरादित्यादि। दूरात् दृष्टे इति शेषः सप्तम्यर्थे पञ्चमी, दूरस्थे इत्यर्थ इति महेशः। सर्वेषु सप्तम्यन्तेषु प्रेयसीति सम्बध्यते। उत्सुक इतोऽन्यत्र वा यातीति शङ्कयोत्कण्ठासूचकचेष्टाविशेषशालि। आगते समीपं प्राप्ते विवलितम् दूरतः पश्यन्त्या ममौत्सुक्यमनेन ज्ञातमिति लज्जया तिर्यक्कृतम्। सम्भाषिणि सम्यग्भाषिणि स्फारितं विकसितम्, प्रियालापेन हर्षोदयात्, संश्लिष्यति सम्यगतिशयेन सान्निध्यं प्राप्नुवति अरुणमारक्तम्, अप्रसाद्यैव स्पर्शमिच्छतीति क्रोधात्। अतएवापसरन्त्या गृहीतवसने, किञ्चेति समुच्चये, अञ्चितभ्रूलतञ्च, अञ्चिता कुटिलीकृता भ्रूलता येन तथाभूतं कोपाधिक्यमसूयोदयात्। किञ्चिदित्यर्थे किञ्चेतीति केचित्। चरणयोरानतिः प्रणामस्तस्य व्यतिकरः सम्बन्धो यस्येति दयितविशेषणम्। व्यतिकरः समूह इति कश्चित्। बाष्पाम्बुनाऽश्रुजलेन पूर्णमीक्षणं यस्य तथाभूतम्, मानभङ्गेन प्रसादोदयादिति भावः। अम्बुपदं बाहुल्यसूचनाय, ईक्षणपदं गोलकाधिष्ठाततेजःपरम्। गोलकस्याश्रुपूर्णतयैव तत्पूर्णत्वोपचारः। चक्षुर्जातमित्यत्र चक्षुष्पदं गोलकपरमतो भेदात् बहुव्रीहिसंगतिः। महेशस्तु ईक्षणपदं गोलकपरम्। चक्षुष्पदञ्च तेजःपरमित्याह। तन्न। औत्सुक्यविवलितत्वविस्फारणादीनां तेजस्यसम्भवात्। वस्तुतस्तु बाष्पाम्बुना पूर्णं समाप्तमीक्षणं दर्शनं यस्येत्यर्थमालोचयामः। बाष्पाम्बुपूर्णेक्षणादिति पाठस्तु क्वाचित्कोऽसमञ्जस एवेति।

इत्यादौ उत्सुकादिविशेषणव्यङ्ग्यानामौत्सुक्यलज्जाहर्षकोपाऽसूयाप्रसादानां व्यभिचारिमात्राणामुपस्थितौ रसव्यक्तिः।

तद्विशेषानाह—

श्रृङ्गार-हास्य-करुण-रौद्र-वीर-भयानकाः ।
बीभत्साद्भुतसंज्ञौ चेत्यष्टौ नाट्ये रसाः स्मृताः ॥६॥

१. तत्र शृङ्गारस्य द्वौ भेदौ संभोगो विप्रलम्भश्च ।

तत्राद्यः परस्परावलोकनालिङ्गना-ऽधरपान-परिचुम्बनाद्यनन्तत्वादपरिच्छेद्य एक एव गण्यते । यथा—

शून्यं वासगृहं विलोक्य शयनादुत्थाय किञ्चिच्छनै-
र्निद्राव्याजमुपागतस्य सुचिरं निर्वर्ण्य पत्युर्मुखम् ।
विस्रब्धं परिचुम्ब्य जातपुलकामालोक्य गण्डस्थलीं
लज्जानम्रमुखी प्रियेण हसता बाला चिरं चुम्बिता ॥

तथा—

त्वं मुग्धाक्षि विनैव कञ्चुलिकया धत्से मनोहारिणीं
लक्ष्मीमित्यभिधायिनि प्रियतमे तद्वीटिकासंस्पृशि ।
शय्योपान्त-निविष्ट-सस्मित-सखी-नेत्रोत्सवानन्दितो
निर्यातः शनकैरलीकवचनोपन्यासमालीजनः ॥

---

साहित्यचूडामणिः

एवं रससामान्यस्वभावमभिधाय तद्विशेषानपि दर्शयितुमाह—तदिति ।
अष्टाविति, शान्तस्य रसतायां विप्रतिपत्तेः ।

सुधासागरः

यद्यप्यत्र प्रेयसीत्यालम्बनविभावोऽप्यस्ति, तथापि रत्यनुकूलधर्मवत्तयाऽनिर्देशादनस्तिकल्प एवेति । मैवम् । एषां विभावादीनामसाधारण्येनाऽन्यद्वयाक्षेपकत्वेनाऽत्रापि मिलितानामेव व्यञ्जकत्वात् ।

नन्वेषां चेदसाधारण्यं किमन्यद्वयाक्षेपेण । एकैकव्यभिचारेण हि त्रयोपादानम् । अथ साधारण्यमेव, कथं तर्हि स्थायिविशेषयोग्यविभावाद्याक्षेपकत्वमिति । उच्यते, एकैकस्य व्यभिचारान्मिलितानां व्यञ्जकत्वे स्थितेऽसाधारणेनाऽपीतरतद्वयमाक्षिप्यते । किञ्च—रसस्य विभावादिसमूहालम्बनरूपत्वादेकैकस्मादसाधारणादपि व्यक्त्यभावान्मिलितानामेव व्यञ्जकत्वमतो साधारण्येऽपीतरद्वयमाक्षिप्यते, ततो मिलितैस्तदभिव्यक्तिरिति ।

केचिदाहुरेक एव श्रृङ्गारो रसः । केचिच्च द्वादशेत्यादि । तन्निरासाय सामान्यज्ञानानन्तरं विशेषजिज्ञासोदयाच्च वृत्तिकृदाह—तद्विशेषानाहेति । श्रृङ्गारहासेति ।

## सुधासागरः

रससामान्यलक्षणं रसत्वमेव। न च तत्र मानाभावः। रसपदशक्यतावच्छेदकतया तत्सिद्धेः। तच्च बाधकाभावाज्जातिरखण्डोपाधिर्वा। यद्यपि प्रकृततयाऽष्टौ काव्ये रसाः स्मृता इति वक्तुमर्हति, तथापि सामान्यतो रसाधिगमे विशेषजिज्ञासायां विशेषाभिधानस्य तदितरव्यवच्छेदपरत्वं स्यात्, व्युत्पत्तिबलात्। श्रव्यकाव्ये शान्तरसाभावप्रसङ्ग इति विभिद्योक्तम्।

अतएव श्रीवत्सलाञ्छनभट्टाचार्याः प्राहुः नाट्यमभिनयात्मकं काव्यम्, श्रव्यकाव्ये तु शान्तोऽपि रसः। नाट्ये ह्यवस्थाऽनुकृतौ सर्वविषयोपरमस्वरूपस्य तस्य च न सम्भवः। गीतवाद्यादेस्तद्विरोधित्वात्। तदुक्तम्—

न यत्र दुःखं न सुखं न चिन्ता न द्वेषरागौ न कदाचिदिच्छा।
रसः प्रशान्तः कथितो मुनीन्द्रैः सर्वेषु भावेषु शमप्रधानः॥ इति।

प्रदीपकारास्तु शान्तस्य रोमाञ्चादिविरहेणाऽनभिनेयत्वात् काव्यमात्रगोचरत्वमित्यभिधानान्नाट्य इत्युक्तम्। यद्वा तावदष्टौ रसाः प्रतिपादिताः। अतः काव्येऽपि तावन्त एवेत्यर्थ इत्याहुः। तन्नादरणीयम्। यतः 'कश्चित् न रसं स्वदते नटः' इत्यादिना नाट्येऽपि शान्तरसोऽस्तीति व्यवस्थापितम्।

ननु रसः सुखात्मक इति प्रतिपादितं तत्कथं दुःखमयः करुणादिको रस इति चेन्न। लोके तथात्वेऽपि काव्यादौ पार्यन्तिकाऽलौकिकसुखोदयात्। अन्यथा प्रेक्षावतामप्रवृत्त्यापत्तेः। अयमाशयः। यद्यपि करुणो रसः सुखदुःखसंभिन्नस्तथापि शोकावच्छिन्नस्य चैतन्यस्याऽऽनन्दांशे भग्नावरणस्य करुणरसत्वे निरतिशयस्याऽऽनन्दांशस्योत्कटत्वेनोत्कटेच्छाविषयत्वात् शोकांशे च बलवद्द्वेषाभावात्तत्र सामाजिकानां प्रवृत्तिः वर्णनीयतन्मयीभावेन शोकाभिव्यक्तेरश्रुपातादयो भवन्तीति न किञ्चिदनुपपन्नम्। एवं बीभत्सभयानकयोरपीति।

तत्र रतिनिष्पाद्यत्वं शृङ्गारत्वमिति रविभट्टाचार्याः। न च स्वस्मिन् स्वक्रियाविरोधः, सत्कार्यवादाभ्युपगमात्।

यद्वा 'रत्यादिप्रकृतिकत्वं शृङ्गारादीनां लक्षणम्। रतिस्तु मनोऽनुकूलेष्वर्थेषु सुखसंवेदनमि'-ति प्रदीपकाराः।

वयन्तु स्मरकरम्बिताऽन्तःकरणयोः स्त्रीपुंसयोः परस्परं रिरंसा रतिरिति। 'रतिर्देवादिविषया' इत्यादौ तु रतिशब्दप्रयोगो भाक्त इति प्रतीमः। उक्तञ्च रससुधासागरकारैः—'यूनोरन्योन्यविषयस्थायिनीच्छा रतिः स्मृता' इति।

## साहित्यचूडामणिः

शून्यमिति। शून्यं विविक्तम्। शनैः, अन्यथा पत्युत्थानप्रसंगात्। निद्रैव व्याजश्चित्तपरीक्षणम्। पत्युः कपोलयोः पुलकोत्पत्तिस्तस्य निद्राहानिमनुमापयतीति मुग्धाया लज्जोदयः। अत्र नायिकया नायकस्याभियोगः।

## सुधासागरः

तत्र सम्भोगो विप्रलम्भश्चेति शृङ्गारो द्विविधः द्वयो रतिप्रकृतिकत्वात्। तत्र—

अनुकूलौ निषेवेते यत्रान्योन्यं विलासिनौ।
दर्शनस्पर्शनादीनि स सम्भोग उदाहृतः॥
भावो यदा रतिर्नाम प्रकर्षमधिगच्छति।
नाधिगच्छति चाभीष्टं विप्रलम्भस्तदोच्यते॥

अतएव मधुमतीकाराः प्राहुः—इष्टालिङ्गनाद्यवाप्तिपुष्टरतित्वं सम्भोगत्वं तदलाभाऽपुष्टप्रकृष्टरतित्वं विप्रलम्भत्वमिति।

ननु सम्भोगेऽवान्तरभेदाः सम्भवन्ति ते किमिति नोदाहृता इति शङ्कां निराकुर्वन् वृत्तिकृदाह—तत्राद्यः परस्परावलोकनेत्यादि।

सम्भोगमुदाहरति—शून्यमित्यादि।

शार्दूलविक्रीडितं छन्दः। नवोढाया अभिनवसमागमवर्णनमिदम्। अयमर्थः। शून्यं निर्जनं, वासगृहं शयनागारं, विलोक्य—सखीनिभृतसत्त्वशङ्कया विशेषेण दृष्ट्वा शयनात् न तु सर्वतः, निद्राभङ्गे पार्श्वपरिवर्त्तनेन समाधातुं शक्यत्वात्, शनैः वलयादिक्वाणशङ्कया मन्दमुत्थाय, अनुरागजिज्ञासया निद्रायाः व्याजं मिषमुपागतस्य प्राप्तस्य न तु व्याजेन निद्राम्, सर्वथा तदसम्बन्धात् पत्युः न तु प्रियस्य, अपूर्वसमागमेनानुद्भिन्नरहस्यत्वात्। तथा निर्वर्णनेऽपि निद्राव्याजसहिष्णुत्वादित्यन्ये। मुखं सुचिरं यावद्बुद्धिवैभवम्, निर्वर्ण्य अनुरागातिशयान्निद्रानिर्णयार्थञ्च निःशेषं वर्णयित्वा। सुचिरं व्याजमुपागतस्येति वाऽन्वयः। विस्रब्धं विश्वासयुक्तं यथा स्यात्तथा निद्रायास्तात्त्विकत्वभ्रमात्। परिचुम्ब्य परितः कपोलयोर्भाले नयनयोश्चुम्बयित्वा गण्डस्थलीं जातपुलकां रोमाञ्चितामालोक्य। लज्जा लज्जावतीत्यर्थः। लज्जत इति लज्जेति मत्वर्थीयाच्प्रत्ययः। तेन लज्जनक्रियया समानकर्तृत्वनाऽऽलोक्येति क्त्वाप्रत्ययोपपत्तिः। अन्यानि क्त्वान्तान्यप्येतदपेक्षाण्येव। अतएव नम्रमुखी। बाला—नवोढात्वेनाप्रगल्भा नत्वज्ञातयौवना। तव सर्वं रहस्यमवगतमिति हसता अतएवोद्भिन्नरहस्यत्वात् प्रियेण चिरं—लज्जापगमः सम्भोगस्वीकारश्च यावत् तावत् पर्यन्तं चुम्बिते-ति वाक्यार्थः।

तत्र शून्यमित्यनेनोद्दीपनातिशयश्चुम्बनप्रवृत्तियोग्यता च ध्वन्यते। वासगृहमिति स्रक्चन्दनादिसम्पत्तिः। पत्युरिति युक्तानुरागित्वम्। विस्रब्धमित्यनेन च

## साहित्यचूडामणिः

अथ विपर्ययमुदाहरति—त्वमिति। विनैव न तु विनापि। वीटिका कञ्चुलिकाया बन्धनग्रन्थिः। शनकैरिति, युगपदपक्रमणस्य शङ्कावहत्वात्। अलीकः—

दशत्यसौ परभृतः सहकारस्य मञ्जरीम्।
तमहं वारयिष्यामि युवाभ्यां स्वैरमास्यताम्॥

इत्यादिवचनोपन्यासो यत्र।

## सुधासागरः

रागातिशयादविमृश्यकारित्वम्। नम्रेत्युक्तं न तु नामितेति। तेन लज्जया तथा विह्वलत्वं यथा मुखनामनेऽप्यशक्तिरिति व्यज्यते।

अत्र यद्यपि परस्परस्यालम्बनत्वेन उभयोरपि रतिः प्रतीयते। शून्यगृहं शयनक्षोभयोरुद्दीपनम्। बालाया रत्युद्दीपनं नायकनिद्रा। अनुभावौ मुखनिर्वर्णन-चुम्बने। लज्जा व्यभिचारिभावः। नायकरतेरुद्दीपनं नायिकया चुम्बनम्। हासादिरनुभावः। हासव्यङ्ग्यो हर्षः सञ्चारी तथापि नायकविषयिण्याः नायिकानिष्ठाया रतेरुद्रेकश्चर्वणाविषय इति सहृदयैराकलनीयम्। भोगावासो वासगृहमिति हारावली।

त्वं मुग्धेति। अमरुशतके कुचोपपीडं परिरभ्य रन्तुकामस्य आलिङ्गनव्यवधान-भूतां कञ्चुकीं मोचयितुं प्रवृत्तस्य नायकस्य वर्णनमिदम्। शार्दूलविक्रीडितं छन्दः। अयमर्थः। हे मुग्धाक्षि सुन्दरनयने त्वं कञ्चुलिकया विनैव मनोहारिणीं चित्ता-कर्षणशीलाम्, ताच्छील्ये णिनिः, लक्ष्मीं शोभां। धत्से धारयसि, अक्ष्णैव मनोहरणात्, अत एव कञ्चुलिकावैयर्थ्यम्। न केवलं कञ्चुलिकया शोभाऽनुत्पत्ति-रपि तु रमणीयाङ्गतिरोधानमपीति एवकारार्थः। इत्यभिधायिनि भाषमाण एव प्रियतमेऽतिशयितप्रातिपात्रे नायके तस्याः कञ्चुलिकायाः वीटिका ग्रन्थिः तत्संस्पृशि सति कञ्चुकीमोचनायेति भावः सखीसार्थाल्लज्जया शय्याया उपान्ते समीपे निविष्टा निबिडसंलग्ना, प्रतारणाभिज्ञतया स्मितसहिता सखीस्निग्धाङ्गनैव नेत्रोत्सवः तां दृष्ट्वा हर्षोदयात् तेनानन्दितः सञ्जातानन्दः आलीजनः, अलीकानां मिथ्याभूतानां शुको मया भोजनीयः मया तु सारिका पाठनीयेत्यादि-वचनानामुपन्यासो यथा स्यात्तथा। शनकैर्मन्दं निर्यातः मन्दिरान्निर्गतः।

शनैस्त्वमुत्सवत्यागे दुःखोत्पादात्। अतएवाऽऽलीजनोऽविदग्धः समयज्ञाना-दिति चक्रवर्त्तिनः। वयन्तु शनैस्त्वमलीककथा च नायिकाया लज्जातिशयपरि-हाराय, अतएवालीजनो विदग्ध इति प्रतीमः। प्रियतम इत्यनेनाऽनुपेक्षणीयत्वं सस्मितेत्यनेन कञ्चुलिकाऽपसारणे स्वरसश्च व्यज्यते।

यद्यप्यत्र मुग्धाक्षी प्रियतमश्च परस्पररत्यालम्बनविभावौ। नायकरतेरुद्दीपनं नयनसौन्दर्याङ्गशोभादि। आभाषणवीटिकास्पर्शावनुभावौ। तयोरभिधायिनि

अपरस्तु अभिलाष-विरहेर्ष्या-प्रवास-शाप-हेतुक इति पञ्चविधः। क्रमेणोदाहरणम्—

प्रेमार्द्राः प्रणयस्पृशः परिचयादुद्गाढरागोदया-
स्तास्ता मुग्धदृशो निसर्गमधुराश्चेष्टा भवेयुर्मयि।
यास्वन्तःकरणस्य बाह्यकरणव्यापाररोधी क्षणा-
दाशंसापरिकल्पितास्वपि भवत्यानन्दसान्द्रो लयः॥

अन्यत्र व्रजतीति का खलु कथा नाप्यस्य तादृक् सुहृद्
यो मां नेच्छति नागतश्च हहहा कोऽयं विधेः प्रक्रमः।
इत्यल्पेतरकल्पनाकवलितस्वान्ता निशान्तान्तरे
बाला वृत्तविवर्त्तनव्यतिकरा नाप्नोति निद्रां निशि॥

एषा विरहोत्कण्ठिता।

---

## साहित्यचूडामणिः

अपर इति। अपरो विप्रलम्भलक्षणः। यत्र नायकयोरुत्कण्ठायामपि यतः कुतोऽपि हेतोरसमागमः, सोऽभिलाषहेतुकः, प्रणयखण्डनादिना खण्डितया सह विरहनिमित्तकः। यथाह—

## सुधासागरः

वीटिकासंस्पृशीति तुल्यकालताऽवगत्या प्रतीयमान उत्कण्ठाख्यः सञ्चारी। नायिकारतेस्तु नायकरत्यनुभावावेवोद्दीपनं, स्मितादिरनुभावः। तद्व्यङ्ग्यो हर्षः सञ्चारी। तथापि प्राधान्येन तु आस्वादविषयत्वं नायिकालम्बनाया नायकनिष्ठरतेरेवेति पूर्वस्माद् भेदः।

अतएव सम्भोगो नायिकारब्धो नायकारब्धश्चेति प्रदीपकाराः।

मधुमतीकृताऽप्युक्तम्—न चोदाहरणयोरन्यतरवैयर्थ्यम्। नायकालम्बनस्याद्येन नायिकालम्बनस्य सम्भोगस्य चान्त्येन श्लोकेनोदाहरणादिति।

अत्र श्रीवाग्देवतावतारैः द्विविधसम्भोगोदाहरणेन नायकयोरालम्बनत्वमाश्रयत्वञ्च समानमिति ध्वनितम्।

यत्तु 'पूर्वं रक्ता भवेन्नारी पुमान् पश्चात्तदिङ्गितैः' इति क्रमप्रदर्शनायोदाहरणान्तरमिति कैश्चिदुक्तम्, तन्न सम्यक्। प्रथमोदाहरणेनैव तादृक्क्रमावगतिसिद्धेः। तत्र नायिकोत्कण्ठाया एव प्रथमं वर्णनात्, प्रायिकत्वाच्चेति सुधीभिर्ध्येयम्।

विप्रलम्भः सङ्गमपूर्वस्तदन्यश्च। तत्रान्त्योऽभिलाषहेतुक इत्युच्यते।

## साहित्यचूडामणिः

तत्रायोगोऽनुरागेऽपि नवयोरेकचित्तयोः ।
पारतन्त्र्येण दैवाद् वा विप्रकर्षादसङ्गमः ॥
दशावस्थः स तत्रादावभिलाषोऽथ चिन्तनम् ।
स्मृतिर्गुणकथोद्वेगः प्रलापोन्मादसंज्वराः ॥
जडता मरणं चेति दुरवस्थं यथोत्तरम् । [ दशरू० ४.५०-५२ ]
विप्रयोगस्तु विश्लेषो रूढविस्रम्भयोर्द्वयोः ॥ [ दशरू० ४.५७ ]

इति । प्रणयकलहादौ मानिन्या सममीर्ष्याहेतुकः, अर्थार्जनादिना कौतूहलात् प्रोषितपतिकया सह प्रवासनिबन्धनः,प्रभुकोपसंपन्नः स एव शापमूल इति पञ्चविधः ।

प्रेमेति । प्रेम्णा भावविशेषेणार्द्राः आनुकूल्यशालिन्यः । उक्तं हि—

यद्यदस्य प्रियं वेत्ति तस्य तस्याशुकारिताम् ।
योग्यतामार्द्रतामाहुर्मनःकालुष्यनाशिनीम् ॥ इति ।

## सुधासागरः

अभिलाषपदेन तद्धेतोरनादिसङ्गमाभावस्य लक्षणात् । आद्यस्तु कचिदीर्ष्यया प्रणयेन वा मानरूपः स ईर्ष्याहेतुक इत्युच्यते । ईर्ष्यापदेन मानहेतोरुपलक्षणात् । क्वचित्तु कार्यवशाद्देशान्तरस्थितेः स प्रवासहेतुकोऽभिधीयते । उत्पद्यमानोत्पत्स्यमानावपि प्रवासौ स्वज्ञानद्वारा विप्रलम्भप्रयोजकाविति नाव्याप्तिः । प्रवासशब्देन ज्ञानलक्षणाद् वा । क्वचिच्छापात् स च शापहेतुक इति व्यवह्रियते । क्वचिदुक्तत्रितयातिरिक्ताद् गुरुलज्जादितः कारणात् । स एष विरहहेतुक इत्युच्यते । करुणशृङ्गारस्याप्यत्रैवाऽन्तर्भावः ।

न च करुणो न शृङ्गारस्तस्य शोकप्रकृतिकत्वादिति वाच्यम् । प्रत्युज्जीवनान्तप्रयाणेऽन्यतरस्यापि रतेरनपायात् । तत्प्रकृतिकस्य शृङ्गारस्यैवोचितत्वात् । अतथाभूते करुणसौलभ्यात् । उक्तञ्च मिश्रपक्षधरवाचस्पतिप्रमुखैः—

यूनोरेकतरस्मिन् गतवति लोकान्तरं पुनर्लभ्ये ।
विमनायते यदैकस्तदा भवेत् करुणविप्रलम्भ इति ॥

इति दर्शनान्मूर्च्छितनायकादिविषयकः करुणविप्रलम्भोऽप्यस्तीति । अतएव च रघुवंशे अष्टमसर्गे 'सादृश्यप्रतिकृतिदर्शनैः प्रियायाः' इत्यभिधाय 'लाभं प्रियानुगमने त्वरया स मेने' इत्यनन्तरम् 'अरमत पुनर्नन्दनाभ्यन्तरेषु' इत्यनेन रत्यनुवृत्तिर्दर्शिता । अतएव स्थितोऽपि शोकः शृङ्गारस्य व्यभिचारितां भजते । उक्तञ्चान्यत्राऽपि—'रसावस्थः परं भावः स्थायितां प्रतिपद्यते' इति । तदेतत्सर्वमभिप्रेत्य वृत्तिकृदाह—अपरस्त्वभिलाषविरहेत्यादि ।

तत्राभिलाषहेतुकमुदाहरति—प्रेमार्द्रा इत्यादि । शार्दूलविक्रीडितं छन्दः ।

## साहित्यचूडामणिः

प्रेमैव विस्रम्भयोगी प्रणयः। स एव फलपर्यन्तो रागः।

रागात् फलवती सेयमनुरागेण भुज्यते

इत्युक्तत्वात्। उक्तसर्ववैशिष्ट्यशालिन्यस्तस्याश्चेष्टाः मयि भवेयुरित्याशंसा। लयः तन्नायःपिण्डपाथोन्यायेन तन्मयीभावः। तत्रायं विशेषः यत् किल हर्षबाहुल्यम्।

अन्यत्रेति। विपक्षविषये गच्छतीति का खलु कथा शङ्कापि नास्ति।

अथ सुहृदः कस्यचिद् गृहे विलम्बितवानित्याशङ्क्याह—नापीति। इयमेव हि सुहृदस्तस्य मय्यनिच्छा यत् तद्भवने विलम्बितः पतिः क्षणमपि मां विरहयतीति।

नायिकाया निर्णयेन व्याख्यातप्रायमेतदित्याह—एषेति।

## सुधासागरः

मालत्यर्थं श्मशानसाधने प्रवृत्तस्य माधवस्याभिलाषोऽयम्। अयमर्थः। मुग्धदृशो मालत्यास्तास्ता मदनुभूतविशेषाश्चेष्टा दृग्व्यापाराद्या मयि भवेयुरित्यन्वयः। आशंसायां लिङ्। कीदृश्यः प्रेम्णा स्नेहेनार्द्राः स्निग्धाः, प्रेमव्यञ्जकत्वात्।

प्रेमैवावलोकनादिना प्रकर्षं नीतः प्रणयस्तं स्पृशन्तीति प्रणयस्पृशः।

प्रेमा दर्शनादिगतो भावव्यञ्जकः कश्चन विशेषस्तत्पूर्वको वशीकारः प्रणय इति चण्डीदासभट्टाचार्याः।

प्रणयः प्रश्रयः स च गुर्वादिभयलाघवमिति चक्रवर्त्तिनः। व्यवहारकौशलमिति मिश्राः। वत्सलतेति नृसिंहठक्कुराः प्राहुः।

परिचयाद् दृढाऽऽसक्तिवशादुद्गाढः स्थिरतयानिःशेषमुत्सारितगुर्वादिपारतन्त्र्यः रागस्योदयो यासु तथाभूताः परिचयातिशयेन रञ्जनक्षमः प्रणय एव रागः। परिचयो रहस्यावेदनमिति चण्डीदासः। निसर्गेण स्वभावेन मधुरा मनोहराः, यास्वाशंसया मनोरथेन कल्पितास्वपि, किंपुनरनुभूतासु इत्यपिशब्दद्योत्यम्, क्षणात् अन्तःकरणस्य मनसः आनन्देन सान्द्रो घनो लग्नस्तन्मयीभावः बाह्यकरणस्य चक्षुरादेर्व्यापारं विषयग्राहित्वं रुणद्धीति तथाभूतो भवतीति वाक्यार्थः।

अत्र मुग्धदृश इति दृक्प्रकर्षोपक्रमात् प्रेमार्द्रा इत्यादिविशेषणस्वारस्याच्च चेष्टापदेन दृग्व्यापारलाभ इति वैद्यनाथाः। वयन्तु तास्ता इत्यनेन कटाक्षभुजक्षेपादि-लज्जास्मितहर्षासूयादिव्यापारादुक्तविशेषणविशिष्टा इति सर्वे विवक्षिता इति प्रतीमः।

विरहहेतुकमुदाहरति—अन्यत्र इत्यादि। शार्दूलविक्रीडितं छन्दः। अयमर्थः। बाला काचित्स्वकीया गुरुलज्जादियत्किञ्चित्कारणात्कदाचिन्नायकागमनविलम्बे नाना-

सा पत्युः प्रथमापराधसमये सख्योपदेशं विना
नो जानाति सविभ्रमाङ्गवलनावक्रोक्तिसंसूचनम् ।
स्वच्छैरच्छकपोलमूलगलितैः पर्यस्तनेत्रोत्पला
बाला केवलमेव रोदिति लुठल्लोलालकैरश्रुभिः ॥

## साहित्यचूडामणिः

सेति। सख्यं सखित्वं तेन हेतुनोपदेशः तं विना। यद्यपि

स्त्रीणामीर्ष्याकृतो मानः [1]कार्योऽन्यासङ्गिनि प्रिये [दशरू० ४.५९]

इति सामान्येनेक्तिः, तथापि

तत्र प्रणयमानः स्यात् कोपोपहितयोर्द्वयोः [दशरू० ४.५८]

इति नीत्या प्रणयमानस्य नायिकेव नायकोऽपि विषयः। यथा—

## सुधासागरः

कल्पनां करोति तदाह—अन्यत्र नायिकान्तरगृहे व्रजति गच्छतीति खलु का कथा। तादृशमदेकपत्नीव्रतधरप्रियस्यान्यनायिकाभिलाषः स्वप्नेऽप्यसम्भावितः, किं पुनर्गमनमित्यर्थः। नाप्यस्य तादृक् सुहृत् अस्य मद्धृदयवर्त्तिनः कान्तस्य तादृशः सखापि कश्चन नास्ति, यो मां नेच्छति मत्सौभाग्यं द्वेष्टि। तथा च तज्जन्योऽपि विकारोऽसम्भावितः। तर्हि हेत्वभावेऽनागमनमप्यसम्भाव्यमित्यत्राह—नागतश्च। चकारस्त्वर्थे आगतस्तु नेत्यर्थः। सहसाऽकस्मात् प्रलयमन्तरेण विधेर्दैवस्य कोऽयं प्रक्रमः। अभूतपूर्वो ज्वररोगादिप्रहारादिकं विनैव निरपराधाया मम मारणक्रियारम्भः। इत्युक्तप्रकारेणाऽल्पेतराभिर्बह्वीभिः कल्पनाभिः वितर्कणैः कवलितं विषयान्तरसञ्चाराभावाद् दुःखानुभवाच्च चर्वितमिव स्वान्तं मनो यस्यास्तथाभूता बाला निशान्तस्य भवनस्यान्तरे मध्ये निशि स्वापकालेऽपि वृत्तविवर्त्तनमुद्वृत्तपरिवर्त्तनं तस्य व्यतिकरः सम्बन्धो यस्यां तादृशी सती चित्तस्वास्थ्याभावान्मुहुः शय्यायां लुठन्तीति यावत्, निद्रां प्राप्नोति मोहवशात्कदाचिन्निश्चलत्वेऽपि न कथंचिन्निद्रातीति भावः।

एषा च 'आगन्तुं कृतचित्तोऽपि दैवान्नायाति यत्प्रियः। तदनागमदुःखार्ता विरहोत्कण्ठिता मता' इत्युक्तलक्षणा नायिकेत्यवश्यं विरहस्य प्रवासादितः पृथग्भावः स्वीकार्यः। अन्यथा प्रोषितभर्तृकादितोऽस्या भेदान्तरत्वानापत्तेरिति बोध्यम्। तदेतदभिप्रेत्य श्रीमद्वृत्तिकृदाह—एषा विरहोत्कण्ठितेति।

ईर्ष्याहेतुकमुदाहरति—सा पत्युः इत्यादि। शार्दूलविक्रीडितं छन्दः। काचित् सखीवृत्तान्तं सखीं प्रति कथयति। सा बाला मुग्धा परदर्शने लज्जया परितोऽस्ते

१. कोपो० इति मूलं दशरूपके।

प्रस्थानं वलयैः कृतं प्रियसखैरस्रैरजस्रं गतं
धृत्या न क्षणमासितं व्यवसितं चित्तेन गन्तुं पुरः ।
यातुं निश्चितचेतसि प्रियतमे सर्वे समं प्रस्थिता
गन्तव्ये सति जीवित प्रियसुहृत्सार्थः किमु त्यज्यते ॥

---

## साहित्यचूडामणिः

अस्मिन्नेव लतागृहे त्वमभवस्तन्मार्गदत्तेक्षणः
सा हंसैः कृतकौतुका चिरमभूद् गोदावरी सैकते ।
आयान्त्या परिदुर्मनायितमिव त्वां वीक्ष्य बद्धस्तया
कातर्यादरविन्दकुड्मलनिभो मुग्धः प्रणामाञ्जलिः ॥ इति ।

द्वयोरेकत्र यथा—

पणअकुविआण दोण्णवि अलिअपसुत्ताणमाणइल्लाण ।
णिच्चलणिरुद्धणीसासदिण्णअण्णाण को मल्लो ॥
[ प्रणयकुपितयोर्द्वयोरप्यलीकप्रसुप्तयोर्मानिनोः ।
निश्चलनिरुद्धनिःश्वासदत्ताज्ञयोः को मल्लः ॥ ]

प्रस्थानमिति । सर्वं समं प्रस्थितम् । नपुंसकमनपुंसकेनेत्येकशेषः

## सुधासागरः

क्षिप्ते नेत्रोत्पले यया तादृशी सती, पत्युर्न तु प्रियस्य अपराधकारित्वात् , प्रथमापराधस्यान्याङ्गनासङ्गमरूपस्य समये, प्रथमत्वेनासह्यत्वं व्यज्यते, सख्येन सौहार्देन य उपदेशस्तं विना, यद्वा सख्येत्यसमस्तं तृतीयान्तम् तथा च सखीकर्तृकोपदेशं विनेत्यर्थः। सविभ्रममङ्गस्य भ्रुकुट्यादेर्या वलना व्यापारविशेषः, वक्रोक्तयश्च ताभिः संसूचनं अर्थान्मानस्य प्रकाशनं नो जानाति । तर्हि किं करोतीत्याह—स्वच्छैरित्यादि। स्वच्छैरञ्जनत्यागान्निर्मलैः अच्छयोः पत्ररचनत्यागान्निर्मलयोः कपोलयोर्मूले गलितैः । अतएव गलन्तो मज्जन्तो लोलाः कुसुमगुम्फनादिसंस्काराभावाच्चञ्चला अलकाश्चूर्णकुन्तलकेशा येषु तादृशैः अश्रुभिरित्युपलक्षणे तृतीया। तथा चाऽश्रुभिरुपलक्षितं केवलमेव रोदिति । अन्यसम्भोगदुःखिताऽपि सरलतया हेतूक्त्यङ्गवलनाद्यमिश्रितं रोदनं करोतीत्यर्थः ।

लुठल्लोलालकैरिति पाठेऽपि स एवार्थः। लुठल्लोलोदकैरिति पाठे तु लुठद् भूमौ पतल्लोलोदकं स्रोतो येषां तैरित्यर्थः। अत्र वैद्यनाथैः लुठल्लोलालकरूपैरश्रुभिरिति रूपकमुभयोः सूक्ष्मत्वादिति व्याख्यातम् । तत्र रूपकमप्रयोजकमिति काव्यविदां स्पष्टम् ।

प्रवासहेतुकमुदाहरति—प्रस्थानमित्यादि । शार्दूलविक्रीडितं छन्दः। काचित्

## साहित्यचूडामणिः

एकवद्भावश्च। सुहृत्सार्थ इत्यस्य प्रियसखैरित्यनेन पौनरुक्त्यं दुष्परिहरम्। प्रियेति पृथक्पदं सम्बुद्ध्यन्तं जीवितविशेषणम् अतो न पौनरुक्त्यमित्येके। तदसत्। सुहृत्सखिशब्दयोः पौनरुक्त्यस्य तादवस्थ्यात्। किञ्च मूढ ! मूर्ख ! इत्यादि हि जीवितं प्रत्युचितमामन्त्रणं नतु प्रियेति। तस्य तज्जिहासायामनौचित्यात्।

## सुधासागरः

प्रोष्यत्पतिका[१] स्वजीवितं सम्बोध्य सोपालम्भं वदति।

हे प्रिय प्रीतिपात्र जीवित प्रियतमे प्रेयसि, यातुं गन्तुम्, निश्चितं सञ्जातनिश्चयं चेतो यस्य तथाभूते सति, नतु गन्तुमुद्यते, सर्वे अर्थात्तव सुहृदः समं सह प्रस्थिताः स्थानात्प्रचलिताः ततस्त्वयापि गन्तव्ये सति गमनावश्यम्भावे सति विरहवेदनायाः सोढुमशक्यत्वादिति भावः। 'कृत्यल्युटो बहुलम्' इत्यवश्यार्थे तव्यप्रत्ययः। सुहृदां स्वमित्राणां सार्थः समूहः किमु कुतस्त्यज्यते त्वयापि गन्तव्यमिति भावः। के के प्रस्थितास्तत्राह—प्रस्थानमित्यादि। वलयैः कङ्कणैः प्रस्थानं कृतम्, प्रियगमनश्रवणजनितकार्श्येन स्वस्थानाच्चलितमिति भावः। प्रियसखैः प्रीतिपात्रमित्रैः प्रियस्य नायकस्य वा मित्रभूतैरिति वचनादिविपरिणामेन सर्वेषु तृतीयान्तेषु योज्यम्। तत्रवञ्च वलयानां प्रियसन्निधानान्वयव्यतिरेकानुविधायितया अस्राणामपि हृदयस्थत्वेन प्रियसखत्वमिति चक्रवर्त्ती। अस्रैरश्रुभिः रजस्रं निरन्तरमसंख्यातत्वात्, गतं स्थानान्निर्गतम्। धृत्या धैर्येण क्षणमपि नासितं न स्थितं, चित्तेन गन्तुं पुरः पूर्वमेव व्यवसितमुद्युक्तम्, न गतम्। तेन सममित्यनेनाविरोधः।

प्रियेति सम्बोधनेन प्रियतमेनेव त्वयापि त्यक्तुमुचितमिति ध्वन्यते।

प्रियाणां सुहृदां, प्रियस्य वा सुहृदां सार्थः इत्यर्थकमेकं पदमिति केचित्।

प्रियसखैरिति विशिष्यास्रविशेषणमत्यन्तप्रियत्वप्रतिपादनाय। तच्च जीवितनाशकदुःखोपस्थितावप्यस्रोद्गमात्किञ्चिद्दुःखोपशमेन जीवितरक्षकत्वात् दुःखातिशयेऽप्यत्यागाद् वेत्याहुः।

सार्थशब्दश्च यद्यपि 'सङ्घसार्थौ तु जन्तुभिः' इति अमरोक्तेः जन्तुसमूह एव प्रयुज्यते नाचेतनसमूहे, तथापि प्रकृते चैतन्यारोपात् समर्थनीय इति वैद्यनाथाः।

वयन्तु अचेतनेषु सुहृत्त्वारोपाच्चैतन्यव्यवहार इति प्रतीमः।

---

[१] 'प्रवत्स्यत्पतिका' इति तु युज्यते वक्तुम्।

त्वामालिख्य प्रणयकुपितां धातुरागैः शिलाया-
मात्मानं ते चरणपतितं यावदिच्छामि कर्तुम् ।
अस्रैस्तावन्मुहुरुपचितैर्दृष्टिरालुप्यते मे
क्रूरस्तस्मिन्नपि न सहते सङ्गमं नौ कृतान्तः ॥

## साहित्यचूडामणिः

त्वामिति । अत्र 'शापेनास्तङ्गमितमहिमे'ति प्रकरणवशेन शापहेतुकत्वम् ।

## सुधासागरः

शापहेतुकमुदाहरति—त्वामालिख्य इत्यादि । मन्दाक्रान्ता छन्दः । लक्षणमुक्तं प्राक् । मेघदूते कुबेरशापेन वियुक्तभार्यस्य यक्षराजस्य प्रियामुद्दिश्य मेघरूपदूतं प्रत्युक्तिरियम् । हे प्रिये ! प्रणयेन प्रेमातिशयेन कुपितां त्वां त्वत्प्रतिकृतिमित्यर्थः[1] । धातवो गैरिकादयः ते एव रागाः रञ्जकद्रव्याणि तैः, शिलायां शिलापट्टे आलिख्य निर्माय आत्मानं मां मत्प्रतिकृतिमित्यर्थः, ते तव चित्रगताया इत्यर्थः, चरणपतितं कर्तुं तथा लिखितुं यावत् इच्छामि तावत् इच्छासमकालं मुहुरुपचितैः प्रवृद्धैरस्रैर्बाष्पैर्मे दृष्टिर्दर्शनमालुप्यते लुप्ताः भवतीत्यन्वयः । अर्थान्तरं न्यस्यति—क्रूरः परश्रेयोविघाते जागरूकः कृतान्तः दैवमेव कृतान्तो यमः, तस्मिन्नपि आलेख्येऽपि नौ आवयोः सङ्गमं न सहते किमु साक्षादिति ।

अत्र प्रणयकुपितामिति कोपव्यञ्जकलौहित्यसम्पादनाय धातुरागैरित्युक्तम् । यत्तजातीयमेचकवर्णलाभाय शिलायामित्युक्तम् ।

अत्र कथञ्चिल्लिखितायामाकृतौ पादपतनारम्भे तत्कालीन-तदीयविलासविशेषानुस्मरणसमुद्दीपितशोकविशेषप्रवृत्तैरश्रुभिर्दर्शनविघातद्वारा विघ्नः क्रियत इति सर्वतन्त्रविदो वाचस्पतिमिश्राः ।

आधुनिकाः प्रदीपकारादयस्तु लिखनमपीच्छाविषय एवेत्याहुः ।[2]

ननु शठेन विधिना निद्रादरिद्रीकृत इत्यत्रेव क्रूरपदेनासूयावगमादसूयाख्यभावध्वनिरेवायं कथं विप्रलम्भोदाहरणमिति चेत् । न । विप्रलम्भावगमादनन्तरं समर्थनीयवाक्येन क्रूर इत्यादिना भावव्यक्तेरकिञ्चित्करत्वात् । जातत्वात्तस्य । न च तर्हि शठेन विधिनेत्यत्रापि तथा स्यादिति वाच्यम् । यावत्तावत्पदाभ्यामेकवाक्यत्वेनैवान्वयादिति युक्तमेवेदं विप्रलम्भोदाहरणम् ।

---

१–२ इदमेव युक्तम् ।

हास्यादीनां क्रमेणोदाहरणम्—

[ हास्यस्य ]

२. आकुञ्च्य पाणिमशुचिं मम मूर्ध्नि वेश्या
मन्त्राम्भसां प्रतिपदं पृषतैः पवित्रे ।
तारस्वनं प्रथितथूत्कमदात् प्रहारं
हा हा हतोऽहमिति रोदिति विष्णुशर्मा ॥

---

## साहित्यचूडामणिः

विष्णुशर्मेति नाम्ना ब्राह्मण्यप्रयुक्तं चापलम् । तेन
पाषण्डविप्रप्रभृतेश्चेटचेटीविटाकुलम् [दशरू० ३.५४]
इति प्रहसनौचित्यं ध्वन्यते ।

## सुधासागरः

सूत्रक्रमप्राप्तेऽपि हास्याद्युदाहरणे शृङ्गारवन्नामीष्ववान्तरभेदो वाच्य इति विभावयितुं श्रीमद्वृत्तिकृदाह—हास्यादीनामित्यादि । तत्र हास्यं यथेत्यादि तूदाहरणानामसङ्कीर्णतां ध्वनयितुमिति बोध्यम् । 'व्यङ्ग्यव्रीडादिभिश्चेतोविकासो हास उच्यते' । व्यङ्ग्यं वैकृतम् । तेन हासप्रकृतिको हासः । यथा—आकुञ्च्येत्यादि । वसन्ततिलका छन्दः । लक्षणमुक्तं प्राक् । विष्णुशर्माणमुपहसतः कस्यचिदुक्तिरियम् । इतीत्युपलक्षणार्थकतृतीयान्तम् । विष्णुशर्मा कश्चिद् विप्रः आकुञ्च्येत्यादि हतोऽहमित्यन्तेन वाक्येनोपलक्षितं रोदितीत्यन्वयः । वाक्यार्थस्तु वेश्याऽशुचिमुच्छिष्टादिनोपहतं पाणिमाकुञ्च्य सङ्कुचिताग्रं कृत्वा मुष्टिं कृत्वेति यावत् । मन्त्रपूतानामम्भसां पृषतैर्बिन्दुभिः प्रतिपदं प्रतिक्षणं पवित्रे मम मूर्ध्नि तारो दीर्घः स्वरो यत्र प्रथितो विस्तारितः थूदिति शब्दश्च यत्र तथा प्रहारमदात् दत्तवती । हाहेति खेदातिशये । हतो नष्टोऽहमिति ।

प्रतिपदं प्रत्यवयवमिति केचित् ।

प्रतिपदं प्रतिमन्त्रपदं तथा चैकैकेन मन्त्रपाठेन संस्कृतैः पृषतैः पवित्रे इत्यर्थ इति चण्डीदासभट्टाचार्याः प्राहुः ।

प्रहितथूकमिति पाठे प्रहितं—प्रक्षिप्तं थूकं लाला यत्रेति व्याचक्षते ।

यत्तु तारस्वरं यथात् स्यात्तथा रोदितीति व्याख्यानम्, तदयुक्तम् । हतोऽहमित्यन्तस्य रोदनकर्तृवाक्यस्यानुकरणात् तदन्तर्गतस्यान्यवक्तृकवाक्यार्थे रोदने

[ करुणस्य ]

३. हा मातस्त्वरिताऽसि कुत्र, किमिदं, हा देवताः, क्वाऽऽशिषः,
धिक् प्राणान्, पतितोऽशनिर्हुतवहस्तेऽङ्गेषु, दग्धे दृशौ।
इत्थं घर्घरमध्यरुद्धकरुणाः पौराङ्गनानां गिर-
श्चित्रस्थानपि रोदयन्ति शतधा कुर्वन्ति भित्तीरपि ॥

---

## साहित्यचूडामणिः

हेति। अत्र कालधर्मयोगिनीं काञ्चिदुद्दिश्य शोकः परिपोषं प्राप्त इति करुणो रसः।

## सुधासागरः

विशेषणसम्पर्कित्वासम्भवादिति सहृदयैराकलनीयम्।

अत्र विष्णुशर्माऽऽलम्बनम्। तस्य रोदनमुद्दीपनम्। द्रष्टुरुद्वेगजाड्यादयो व्यभिचारिणः। स्मितहसितादीनि उत्तममध्यमाधमेष्वनुभावाः।

रसाश्रयस्यैतद्वाक्यमनुभावः, चापलादिर्व्यभिचारीति प्रदीपकाराः।

यस्य हासस्तदनिबन्धेऽपि सामर्थ्यात्तदवसायः। तदुक्तम्—'यस्य हासः स चेत् क्वापि साक्षान्नैव निबध्यते। तथाप्येष विभावादिसामर्थ्यादवसीयते' इति। विकृतवाग्वेषादिदर्शनेऽवश्यं हासोदयादत्र हास्यो रसो व्यज्यते।

करुणमुदाहरति—'इष्टनाशादिभिश्चेतोवैक्लव्यं शोकशब्दभाक्'। आदिग्रहणादनिष्टाप्तेः। शोकप्रकृतिकः करुणः। यथा—हा मातरित्यादि। शार्दूलविक्रीडितं छन्दः। राजपत्न्यां मृतायां तत्परिजनविलापवर्णनमिदम्। अयमर्थः। इत्थम् एतत्प्रकाराः, पुरे भवानामङ्गनानां घर्घरस्वराः उच्चैः क्रन्दनादिति भावः, ताः श्रमाद् बाष्पबाहुल्याच्च मध्येऽन्तराले रुद्धाः विच्छिन्नाश्चेति कर्मधारयोत्तरं पुनः करुण इत्यनेन कर्मधारयः। करुणाः कातर्यसूचिकाः, नातो रसस्य शब्दवाच्यतादोषः, एवम्भूता गिरश्चित्रस्थानप्यालेख्यधृतानपि रोदयन्ति, भित्तीरपि शतधा शतखण्डाः कुर्वन्ति, किम्पुनः सचेतनानित्यन्वयः। किम्प्रकारा गिर इत्यपेक्षायां वाग्भेदरूपानुकरणं पूर्वार्द्धम्। तदर्थस्तु—हा विषादे। भो मातः कुत्र गन्तव्ये त्वरिताऽसि सञ्जातत्वराऽसि येनास्मानपि नापेक्षितवती। किमिदम् आकस्मिकोत्पातरूपम्। हा इति धिगर्थे, देवताः धिक्। नानोपचारपूजास्तुतिनतिभिरप्यरक्षणात्, आशिषः अर्थाद्दानादितर्पितद्विजानाम्, क्व कुत्र गता इति शेषः, ता अपि विफला इति भावः। प्राणान् धिक्, त्वदभावेऽपि स्थिरत्वात्। ते तव, अङ्गेषु सुकुमारेषु अशनिर्वज्रं तद्रूपो हुतवहः य एवाऽऽहुतिभिस्तर्पितः

[ रौद्रस्य ]

४. कृतमनुमतं दृष्टं वा यैरिदं गुरु पातकं
मनुजपशुभिर्निर्मर्यादैर्भवद्भिरुदायुधैः ।
नरक-रिपुणा सार्धं तेषां सभीमकिरीटिना-
मयमहमसृङ्मेदोमांसैः करोमि दिशां बलिम् ॥

## साहित्यचूडामणिः

कृतमिति । अत्राश्वत्थाम्नः क्रोधः परिपुष्ट इति रौद्ररसत्वम् ।

## सुधासागरः

स एव पतितः स्वयमेव, सचेतनैरेतेष्वङ्गेषु पातयितुमशक्यत्वात् । यद्वा पतितोऽशनिरिति भिन्नवाक्यम् । वज्रपात एवाऽयं यत्तव विपत्तिरिति । दृशौ नेत्रे दग्धे इति विशेषणोपादानं रमणीयताऽतिशयेन तद्दाहे दुःखाधिक्यात् । यद्वा अस्माकं दृशौ दग्धे इति । अशुभदर्शितत्वाल्लोकोक्त्या द्रष्टव्यम् ।

रौद्रमुदाहरति—'प्रतिकूलेषु तैक्ष्ण्यस्य प्रबोधः क्रोध उच्यते' । तत्प्रकृतिको रौद्रः । यथा कृतमित्यादि । हरिणी छन्दः । 'रसयुगहयैर्न्सौ म्रौ स्लौ गो यदा हरिणी तदा' इति लक्षणात् । वेणीसंवरणे द्रोणवधानन्तरं अर्जुनादीन् प्रति अश्वत्थाम्नः उक्तिरियम् । अयमर्थः । इदं गुरोर्द्रोणस्य वधरूपं पातकमेव गुरुपातकं महापातकम्, यैः अविवेकान्मनुजरूपैः पशुभिः उदायुधैरुद्यतास्त्रैरत एव निर्मर्यादैर्मर्यादाशून्यैर्भवद्भिरर्जुनादिभिः, पातकस्य कर्त्तरि अनुमन्तरि अनिराकर्त्तरि च दण्डो युक्त इति क्रमेणाह कृतं जनितमनुमतमनुज्ञातं दृष्टमनिराकृतं वा तेषां वधकर्तॄणां धृष्टद्युम्नादीनाम् नरकरिपुणा कृष्णेनाऽनुमन्त्रा सार्द्धमसृङ्मेदोमांसैः रुधिरवसापिशितैरयम् एतत्क्षणवर्त्ती अहमनन्यसहायः दिशां लक्षणया दिग्देवतानाम् बलिं तृप्तिहेतुकपश्वालम्भनं करोमि । पशुपदेन बलिदानयोग्यता व्यज्यते । कीदृशानां सभीमकिरीटिनाम् अनिराकर्तृभीमार्जुनसहितानाम् ।

अत्र यद्यपि धृष्टद्युम्नस्य सम्बोधनं क्रमप्राप्तं तथापि महापातकित्वेनाऽप्राह्यनामकतया तमवज्ञाय पराक्रमयोग्यतया 'अरे रे अर्जुनाऽर्जुन सात्यके सात्यके' इति सम्बोध्योक्तिरियम् । अतएव सम्बोधनं व्युत्क्रम्य तेषामित्यनेन बुद्धिस्थतया क्रमप्राप्तधृष्टद्युम्नादयः परामृष्टाः । एवञ्च क्रोधात् क्रमविस्मरणमिति श्रीवत्सलाञ्छनभट्टाचार्यैः उक्तमनुसृतञ्च वैद्यनाथैः । न तु तद् युक्तम् । रौद्ररसेऽप्ययुक्तकारित्ववर्णनाऽनियमात् ।

[ वीरस्य ]

५. क्षुद्राः सन्त्रासमेते विजहित हरयः क्षुण्णशक्रेभकुम्भा
युष्मद्देहेषु लज्जां दधति परममी सायका निष्पतन्तः ।
सौमित्रे तिष्ठ पात्रं त्वमसि न हि रुषां नन्वहं मेघनादः
किञ्चिद्भ्रूभङ्गलीलानियमितजलधिं राममन्वेषयामि ॥

## साहित्यचूडामणिः

क्षुद्रा इति । अत्र मेघनादसम्बन्धिन उत्साहस्य परिपोषाद् वीरो रसः ।

## सुधासागरः

'कार्यारम्भेषु संरम्भः स्थेयानुत्साह उच्यते'। तत्प्रकृतिको वीरः। स च त्रिधा। युद्धवीरो दानवीरो दयावीरश्चेति प्रदीपकाराः।

श्रीवत्सलाञ्छनभट्टाचार्यैस्तु दानवीरो भार्गवो यथा—'त्यागः सप्तसमुद्रमुद्रित-महीनिर्व्याजदानावधिः'। धर्मवीरो युधिष्ठिरो यथा—

राज्यं वसु च देहश्च भार्या भ्रातृसुताश्च ये ।
यच्च लोके ममायत्तं तद्धर्माय समुद्यतम् ॥

दयावीरो जीमूतवाहनो यथा—

शिरामुखैः स्यन्दत एव रक्तमद्यापि देहे मम मांसमस्ति ।
तृप्तिं न पश्यामि तवापि तावत्किं भक्षणात्त्वं विरतो गरुत्मन् ॥

इति वीरश्चतुर्धोदाहृतः ।

वस्तुतस्तु युद्धविषयोत्साहप्रकृतिके वीरशब्दो रूढः । अन्यत्र प्रयोगो भाक्तः । उक्तञ्च प्राक् । हास्यादय एकैकप्रकारा इति वृत्तिकृद्भिः कटाक्षितमिति । तथा चैकविधं वीरमुदाहरति—क्षुद्रा इत्यादि । स्रग्धरा छन्दः । 'म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्त्तितेयम्' इति लक्षणात् । हनुमन्नाटके रावणपुत्रस्येन्द्रजित इयमुक्तिः । अयमर्थः । भोः जात्या पशुक्रमेण च क्षुद्राः नीचाः हरयो वानराः एते दृश्यमानदुरवस्थाः यूयमिति शेषः, सन्त्रासं विजहित त्यजतेति सम्बन्धः ।

एते आगताः अर्थान्मयीति केचित् ।

एते क्षुद्रा इति स्वज्ञानोल्लेख इति चक्रवर्त्तिनः ।

एते इयन्त इति भास्करभट्टाचार्याः ।

भयत्यागे हेतुमाह—क्षुण्णेत्यादि । यतः क्षुण्णश्चूर्णितः शक्ररूढस्येभस्यैरावणस्य कुम्भो यैस्तादृशाः, अमी सायकाः बाणाः, युष्मद्देहेषु निष्पतन्तः न तु पात्यमानाः






परं लज्जां महाव्रीडां दधति धारयन्ति क्षुद्रकार्यकरणाल्लज्जिता इमे न माम् आनन्दयन्तीत्यर्थः।

स्वलज्जाया एव बाणेषु समारोपात् लज्जाम् अथ मदीयां दधति पुष्णन्तीति दीपिकाकाराः। तथा च दैवात् बाणपातेऽपि मदनुद्देश्यत्वाद्भयं त्यजतेत्यर्थः।

चण्डीदासादयस्तु निष्पतन्तो मच्चापान्निर्गच्छन्तो युष्मद्देहेषु अर्थात्पतितुं परं लज्जां दधति न तु पाताभिमुख्यं पौरुषं वेत्यर्थः। न च निष्पतन्त इत्यस्य पतन्त इत्यर्थः, निष्पतनस्य पतनरूपत्वाभावादित्याहुः।

मिश्रादयस्तु हे हरयः इति विशिष्य हनुमदादीन् सम्बोध्य युष्मदित्यादिवाक्यम्। क्षुद्रमात्रसम्बोधने च पूर्ववाक्यमिति योजयन्ति।

लक्ष्मणं प्रत्याह—सौमित्रे इति। सुमित्रायाः पुत्र त्वं तिष्ठ युद्धोद्यमाद् विरमेत्यर्थः। हेतुमाह पात्रमित्यादि। हि यस्मात्त्वं रुषां क्रोधानां पात्रं विषयो नाऽसि न भवसि। तर्हि किमर्थमुद्यमस्तत्राह—नन्वहमित्यादि। अहं मेघनादः प्रसिद्धनामा नत्विन्द्रजित्, तत्त्वस्याप्यनुत्कर्षकत्वात्। राममन्वेषयामि मार्गयामि कीदृक्परा क्रमशील इति हेतुगर्भं विशेषणमाह—किञ्चिदिति। किञ्चित्संरम्भः ईषत् क्रोधः स एव लीला तया नियमितो बद्धो जलधिर्येन तथाभूतम्। किञ्चिद्भ्रूभङ्गेति सुगमः पाठः।

किञ्चिदित्यन्वेषणक्रियाविशेषणम्, तेन सोऽपि न तादृगन्वेषणपात्रमिति केचित्।

अन्ये तु सेनाप्रवर्तिनो रामस्यान्वेषणानुपपत्तेः राममनुलक्षीकृत्य एषोऽहं यामीत्यर्थमाहुः।

गर्वातिशयाद्विकत्थनमेतदित्यन्ये।

अत्र सौमित्रे इति मातृसम्बन्धोत्कीर्त्तनान्निर्वीर्यत्वं ध्वन्यते। रुषामिति बहुवचनेन तदतिशयः प्रकाश्यते।

अत्र राम आलम्बनम्। जलधिनियमनमुद्दीपनम्। नीचेपूपेक्षणं रामं प्रति स्पर्धा चानुभावौ। ऐरावतकुम्भचूर्णनं स्मृतिः। लज्जां दधतीति गम्यगर्वश्च सञ्चारिणौ।

अथ विभावादिसाम्ये वीररौद्रयोर्न भेदः। न च स्थायिभेद एव भेदकस्तस्याऽपि नियामकमुखप्रेक्षित्वात्। मैवम्। विवेचकत्वाऽविवेचकत्वाभ्यामेव वैधर्म्यात्। इह क्षुद्रान् विहाय राममात्रान्वेषणविवेचनस्य रौद्रे चाऽनिराकर्तृगतक्रोधविषयत्वतारतम्यलब्धक्रमोपन्यासमपहाय व्युत्क्रमोपन्यासेनाविवेचनस्य स्फुटत्वात् इति श्रीवत्सलाञ्छनादयः।

वस्तुतस्तु 'प्रतिकूलेषु तैक्ष्ण्यस्य प्रबोधः क्रोध उच्यते' इत्युक्तम्। तैक्ष्ण्यव्यञ्जकानि चासृङ्मेदोमांसादिपदानि तान्येव रौद्रनिर्णायकानीति स्पष्टमेव सुधियाम्।

[ भयानकस्य ]

६. ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने बद्धदृष्टिः
पश्चार्धेन प्रविष्टः शरपतनभयाद् भूयसा पूर्वकायम् ।
दर्भैरर्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा
पश्योदग्रप्लुतत्वाद् वियति बहुतरं स्तोकमुर्व्यां प्रयाति ॥

७. उत्कृत्योत्कृत्य कृत्तिं प्रथममथ पृथूत्सेधभूयांसि मांसा-
न्यंसस्फिक्पृष्ठपिण्ड्याद्यवयवसुलभान्युग्रपूतीनि जग्ध्वा ।
आर्त्तः पर्यस्तनेत्रः प्रकटितदशनः प्रेतरङ्कः करङ्का-
दङ्कस्थादस्थिसंस्थं स्थपुटगतमपि क्रव्यमव्यग्रमत्ति ॥

---

## साहित्यचूडामणिः

ग्रीवेति । अनुपततीति अनुढौकमाने रथे अत्र कृष्णसारवर्तिनो भयस्य स्वभावोक्त्यादिना परिपोषाद् भयानको रसः ।

## सुधासागरः

'रौद्रशक्त्या तु जनितं चित्तवैक्लव्यदं भयम्' तत्प्रकृतिको भयानकः । यथा—ग्रीवाभङ्गेत्यादि । स्रग्धरा छन्दः । लक्षणमुक्तम् । शाकुन्तले मृगहननाय धावितरथस्य दुष्यन्तस्य राज्ञः सूतं प्रति 'अयं पुनरिदानीमपि' इत्युपक्रम्योक्तिरियम् । पश्येत्यस्य वाक्यार्थः कर्म । स च इदानीमप्ययं पुरो दृश्यमानो मृगः पुनरुदग्रप्लुतत्वादुत्कटोत्फालत्वाद्वियत्याकाशे बहुतरमधिकतरं प्रयाति उर्व्यां स्तोकमल्पं प्रयाति । किम्भूतः अनु पश्चात्पतति धावति स्यन्दने रथे ग्रीवाया भङ्गेन वक्रीभावेनाभिरामं यथा स्यात् तथा । मुहुर्वारंवारं गम्यदेशदर्शनेन विच्छेदात् बद्धदृष्टिर्दत्तदृष्टिः । शरपतनभयाद् भूयसा स्थूलेन पश्चार्द्धेनापरार्धेन 'अपरस्यार्द्धे पश्चभावो वक्तव्यः' इति वार्तिकानुसारात् । पूर्वकायं प्रविष्टः प्रवेष्टुमारब्धः । आदिकर्मणि क्तः । स्थूलस्य कृशे कथं प्रवेश इत्यप्रतिसन्धानाद् भयातिशयसूचनम् । तथा अर्द्धावलीढैरर्द्धभक्षितैः श्रमेण विवृतात्प्रसारितान्मुखाद् भ्रंशिभिः पतद्भिर्दर्भैस्तृणैः पातितैः, कीर्णं व्याप्तं वर्त्म मार्गो यस्य तथाभूत इति । वियति राज्ञः स्वाम्याभावाद् बहुतरं भूमौ तत्सत्त्वात् स्तोकमिति केचित् कल्पयन्ति ।

अत्र स्यदनाद् भयमेव रसप्रकृतिर्न शरपतनादिति तद्भयस्य शब्दोपादानेऽपि न दोषः । स्यन्दनः आलम्बनम् । अनुपतनमुद्दीपनम् । पलायनमनुभावः । श्रमः सञ्चारीति बोध्यम् ।

[अद्भुतस्य]

८. चित्रं महानेष बतावतारः क्व कान्तिरेषाऽभिनवैव भङ्गिः ।
लोकोत्तरं धैर्यमहो प्रभावः काऽप्याकृतिर्नूतन एष सर्गः ॥

## साहित्यचूडामणिः

उत्कृत्येति । प्रेतरङ्कः पिशाचविशेषः शवशरीरात् । अन्तर्जुगुप्सायाः परिपोष इति बीभत्सरसत्वम् ।

चित्रमिति । अत्र विस्मयस्य परिपोष इत्यद्भुतो रसः ॥ ६ ॥

## सुधासागरः

'जुगुप्सा गर्हणार्थानां दोषमाहात्म्यदर्शनात्' तत्प्रकृतिको बीभत्सः । यथा उत्कृत्योत्कृत्येत्यादि । स्रग्धरा छन्दः । मालतीमाधवे श्मशानवर्णनम् । अयमर्थः । प्रेतेषु रङ्कः कृपणो दरिद्र इति यावत् आर्त्तः क्षुत्पीडितः, बलवत्प्रेतान्तरेणाऽपहरणशङ्कया परितोऽस्ते क्षिप्ते नेत्रे येन, तथा दैन्यात् त्वगुत्पाटनाय वा प्रकटिता दशना दन्ता येन तथाभूतः सन्, प्रथमं कृत्तिं चर्म उत्कृत्योत्कृत्योत्पाट्योत्पाट्यात्ति चर्वयति । बहुतरभक्ष्येणापि तृप्तिं स्वप्नेऽप्यसम्भावयन् चर्मापि त्यक्तुं न शक्नोतीति भावः । अथानन्तरमंसौ स्कन्धौ स्फिक् ऊरुभागः पृष्ठपिण्डी जङ्घोर्ध्वभागः आदिपदाद् बाहूदराद्यवयवेषु सुलभानि पृथूत्सेधेन युक्तानि अत एव भूयांसि स्थूलतमानि अत एवोग्रपूतीनि तीव्रदुर्गन्धानि मांसानि जग्ध्वा अलभ्यलाभबुद्ध्या झटिति भक्षयित्वा अङ्कस्थात् करङ्कान्मस्तकात् 'करङ्को मस्तकः' इति मेदिनी । अस्थिसंस्थं स्थपुटगतमपि गम्भीरविषमभागलग्नमपि क्रव्यं मांसमव्यग्रं मया भुक्तमिदं सर्वमिति न कश्चिदपहरिष्यतीत्यव्याकुलं यथा स्यात् तथाऽत्तीति ।

अत्र शवः आलम्बनमुत्कर्त्तनाद्युद्दीपनम् । नासाकुञ्चनादयोऽनुभावाः । उद्वेगादयः सञ्चारिणः ।

'विस्मयश्चित्तविस्तारो वस्तुमाहात्म्यदर्शनात्' उक्तञ्चान्यत्र —

विरुद्धेषु पदार्थेषु लोकसीमातिवर्त्तिषु ।
विस्तारश्चेतसो यस्तु विस्मयः स उदाहृतः ॥ इति ।

तत्प्रकृतिकोऽद्भुतः । यथा चित्रमित्यादि । इन्द्रवज्रा छन्दः । 'स्यादिन्द्रवज्रा यदि तौ जगौ ग' इति लक्षणात् । वामनमुद्दिश्य बलेरुक्तिरियम् । अयमर्थः । महान् माहात्म्यशील एष पुरुषश्चित्रं लोकोत्तरं वस्तु, बत श्लाघायाम्, अवतारः सदाचारप्रवर्त्तकः । अत्राप्येष इति मध्यमणिन्यायेन सम्बध्यते । एषा दृश्यमाना कान्तिः क्व, न क्वापीति भङ्ग्यन्तरेण लोकोत्तरेत्युक्तं भवति । भङ्गिः गमनोपवेशनदर्शनादिगतप्रकारविषयरूपा । अभिनवैव वैलक्षण्यगतमात्यन्तिकत्वमेवकारार्थः । धैर्यं विरोधिसहस्रसम्पातेऽप्यचलचित्तत्वम् लोकोत्तरम्, अहो

एषां स्थायिभावानाह—

**रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा ।**
**जुगुप्सा विस्मयश्चेति स्थायिभावाः प्रकीर्तिताः ॥ ७ ॥**

स्पष्टम् ।

---

## साहित्यचूडामणिः

अथ स्थायिभावानुद्दिशति रतिरिति । स्पष्टमिति । पाठप्रधानत्वात् प्रमेयस्य । यथासंख्येन योजनं तु स्पष्टतरम् ।

## सुधासागरः

अलौकिकः प्रभावः सामर्थ्यम् सकलवशीकाररूपम् । काप्यनिर्वाच्या आकृतिरवयवसंस्थानम् । एष सर्गो निर्माणं, नूतनः प्रसिद्धब्रह्मनिर्मितिविलक्षण इति ।

अत्र चित्रादिशब्दा भङ्गिभेदेन स्वसमभिव्याहृतपदार्थस्य लोकोत्तरताप्रतिपादकाः, न तु विस्मयार्थकाः, तस्याऽत्र स्थायित्वेन वाच्यतादोषापत्तेरिति बोध्यम् ।

अत्र महापुरुष आलम्बनम् । तद्गुणातिशयः उद्दीपनम् । स्तवादयोऽनुभावाः । धृतिहर्षादयो व्यभिचारिणः ।

रसानां भेदो वचनमात्रान्न सिध्यतीत्येषां विचित्रान् उक्तरूपान् स्थायिभावानाह रतिर्हासेति ।

विरुद्धा अविरुद्धा वा यं तिरोधातुमक्षमाः ।
आनन्दाङ्कुरकन्दोऽसौ भावः स्थायिपदास्पदम् ॥

इति सामान्यलक्षणम् । उक्तञ्च जयरामतर्कपञ्चाननैः—अथ भावसामान्यलक्षणम् । भावयति वासयतीति भावो वासनाख्यो वर्णनीयमयीभवनयोग्यव्यापारविषयः । तदुक्तम्—'सुखदुःखादिभिर्भावैर्भावस्तद्भावभावनम्' इति दिगिति ।

विरुद्धैरविरुद्धैर्वा भावैर्विच्छिद्यते न यः ।
आत्मभावं नयत्यन्यान् स स्थायी लवणाकरः ॥

इत्यन्ये,

चिरं चित्तेऽवतिष्ठन्ते सम्बध्यन्तेऽनुबन्धिभिः ।
रसत्वं ये प्रपद्यन्ते प्रसिद्धाः स्थायिनोऽत्र ते ॥

चिरमिति व्यभिचारिव्युदासाय, अनुबन्धिभिर्विभावादिभिरित्यपरे,

सजातीयविजातीयैरतिरस्कृतमूर्त्तिमान् ।
यावद् रसं वर्त्तमानः स्थायी भाव उदाहृतः ॥ इतीतरे ।

अवस्थितिश्चैषां स्रक्सूत्रन्यायेन, फेनबुद्बुदन्यायेन तु व्यभिचारिणामित्यनयोर्भेदः । विशेषलक्षणान्यनुपदमेवोक्तानि । अष्टावेव चेत् स्थायिनोऽतो

व्यभिचारिणो ब्रूते—

**निर्वेदग्लानिशङ्काख्यास्तथाऽसूया — मदश्रमाः।**
**आलस्यं चैव दैन्यं च चिन्ता मोहः स्मृतिर्धृतिः ॥ ८ ॥**
**व्रीडा चपलता हर्ष आवेगो जडता तथा।**
**गर्वो विषाद औत्सुक्यं निद्राऽपस्मार एव च ॥ ९ ॥**
**सुप्तं प्रबोधोऽमर्षश्चाप्यवहित्थमथोग्रता ।**
**मतिर्व्याधिस्तथोन्मादस्तथा मरणमेव च ॥१०॥**
**त्रासश्चैव वितर्कश्च विज्ञेया व्यभिचारिणः।**
**त्रयस्त्रिंशदमी भावाः समाख्यातास्तु नामतः[1] ॥११॥**

---

## साहित्यचूडामणिः

अथ व्यभिचारिणोऽप्युपादत्ते निर्वेदेति । [2]उद्भटोक्तमुद्देशमात्रमेतत् । लक्षणपरीक्षे बहिर्लक्षणीये। नामभिः समाख्याताः अन्वर्थतया परिज्ञाताः। एतेषां च स्वशब्दोपादानं दोषतया वक्ष्यते "व्यभिचारिरसस्थायिभावानां शब्दवाच्यता" इति [सप्तमे]। व्यज्यमानत्वेन सामान्येन व्यभिचारित्वमात्रं निर्व्यूढमिति पृथग्लक्षणपरीक्षोपेक्षा ग्रन्थकारस्य ॥ ८-११ ॥

## सुधासागरः

न्यूनाधिकसंख्या रसे निरस्तेति बोध्यम्। एवञ्च रसभेदे सिद्धे एक एव रस इत्यभिप्रायेण वीरादिषु रसप्रसिद्धिः घटे पट [वटे यक्ष]-प्रसिद्धिवदप्रामाणिकेति शृङ्गारप्रकाशे [१.७] महाराजाभिधानमपास्तम्।

यद्यपि विभावानुभावावप्रतिपाद्य व्यञ्जकत्वपुरस्कारेण व्यभिचारिभेदोपदर्शने न कश्चिन्न्यायः तथापि वक्ष्यमाणव्यङ्ग्य-भावविवेचनाय निर्वेदस्य स्थायित्वप्रतिपादनाय च व्यभिचारिभेदा वक्तव्या इत्याशयेन वृत्तिकृदाह—व्यभिचारिणो ब्रूते इति।

नामत एव समाख्याता नतु लक्षणतः। लक्षणानामन्यैरेव सप्रपञ्चं दर्शितत्वात्। तद्यथा [काव्यप्रदीपे—]

---

[1] निर्वेदग्लानिशङ्काश्रमधृतिजडता हर्षदैन्यौग्र्यचिन्ता-
स्त्रासेर्ष्यामर्षगर्वाः स्मृतिमरणमदाः सुप्तनिद्राववोधाः।
व्रीडापस्मारमोहाः समतिरलसतावेगतर्कावहित्था
व्याध्युन्मादौ विषादोत्सुकचपलयुतास्त्रिंशदेते त्रयश्च ॥ —दशरूपके ४।८

[2] भरतोक्तमिति वाच्यम्।

**निर्वेदस्यामङ्गलप्रायस्य प्रथममनुपादेयत्वेऽप्युपादानं व्यभिचारित्वेऽपि स्थायिताऽभिधानार्थम् ।**

---

## साहित्यचूडामणिः

ननु व्यभिचारिगणनायां हर्षौत्सुक्यादिसद्भावेऽपि किमर्थममङ्गलप्रायस्य निर्वेदस्य प्रथममुपादानमित्यत्राह—निर्वेदस्येति । तत्त्वचिन्तायां तु निर्वेदस्य न किञ्चिदमङ्गलप्रायत्वं प्रत्युत मङ्गलप्रायत्वमित्याह—अमङ्गलप्रायस्येति । अभ्युपगम्यापि परिहरति व्यभिचारित्वेऽपीति। निर्वेदस्य व्यभिचारित्वमनेकरससाधारणम् । रसविशेषं प्रति स्थायित्वमसाधारणम् । अतः प्राधान्यात् प्रथममुपादानम् ।

## सुधासागरः

तत्त्वज्ञानापदीर्ष्यादेर्निर्वेदः स्वावमाननम् ।
तत्र चिन्ताऽश्रुनिःश्वासवैवर्ण्योच्छ्वासदीनताः ॥
चित्तस्य खेदो निर्वेदस्तत्त्वज्ञानोदयादिभिः । इति केचित् ।
रत्यायासकलाभ्यासाद् ग्लानिर्निष्प्राणतेव या ।
तस्यां वैवर्ण्यकम्पानुत्साहकार्श्यादयो मताः ॥
अनर्थप्रतिभा शङ्का परक्रौर्यात् स्वदुर्नयात् ।
वैवर्ण्यकम्पवैमुख्यं पार्श्वालोकास्यशोषकृत् ॥
परोत्कर्षाऽक्षमाऽसूया गर्वदौर्जन्यमन्युजा ।
दोषोद्घोषभ्रूविभेदाऽवज्ञाक्रोधेङ्गितादयः ॥
संमोहानन्दसम्भेदः स्खलदङ्गवचोगतिः ।
मधुपानादिजो ज्ञेयो मदो विविधभावकृत् ॥
उत्तमसत्त्वः प्रहसति गायति तद्वच्च मध्यमप्रकृतिः ।
परुषवचनाभिधायी शेते रोदित्यधमसत्त्वः ॥
श्रमः खेदोऽध्वरत्यादेः श्वासनिद्राभरादिकृत् ।
श्रमग्लान्योर्विभेदन्तु चक्रे कारणकार्यता ॥
श्रमस्यातिशयावस्थामथवा ग्लानिमूचिरे ।
बलस्यापचयो ग्लानिराधिव्याधिप्रकर्षभूः ॥ इत्येके ।
आलस्यं श्रमगर्भादेर्जाड्यजृम्भक्रियादिकृत् ।
दौर्गत्यादेरनौजः स्याद्दैन्यं कार्श्यमृजादिमत् ।
ध्यानं चिन्ता हितानाप्तेः शून्यता श्वासतापकृत् ।
प्रयत्नपूर्विकाऽन्येष्यस्मृतिश्चिन्तेति केचन ॥
मोहो विचित्तता भीतिदुःखावेगानुचिन्तनैः ।
घूर्णनाज्ञानपतनभ्रमणादर्शनादिकृत् ॥
सदृशज्ञानचिन्ताद्यैः संस्काराज्जायते स्मृतिः ।
भ्रूसमुल्लास-करज-वादनादिस्तदुद्भवः ॥

सुधासागरः

अभीष्टार्थस्य सम्प्राप्तौ स्पृहा पर्याप्तता धृतिः ।
सौहित्यवदनोल्लाससहासप्रतिभादिकृत् ॥
दुराचारादिभिर्व्रीडा धाष्ट्याभावोऽभिधीयते ।
वस्त्राङ्गुलीयकस्पर्शभूरेखाऽधोमुखादिकृत् ॥
चेतोनिमीलनं व्रीडा ह्यङ्गरागस्तवादिभिः । इति केचित् ।
मात्सर्यद्वेषरागादेश्चापलं त्वनवस्थितिः ।
आत्मप्रकाशनपरा चेष्टा चपलतोच्यते । इति केचित् ।
तत्र भर्त्सनपारुष्यस्वच्छन्दाचरणादयः ।
मनःप्रसादो लाभादेर्हर्षोऽश्रुस्वेदगद्गदाः ॥
आवेगो राजविद्रावरत्यादेः सम्भ्रमो मतः ।
तत्र विस्मरणं स्तम्भः स्वेदः कम्पः स्खलद्गतिः ॥
क्रियास्वपाटवं जाड्यं चिन्तोत्कण्ठाभयादिभिः । इत्येके ।
गर्वोऽभिजनलावण्यधनैश्वर्यादिभिर्मदः ।
सविलासाङ्गवीक्षाऽविनयावज्ञादिकृत्स सः ॥
प्रारब्धकार्यासिद्ध्यादेर्विषादः सत्त्वसंक्षयः ।
निःश्वासोच्छ्वासहृत्तापसहायान्वेषणादयः ।
कालाक्षमत्वमौत्सुक्यं रम्येच्छा-रतिसम्भ्रमैः ।
तत्रोच्छ्वासत्वराश्वासहृत्तापस्वेदविभ्रमाः ॥
निद्रा व्यापारवैमुख्यमिन्द्रियाणां श्रमादिभिः ।
तत्र जृम्भाङ्गभङ्गाक्षिमीलनोच्छ्वसितादयः ॥
आधेश्चात्यन्तदुःखादेरपस्मारस्तथाविधः ।
मनःक्षेपस्त्वपस्मारो ग्रहावेशादिसम्भवः ॥ इति केचित् ।

क्वचित्तु अपस्मारस्थाने विस्मृतिः पठिता । तल्लक्षणं तु—

विरोधिभावात्पूर्वस्य प्रस्मृतिर्विस्मृतिर्भवेत् ।
ध्यानजाड्यप्रमोहाधिपरितापादिकृत्तु सा ॥
सुप्तं निद्रामुपेतस्य विषयानुभवस्तु यः ।
कोपावेगभयग्लानिसुखदुःखादिकारकम् ॥
निद्रापगमहेतुभ्यः प्रबोधश्चेतनागमः ।
जृम्भाङ्गभङ्गनयनमीलनाङ्गावलोककृत् ॥
अधिक्षेपापमानादेरमर्षोऽभिनिविष्टता ।
तत्र स्वेदशिरःकम्पनेत्ररागाङ्गविक्रियाः ॥
लज्जाद्यैर्विक्रियायोगोऽवहित्थात्मन्यविक्रिया ।
व्यापारान्तरसक्तित्ववदनानमनादयः ॥
द्विष्टेऽपराधदौर्मुख्यचौर्यैश्चण्डत्वमुग्रता ।
अत्र स्वेदशिरःकम्पताडनातर्जनादयः ॥

तेन—

**निर्वेदस्थायिभावोऽस्ति शान्तोऽपि नवमो रसः ।**

**अहौ वा हारे वा कुसुमशयने वा दृषदि वा**
**मणौ वा लोष्टे वा बलवति रिपौ वा सुहृदि वा ।**
**तृणे वा स्त्रैणे वा मम समदृशो यान्ति दिवसाः**
**क्वचित् पुण्यारण्ये शिव शिव शिवेति प्रलपतः ॥**

---

## साहित्यचूडामणिः

अथ कतमस्यायं रसस्य स्थायीत्यत्राह—तेनेति ।

निर्वेदः स्थायिभावो यस्य । शान्तोऽपीति । शृङ्गारवीरादिवदिति यावत् । ननु अष्टौ नाट्यरसा इति पर्यगण्यन्त, तत् कथं शान्तोऽपीति चेत्,

तत्राह—नवम इति । ननु नास्ति शान्तो रसः, तस्य मुनिना विभावाद्यप्रतिपादनाद्, अनादिकालप्रवृत्तयोश्च रागद्वेषयोरुच्छेत्तुमशक्यत्वात् । अस्तित्वेऽपि—

## सुधासागरः

भ्रान्तिच्छेदोपदेशाभ्यां शास्त्रादेस्तत्त्वधीर्मतिः ।
स्मेरता धृतिसन्तोषौ बहुमानस्तथात्मनि ॥
व्याधयः सन्निपाताद्यास्तेषामन्यत्र विस्तरः ।
प्रस्वेदकम्पतापाद्या अनुभावतयोदिताः ॥
उत्कण्ठाहर्षशोकादेरुन्मादश्चित्तविप्लवः ।
तस्मिन्नस्थानरुदितगीतहासासितादयः ॥
जीवस्योद्गमनारम्भो मरणं परिकीर्त्तितम् ।
सम्मोहेन्द्रियसंग्लानिगात्रविक्षेपणादिकृत् ॥

अत्र च मरणस्थाने केचित् करुणां पठन्ति । सा च परदुःखप्रहाणेच्छारूपत्वाच्चित्तवैक्लव्यमयाच्छोकान्नातिरिच्यते इति तद्गणनमत्रानुचितमित्येके ।

अन्ये तु तस्याः दयावीरस्थायित्वमित्यत्र तद्गणनानौचित्यमित्याहुः । न चान्यत्र सञ्चारित्वाद्गणनं फलवदिति वाच्यम् । स्थाय्यन्तरसाधारणत्वात् तेऽपि हि क्वचन सञ्चारिणः । तदुक्तम्—

शृङ्गारवीरयोर्हासो वीरे क्रोधस्तथा मतः ।
शान्ते जुगुप्सा कथिता व्यभिचारितया पुनः ।
इत्याद्यन्यत् समुन्नेयं स्वयं भावितबुद्धिभिः । इति ।
गर्जितादेर्मनःक्षोभस्त्रासः कम्पादिकारकः ।
ऊहो वितर्कः सन्देहे भ्रूशिरोऽङ्गुलिनर्त्तकः । इति ।

## साहित्यचूडामणिः

न यत्र दुःखं न सुखं न चिन्ता न द्वेषरागौ न च काचिदिच्छा ।
रसस्तु शान्तः कथितो मुनीन्द्रैः सर्वेषु भावेषु शमप्रधानः ॥

इति स्थित्या समस्तभावप्रविलयलक्षणस्य तस्यालङ्काराद्यभिनयानौचित्यात् । अथ च शक्यं वीरभयानकादावन्तःपातयितुम् । यदाह—

निर्वेदादिरताद्रूप्यादस्थायी स्वदते कथम् । [दशरू० ४.३६]
शममपि केचित् प्राहुः पुष्टिर्नाट्येषु नैतस्य ॥ [दशरू० ४.३५]
शमप्रकर्षोऽनिर्वाच्यो मुदितादेस्तदात्मता । [दशरू० ४.४५]

इति । तत् कथमस्य पृथग्गणनमिति चेत् ।

उच्यते—विभावाद्यप्रतिपादनं तस्य परमपुरुषार्थतया लोकयात्रातिक्रान्तत्वात् । शक्यं च तद्विचक्षणैः स्वयमुत्प्रेक्षितुम् । तथाहि—परमेश्वरानुग्रहः प्राक्कालीनः कुशलपरिपाकः परिमलाद्यध्यात्मशास्त्रचर्चा महापुरुषपरिशीलनं चेति विभावाः, यमनियमादयोऽनुभावाः, मतिस्मृतिचिन्तावहित्थावितर्कादयो व्यभिचारिण इति । यदि चानादिसिद्धरागद्वेषवासनानामयं न चर्वणीयः तस्मान्न रस इत्युच्यते, तर्हि वीतरागाणां शृङ्गारो वीरो वा न चर्वणीय इति तावपि रसत्वात् परिच्यवेयाताम् । दयावीर इति शान्तस्यैव नामान्तरकरणं, येन—

## सुधासागरः

ननु 'अष्टौ नाट्ये रसाः स्मृताः' इति नाट्यस्य विशिष्योपादानेन श्रव्यकाव्ये रसान्तरमायाति । तत्कीदृगित्यपेक्षायां वृत्तिकृदाह—निर्वेदस्येत्यादि । अमङ्गलप्रायत्वं विषयवैराग्यस्वरूपत्वात्संसारिणां बोध्यम् ।

शान्तरसो यथा । अहावित्यादि । शिखरिणी छन्दः । लक्षणमुक्तं प्राक् । अयमर्थः । अहिः सर्पः तत्र वा हारे वा । कुसुमशयने पुष्पाकीर्णपल्यङ्के वा दृषदि शिलायां वा । मणौ रत्ने वा लोष्टे मृत्पिण्डे वा, बलवति रिपौ प्रबलशत्रौ वा । बलवति सुहृदि समर्थमित्रे वा, तृणे वा स्त्रैणे स्त्रीसमूहे वा समदृशः । उत्तरत्रापि वाशब्दानुषङ्गः । क्वचिदमेध्यदेशे वा, पुण्यारण्ये नैमिषारण्यादौ वा । शिव शिव शिवेति अर्थाच्छ्रेयस्करं वदतो वा प्रलपतोऽनर्थकं वदतो वा । मम दिवसा यान्त्विति । जगतो मिथ्यात्वेन रागद्वेषयोरभावादिति भावः । वाशब्दाभ्यां द्वयोर्द्वयोस्तुल्यता द्योत्यते । एवञ्च यथाऽहिरनिष्टापादकत्वेनानुपादेयस्तथा हारोपीति साम्यदृष्टिरिति श्रीवत्सलाञ्छनव्याख्यानमनादेयम् ।

अत्रानित्यत्वादिपरिभावितं जगदालम्बनम् । सर्वसमत्वमनुभावः । धृत्यादयः सञ्चारिणः ।

अत्र वदन्ति—शान्तो नाम रसस्तावदनुभवसिद्धतया दुरपह्नवः । न चैतस्य स्थायी निर्वेदो युज्यते । तस्य विषयेष्वलंप्रत्ययरूपत्वाद् । आत्मावमाननरूपत्वाद्वा । शान्तेश्च निखिलविषयपरिहारजनितात्ममात्रविश्रामानन्दप्रादुर्भावमयत्वानुभवात् । तदुक्तं कृष्णद्वैपायनेन—

## साहित्यचूडामणिः

दानवीरं युद्धवीरं धर्मवीरं तथैव च।
रसं वीरमपि प्राह ब्रह्मा त्रिविधसम्मितम्॥

इति त्रैविध्यमेव मुनिना वीरस्याभ्यधायि। इतोऽपि न वीरादौ तस्यान्तःपातः वीरादेरभिमानमयत्वेनाध्यवसायात्, शान्तस्य तु सर्वाहङ्कारप्रशमैकरूपतया प्रादुर्भावात्। एवं च तयोर्विशेषेऽपि यद्येकत्वं तत् करुणादीनामपि तथात्वप्रसङ्गः। तद्भावेपि दयावीरस्य सर्वाकारमहंङ्काररराहित्ये शान्तातःपातः। अथवा वीरप्रभेदत्वमिति न कश्चिद् विरोधः। तस्य च निर्वेदः स्थायीति केचित्। अन्ये तु सर्वचित्तवृत्तिप्रशम एव स्थायीति मन्यन्ते। यथोक्तमुद्भटेन—

"जुगुप्साविस्मयशमाः स्थायिभावाः प्रकीर्तिता"। इति

तदसत्, अभावस्य प्रसज्यप्रतिषेधरूपत्वे चेतोवृत्तिरूपत्वाभावेन भावत्वायोगात्। पर्युदासाकारत्वे पुनरस्मत्पक्ष एव, यत्र निर्वेदस्थायिकत्वाविशेषपारिशेष्यम्। इतरे तु—

स्वं स्वं निमित्तमासाद्य शान्तादुत्पद्यते रसः।
पुनर्निमित्तापाये तु तत्रैव प्रविलीयते॥

इति न्यायादनुपजातविशेषां चित्तवृत्तिमेव तस्य स्थायिनं भावमातिष्ठन्ते। तत्रापि युक्तिचिन्तायां प्रागभावात् प्रध्वंस एव युक्तस्तृष्णानाम्। यथाहुः—

यच्च कामसुखं लोके यच्च दिव्यं महत् सुखम्।
तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम्॥ इति।

यच्च सूत्रं 'वीतरागजन्मादर्शनात्' इत्यलमलौकिकार्थप्रकटनपाण्डित्येन ॥११॥

## सुधासागरः

यच्च कामसुखं लोके यच्च दिव्यं महत् सुखम्।
तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम्॥

इति। अत एव सर्ववृत्तिविरामोऽस्य स्थायीति निरस्तम्। अभावस्य स्थायित्वायोगात्। तस्माच्छमोऽस्य स्थायी। निर्वेदादयस्तु व्यभिचारिणः। स च शमो निरीहावस्थायामानन्दः स्वात्मविश्रामादिति। न चेतावता 'निर्वेदस्थायिभावाख्यः' इति वदतां श्रीवाग्देवतावतारवृत्तिकाराणां प्रमादः शङ्क्यः, तत्त्वज्ञानजन्यनिर्वेदस्यैव शमरूपत्वात्। आपदीर्ष्यादिकारणान्तरजन्यस्य तस्य स्वावमाननरूपत्वात्। अस्यैव च चिन्ताश्रुनिःश्वासवैवर्ण्योच्छ्वासदीनतादिकार्योत्पादकत्वम्। न खलु ब्रह्मज्ञानजन्यनिर्वेदस्य वैवर्ण्योच्छ्वासादिकार्यजनकता स्वप्नेऽपि सम्भवतीति सूक्ष्मदृशाऽवधातव्यम्। एवञ्च तत्त्वज्ञानजन्यनिर्वेदस्य स्थायित्वं कारणान्तरजन्यस्य सञ्चारित्वमिति तत्त्वम्। उक्तं चान्यत्राचार्यैः—

स्थायी स्याद् विषयेष्वेव तत्त्वज्ञानाद् भवेद् यदि।
अनिष्टेष्टवियोगाप्तिकृतस्तु व्यभिचार्यसौ॥

रतिर्देवादिविषया व्यभिचारी तथाऽञ्जितः ॥१२॥
भावः प्रोक्तः,

आदिशब्दान्मुनि-गुरु-नृप-पुत्रादिविषया।
कान्ताविषया तु व्यक्ता शृङ्गारः।

उदाहरणम्—

कण्ठकोणविनिविष्टमीश ते कालकूटमपि मे महामृतम्।
अप्युपात्तममृतं भवद्वपुर्भेदवृत्ति यदि मे न रोचते॥
हरत्यघं सम्प्रति हेतुरेष्यतः शुभस्य पूर्वाचरितैः कृतं शुभैः।
शरीरभाजां भवदीयदर्शनं व्यनक्ति कालत्रितयेऽपि योग्यताम्॥

एवमन्यदप्युदाहार्यम्।

जाने कोपपराङ्मुखी प्रियतमा स्वप्नेऽद्य दृष्टा मया
मा मां संस्पृश पाणिनेति रुदती गन्तुं प्रवृत्ता पुरः।
नो यावत् परिरभ्य चाटुशतकैराश्वासयामि प्रियां
भ्रातस्तावदहं शठेन विधिना निद्रादरिद्रीकृतः॥

अत्र विधिं प्रत्यसूया।

---

## साहित्यचूडामणिः

इदानीं भावं प्रकटयति—रतिरिति। देवादिगोचरा रतिर्भावः।

पुत्रादीत्यादिग्रहणान्मित्रादि।

ननु कान्ताविषया रतिः कथं न भाव इत्यत्राह—कान्तेति। व्यक्तेति। व्यापारान्तरायोगात्।

शृङ्गार इति। यः प्रपञ्चेन पर्यालोचितः। कण्ठेति। हे ईश! पारमैश्वर्यपात्रभूत! ते कण्ठकोणविनिविष्टं त्वदङ्गभङ्गितया स्थितं त्वदभेदेन प्रथमानं महाविषं

## सुधासागरः

रसभावतदाभासेति सूत्रे रसवद्भावोऽप्यलक्ष्यक्रमेषु पठितः। स किंरूपः? रत्यादीनां रसरूपत्वात्, व्यभिचारिणां रसाङ्गतानियमेन प्राधान्याभावात्, सात्त्विकानामव्यङ्ग्यत्वादित्यत आह—रतिरित्यादि।

रतिरिति स्थायिभावोपलक्षणं तेन देवादिविषया सर्वा कान्तादिविषयाप्यपुष्टा रतिः हासादयश्चाप्राप्तरसावस्थाः प्राधान्येन व्यञ्जितो व्यभिचारी च भाव इत्यवधातव्यम्। यदुक्तम्—

## साहित्यचूडामणिः

हालाहलमपि मे धन्यजन्मनो महामृतं परमप्राप्तिप्रदानप्रावीण्यादनवच्छिन्नाह्लादहेतुः। यदुक्तं तत्रैव—

दुःखान्यपि सुखायन्ते विषमप्यमृतायते।
मोक्षायते च संसारो यत्र मार्गः स शाङ्करः॥ इति।

अमृतं पुनरुपात्तमनायासलब्धमपि यदि भवद्वपुषः सकाशाद् भेदेन वर्तेत चिद्द्वयसरणिमनधिरुह्य विजृम्भेत चेत्, तदा तदवास्तवत्वान्मह्यं न रोचते इति। अत्र देवमिन्दुमौलिमवलम्ब्य स्तोतु महाकवेरुत्पद्यमाना रतिर्भावः।

एवमन्यदिति। तत्र नृपविषया यथा ममैव—

सोऽयं नीलस्तुरङ्गो मम यवनपतिः प्राभृतं प्राहिणोद् यं
भद्रः सोऽयं गजो मे समिति विलुलिता येन सौवीरसेना।
सेयं मे वामनेत्रा समजनि समरो यत्कृते राजपुत्रै-
रेवं कारागवाक्षे कुलतिलक! भवद्वैरिणो व्याहरन्ति॥ इति।

पुत्रविषया यथा—

आलक्ष्यदन्तमुकुलाननिमित्तहासै-
रव्यक्तवर्ण-कमनीयवचः-प्रवृत्तीन्।
अङ्काश्रयप्रणयिनस्तनयान् वहन्तो
धन्यास्तदङ्गरजसा मलिनीभवन्ति॥ इति।

## सुधासागरः

रत्यादिश्चेन्निरङ्गः स्याद्देवादिविषयोऽथवा।
अन्याङ्गभावभाग्वा स्यान्न तदा स्थायिशब्दभाक्॥ इति।

तदेतदाह वृत्तिकारः कान्तातिविषया तु व्यक्ता शृङ्गार इति। तत्र देवविषयां रतिमुदाहरति—कण्ठकोणेत्यादि। रथोद्धता छन्दः। 'रान्नराविह रथोद्धता लगौ' इति लक्षणात्। शिवभक्तोक्तिरियम्। अयमर्थः। हे ईश ते तव कण्ठस्य कोणे एकदेशे विनिविष्टं नितरां संलग्नं कण्ठरूपतया परिणतमिति यावत्। कालकूटं विषमपि मे मम महामृतमुत्तममममृतम्, अतिप्रियत्वात् उपात्तमपि मूर्ध्ना धृतमपि अमृतं चन्द्रकलारूपं यदि भवद्वपुषो भेदेन वृत्तिरवस्थितिर्यस्य तथाभूतं भेदेनावभासमानमिति यावत्, तदा मे मह्यं न रोचते। भवद्वपुर्ध्यानमेव ममानन्दप्रदमिति भावः।

मुनिविषया यथा—हरत्यघमित्यादि। वंशस्थं वृत्तम्। लक्षणमुक्तं प्राक्। माघे नारदं प्रति श्रीकृष्णोक्तिरियम्। अयमर्थः। हे मुने! भवदीयस्य भवत्सम्बन्धिनो दर्शनं कर्तृ, भवदीयस्य कस्यापि दर्शनं तथागुणविशिष्टं किम्पुनर्भवत इति

## साहित्यचूडामणिः

मित्रविषया यथा ममैव—

रे रे कापुरुषापवादपटवः! पथ्यं कटु श्रूयता-
मित्थं हन्त पलायितुं किमु वयं पत्या प्रतिष्ठापिताः।
अप्यन्यत् कपयः! प्रियापरिभवप्रक्षालनादुद्धुरो
रामः क्रूरधनुर्धरो यदि वृथा वैक्लव्यमारभ्यते॥

अत्र सुग्रीवस्य रामं प्रति मैत्रीरूपा रतिर्भावः।

अथान्यथाभावं लक्षयति—व्यभिचारीति।

अञ्जितो व्यञ्जितः न पुनर्वाच्यवाचकभावखलीकृतस्तथेति भावः।

जान इति स्वप्नवेदने लोकोक्तिः। अत्राश्वासननाशकारिणं विधातारमुद्दिश्य व्यज्यमानासूयाभावः। अत्र शठादिशब्दाः व्यञ्जकाः। यथा वा 'एवं वादिनि देवर्षौ'-वित्यत्र लज्जा भावः। यथा च ममैव—

स्वैराटोपसहिष्णु हन्त विजहौ स्वं सल्लकीनां वनं
लेभे डिण्डिमपट्टबन्धललितां लक्ष्मीं न राजाङ्गणे।
वातव्याकुलिते जरत्प्रवहणे बद्धो विघूर्णन्मुहु-
र्मध्येवारिधि कुञ्जरेन्द्रकलभः कष्टां दशामश्नुते॥

इत्यत्र निर्वेदग्लानिशङ्कासूयाश्रमालस्यदैन्य-चिन्तामोहव्रीडाजडताविषादावहित्थाव्याधित्रासवितर्कादयो बहवो व्यभिचारिणो व्यज्यन्ते।

## सुधासागरः

द्योतयितुं भवदीयेति, शरीरभाजां देहधारिणां मादृशाम्, कालत्रितयेऽपि वर्त्तमानादिकालत्रयेऽपि, योग्यताम् इष्टसम्पादकगुणवत्त्वरूपां, व्यनक्ति सूचयतीत्यर्थः। कथमित्याकाङ्क्षायामाह—हरतीत्यादि यतः सम्प्रति वर्तमानकालेऽघं पापं, हरति नाशयति, एष्यतः आगमिष्यतः शुभस्य श्रेयःसाधनस्य हेतुः सम्पादकम्। तत्त्वञ्चादृष्टद्वारा बोध्यम्। दर्शनस्यादृष्टद्वारा श्रेयःसाधनत्वाददृष्टस्य इष्टसामग्रीसम्पादकत्वेन हेतुत्वात्। तथा पूर्वमाचरितैः पूर्वजन्मार्जितैः शुभैः सुकृतैः कृतं जनितम्। तथा च वर्तमानकाले पापनाशरूपा योग्यता इष्टसम्पादकगुणवत्त्वैव, निष्पापत्वस्य गुणस्य प्रतिबन्धकाभावत्वेन श्रेयःसम्पादकत्वात्। भाविनि तु श्रेयःसाधकादृष्टसम्पत्तिरिति तत्रापीष्टसम्पादकगुणवत्त्वैव योग्यता। भूते तु तथाविधं सुकृतमिति योग्यता तादृग्गुणवत्त्वैव। सूचकत्वं चाद्ययोर्जनकतया अन्त्यायास्तु जन्यतयेति बोध्यम्।

चक्रवर्तिनस्तु योग्यतां पुण्यवत्तामिति व्याचख्युः। तन्नातिरमणीयम्, वर्तमानकाले तदसम्भवात्, निष्पापत्वस्यापुण्यरूपत्वात्, दर्शनस्य साक्षादेव पापनाशकत्वेन तज्जनकस्य दर्शनजन्यादृष्टस्याप्यभावात् भाविशुभहेतुभूतदर्शनजन्यादृष्टवत्तया प्रकारान्तरेण तावदङ्गीकारे तु हरत्यघं सम्प्रतीत्यस्य तदप्रतिपादकत्वेना-

**तदाभासा अनौचित्यप्रवर्तिताः ।**

तदाभासा रसाभासा भावाभासाश्च ।

तत्र रसाभासो यथा—

स्तुमः कं वामाक्षि, क्षणमपि विना यं न रमसे
विलेभे कः प्राणान् रणमखमुखे यं मृगयसे ।
सुलग्ने को जातः शशिमुखि, यमालिङ्गसि बलात्
तपःश्रीः कस्यैषा मदननगरि ! ध्यायसि तु यम् ॥

अत्रानेककामुकविषयमभिलाषं तस्याः 'स्तुम' इत्याद्यनुगतं बहुव्यापारोपादानं व्यनक्ति ।

---

### साहित्यचूडामणिः

अथ रसाभासादिलक्षणमाह—तदिति । तद्वृत्तेन रसभावयोः परामर्श इत्याह—रसेति । अनौचित्यमन्ततः शास्त्रविरोधात् चमत्कारभङ्गः तेन प्रवर्तिता रसा भावाश्चाभासाः । आमुखे भासमानसाभासः शुक्तिरजतवत् । तच्च तल्लक्षणराहित्येऽपि तद्वद् विभासमानत्वम् ।

### सुधासागरः

सङ्गतित्वापत्तेरिति सुधीभिर्ध्येयम् । एवमप्राप्तपरिपोषा पुत्रादिविषया रतिः स्थाय्यन्तरं चापुष्टमप्युदाहार्यम् ।

व्यभिचारी प्राधान्येन वर्णितो यथा—जाने इत्यादि । शार्दूलविक्रीडितं छन्दः । वियुक्तस्य सखायं प्रतीयमुक्तिः । अयमर्थः । हे भ्रातः अद्य मया स्वप्ने प्रियतमा कोपेन पराङ्मुखी सती पाणिना हस्तेन 'मां मा संस्पृश' इत्युक्त्वा रुदती रोदनं कुर्वती अन्यत्र गन्तुं प्रवृत्ता दृष्टा । ततस्तादृग्दर्शनोत्तरमहं यावत् प्रियां परिरभ्यालिङ्ग्य चाटुकानां प्रियवाक्यानां शतेन नाश्वासयामि नानुनयं करोमि तावज्जाने निश्चिनोमि शठेन वञ्चकेन विधिना निद्राया दरिद्रो रहितो निद्रादरिद्रः तथाभूतोऽप्यतथाकृतः, अत एव विधिर्दुर्घटविधायकः । जाने शठेनेति तापकारित्वेनासूयाप्रकर्षः । अत एव प्रदीपकारैरुक्तम्—'अत्र विधिं प्रत्यसूया प्राधान्येन प्रतीयते' इति ।

तत्पदेन रसभावयोः परामर्शः । न तु सन्निकृष्टत्वेन भावस्यैवेत्याह—रसाभासा भावाभासाश्चेति ।

अनौचित्येन प्रकर्षविरोधिना रूपेणेत्यर्थः । तच्चैकाश्रयत्वे तिर्यगादिविषयतायां बहुविषयत्वे व्यभिचारिणामाभासाङ्गतायां वा द्रष्टव्यमिति प्रदीपकाराः । इदं च परिगणनं सम्प्रदायानुसरणमात्रम् ।

## साहित्यचूडामणिः

स्तुम इति। अत्रैकस्याम् अनेकपुरुषाभिलाषादनौचित्यम्। वैशिकेऽपि तत्तत्पुरुषस्वीकारे तं तमवधिं तस्या एकपत्नीव्रतं शास्त्रार्थः। अत्र स्तुत्यः कश्चिद् येन विना रत्यनुदयः, अन्यो युद्धशूरः यस्य मृग्यता, अपरः सुलग्नोत्पन्नो यस्य बलादालिङ्गनयोग्यता, इतस्तपःप्रभावाधिकः यस्य ध्येयत्वमिति शब्दशक्तिपर्यालोचने बहूनां व्यापाराणामुपादानं कर्तृ तस्या अनेककामुकविषयमनुरागं व्यनक्ति। अनेन संबुद्धिभेदो व्याख्यातः। तत्र मदननगरीति सर्वप्रवेशयोग्यता ध्वन्यते। ध्यायसि त्विति तुशब्दोऽपि तत्र प्रमाणमित्येष शृङ्गाराभासः।

## सुधासागरः

हीनापात्रेषु तिर्यक्षु नायकप्रतियोगिषु।
गौणेषु च पदार्थेषु तदाभासं विजानते॥

इति सरस्वतीकण्ठाभरणादिविसंवादात्।

वस्तुतस्त्वनौचित्यमात्रमेवामीषां मनसाऽऽभासताप्रयोजकम्। तिर्यगादौ त्वनौचित्याभावाद्रस एव न तदाभासः। अत एव वृत्तिकारो 'ग्रीवाभङ्गाभिरामम्' इत्यादौ तिर्यग्विषयतया भयानकं 'मित्रे क्वापि गते' इत्यादौ विप्रलम्भमुदाजहार। अत एवान्यत्रानेककामुकविषयरतेराभासत्वेऽपि पाण्डवेषु द्रौपद्याः न तथा। स्वस्त्रियामपि शोकाद्याविष्टायां शृङ्गारवर्णनमाभासमौचित्यानौचित्याभ्यामेवावसेयम्।

यद्यपि काव्यनाट्यश्रवणदर्शनाभ्यां विभावादिसाधारण्यज्ञाने सति सामाजिकानां स्वीयस्थायिव्यक्तिरित्यलौकिकरसः स्वतो नाभासस्तथाप्यसाधारण्यप्रतीतिप्रयोजककाव्यवर्णिते यत्रानौचित्यप्रतिसन्धानं तत्र व्यङ्ग्ये रसेऽप्याभासव्यवहार इति ध्येयम्।

अत एव रविभट्टाचार्याः प्राहुः—यदपि पितृचरणैराभासपदस्य भ्रमार्थकत्वमुक्तं तदपि व्यञ्जकीभूतकाव्यानुचित एवौचित्यज्ञानात्मकभ्रममूलतया प्रकृतपर्यवसन्नमिति। एकविषया रतिरेव नेति तु प्रलापः, 'बन्दीकृत्य नृपद्विषाम्' इत्यादावुदाहरिष्यमाणत्वात्।

रसाभासो यथा—स्तुम इत्यादि। शिखरिणी छन्दः। लक्षणमुक्तं प्राक्। वारयोषितं प्रति कस्यचित्कामुकस्य चाटूक्तिरियमिति वैद्यनाथः। वयं त्वनौचित्यापादनाय परकीयां प्रति कामुकोक्तिरिति ब्रूमः। अयमर्थः। हे वामाक्षि! वामं सुन्दरं जितेन्द्रियाणामपि वशीकरणाद् विरुद्धं वाऽक्षि यस्याः सा तथाविधे! तं कं पुरुषं स्तुमः, यं विना क्षणमपि न रमसे क्रीडसि हृष्यसीति यावत्। तथा यं मृगयसे अन्विष्यसि। कोऽसौ रणः संग्राम एव मखस्त्वत्कर्तृकान्वेषणरूपस्वर्गफलकत्वात्। तस्य मुखे पुरतो यः प्राणान्विलेभे दत्तवान्, अर्थाज्जन्मान्तरे। हे शशिमुखि! चन्द्रानने! यं बलादालिङ्गसि स कः सुलग्ने शोभनग्रहाधिष्ठिते लग्ने जातः उत्पन्नः। हे मदननगरि! मदनस्यैवंवैभवात्, यं तु ध्यायसि

भावाभासो यथा—

राकासुधाकरमुखी तरलायताक्षी
सा स्मेरयौवनतरङ्गितविभ्रमाङ्गी ।
तत् किं करोमि विदधे कथमत्र मैत्री
तत्स्वीकृतिव्यतिकरेक इवाभ्युपायः ॥

अत्र चिन्ता अनौचित्यप्रवर्तिता । एवमन्येऽप्युदाहार्याः ।

---

## साहित्यचूडामणिः

भावाभासमाह—राकेति । बाल्यात् प्रभृति सखीत्वेन व्यवहृतायां कस्याञ्चिदनुरक्तस्येयमुक्तिः । अत्र चिन्तारूपस्य व्यभिचारिणो व्यज्यमानस्य भावत्वं सखीविषय-वृत्तित्वादनौचित्यं च । औचित्येन प्रवृत्तौ चित्तवृत्तेरास्वाद्यत्वे स्थायिन्या रसः व्यभिचारिण्या भावः, अनौचित्येन तु तदाभासः । न खलु रावणः सीतामभिलषितुमर्हति, ततश्चायमाभासः शुक्तौ रजताभास इतिवत् । नन्वत्र हास्यो रसः

'शृङ्गाराद्धि भवेद्धास्यः'
"शृङ्गारानुकृतिर्या तु स हास्य इति कथ्यते"

इत्युक्तत्वात् । न । तन्मयीभाववेलायां रतेरेवास्वाद्यत्वादसौ शृङ्गाराभासः । पश्चाद्भाविनी तु सामाजिकानां हास्यस्फुरत्ता न तादात्विकी ।

एवमन्येऽपीति । तत्र वीराभासो यथा—

गुप्त्या साक्षान्महानल्पः स्वयमन्येन वा कृतः ।
करोति महतीं प्रीतिमपकारोऽपकारिषु ॥

इत्यत्रोत्साहस्यानौचित्येन प्रवृत्तिः । भावाभासो यथा—

किं वा वक्ष्यति वैदेहः पिता मे मिथिलाधिपः ।
रामं जामातरं प्राप्य स्त्रियं पुरुषविग्रहम् ॥

## सुधासागरः

तस्य कस्यैषा त्वत्कर्तृकध्यानरूपा तपःश्रीः तपःसम्पत्तिरिति । अत्र बहुषु व्यापारोपादानेन बहुविषया रतिर्व्यज्यते ।

नन्वत्र व्यापारस्य बहुविषयत्वमसिद्धम् । एकत्रापि तादृशव्यापारसम्भवात् । यत्तु अनेककर्मपदोपादानमनेकविषयत्वं क्रियाणां प्रकटयति एकविषयत्वाभिप्राये तु एकमेव कर्मपदमुपाददीतेति, तत्तुच्छम्, स्तुमो विलेभे इत्यादीनां भिन्नवाक्यस्थानामेकविभक्त्यन्तपदोपस्थापितेनान्वये तदन्वयिनोऽभिन्नस्यापि कं क इत्यादिपदैरुपस्थापने भिन्नकर्मपदैरेवोपस्थापनार्हणात् ।

अत्र ब्रूमः । तु शब्देन व्यवच्छेदार्थेन व्यापारस्यानेकविषयत्वं लभ्यते । एवमेकत्र भेदाभिप्रायेऽवगतेऽन्यत्रापि तथैवावगम्यते । बहुपदमनेकपरं वा । तदेतत्सर्वमभिप्रेत्य वृत्तिकृदाह—अत्रानेककामुकेत्यादि ।

भावस्य शान्तिरुदयः सन्धिः शबलता तथा ॥ १३ ॥

क्रमेणोदाहरणम्—

तस्याः सान्द्रविलेपनस्तनतटप्रश्लेषमुद्राङ्कितं
किं वक्षश्चरणाऽऽनतिव्यतिकरव्याजेन गोपाय्यते ।
इत्युक्ते क्व तदित्युदीर्य सहसा तत्संप्रमार्ष्टुं मया
साश्लिष्टा रभसेन तत्सुखवशात् तन्व्या च तद्विस्मृतम् ॥

अत्र कोपस्य ।

एकस्मिन् शयने विपक्षरमणीनामग्रहे मुग्धया
सद्योमानपरिग्रहग्लपितया चाटूनि कुर्वन्नपि ।
आवेगादवधीरितः प्रियतमस्तूष्णीं स्थितस्तत्क्षणं
मा भूत् सुप्त इवेत्यमन्दवलितग्रीवं पुनर्वीक्षितः ॥

अत्रौत्सुक्यस्य ।

---

## साहित्यचूडामणिः

इति । अत्रासूयायाः प्रवृत्तिरनौचित्यात् । इत्थमन्यदुन्नेयम् ।

अथ भावशान्त्यादिकं निश्चिनोति भावस्येति । तस्या इति । विपक्षभूतायाः क्व तदिति तच्छब्देन यथोक्तं मुद्राङ्कनं परामृश्यते । सहसेति अपराधशङ्काकलङ्कक्षालनमङ्कपालीसुखानुभवश्चेति फलद्वयं साहसिकस्य । यथाह—

"रससंत्रासहर्षादेः कोपभ्रंशो रसान्तरम्" इति ।

कोपस्येति । अमर्षलक्षणो व्यभिचारी कोपः तस्य शान्तिरिति सम्बन्धः ।

## सुधासागरः

भावाभासमुदाहरति—राकासुधेत्यादि । वसन्ततिलका छन्दः । सीतामुद्दिश्य रावणस्योक्तिरियम् । अयमर्थः । राकासुधाकरः परिपूर्णचन्द्रस्तद्वन्मुखं यस्यास्तथाविधा, तरले चञ्चले आयते दीर्घे अक्षिणी यस्यास्तादृशी, स्मेरमीषत्प्रकाशं यौवनं नवयौवनमिति यावत्, तेन तरङ्गितास्तरङ्गवदुत्तरोत्तरारम्भशीलाः विभ्रमा येषु तथाविधान्यङ्गानि यस्याः सा तथाभूतेति दर्शनक्रमेण मुखादिगतप्रकर्षविभावनम्, तत्तस्मादुक्तसौन्दर्यातिशयिनोऽनुपेक्ष्यत्वात्, किङ्करोमि तल्लाभायेति शेषः, तया सह मैत्री क्रियतां तत्राह—तदिति । तया स्वीकृतिर्ममायमिति बुद्धिविषयीकरणं तस्य व्यतिकरे सम्बन्धेऽभ्युपायो हेतुः क इव न कोपि सम्भाव्यत इत्यर्थः ।

स्वीकृतिः स्वाधीनीकरणं तस्य व्यतिकरः सदातनत्वरूपं पौनःपुन्यमिति चण्डीदासाः ।

## साहित्यचूडामणिः

एकस्मिन्निति । तूष्णीं स्थितश्चाटुक्रियायामपि तस्या अप्रसादात् ।

यथाह—

"सामादौ तु परिक्षीणे स्यादुपेक्षावधीरणम्" इति ।

औत्सुक्यस्येति । उदय इति यावत् ।

## सुधासागरः

अत्र रतेर्व्यभिचारभूता चिन्ता अनौचित्यप्रवर्त्तिता । नायिकाया अननुरक्ततया तद्व्यभिचारिणोऽपि तथात्वात् । एवमन्येऽप्युदाहार्याः ।

भावशान्त्यादिरक्रम इत्यत्रादिपदप्रतिपाद्यमाह—

सन्धिरेककालमेव तुल्यकक्षयोरास्वादः शबलता तु कालभेदेन निरन्तरतया पूर्वपूर्वोपमर्दिनाम् । न च भावस्य शबलतायाः शान्त्युदयाभ्यामविशेषः । शान्तेरुदयस्य वा एकैकस्याऽऽस्वादे तद्भेदद्वयोपगमात् ।

तत्र भावस्य शान्तिर्यथा—तस्या इत्यादि । शार्दूलविक्रीडितं छन्दः । अमरुकशतके खण्डितायाः स्वनायिकायाः कोपतच्छान्तिवृत्तान्तं वयस्यं प्रति कथयतो धृष्टनायकस्योक्तिरियम् । अयमर्थः । तस्याः सपत्न्याः असूयातिशयान्नामानिर्देशः । सान्द्रं घनं श्रीखण्डादि विलेपनं यत्र तथाभूतस्य स्तनतटस्य समस्थानस्य तत्पर्यन्तगामित्वेन प्रकृष्टो य श्लेषः परिरम्भस्तेन या मुद्रास्तदाकारं विलेपनमयं चिह्नं तेनाङ्कितं तदीयत्वेन ज्ञापितमित्यर्थः, वक्षः वक्षस्थलम् चरणयोरानतेः प्रणामस्य यो व्यतिकरः सम्बन्धः पौनःपुन्यं वा तद्व्याजेन छलेन किं किमिति गोपाय्यते आच्छाद्यते इत्युक्ते सति अर्थान्नायिकया, मया क्व तन्मुद्राङ्कणमित्युदीर्य उक्त्वा तन्मुद्राङ्कणं सम्प्रमाष्टुं विलोपयतु सहसाऽप्रसाद्यैव, रभसेन त्वरया आश्लिष्टाऽऽलिङ्गिता । तत्सुखवशादालिङ्गनानन्दपारवश्यात्तन्व्या तन्मुद्राङ्कितत्वं विस्मृतमिति चकारेणालिङ्गनविस्मृत्योरेककालतारूपः समुच्चयालङ्कारो द्योत्यते । अत्र कोपस्य शान्तावेव चमत्कारविश्रामः ।

उदयो यथा—एकस्मिन्नित्यादि । शार्दूलविक्रीडितं छन्दः । अमरुककवेः पद्यमिदम् । अयमर्थः । एकस्मिन् शयने शय्यायाम् विपक्षभूता रमणी सपत्नी तस्याः नाममात्रग्रहे ग्रहणेऽर्थान्नायकेन कृते सति सद्यस्तत्कालमेव कोपेन पराङ्मुखं यथा स्यात्तथा ग्लपितया खिन्नया । मुग्धया स्वस्याधैर्यमजानन्त्या कयाचिच्चाटूनि प्रियभाषणानि कुर्वन्नपि प्रियतमः आवेगात्कोपभ्रमादवधीरितोऽवज्ञातस्तूष्णीम् आलापरहितः स्थितः प्रसादज्ञानायावहितो न तु निद्रितः । तत्क्षणात्तूष्णींभावक्षणानन्तरमेव सुप्त इव प्रार्थनापराङ्मुखो माभूदित्यौत्सुक्येन अमन्दम् अतिशयितं वालेता वक्रीकृता ग्रीवा यत्र तद्यथा स्यात्तथा पुनर्वीक्षित इति । अत्रौत्सुक्यस्योदयश्चमत्करोति ।

उत्सिक्तस्य तपःपराक्रमनिधेरभ्यागमादेकतः
सत्सङ्गप्रियता च वीररभसोत्फालश्च मां कर्षतः।
वैदेहीपरिरम्भ एष च मुहुश्चैतन्यमामीलय-
न्नानन्दीहरिचन्दनेन्दुशिशिरः स्निग्धो रुणद्ध्यन्यतः॥

अत्रावेगहर्षयोः।

क्वाकार्यं शशलक्ष्मणः क्व च कुलं भूयोऽपि दृश्येत सा
दोषाणां प्रशमाय नः श्रुतमहो कोपेऽपि कान्तं मुखम्।
किं वक्ष्यन्त्यपकल्मषाः कृतधियः स्वप्नेऽपि सा दुर्लभा
चेतः स्वास्थ्यमुपैहि कः खलु युवा धन्योऽधरं धास्यति॥

अत्र वितर्कौत्सुक्यमतिस्मरणशङ्कादैन्यधृतिचिन्तानां शबलता।

---

## साहित्यचूडामणिः

उत्सिक्तस्येति। उत्फाल औद्धत्यम्। एकतः बाह्यप्रदेशे अन्यतः शुद्धान्ते।
आवेगहर्षयोरिति। सन्धिरित्यर्थः।

क्वेति। क्वाकार्यमिति वितर्कः। भूयोऽपि दृश्येत सेत्यौत्सुक्यम्। दोषाणां प्रशमाय मे श्रुतमिति मतिः। अहो कोपेऽपि कान्तं मुखमिति स्मरणम्। किं

## सुधासागरः

सन्धिर्यथा—उत्सिक्तस्येत्यादि। शार्दूलविक्रीडितं छन्दः। सीतालिङ्गनं भावयतो रामस्य भार्गवागमे परामर्शोऽयम्। अयमर्थः। तपश्च पराक्रमश्च तयोर्निधेः स्थानभूतस्य धर्मयुक्तोभयवीरस्येत्यर्थः। अत एवोत्सिक्तस्य दृप्तस्य अर्थात् परशुरामस्य, अभ्यागमादागमनादेकतः एकस्यां दिशि, सतः परशुरामस्य सङ्गे या प्रियता प्रेम च, वीरस्य रभसो हर्षस्तस्य उत्फालः उद्रेको वीरोचिते कौतुकोद्रेक इत्यर्थः। स च एतौ द्वावपि मां कर्षतः। अन्यतोऽन्यस्यां दिशि एषः भावनोपनतः वैदेहीपरिरम्भः सीताश्लेषश्च मां रुणद्धि मुनिपार्श्वगमने प्रतिबध्नाति। चकारः पूर्वोक्ताभ्यां तुल्यकालत्वस्य च सन्धिरूपस्य सूचनाय। एकस्य परिरम्भस्य सत्सङ्गप्रेमोत्साहाभ्यां तुल्यत्वसम्पादकं विशेषणमाह मुहुरित्यादि। मुहुर्वारंवारं चैतन्यं ज्ञानमामीलयन् विषयान्तराद् व्यावर्त्तयन्। हरिचन्दनं चन्दनभेदः इन्दुश्च तद्वच्छिशिरः शीतलश्चासौ स्निग्धश्च प्रेमसंवलितः। अतएव रुणद्धीति युक्तं, स्निग्धेन युद्धानिवर्त्तनात्। अत एवानन्दी आनन्दजनक इति।

अत्र मुनावत्यादरणीयत्वज्ञानजन्यत्वराविशेषः पूर्वार्द्धगम्यः हर्षस्तूत्तरार्द्धगम्यः। अनयोस्तुल्यकालमेवास्वादः। तदेतदुक्तं वृत्तिकारैः—अत्रावेगहर्षयोरिति।

शबलतामुदाहरति—क्वाकार्यमित्यादि। शार्दूलविक्रीडितं छन्दः। 'सूर्याश्वैर्मसजास्तताः सगुरवः शार्दूलविक्रीडितम्' इति लक्षणात्। शुक्रकन्यां देवयानीं दृष्टवतो

**भावस्थितिस्तूक्ता उदाहृता च[1] ।**

**मुख्ये रसेऽपि तेऽङ्गित्वं प्राप्नुवन्ति कदाचन ॥ १३ ॥**

**ते भावशान्त्यादयः । अङ्गित्वं राजानुगतविवाहप्रवृत्तभृत्यवत् ।**

## साहित्यचूडामणिः

वक्ष्यन्त्यपकल्मषाः कृतधिय इति शङ्का । स्वप्नेऽपि सा दुर्लभेति दैन्यम् । चेतः स्वास्थ्यमुपेहीति धृतिः । कः खलु युवा धन्योऽधरं पास्यतीति चिन्ता । एवं चैषां व्यज्यमानानां शाबल्यम् । इदमत्राकूतं—कदाचित् प्रक्रान्तायाश्चित्तवृत्तेः प्रशमो निमीलनदशा हृदयं विशेषेण ह्लादयति कदाचिदुदय उद्गमावस्था, एकदा द्वयोः सन्धिः स्पर्धाभावेनोपनिबन्धः, अन्यदा बहूनां शबलता पूर्वपूर्वोपमर्देनोपन्यास इति चर्वणावैचित्र्यादेतेषां पृथक् प्रपञ्चनमिति ।

ननु भावस्योदयवत् शान्तिवच्च मध्ये स्थितिरित्यवस्था किं न समर्थितेत्यत्राह—भावेति । उक्ता च 'व्यभिचारी तथाऽञ्जित' इत्यत्र । उदाहृता च—'जाने कोपपराङ्मुखी'-त्यादौ ॥१३॥

## सुधासागरः

राज्ञो ययातेरियमुक्तिः । अयमर्थः । अकार्यं ब्राह्मणकन्यायामासक्तिरूपं क्व ! शशलक्ष्मणः चन्द्रस्य कुलं च क्व ! द्वयेनोभयोरत्यन्तवैधर्म्याद्विषमालङ्कारो ध्वन्यते, भूयोऽपीत्युक्तवितर्कोपमर्देनौत्सुक्यम् अपिना सम्भावनोत्कटता सूच्यते । दृश्येत सा अद्भुतसौन्दर्या देवयानी दृश्येत कथञ्चिद् गोचरा भवेत् । मे मम श्रुतं शास्त्रश्रवणं दोषाणां प्रमादावेशादीनां प्रशमाय आत्यन्तिकनाशाय अहो आश्चर्यम् कोपेऽपि मुखमर्थात्तस्याः कान्तं मनोहरम् अपगतं कल्मषं दुश्चरितं येभ्यस्तादृशाः । कृते महात्मभिश्चरिते पुण्यकर्मणि धीर्येषां ते तथाभूताः सत्पुरुषाः किं वक्ष्यन्ति इति निन्दाशङ्कया पूर्वोपमर्दः । स्वप्नेऽपि सा दुर्लभेत्यनेनाधिगताप्राप्तियुक्तदैन्यम् । हे चेतः स्वास्थ्यमुपैहि उपगच्छ । कः खलु धन्यो नाहमिव मन्दभाग्यो युवा तरुणोऽधरं धास्यति पास्यतीति ।

अत्र क्वाकार्यमित्यादौ वितर्कः । भूयोऽपीत्यौत्सुक्यम् । दोषाणामिति मतिः । कोपेपीति स्मृतिः । किं वक्ष्यन्तीति शङ्का । स्वप्नोऽपीति दैन्यम् । चेतः स्वास्थ्यमिति धृतिः । कः खल्विति चिन्ता । स्फुटं पूर्वपूर्वोपमर्देन प्रतीयमानेति शबलता चमत्कारभूमिः । तदेतदुक्तं श्रीवृत्तिकारैः—अत्र वितर्कौत्सुक्यमित्यादि ।

ननु भावस्य शान्त्यादिवत्स्थितिरपि प्रकारः सम्भवत्येव तत्कथं नोक्त इति चेत् । न । भावोक्त्यैव तदुक्तेः । भावस्थितेर्भावाभिन्नत्वात् । तदेतदुक्तं भावस्थितिरित्यादि ।

[1] भावध्वनिना कण्ठकोणेत्यादिना, १५७ पृष्ठे ।

[ संलक्ष्यक्रमव्यङ्ग्यध्वनि-काव्यम् ]

**अनुस्वानाभसंलक्ष्यक्रमव्यङ्ग्यस्थितिस्तु यः ॥ १४ ॥**
**शब्दार्थोभयशक्त्युत्थस्त्रिधा स कथितो ध्वनिः ।**

शब्दशक्तिमूलानुरणनरूपव्यङ्ग्यः अर्थशक्तिमूलानुरणनरूपव्यङ्ग्य उभयशक्तिमूलानुरणनरूपव्यङ्ग्यश्चेति त्रिविधः । तत्र-

---

## साहित्यचूडामणिः

ननु रसं प्रति भावशान्त्यादेः कीदृगङ्गाङ्गिभाव इत्यत्राह—मुख्य इति । मुख्येऽपि रसे भावशान्त्यादयोऽङ्गित्वं प्राधान्यं प्राप्नुवन्ति । कदाचन तादृशि चमत्कारे लब्धे न सर्वदा ।

ननु कथमिदमुक्तं रसोऽपि मुख्यः भावशान्त्यादीनामप्यङ्गित्वमिति, यस्मादेकतरप्राधान्यमन्यतरगुणीभावव्याप्तमित्यत्राह—राजेति । राज्ञानुगतो यो विवाहप्रवृत्तो भृत्यः तद्वत् । रसस्य हि सर्वकालानुस्यूता मुख्यता, भावशान्त्यादेस्तु तत्प्रसादपात्रीभावेन पूर्वापरविसंवादिन्या तादात्विकप्रतीतिबलोपकल्पितायामवस्थायामिति ॥१३॥

अथ संलक्ष्यक्रमस्कन्धं प्रकटयति—अनुस्वानेति । प्रथमस्वनपृष्ठभावी स्वनोऽनुस्वानः तदाभं तत्सदृशं कृत्वा यः संलक्ष्यक्रमो व्यङ्ग्यस्तस्य स्थितिर्यत्रेति । शब्दस्यार्थस्य तदुभयस्य च शक्तिरर्थप्रत्यायनसामर्थ्यं तस्या उत्थ उद्भूतः प्रधानत्वेन अन्यथानुपपत्तेः ॥१४½॥

## सुधासागरः

ननु व्यभिचारिस्थले नियमतो मुख्यस्य रसस्यावस्थानं तत्कथं भावोदाहरणमेतत् कथं वा भावध्वनित्वम् । रसाङ्गत्वेन तेषां गुणीभावादित्यत आह—

ते भावशान्त्यादयः कदाचन यदा त एवाङ्गित्वेन विवक्ष्यन्ते विवहनप्रवृत्तराजानुगम्यमानभृत्यवत् ।

एवमसंलक्ष्यक्रमव्यङ्ग्यभेदं विचार्य संलक्ष्यक्रमव्यङ्ग्यभेदानाह—

शब्दशक्तिमूलेत्यादि अयमर्थः । घण्टायां हन्यमानायां मुख्यशब्दानन्तरं यथा क्षोदीयानपरोऽनुरणनरूपः शब्दः प्रतीयते तद्वत्संलक्ष्यक्रमा व्यङ्ग्यस्य स्थितिर्यत्र सः शब्दश्चार्थश्चोभयं चेति द्वन्द्वः । तेन शब्दशक्तिमूलव्यङ्ग्योऽर्थशक्तिमूलव्यङ्ग्य उभयशक्तिमूलव्यङ्ग्यश्चेति त्रिधेत्यर्थः । शब्दशक्तिमूलत्वं चैतदेव यत्तेनैव तदर्थप्रतीतिर्न तु पर्यायान्तरेणापि । एतद्वैपरीत्यं चार्थशक्तिमूलत्वं नत्वभिधया तत्प्रतीतिरिति ।

अलङ्कारोऽथ वस्त्वेव शब्दाद् यत्रावभासते ॥ १५ ॥
प्रधानत्वेन स ज्ञेयः शब्दशक्त्युद्भवो द्विधा ॥

वस्त्वेवेति अनलङ्कारं वस्तुमात्रम् ।

१. आद्यो यथा—

उल्लास्य कालकरवालमहाम्बुवाहं
देवेन येन जठरोर्जितगर्जितेन ।
निर्वापितः सकल एव रणे रिपूणां
धाराजलैस्त्रिजगति ज्वलितः प्रतापः ॥

अत्र वाक्यस्यासम्बद्धार्थाभिधायकत्वं मा प्रसाङ्क्षीदिति प्राकरणिकाप्राकरणिकयोरुपमानोपमेयभावः कल्पनीय इत्यत्रोपमालङ्कारो व्यङ्ग्यः ।

---

## साहित्यचूडामणिः

एवकारव्यावर्त्यमाह—अनलङ्कारमिति । उल्लास्येति । अत्र देवेनेति सुगृहीतनाम्ना श्रवणपरुषप्रचुरक्ष्वेलितेन येन रणे कालस्य श्यामलस्य साक्षादन्तकभूतस्य वा करवालस्य खड्गस्य योऽयं महानम्बुवाहः अम्बु वहति पीतपूर्वमिति व्युत्पत्त्या धाराप्रदेशः तमुल्लास्य खड्गस्य नैशित्यशालिनं धाराप्रदेशमवगूर्य धाराजलैरिति कार्ये कारणोपचारः अश्रिदेशवर्तिभिर्नैशित्यादिभिर्धर्मैः शत्रूणां प्रतापः

## सुधासागरः

एतेनाभिधाया यत्र न नियमनं तत्रैष भेदो द्रष्टव्यः । तन्नियमने तु नाभिधामूलत्वं किन्तु व्यञ्जनामूलत्वमेव 'भद्रात्मनः' इतिवद् भवेदिति यत्केनचिदुक्तं तन्नादेयम् । 'भद्रात्मनः' इत्यादेरपि एतद्भेदत्वेनेष्टत्वात् । अन्यथा तस्य सर्वभेदबहिर्भावापत्तेः ।

किञ्च—प्रथमोदाहरणे अप्राकरणिकप्राकरणिकयोरिति व्याख्यानेन, द्वितीये भवानित्यनेन, तृतीये असीत्यनेन प्रकरणस्याभिधानियामकस्य स्पष्टत्वात्तेषामुदाहरणत्वं विरुद्ध्येत । तस्माद्यथोक्तमेव न्याय्यम् । तत्र तेषु मध्ये ।

नन्वलङ्कारोऽपि वस्तु तत्कथं भेद इत्यत आह—अनलङ्कारमिति । अत एव प्रदीपकारैर्व्याख्यातम्—शब्दशक्तिमूलानुरणनरूपव्यङ्ग्यो द्विधा । अलङ्कृतस्यानलङ्कृतवस्तुमात्रस्य वा प्राधान्ये प्रकाशनादित्यर्थ इति ।

तत्राद्यो यथा—उल्लास्येत्यादि । वसन्ततिलका छन्दः । अत्र वाच्यपक्षे येन

## साहित्यचूडामणिः

प्रणाशित इत्यभिधया प्रकाश्यते। यः पुनरत्र देवेन गम्भीरविकटस्तनितेन कालकरं श्यामलकान्तिम् अथ च बालं प्रवृद्धध्युन्मुखं महाम्बुवाहं पुष्कलावर्तकादि मेघमुल्लास्य त्रिजगति ज्वलितः प्रतापो दावानलादिसन्तापः प्रध्वंसित इति पर्जन्यविषयोऽर्थः, तत्र प्रकरणवर्तिनीमभिधामवलम्ब्य व्यञ्जनं प्रवर्तत इति व्याख्येयम्। अन्यथा अम्बुवाह इव करवाल इति व्याघ्रादिसमासेन साधर्म्यसिद्धेरुपमानोपमेयभावस्य वाचनिकत्वं स्यात्।

ननु वर्णनीयवृत्तान्ते वाच्ये पर्जन्यवृत्तान्तस्मरणमिति वस्तुमात्रध्वनिरयमस्तु, कथमलङ्कारध्वनिरित्याह—अत्रेति। औपम्यप्रतीतिमपहाय पर्जन्यवृत्तान्तमात्रे द्वितीयस्य वाक्यस्य पूर्ववाक्यपर्यालोचनायामघटितार्थाभिधायित्वं प्रसज्येत। नहि कश्चिदनुन्मत्तो राजा खड्गविद्याविदग्ध इति प्रस्तावे पर्जन्यो ववर्षेति ब्रूयात्। तदनयोरप्राकरणिकप्राकरणिकयोः पर्जन्यवर्णनीययोरुपमानोपमेयभावः कल्पनीयः। ततश्च यथा पर्जन्येन मेघमुल्लास्य दावपावकादिसन्तापः परिह्रियते एवं वर्णनीयेन करवालमुत्कृष्य शत्रुप्रताप इत्युपमालङ्कारो व्यङ्ग्यः। अन्यथा वाक्यवर्तिनी तदुभयसाधारणी गुम्फना निष्फला स्यात्। ननु साधारणी शब्दरचनेति श्लेषालङ्कार एवास्तु यत्राभिधैव व्यापारः कृतं व्यञ्जनाव्यापारेणेति न। न खलु रणे रिपूणामित्यत्र श्लेषशङ्का। अन्यत्रापि यत्र यस्य वर्णनौचित्यं स एव तत्राभिधेयः, नान्यः। न च राजवर्णने पर्जन्यवर्णनस्यौचित्यम्। नन्वस्ति तदुपमाद्वारेणेति चेत्, न तर्हि श्लेषः, औपम्यव्यतिरिक्तो हि विषयः श्लेषस्य। औपम्यं तु ध्वनिरेव। यदाह—

## सुधासागरः

प्राकृतेन देवेन नृपतिना। जरठं कठोरमूर्जितं बलवद् गर्जितं सिंहनादो यस्य तथाविधेन। कालो वैरिसंहर्ता यः करवालः खड्गस्तत्र यन्महदम्बु धाराजलं तस्य वाहः प्रवाहः प्रसरणमुल्लास्य तीक्ष्णीकृत्य धाराजलैः खड्गधाराकान्तिभिः खड्गरत्नादिकान्तौ पानीयपदप्रयोगात् रिपूणां शत्रूणाम् त्रिजगति त्रिभुवने ज्वलितो विख्यातः सकल एव प्रतापः शौर्यख्यातिरूपो रणे सङ्ग्रामे निर्वापितः विलोपित इत्यर्थः। यद्वा महः उत्सव एवाम्बु वहतीति तथा कालकरवालः कृष्णायसखड्गश्चासौ स चेति कर्मधारयः तमुल्लास्य निपातनायोद्यम्येत्यर्थः।

सकल इति सप्तम्यन्तं रणविशेषणमिति केचित्।

व्यङ्ग्यपक्षे तु येन देवेन मेघाधिपतिना इन्द्रेण, कालकरं कृष्णरश्मिं बालं नवीनम्, बवयोरभेदात्, महाम्बुवाहं मेघमुल्लास्य प्रकाश्य, रणे

## साहित्यचूडामणिः

आक्षिप्त एवालङ्कारः शब्दशक्त्या प्रतीयते ।[१]
यस्मिन्ननुक्तः शब्देन शब्दशक्त्युद्भवो हि सः ॥ [ध्व० २.२१]

इति । भविष्यति चैतदित्यलमतिक्षोदेन ।

## सुधासागरः

तेजोविषयजलकोलाहले सति, धाराकृतिभिर्जलैः त्रिभुवने रिपूणामर्थाज्जलशत्रूणां तेजसाम्, सकलः प्रकृष्टस्तापः औष्ण्यम्, निर्वापितः शमितः । कीदृशेन देवेन जरठोर्जितगर्जितेन तत्प्रयोज्यमेघगर्जितस्यैव तदीयत्वात् । उपलक्षणार्थकतृतीयाङ्गीकारेण गर्जितेनोपलक्षितं मेघमुल्लास्येति वाऽर्थः ।

चक्रवर्त्तिनस्तु महाम्बुवाहमिव कालकरवालं तमिव च महाम्बुवाहमिति पक्षद्वये क्रमेणोपमितिसमासाङ्गीकरेणार्थः । एवं धाराजलैरित्यत्रापि जलैरिव धाराभिरिति राजपक्षे । तथा व्यङ्ग्यपक्षे ज्वलितः ऊर्ध्वशिखः प्रकृष्टस्तापो यस्यार्थाच्छत्रूणामस्त्राग्निरिति विशेषमाहुः । तत्र कालकरवालेत्यादेः परिवृत्तिसहत्वेन तदंशे शब्दशक्तिमूलत्वाऽनुपपत्तिः । कालकरवाल एव महाम्बुवाहः मेघ इति रूपकं स्वसङ्गतमेव । तथा सति उत्तरपदार्थस्य मेघस्य प्राधान्यापत्त्या तदुल्लासकत्वस्य राज्ञि इन्द्रारोपं विनाऽसङ्गतत्वापत्तेः । एतदर्थं व्यङ्ग्यत्वाङ्गीकारे च तस्य वाच्यसिद्ध्यङ्गत्वेन ध्वनित्वानुपपत्तेः । उपमायास्तु नेतरोपमासाधकत्वम् । नृपे इन्द्रसाम्यावगतावपि खड्गे मेघसादृश्यसमानधर्मसाकाङ्क्षत्वादिन्द्रसदृशोल्लास्यत्वस्य मेघावृत्तित्वेन समानधर्मत्वाभावादिति विशेषः ।

किञ्च—नानार्थशब्दोपनिबन्धेन प्रतीयमानार्थे तात्पर्यग्रहाद्वाक्यभेदपरिहाराय तेनैकवाक्यताकल्पेऽपि वर्णनीयस्य राज्ञः प्राधान्यमितरस्य गुणभाव इत्युचितं न तु वर्णनीयस्य गुणत्वम् । एवं रूपके राजैव महेन्द्र इत्युत्तरपदार्थस्याप्रकृतस्य प्राधान्ये तद्रहितरतेरेव व्यङ्ग्यत्वापत्त्याऽसम्बद्धार्थाभिधायकत्वप्रसङ्गः । उपमायान्तु प्रकृतप्राधान्यलाभान्न तथेति तस्या एव व्यङ्ग्यत्वं युक्तम् । तदेतदुक्तम् असम्बद्धार्थाभिधायकत्वं मा प्रसाङ्क्षीदित्यादि ।

अत एव प्रदीपकारैर्व्याख्यातम्—अत्र 'करवालमुल्लास्य' एतावन्मात्रे वक्तव्ये यदेतादृशशब्दप्रयोगस्तस्याऽसम्बद्धार्थकता मा प्रसज्यतामित्यप्राकरणिकैरिन्द्रवारिवाहादिभिः प्राकरणिकानां राजकरवालादीनामुपमानोपमेयभावे कविस्तात्पर्यमित्युपमालङ्कारो व्यङ्ग्यः । स च शब्दशक्तिमूलकः पर्यायान्तरेण भूपादिना तदर्थोपस्थितौ तदप्रतीतेरिति ।

---

[१] प्रकाशत इति पाठे ।

तिग्मरुचिरप्रतापो विधुरनिशाकृद् विभो, मधुरलीलः ।
मतिमानतत्त्ववृत्तिः प्रतिपदपक्षाग्रणीर्विभाति भवान् ॥

अत्रैकैकस्य पदस्य द्विपदत्वे विरोधाभासः ।

---

## साहित्यचूडामणिः

तिग्मेति । तिग्मस्तीक्ष्णो रुचिरो हृद्यश्च प्रतापो यस्य । विधुराणां शत्रूणां निशामन्धकारमयीं करोति । मधुरा रमणीया लीला यस्य । मतिमानयोर्बुद्धिचित्तसमुन्नत्योस्तत्त्वं प्रामाणिकोऽर्थः तत्र प्रवृत्तिर्यस्य । प्रतिपदं प्रतिक्षणं पक्षस्य बलस्याग्रणीर्निर्वोढा ।

एकस्येति । तीक्ष्णतेजिष्ठप्रताप इत्येतदर्थाभिधायकस्य पदस्य द्विपदत्वे तिग्मरुचिस्तीक्ष्णकिरणः अप्रतापः प्रतापशून्यः इति विरुद्धार्थद्वयौचित्येन पदच्छेदे तेनैव व्यञ्जकेन विरोधो व्यङ्ग्यः आदित्यः कथमप्रतापः स्यादेति । एवं विधुश्चन्द्रमाः कथमनिशाकृद् रजानकरः । मधुश्चैत्रः कथमलीलः उत्सवरहितः मतिमान् बुद्धिमान् कथमतत्त्ववृत्तिः अपरमार्थप्रवृत्तिः । प्रतिपत् प्रथमा तिथिः कथमपक्षाग्रणीः पक्षमुख्या न स्यात् । ननु कथं वाक्यस्यासंबन्धार्थताप्रसंगः । उच्यते । विरोधप्रतीत्यभावे तदनुकूलायाः साधारण्येन शब्दरचनायाः प्रयासे वैयर्थ्यप्रसङ्गात् । न खलु तिग्मविमलप्रताप इत्यादौ विरोधः । अयं भावः—तिग्मरुचिरप्रतापस्य तत एव तिग्मरुचेरादित्यस्य सतो भूपतेरप्रतापत्वं विरुद्धमिति । एवमुत्तरत्रापि ।

## सुधासागरः

एवमलङ्कारान्तराणि व्यङ्ग्यानि बोध्यानीति ध्वनयन्नुदाहरति—तिग्मरुचिरेत्यादि । अयमर्थः हे विभो प्रभो ! भवान्विभाति शोभते इत्यन्वयः । कीदृशः तिग्मस्तीक्ष्णश्चासौ रुचिरो मनोज्ञः शत्रुमित्रपक्षयोः प्रतापो यस्य सः । खलसुजनयोस्तिग्मरुचिरः प्रतापो दण्डादिजनितं तेजो यस्येति दीपिकायाम् । विधुराणां शत्रूणां निशेव निशा मरणं करोतीति । तथा मधुरा मनोज्ञा लीला चेष्टा यस्य सः । मतिः शास्त्रतत्त्वज्ञानं मानश्चित्तसमुन्नतिस्तयास्तत्त्वेन सारेण वृत्तिर्वर्तनं यस्य सः । तयोस्तत्त्वेन यथार्थेन वृत्तिर्यत्रेति चक्रवर्ती । प्रतिपदं पक्षाणां सहायानामग्रणीरग्रेसरः ।

अत्र तिग्मरुचिः सूर्योऽप्रतापोऽनुष्णः । विधुश्चन्द्रो न निशाकृत् । मधुर्वसन्तोऽलीलः क्रीडाशून्यः मतिमान्प्रशस्तबुद्धिः अतत्त्वेऽवस्तुभूते वृत्तिर्व्यवसायो यस्य तादृशः, प्रतिपत् तिथिः पक्षाग्रणीः पक्षादिभूता नेति विरोधाभासो व्यङ्ग्यः द्वितीयार्थस्याप्रकृतत्वात् । अत्रैकैकपदस्य द्विपदत्वे विरोधाभासः ।

अमितः समितः प्राप्तैरुत्कर्षैर्हर्षद, प्रभो ।
अहितः सहितः साधुयशोभिरसतामसि ॥

अत्रापि विरोधाभासः ।

निरुपादानसम्भारमभित्तावेव तन्वते ।
जगच्चित्रं नमस्तस्मै कलाश्लाघ्याय शूलिने ॥

अत्र व्यतिरेकः ।

अलङ्कार्यस्यापि ब्राह्मणश्रमणन्यायेनालङ्कारता ।

---

## साहित्यचूडामणिः

अमितः अनवच्छिन्नः । समितः सङ्ग्रमात् प्राप्तैरुत्कर्षैः अहितः अननुकूलः असतां खलानाम् सहितो यशोभिः संयुक्तः । अमितो मितरहितः कथं समितः स्यात् । एवम् अहितः कथं सहित इति विरोधः ।

निरुपादानेति । स्वव्यतिरिक्तस्य कस्यचिदभावात्, एवकारेण परमेश्वरस्य विश्वसृष्टावनन्यमुखप्रेक्षित्वलक्षणं स्वातन्त्र्यमासूत्र्यते—

कलाभिः इच्छाज्ञानक्रियाभिः श्लाघ्याय शूलिने नमः । व्यतिरेकोऽन्ये-भ्यश्चित्रकरेभ्यो वैलक्षण्यमाधिक्यरूपम् ।

नन्वलङ्कारश्चेन्न व्यङ्ग्यः व्यङ्ग्यश्चेन्नालङ्कारो यावदलङ्कार्य इति व्याहतमेत-दित्यत्राह—अलङ्कार्यस्यापीति । सत्यमलङ्कार्योऽसौ नालङ्कारः । केवलं पूर्वप्रत्यभिज्ञा-बलादलङ्कारध्वनिरिति व्यपदिश्यते । यथा ब्राह्मण्यश्रमणत्वयोर्विरोधेऽपि ब्राह्मणश्रमण इति व्यपदेशः तद्वत् ।

## सुधासागरः

पदाऽभेदेऽपि विरोधाभासो यथा—अमित इत्यादि । अयमर्थः । हर्षं शत्रु-मित्रयोर्द्यति खण्डयति ददाति चेति तथाभूत हे प्रभो त्वं समितः सङ्ग्रामात् प्राप्तैरुत्कर्षैरमितोऽपरिच्छिन्नः । असतां खलानामहितो दण्डकृत् । एवं साधु-भिरुत्कृष्टैर्यशोभिः सहितो युक्तोऽसीत्यन्वयः । साध्विति क्रियाविशेषणं वा ।

अत्र मितं मानं तद्रहितस्तत्सहितश्च । तथा अहितः सहितश्चेति विरोधो व्यङ्ग्योऽप्रकृतत्वात् ।

ननु विरोधस्य किं सर्वत्र व्यङ्ग्यत्वमेव । नेत्युच्यते । तत्कियती सीमा । अपिशब्दादेर्विरोधव्यञ्जकस्य भावे वाच्यत्वम् । तदभावे व्यङ्ग्यत्वमिति ।

व्यतिरेको यथा—निरुपादानेत्यादि । अयमर्थः । तस्मै शूलिने महादेवाय

२. वस्तुमात्रं—

पंथिअ ण एत्थ सत्थरमत्थि मणं पत्थरत्थले गामे ।
उण्णअपओहरं पेक्खिऊण जइ वससि ता वससु ॥
[ पथिक, नात्र स्रस्तरोऽस्ति मनाक् प्रस्तरस्थले ग्रामे ।
उन्नतपयोधरं प्रेक्ष्य यदि वससि तदा वस ॥ ]

अत्र यद्युपभोगक्षमोऽसि तदा आस्स्वेति व्यज्यते ।

---

## साहित्यचूडामणिः

पंथिअ णेति—

पान्थ नात्र संस्तरोऽस्ति मनाक् प्रस्तरस्थले ग्रामे ।
उन्नतपयोधरान् प्रेक्ष्य यदि वससि तदा वस ॥

## सुधासागरः

नम इत्यन्वयः कीदृशः निर्गतः उपादानसम्भारः उपकरणसम्पत्तिर्यत्र तद्यथा स्यात्तथा अभित्तावनाधारे शून्ये इति यावत् । चित्रं नानाकारं जगत्तन्वते विस्तारयते ।

यद्यप्युपादानसम्भारं विना न सृष्टिसम्भवस्तथाऽप्युपकरणसम्पत्तेरपि भगवदिच्छापन्नत्वेन तत्पारवश्याभावे तन्निरपेक्षत्वमुपचरितं बोध्यम् ।

एवं कलया—चन्द्रषोडशांशरूपया श्लाघ्यायेति प्रकृतोऽर्थः । व्यञ्जनया तु चित्रकलाशब्दाभ्यामालेख्ये तत्प्रावीण्योपस्थित्या मषीतूलिकाद्युपादानैर्भित्तावालेख्यकारिभ्यः कलावद्भ्य उत्कर्षः प्रतीयत इति । अत्र चित्रकलाशब्दयोः परिवृत्त्यसहत्वेन शब्दशक्तिमूलता बोध्या ।

ननूदाहृतेषूपमादीनां प्राधान्यं न वा । आद्ये कुतस्तेषामलङ्कारत्वम्, अन्यानलङ्करणात् । द्वितीये कुतोऽस्य काव्यस्य ध्वनित्वम्, व्यङ्ग्यस्याप्राधान्यादिति चेन्न । पूर्वमयमलङ्कार आसीदित्येतावता ऽलङ्कारव्यपदेशात् । यथा ब्राह्मणपूर्वबौद्धसंन्यासिनि ब्राह्मणव्यपदेशः ।

नन्वेवं व्यपदेशसमर्थनेऽपि अलङ्कारध्वनित्वं न समर्थितमिति चेन्न । अलङ्कारपदेन तद्योग्यताया विवक्षितत्वात् । नचैवं रसादिध्वनावप्यलङ्कारध्वनित्वप्रसङ्गः । संलक्ष्यक्रमस्यैव तादृशस्य तथाभिप्रेतत्वात् । एवं च प्राधान्याऽप्राधान्ये व्यङ्ग्यस्य वाच्यापेक्षयैव न तु रसापेक्षयापि, तदपेक्षया सर्वत्र गुणीभावात् । तथा चोपमादीनां रसाङ्गतयाऽलङ्कारत्वे वाच्यापेक्षया प्राधान्यं चेति न दोषलेशावकाशः । तदेतत्सर्वमभिप्रेत्य वृत्तिकृदाह—अलङ्कार्यस्यापीत्यादि ।

वस्तुमात्रमुदाहरति—पंथिएत्यादि । जघनविपुला छन्दः । उक्तञ्च वृत्तरत्नाकरे—

शनिरशनिश्च तमुच्चैर्निहन्ति कुप्यसि नरेन्द्र, यस्मै त्वम्।
यत्र प्रसीदसि पुनः स भात्युदारोऽनुदारश्च ॥

अत्र विरुद्धावपि त्वदनुवर्त्तनार्थमेकं कार्यं कुरुत इति ध्वन्यते।

## साहित्यचूडामणिः

इति वर्षसौ वासार्थिनं पथिकयुवानमुद्दिश्य कस्याश्चिदुक्तिः। मनागिति शयनीय-सापेक्षशयनत्वमव्युत्पन्नम्, अत्र ग्रामे, यतोऽयं प्रस्तरस्थलः पाषाणपट्टप्रायभूमिकः अरसिकजनबहुलश्च। उन्नतान् पयोधरान् नभसि प्रेक्ष्येति स्पष्टम् उन्नतौ पयोधरावुरसि प्रेक्ष्येति बोद्धव्यमात्रे। यदि निद्रालस्यव्युदासात् सम्भोगे सन्नद्धोऽसि तदा वस नान्यथा, स्वभर्तृसाधारण्येन स्पृष्टास्पृष्टिमात्रं चेत् तदलं परपुरुषस्पर्शपातकेन। अत्र पयोधरशब्दशक्तिः प्राधान्यान्मूलम्।

## सुधासागरः

संलङ्घ्य गणत्रयमादिमं शकलयोर्द्वयोर्भवति पादः।
यस्यास्तां पिङ्गलनागो विपुलामिति समाख्याति ॥

इयं विपुला चपलावन्मुखजघनभेदैर्भिन्ना भवति। प्रथमेऽर्द्धे मुखविपुला उत्तरार्द्धे जघनविपुलेति व्याख्यातारः। स्वयं दूती 'द्व्यर्थैः पदैः पिशुनयेच्च रहस्यवस्तु' इति कामशास्त्रमनुसृत्य पथिकं प्रत्याह—

पथिक नात्र संस्तरमस्ति[१] मनाक् प्रस्तरस्थले ग्रामे।
उन्नतपयोधरं प्रेक्ष्य यदि वससि तद् वस ॥

इति संस्कृतम्। अयमर्थः। हे पथिक! प्रस्तराणां पाषाणानां स्थले अत्रास्मिन् ग्रामे मनागल्पमपि स्रस्तरं कटाद्यास्तरणम् नास्ति। पाषाणबाहुल्येन तृणदुर्लभतासूचनम्। तत्तस्माच्छयनसामग्र्यभावात्कारणादुन्नतपयोधरं प्रेक्ष्य वार्षुकं जलदं बलवत्प्रतिबन्धकं विचार्य यदि वससि तदा वस। न तु विश्रामार्होऽयं ग्राम इति यथाश्रुतोऽर्थः।

व्यङ्ग्यार्थस्तु प्रस्तराणां मूर्खाणां स्थानेऽत्र ग्रामे। सत्थरं शास्त्रम् मनागपि नास्ति। किं पुनः साहित्यम्। ततश्चाकृतीङ्गिताद्यभिज्ञविरहान्निःशङ्कतया उन्नतमनुपभुक्तं स्तनं तादृशोद्दीपनं मेघं च प्रेक्ष्य यदि वससि उपभोगक्षमोऽसि तदाऽऽस्स्वेति। प्रस्तरस्थले इत्यनेन शय्यापेक्षाऽपि नास्तीति ध्वन्यते। शब्दशक्तिमूलत्वं परिवृत्त्यसहनानार्थशब्दप्रयोगादवसेयम्।

संस्कृते वस्तुमात्रव्यञ्जकत्वमुदाहरति—शनिरित्यादि। गाथा छन्दः। लक्षणमुक्तं प्राक्। अयमर्थः। हे नरेन्द्र! यस्मै त्वं कुप्यसि तं शनिर्ग्रहः अशनिर्वज्रश्च

[१] संस्तरस्य क्लीबत्वं व.मतेऽपि।

[ अर्थशक्तिमूलध्वनिः ]

**अर्थशक्त्युद्भवोऽप्यर्थो व्यञ्जकः सम्भवी स्वतः ॥१६॥**
**प्रौढोक्तिमात्रात् सिद्धो वा कवेस्तेनोम्भितस्य वा ।**
**वस्तु वाऽलङ्कृतिर्वेति षड्भेदोऽसौ व्यनक्ति यत् ॥१७॥**
**वस्त्वलङ्कारमथवा तेनायं द्वादशात्मकः ।**

**स्वतःसम्भवी न केवलं भणितिमात्रनिष्पन्नो यावद् बहिरप्यौचित्येन सम्भाव्यमानः, कविना प्रतिभामात्रेण बहिरसन्नपि निर्मितः कविनिबद्धेन वा वक्त्रेति द्विविधोऽपर इति त्रिविधः वस्तु वाऽलङ्कारो वाऽसाविति षोढा व्यञ्जकः। तस्य वस्तु वाऽलङ्कारो वा व्यङ्ग्य इति द्वादशभेदोऽर्थशक्त्युद्भवो ध्वनिः[१] ।**

---

## साहित्यचूडामणिः

शनिरिति । शनिः शनैश्चरः अशनिर्निघातः शब्दशक्त्या तद्विरुद्धश्च । उदारः स्थूललक्षः अनुदारोऽनुकूलकलत्रः तद्विपरीतश्च । यत्र तव कोपः तत्र ग्रहपीडानिर्घातादिर्दैविकी विपत्तिः । यत्र तु तव प्रसादः तत्रौदार्यकुटुम्बानुकुलत्वादिर्लौकिकी सम्पत्तिः ।

विरुद्धावपीति । शन्यशनी उदारानुदारौ च । एकं कार्यं त्वत्कोपपात्रस्य निहननस्वरूपं कुरुतः । एवं त्वत्प्रसादभाजनस्यौदार्यदारानुकूल्ये भवतः । पूर्वत्र श्लेषानुबन्धिनी शब्दशक्तिर्मूलम् । अत्र तु विरोधशालिनीति विवेकः । प्रतिपत्तिसौकार्यायोदाहरणप्रपञ्चः ।

अर्थेति । अपिः प्रमेयशय्यापूरणाय । व्यञ्जकः षड्विध इति प्रकटयितुं

## सुधासागरः

उच्चैरतिशयेन निहन्ति । यस्मै पुनः प्रसीदसि, पुनस्त्वर्थे, स पुरुषः उदारो दाता महान्वा अनुगता दारा यस्य प्रवासाद्यभावात् स तथाभूतश्च भातीति ।

अत्र प्रथमार्द्धे शनिरशनिश्चेत्यनेन विरुद्धावपि त्वदनुवर्त्तनार्थमेकं कार्यं कुरुत इति वस्तु ध्वन्यते । न तु विरोधालङ्कारः शनिरशनिरित्यनयोः सामानाधिकरण्याभावात् । विरोधस्य च तत्रैव विश्रान्तेः । द्वितीयार्धे तु नोदाहरणम् । तत्र चशब्दस्याऽप्यर्थत्वे विरोधस्य वाच्यत्वात् । समुच्चयमात्रार्थत्वे तु विरोधस्यैव व्यङ्ग्यत्वादिति ।

---

[१] अलङ्कारस्य स्वतःसंभवित्वमानन्दवर्धनानभिमतमनुभवविरुद्धं च । किञ्च यत्र वस्तुमात्राद् वस्तुमात्रस्य प्रतीतिस्तत्रास्फुटस्याप्यलङ्कारस्याभावात् कथं वा काव्यत्वम्, अस्फुटालङ्कारसत्त्वे पुनः कीदृशं वस्तुमात्रस्य व्यञ्जकत्वमित्यत्र निध्येयम् ।

## साहित्यचूडामणिः

त्रैविध्यं तावदाह—अर्थो व्यञ्जक इति। स्वतःसंभवी कविप्रौढोक्तिसिद्धः कविनिबद्धवक्तृप्रौढोक्तिसिद्धश्चेति त्रिविधः। यदाह—

अर्थशक्त्युद्भवस्त्वन्यो यत्रार्थः संप्रकाशते।
यस्तात्पर्येण वस्त्वन्यद् व्यनक्त्युक्तिं विना स्वतः॥ ध्व० २.२२॥
प्रौढोक्तिमात्रनिष्पन्नशरीरः सम्भवी स्वतः।
अर्थोऽपि द्विविधो ज्ञेयो वस्तुनोऽन्यस्य दीपकः॥ ध्व० २.२४॥ इति।

प्रौढोक्तेर्द्वैविध्यं वृत्तिकार [ध्व० २. २४ कारिकावृत्तौ] आह—यथा 'अर्थशक्त्युद्भवानुरणनरूपव्यङ्ग्ये ध्वनौ यो व्यञ्जकोऽर्थः तस्यापि द्वौ प्रकारौ कवेः कविनिबद्धस्य वा वक्तुः प्रौढोक्तिमात्रनिष्पन्नशरीरः' इति। समर्पणीयवस्तु-समर्पणप्रावीण्यं प्रौढिः प्रकर्षेण ऊढिः प्राप्तिरिति। अत्र त्रिविधस्य पुनर्द्वैविध्यमाह-वस्तु वेति। एवं षड्भेदेऽसौ। व्यङ्ग्यस्याप्यर्थस्य द्वैविध्यमाह—व्यनक्ति यदिति। व्यङ्ग्योऽपि कदाचिद् वस्तुमात्रम् एकदा विचित्रो वाक्यार्थ इति द्विधा। यदिति हेतौ। तेनायं ध्वनिर्द्वादशविधः।

न केवलमिति। सारस्वतसृष्टिलक्षणेन भणितिमात्रेणैव निष्पन्नः, किं तर्हि, बहिरपि ब्रह्मसृष्टावपि। प्रतिभामात्रेणेति। कविगतं प्रतिभानमेव रसपरिपूर्णकुम्भोच्चलनवत् प्रौढोक्तितया परिस्फुरति। कविना तन्निबद्धेन वा केनचिन्निष्पन्न इति।

## सुधासागरः

ध्वनाविति शेषः। स्वतः सम्भवी लोकेऽपि दृष्टः। प्रौढोक्तिश्चमत्कारानुगुणोक्तिः। मात्रपदेन बहिःसम्भववारणम्। तेन कविना उम्भितस्य पूरितस्य वर्णनयोम्भितो नायकादिस्तस्येत्यर्थः। 'उभ उम्भ पूरणे' इति धात्वनुसारात्। कविनिबद्धवचनं कविवचनादधिकरागप्रकटकतयाऽधिकचमत्कारकमिति द्वयोर्भेदः। अन्यथा कविनिबद्धभणितिनिष्पन्नः कविभणितिनिष्पन्न एवेति स्वतःसम्भवित्वं प्रौढोक्तिनिष्पन्नत्वं चेति द्वैरूप्यमेव विदध्यात्[१]। अत एवोक्तं वृत्तिकारैर्द्विविधोऽपर-इति त्रिविध इति।

असौ त्रिरूपोऽप्यर्थो वस्त्वलङ्काररूपेण प्रत्येकं द्विधा भूत्वा यतो व्यनक्ति ततः षट्प्रकारो व्यञ्जकस्तेषां प्रत्येकं व्यङ्ग्योऽपि वस्त्वलङ्काररूपाभ्यां द्विरूप एवेति। तेन हेतुना ऽयमर्थशक्त्युद्भवो ध्वनिर्द्वादशात्मको द्वादशविध इत्यर्थः।

अत एव प्रदीपकारैर्व्याख्यातम्—'स्वतः सम्भवी न केवलं भणितिनिष्पन्नशरीरः अपि तु बहिरप्यौचित्येन सम्भाव्यमानः' प्रौढोक्तिमात्रात्सिद्धो बहिरसन्नपि वक्तृप्रतिभामात्रेण तथा निर्मितः। अयमर्थः। व्यञ्जकोऽर्थस्त्रिधा। स्वतः सम्भवी, कविप्रौढोक्तिमात्रसिद्धः कविनिबद्धनायकादिवक्तृप्रौढोक्तिमात्रसिद्धश्च। स त्रिविधोऽपि वस्तुमात्रमलङ्कृतिर्वेति षड्विधो व्यञ्जकः। षण्णां व्यङ्ग्यमपि

[१] द्वैरूप्यमेवाभिमतमानन्दवर्धन-पण्डितराजयोः।

क्रमेणोदाहरणम्—

[ स्वतःसम्भविनोऽर्थस्य चत्वारो भेदाः ]

१. अलसशिरोमणि धुत्ताणं अग्गिमो पुत्ति धणसमिद्धिमओ ।
इअ भणिएण णअङ्गी पप्फुल्लविलोअणा जाआ ॥
[अलसशिरोमणिर्धूर्तानामग्रिमः पुत्रि! धनसमृद्धिमयः ।
इति भणितेन नताङ्गी प्रफुल्लविलोचना जाता ॥]

अत्र ममैवोपभोग्य इति वस्तुना व्यज्यते ।

---

## साहित्यचूडामणिः

द्विविधोऽपर इति । त्रिविध इति स्वतः सम्भवी, द्विविधः प्रौढोक्तिसिद्धश्चेति । अलंकारो वेति ।

अर्थशक्तेरलङ्कारो यत्र [1]व्यङ्ग्यः प्रतीयते ।
अनुस्वानोपमव्यङ्ग्यः स प्रकारोऽपरो ध्वनेः ॥ ध्व० २.२५ ॥

इति ध्वनिदृशा रूपकादिरलङ्कारः क्वचिद् वाच्यकक्ष्यामनुप्रविष्टोऽप्यन्यत्र व्यङ्ग्यतयोपलभ्यते । अरसेति ।

अरसशिरोमणिर्धूर्तानामग्रिमः पुत्रि धनसमृद्धिमयः ।
इति भणितेन नताङ्गी प्रफुल्लविलोचना जाता ॥

अरसतया रस्यविषयमरोचकित्वं लक्ष्यते, संभोगविचक्षणत्वं व्यङ्ग्यम् । अथवा तदरोचकित्वमेव व्यङ्ग्यं, तद्व्यङ्ग्यं तु संभोगवैचक्षण्यं, यत्र संशयलक्षणः सङ्करो वक्ष्यते । वस्तुना यथोक्तेन । वस्तु ममैवोपभोगयोग्य इत्येवंरूपम् ।

## सुधासागरः

प्रत्येकं वस्तु वाऽलङ्कृतिर्वेति द्वादशभेदा भवन्तीति । तदेतत्सर्वमभिप्रेत्य श्रीवाग्देवतावतार आह तत्र स्वतः सम्भवीत्यादि ।

तत्र स्वतः सम्भविन्यर्थे भेदचतुष्टये वस्तुना वस्तुनो व्यक्तिर्यथा—अलसेत्यादि । मुखविपुला छन्दः । विवाहप्रसङ्गे यौवनाक्रान्तकुमारीं प्रति उपमात्रा सम्भावितवरगुणवर्णने सा प्रसन्नाऽप्रसन्ना वेति कुमारीप्रसूप्रश्नं काचिदुत्तरयति ।

अलसशिरोमणिर्धूर्त्तानामग्रिमः पुत्रि धनसमृद्धिमयः ।
इति भाणितेन नताङ्गी प्रफुल्लविलोचना जाता ॥

इति संस्कृतम् । स्पष्टम् ।

अत्रालसत्वेनान्यत्र गन्तुमनिच्छुः धूर्तत्वेन रतेष्वनावृतगुणः, सम्भोगेनातृप्त इति यावत्, धनसमृद्धिमत्तया कृपण इति निर्धार्य प्रफुल्लनयनत्वं वस्तु तेनान्यासामनाकर्षणीय इति ममैवोपभोग्य इति वस्तु व्यज्यते ।

---

[1] यत्राप्यन्य इति पाठे .

२. धन्याऽसि या कथयसि प्रियसङ्गमेऽपि
विस्रब्धचाटुकशतानि रतान्तरेषु ।
नीवीं प्रति प्रणिहिते तु करे प्रियेण
सख्यः, शपामि यदि किञ्चिदपि स्मरामि ॥

अत्र त्वमधन्या अहं तु धन्येति व्यतिरेकालङ्कारः ।

३. दर्पान्ध-गन्धगज-कुम्भकपाटकूट-
संक्रान्तिनिघ्नघनशोणितशोणशोचिः ।
वीरैर्व्यलोकि युधि कोपकषायकान्तिः
कालीकटाक्ष इव यस्य करे कृपाणः ॥

अत्रोपमालङ्कारेण सकलरिपुबलक्षयः क्षणात् करिष्यते इति वस्तु ।

---

## साहित्यचूडामणिः

धन्येति । अत्र सखीसकाशात् कस्याश्चिद् व्यतिरेकस्य प्रतीयमानत्वाद् वस्तुना व्यतिरेकालङ्कारो व्यज्यते । तत्स्वरूपमाह—त्वमधन्येति । संभोगावस्थायामप्रस्तुतार्थव्यापृतत्वात् । अहं धन्या, तदेकतानलया सुखसागरान्तरालमग्नत्वात् ।

दर्पान्धेति । काल्याश्चण्डिकायाः कटाक्षोऽपाङ्गदर्शनं स इवेत्युपमालङ्कारेण सर्वविपक्षक्षयः क्षणेन करिष्यत इति वस्तु व्यज्यते ।

## सुधासागरः

वस्तुनाऽलङ्कारस्य यथा—धन्येत्यादि । वसन्ततिलका छन्दः । मित्रस्त्रीगोष्ठ्यां विदितवृत्तान्ता काचिद् विदग्धा विश्वस्तामाह । अयमर्थः । त्वं धन्याऽसि या प्रियस्य सङ्गमे गाढालिङ्गनादावपि रतान्तरेषु सुरतमध्येष्वपि विस्रब्धानि विश्वासयुक्तानि चाटुकशतानि रिरंसोद्दीपकवाक्यानि कथयसि, स्पष्टमुच्चारयसि करं प्रसार्य सखीस्पर्शरूपशपथपूर्वं स्ववृत्तान्तमावेदयसि । अहं तु प्रियेण करे नीवीं नाभीतलवसनग्रन्थिं प्रति प्रणिहिते नीव्यां करोऽर्पयितव्य इति प्रणिधानविषयीकृते मनसि सङ्कल्पितेऽपीति यावत्, न त्वर्पिते, अवाचकत्वापाताद् भावलघुत्वापाताच्च, किंपुनः सङ्गमादावित्यपिशब्दार्थः । दृढप्रत्ययोत्पादनायाह सख्यः शपामि भवदङ्गं स्पृशामि, अत्र शपथस्यामुख्यत्वादात्मनेपदाभावः। यदि किञ्चिदपि स्मरामि किं पुनस्तादृशवाक्यमित्यपिशब्दार्थ इति ।

अत्र वाच्येन वस्तुना स्वस्य महानन्दाप्तिसूचनद्वारा त्वमधन्या अहं तु धन्येति व्यतिरेकालङ्कारो ध्वन्यते ।

अलङ्कारेण वस्तुनो व्यक्तिर्यथा—दर्पान्धेत्यादि । वसन्ततिलका छन्दः ।

४. गाढकान्तदशनक्षतव्यथासङ्कटादरिवधूजनस्य यः ।
ओष्ठविद्रुमदलान्यमोचयन्निर्दशन् युधि रुषा निजाधरम् ॥

अत्र विरोधालङ्कारेणाऽधरनिर्दशनसमकालमेव शत्रवो व्यापादिता इति तुल्ययोगिता । मम क्षत्याऽप्यन्यस्य क्षतिर्निवर्त्ततामिति तद्बुद्धिरुत्प्रेक्ष्यत इत्युत्प्रेक्षा च ।

एषूदाहरणेषु स्वतः सम्भवी व्यञ्जकः ।

---

## साहित्यचूडामणिः

गाढेति । विद्रुमदलानीवौष्ठान् । 'उपमितं व्याघ्रादिभि'-रिति समासः, व्याघ्रादेराकृतिगणत्वात् ।

विरोधेति । केनचित् स्वाधरे निर्दश्यमाने तदन्येषां दन्तखण्डनपरिहारो

## सुधासागरः

अयमर्थः । यस्य राज्ञः करे कृपाणः खड्गः युधि सङ्ग्रामे कोपात् कषाया रक्ता कान्तिर्यस्य तथाभूतः, काल्याः कटाक्ष इव, वीरैः साधारणभटानां भयप्रदत्वादत्यन्तशूरैरेव व्यलोकि विशेषेण दृष्टः । रक्तत्वसम्पादनाय कृपाणं विशिनष्टि दर्पणान्धाः उच्छृङ्खला ये गन्धगजाः 'यस्य गन्धं समाघ्राय पलायन्तेऽन्यदन्तिनः' इत्युक्तलक्षणाः, तेषां कुम्भात्मककपाटानां कूटे मध्यभागे या सङ्क्रान्तिः सम्यक् प्रवेशनं तन्निघ्नं दृढप्रहारायत्तं यद् घनशोणितं गाढरुधिरं तेन शोणिता शोचिः कान्तिर्यस्य तथाभूत इति ।

अत्र केचित् उपमया वर्णसाम्यं प्रत्याय्यते न तु कालीकटाक्षनिष्ठं सकलरिपुक्षयकारित्वमिति तादृशवस्तुव्यञ्जकत्वमनुपपन्नमिति ।

अत्र ब्रूमः । न खलु रिपुकुलनाशकत्वमुपमानमात्रवृत्ति किन्तूभयसाधारणम् । अस्तु वोपमानधर्मः तथाप्युपमाने व्यञ्जनयोपमेये तदवगमे बाधकाभावः । न चात्रोत्प्रेक्षाऽऽशङ्क्या, सम्भावनाविरहात् , न च शब्दव्यापारेणैव तथा प्रतीतिरिति शङ्क्यम्, वर्णसाम्योपस्थापकत्वेनोपरतत्वात्तस्य, किन्त्वर्थशक्तिमूलेनैव तथा व्यञ्जनम् । उक्तञ्च मिश्रैः—'साम्यावगमनानन्तरमुपमानगतधर्मान्तरमुपमेये प्रतीयत इति यथोक्तव्यङ्ग्यावगमे न बाधः' तदुक्तम्—'धर्मयोरेकनिर्देशेऽन्यसंवित्साहचर्यतः' । यथा—'कैलासगौरं वृषमारुरुक्षोः' इत्यत्र गौरत्वनिर्देशेनोच्छ्रायस्येति । तदेतत्सर्वमभिप्रेत्य वृत्तिकृदाह—अत्रोपमालङ्कारेणेत्यादि ।

अलङ्कारेणालङ्कारव्यक्तिमुदाहरति—गाढकान्तेत्यादि । रथोद्धता छन्दः । 'रान्नराविह रथोद्धता लगौ' इति लक्षणात् । यो नृपो युधि निजाधरं निर्दशन् क्रोधात् खण्डयन् सन् वैरिवधूजनस्योष्ठविद्रुमदलानि गाढा तीव्रा या कान्तदशनक्षतव्यथा प्रियदन्तव्रणार्त्तिः सैव सङ्कटोऽसह्योपद्रवस्तस्मादमोचयदित्यर्थः ।

## साहित्यचूडामणिः

विरुध्यते। निजाधर—निर्दशनलक्षणायाः शत्रुवधूजनौष्ठव्यथापरिहाररूपायाश्च क्रियाया मिथो विरोधात्। तथा वक्ष्यति [ दशमे ] 'क्रिया द्वाभ्या'मिति। एकस्याः काले तदन्यस्या अपि क्रियायास्तुल्यो योग इति विवक्षणादियं तुल्ययोगिता, न पुनर्नियतानां सकृद् धर्म इति दशमे लक्ष्यमाणा। न च—

"न्यूनस्यापि विशिष्टेन गुणसाम्यविवक्षया"

इत्यादिग्रन्थान्तरानुरोधात्, तल्लक्षणायोगाद् इत्यलं व्याख्येयग्रन्थपौर्वापर्यविपर्यव्यलीकोद्घाटनेन। तद्बुद्धिरिति अधरस्याभिप्रायः। तत्र चेतनाचेतनविचारो निरुपयोगः।

यथाहुः—

अन्यथैव स्थिता वृत्तिश्चेतनस्येतरस्य वा।
अन्यथोत्प्रेक्ष्यते यत्र तामुत्प्रेक्षां विदुर्बुधाः॥ इति।

अत्राप्युपमेयस्योपमानतया संभावनाकारं वक्ष्यमाणमुत्प्रेक्षालक्षणं न संघटते।

## सुधासागरः

अत्र विरोधालङ्कारेणेत्यादि। उक्तमत्र मिथिलेशसचिवैरच्युतभट्टाचार्यैः 'विरोधालङ्कारोऽत्र चिन्त्य' इति। अच्युतात्मजरत्नपाणिभट्टाचार्यास्तु—'विरोधपदेनात्र कार्यकारणपौर्वापर्यविपर्ययरूपविरोधात्मकातिशयोक्त्यलङ्कारोऽभिधीयते' इति काव्यदर्पणाख्यटीकायां व्याचख्युः। तत्सूनवो रविभट्टाचार्यास्तु—'विरोधालङ्कारेण वास्तवविरोधमूलासङ्गत्यलङ्कारेणेत्यर्थः स्वाधरनिर्दशवैरिवनितोष्ठमोचनयोः कार्यकारणयोर्वैयधिकरण्येन निर्देशाद् विरोधस्य स्फुटत्वात्' इति मधुमत्यां व्याचख्युः।

तुल्ययोगितेति। अत्र न्यायविद्यावागीशनृसिंहठक्कुराः प्राहुः—अधरो निर्दष्टश्च शत्रवो व्यापादिताश्चेति तुल्यकालमेककालं योगिनौ तयोर्भावस्तुल्ययोगितेति व्युत्पत्त्या समुच्चयालङ्कारो व्यज्यत इत्यर्थः। न तु प्रकृतानामप्रकृतानां वा गुणक्रियान्यतरैकरूपधर्मसम्बन्धात्मिकायास्तुल्ययोगितायाः प्रसङ्गोऽपीति।

मधुमतीकारास्तु 'अत्र तुल्ययोगितापदेन समुच्चयालङ्कारोऽभिमतः, अधरनिर्दशनवैरिव्यापादनक्रिययोर्यौगपद्यप्रतीतेः। पितृचरणास्तु तुल्ययोगितापदेन कार्यकारणयोस्तुल्यकालताप्रतीतेः 'कार्यकारणयोर्यश्च' इत्यनेन लक्षितातिशयोक्तिरत्राभिमता। न च कार्यस्य पूर्वकालाभिधाने सा, समकालाभिधानेऽप्यविरोधात्। कारणगतशीघ्रकार्यकारित्वबोधलक्षणप्रयोजनस्याविशेषादिति वदन्ति' इत्याहुः।

प्रदीपकारास्तु—'अत्र निजाधरदशनवैरिवधूजनोष्ठदशनव्यथामोचनयोः कारणकार्ययोः पौर्वापर्याभावलक्षणयाऽतिशयोक्त्याऽलङ्कारेण दशनसमकालमेव शत्रवो व्यापादिता इति 'स त्वन्यो युगपद् या गुणक्रियाः' इत्युक्तलक्षणः समुच्चयालङ्कारो द्योत्यते। एष एव च तुल्यकाले योगितेति व्युत्पत्त्या तुल्ययोगितेति

१. कैलासस्य प्रथमशिखरे वेणुसम्मूर्च्छनाभिः
श्रुत्वा कीर्तिं विबुधरमणीगीयमानां यदीयाम् ।
स्रस्तापाङ्गाः सरसबिसिनीकाण्डसञ्जातशङ्का
दिङ्मातङ्गाः श्रवणपुलिने हस्तमावर्त्तयन्ति ॥

अत्र वस्तुना येषामप्यर्थाधिगमो नास्ति तेषामप्येवमादिबुद्धिजननेन चमत्कारं करोति त्वत्कीर्तिरिति वस्तु ध्वन्यते ।

---

## साहित्यचूडामणिः

अर्थावगम इति । विजयगाथारूपा कीर्त्तिरित्यर्थवत्त्वनैयत्यात् ।

## सुधासागरः

कैश्चिदुच्यते । मम क्षत्याप्यन्यस्य क्षतिर्निवर्त्तनामिति बुद्धेरुत्प्रेक्षणादुत्प्रेक्षाप्यत्र व्यङ्ग्या'इति व्याचख्युः ।

वयं तु अत्रोष्ठविषयकदशनमोचनयोर्विरोधः ओष्ठत्वेन सामानाधिकरण्यस्य विवक्षितत्वात् । 'प्रतियोगिभेदेनाभास' इति विरोधालङ्कारो निर्बाधः । अधरदशन-शत्रुव्यापादनयोर्वीराऽनुभावत्वेन प्रकृतयोः सूर्योक्रियारूपैककालोपाधिसम्बन्धेन तुल्य-योगितापि निर्बाधैव । तद्बुद्धिवन्नृपबुद्धिधरित्यर्थः । चकारेण तुल्ययोगितोत्प्रेक्षयोः संसृष्टिः सूचितेति भ्रमः ।

एषु व्यजकोऽर्थः स्वतः सम्भवी ।

अथ कविप्रौढोक्तिसिद्धे व्यञ्जकेऽर्थे भेदचतुष्टये वस्तुना वस्तुनो व्यक्तिमुदा-हरति—कैलासस्येत्यादि । मन्दाक्रान्ता छन्दः । लक्षणमुक्तम् । राजवर्णनमिदम् । कैलासस्य प्रथमशिखरे हिमगिरेः श्रेष्ठशृङ्गे वेणूनां वंशवाद्यानां संमूर्च्छनाभी रागविशेषैः करणभूतैः । उक्तञ्च—

स्वरैः संमूर्च्छना यत्र रागतां प्रतिपद्यते ।
मूर्च्छनामिति तां प्राहुर्गीततत्त्वविदो जनाः ॥ इति ।

विबुधरमणीभिर्देवाङ्गनाभिः कर्त्तृभूतैर्गीयमानां त्वदीयां त्वत्सम्बन्धिनीं कीर्तिं श्रुत्वा । सरसबिसिनीकाण्डेषु धवलतमकमलिनीकदम्बेषु सञ्जाता शङ्का येषां तथाभूताः, अत एव स्रस्तापाङ्गाः, चलितनेत्रप्रान्ताः, दिङ्मातङ्गाः ऐरावणादयः, श्रवणपुलिने कर्णतटे, हस्तं शुण्डादण्डमावर्त्तयन्ति मुहुर्व्यापारयन्तीत्यर्थः ।

अत्र यद्यपि बिसिनीकाण्डसञ्जातशङ्का इति भ्रान्तिमान् सन्देहो वाऽलङ्कारो व्यञ्जक इति वस्तुमात्रव्यञ्जकत्वोदाहरणमयुक्तम्, तथापि तद्भागनैरपेक्ष्येणापि किञ्चिच्छुक्लं कर्णे प्रविशतीत्येतावतापि वस्तुमात्रेण येषामप्यर्थाधिगमो नास्ति तेषामप्येवं श्वैत्यमूर्त्तत्वादिबुद्धिजननेन त्वत्कीर्त्तिश्चमत्करोतीति व्यक्तिसम्भवाद् वस्तुमात्रोदाहरणत्वमुक्तम् । अत्र च कीर्तिश्रवणानन्तरं कर्णे हस्तावर्त्तनं हस्तिनो न स्वतः सम्भवि, किन्तु कविप्रौढोक्तिसिद्धम् । तदेतत्सर्वमभिप्रेत्य वृत्तिकृदाह अत्र वस्तुनेत्यादि । एवमग्रेऽपि द्रष्टव्यम् ।

२. केसेसु वलामोडिअ तेण अ समरम्मि जयसिरी गहिआ।
जह कन्दराहि विहुरा तस्स दढं कंठअम्मि संठविआ ॥
[केशेषु बलात्कारेण तेन च समरे जयश्रीर्गृहीता।
यथा कन्दराभिर्विधुरास्तस्य दृढं कण्ठे संस्थापिताः ॥]

अत्र केशग्रहणालोकनोद्दीपितमदना इव कन्दरास्तद्विधुरान् कण्ठे गृह्णन्ति इत्युत्प्रेक्षा। एकत्र संग्रामे विजयदर्शनात् तस्यारयः पलाय्य गुहासु तिष्ठन्तीति [१]काव्यहेतुरलङ्कारः। न पलाय्य गतास्तद्वैरिणः, अपि तु ततः पराभवं सम्भाव्य तान् कन्दरा न त्यजन्तीत्यपह्नुतिश्च।

---

## साहित्यचूडामणिः

'केसेसु' इति।

केशेषु बलात्कारेण तेन च समरे जयश्रीर्गृहीता।
यथा कन्दराभिर्विधुरास्तस्य दृढं कण्ठे संस्थापिताः॥ इति।

कण्ठगतप्राणाः सन्त उज्जीविताः कण्ठालिङ्गनेनोपलक्षिताश्च। केशग्रहणं विपक्षसम्बन्धिजयलक्ष्म्यामारोप्यते समासोक्त्या नायिकाकेशग्रहो व्यज्यते। तया च सह नायकस्योपभोगः। तदवलोकनादुद्दीपितमदना इत्युत्प्रेक्षा। काव्यहेतुरिति काव्यलिङ्गं, यद् वाक्यार्थरूपम्, एकत्र सङ्ग्रामे विजयदर्शनादित्युक्तत्वात्। अपह्नुतिश्चेति। उत्प्रेक्षानुग्रहादियं व्यङ्ग्या। अन्यथा कन्दरास्तान् न त्यजन्तीति वक्तुमशक्यत्वात्। अलंकाराणां व्यङ्ग्यत्वं चमत्कारायेति बह्वलंकारप्रदर्शनप्रयासः। यदाह—

## सुधासागरः

अत्रैव वस्तुनाऽलङ्कारस्य यथा—केसेत्यादि। गीतिश्छन्दः।

आर्याप्रथमदलोक्तं यदि कथमपि लक्षणं भवदुभयोः।
दलयोः कृतयतिशोभां तां गीतिं गीतवान् भुजङ्गेशः॥

इति लक्षणात्।

केशेषु बलादामोठ्य तेन समरे जयश्रीर्गृहीता।
यथा कन्दराभिर्विधुरास्तस्य दृढं कण्ठे संस्थापिताः॥

इति संस्कृतम्। अयमर्थः। तेन राज्ञा नायकेन च, समरे युधि सुरतसङ्गरे च, जयश्रीर्विजयलक्ष्मीरामोठ्य भोगाभिमुखीकृत्य, बलात्केशेषु तथा गृहीता यथा कन्दराभिः स्त्रीलिङ्गेन नायिकात्वारोपो ध्वन्यते, तथा च दरीभिर्नायिकाभिश्च तस्य राज्ञो नायकस्य च विधुराः शत्रवः सम्भोगासहिष्णवश्च, कण्ठे तटे कण्ठदेशे च, दृढं संस्थापिता इति।

---

[१] काव्यहेतुः काव्यलिङ्गम्। एवमग्रेऽपि। स्वयमनभिमतत्वेऽपि प्राचीनाचार्यसंस्कारादित्थमुक्तिः।

३. गाढालिंगणरहसुज्जुअम्मि दइए लहुं समोसरइ।
माणंसिणीण माणो पीलणभीअ व्व हिअआहिं॥
[गाढालिङ्गनरभसोद्यते दयिते लघु समपसरति।
मनस्विन्या मानः पीडनभीत इव हृदयात्॥]

अत्रोत्प्रेक्षया प्रत्यालिङ्गनादि तत्र विजृम्भत इति वस्तु।

---

## साहित्यचूडामणिः

रूपकादिरलंकारवर्गो यो वाच्यतां गतः।
स सर्वो गम्यमानत्वं बिभ्रद् भूम्ना प्रदर्शितः[1]॥ ध्व० २.२६॥
शरीरीकरणं येषां वाच्यत्वेन[2] व्यवस्थितम्।
तेऽलंकाराः परां छायां यान्ति ध्वन्यङ्गतां गताः॥ ध्व० २.२८॥ इति।

गाढेति।

गाढालिङ्गनरभसोद्यते दयिते लघु समपसरति।
मनस्विन्या मानः पीडनभीत इव हृदयात्॥ इति।

उत्प्रेक्षया मानः पीडनभीत इव पलायत इत्याकारया।

## सुधासागरः

अत्र केशग्रहणेत्यादिना प्रदर्शितव्यङ्ग्यालङ्कारत्रयेऽन्यतमपरिग्रहे साधकबाधकाभावादनिश्चयसङ्करः श्रीवाग्देवतावतारैरपह्नुतिश्चेति चकारेण सूचित इति बोध्यम्।

यत्तु सारबोधिनीकारैरुक्तम्—चकारेणैकव्यञ्जकानुप्रवेशसङ्करसूचनमिति, तत्प्रामादिकम्। 'स्फुटमेकत्र विषये शब्दार्थालङ्कृतिद्वयम्' इति लक्षणात्।

काव्यप्रदीपकारास्तु—यत् केशग्रहावलोकनोद्दीपितमदना इव कन्दरास्तद्विधुरान् कण्ठे गृह्णन्तीत्युत्प्रेक्षा व्यज्यत इति, तद् भवेदेवम्, यदि पूर्वं कन्दरादीनां नायिकात्वाद्यारोपः स्यात्, अन्यथा केशग्रहणस्य मदनोद्दीपकत्वायोगात्, तदभ्युपगमे च न वस्तुमात्रस्य व्यञ्जकत्वं किन्तु समासोक्तेरलङ्कारस्येति प्राहुः।

अत्र ब्रूमः। यथेति यच्छब्देनोत्तरवाक्यगतेन तच्छब्द आक्षिप्यते, तेन च पूर्ववाक्यार्थमनूद्य वाक्यान्तरावष्टम्भाद् वाक्यैकवाक्यमिदम्, तत्र तेनेति कन्दराभिरिति च पदद्वयं विशेष्यसमर्पकं श्लिष्टञ्च। तथा च न समासोक्तिः, विशेष्यविशेषणवाचिनां सर्वेषां श्लिष्टत्वे तत्स्वीकारात्। किञ्च—यत्रोभयतात्पर्यवशादभिधयैवार्थ-

---

[1] प्रदर्शितो भट्टोद्भटादिभिरिति यावदिति ध्वन्यालोकवृत्तिः।
[2] 'वाच्यत्वे ने' ति च च्छेदः। तत्र निषेधश्चिवनैव गतार्थ इति वृथा श्रमः।

४. जा ठेरं व हसंती कइ-वअणंबुरुह-बद्धविणिवेसा ।
दावेइ भुअणमंडलमण्णं विअ जअइ सा वाणी ॥
[या स्थविरमिव हसन्ती कविवदनाम्बुरुहबद्धविनिवेशा ।
दर्शयति भुवनमण्डलमन्यदिव जयति सा वाणी ॥ ]

अत्रोत्प्रेक्षया चमत्कारैककारणं नवं नवं जगद् अजडासनस्था[1] निर्मिमीते इति व्यतिरेकः ।

एषु कविप्रौढोक्तिमात्रनिष्पन्नो व्यञ्जकः ।

---

## साहित्यचूडामणिः

जा थेरमिति ।

या स्थविरमिव हसन्ती कविवदनाम्बुरुहबद्धविनिवेशा ।
दर्शयति भुवनमण्डलमन्यदेव जयति सा वाणी ॥ इति ।

उत्प्रेक्षया स्थविरमिव हसन्तीत्याकारया । व्यतिरेक इति । सृज्यस्य जगतश्चमत्कारैककारणत्वादिर्व्यतिरेचको धर्मः ।

## सुधासागरः

द्वयोपस्थितिस्तत्रैव श्लेषः । प्रकृते तु व्यञ्जनया द्वितीयार्थस्य प्रतिभामात्रमिति न तादृशाचार्यवचनस्य प्रामाण्यशङ्का कथञ्चिदुदेतीति दिक् ।

एवं चैकस्या नायककर्तृककेशाकर्षणदर्शनेनान्यस्याः कामोद्रेकः स्यादेवेति समासोक्तिः पुनरुत्प्रेक्षाया एवाङ्गमिति श्रीवत्सलाञ्छनभट्टाचार्याणां समाधानमनादेयम् ।

अलङ्कारेण वस्तुनो यथा—गाढेत्यादि । गाथा छन्दः । लक्षणमुक्तम् ।

गाढालिङ्गनरभसोद्यते दयिते लघु समुपसरति ।
मनस्विन्या मानः पीडनभीत इव हृदयात् ॥

इति संस्कृतम् । स्पष्टम् ।

अत्र पीडनभीत इवेत्युत्प्रेक्षालङ्कारेण प्रत्यालिङ्गनादि तत्र जृम्भत इति वस्तु ध्वन्यते ।

अत्रैवालङ्कारेणालङ्कारस्य यथा—जा ठेरमित्यादि । गाथा छन्दः ।

या स्थविरमिव हसन्ती कविवदनाम्बुरुहबद्धविनिवेशा ।
दर्शयति भुवनमण्डलमन्यदिव जयति सा वाणी ॥

इति संस्कृतम् । स्पष्टम् ।

अत्र जा ठेरं व हसन्तीत्युत्प्रेक्षालङ्कारेण चमत्कारैककारणं नवनवं जगदनम्बुजासना निर्मिमीते इति वाण्या ब्रह्मणो व्यतिरेको व्यज्यते ।

---

[1] 'अजरठाब्जा०' इति 'अजडाब्जा' इति च पाठौ ।

[ कविनिबद्धप्रौढोक्तिसिद्धस्य चत्वारो भेदाः ]

१. जे लंकागिरिमेहलासु खलिआ सम्भोगखिण्णोरई-
फारुप्फुल्लफणावलीकवलणे पत्ता दरिद्दत्तणम् ।
ते एह्लिं मलआणिला विरहिणीणीसाससंपक्किणो
जादा झत्ति सिसुत्तणे वि बहला तारुण्णपुण्णा विअ ॥

[ये लङ्कागिरिमेखलासु स्खलिताः सम्भोगखिन्नोरगी-
स्फारोत्फुल्लफणावलीकवलने प्राप्ता दरिद्रत्वम् ।
त इदानीं मलयानिला विरहिणीनिःश्वाससम्पर्किणो
जाता झटिति शिशुत्वेऽपि बहलास्तारुण्यपूर्णा इव ॥]

अत्र निःश्वासैः प्राप्तैश्वर्याः[१] किं किं न कुर्वत इति वस्तुना वस्तु व्यज्यते।

## साहित्यचूडामणिः

जे इति ।

ये लङ्कागिरिमेखलायाश्चलिता सम्भोगखिन्नोरगी-
स्फारोत्फुल्लफणावलीकवलने प्राप्ता दरिद्रत्वम् ।
त इदानीं मलयानिला विरहिणीनिःश्वाससम्पर्किणो
जाता झटिति शिशुत्वेऽपि बहलास्तारुण्यपूर्णा इव ॥ इति ।

किं किमिति । अघटितमपि कार्यं घटयन्ति, यतस्ते शैशव एव तरुणिमानवमवलम्बितवन्तः, किमन्यदेषामसाध्यम् ।

## सुधासागरः

यद्यप्युत्प्रेक्षां विनाऽपि व्यतिरेकोऽयं प्रकाशते, नियतिकृतनियमेत्यादिवत्, तथापि न स्फुटो भवतीति । यद्वा तावन्मात्रस्य व्यञ्जकत्वेऽपि उत्प्रेक्षाव्यञ्जकत्वं न विहन्यत इति ।

एवं कविप्रौढोक्तिमात्रनिष्पन्नभेदचतुष्टयमुदाहृत्य कविनिबद्धवक्तृप्रौढोक्तिमात्रसिद्धव्यञ्जकार्थस्य ध्वनेर्भेदचतुष्टये वस्तुना वस्तुनो व्यक्तिमुदाहरति—जे लङ्केत्यादि । शार्दूलविक्रीडितं छन्दः । 'सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम्' इति लक्षणात् ।

ये लङ्कागिरिमेखलायाः स्खलिताः सम्भोगखिन्नोरगी-
स्फारोत्फुल्लफणावलीकवलने प्राप्ता दरिद्रत्वम् ।
त इदानीं मलयानिला विरहिणीनिःश्वाससम्पर्किणो
जाता झटिति शिशुत्वेऽपि बहलास्तारुण्यपूर्णा इव ॥

[१] प्राप्तैश्वर्या वायवः किं किं न कुर्वन्ती'-ति वामनाः ।

२. सहि विरइऊण माणस्स मज्झ धीरत्तणेण आसासम् ।
पिअदंसणविहलंखलखणम्मि सहसत्ति तेण ओसरिअम् ॥
[सखि, विरचय्य मानस्य मध्ये धीरत्वेनाश्वासम् ।
प्रियदर्शनविशृङ्खल-क्षणे सहसेति तेनापसृतम् ॥]

अत्र वस्तुनाऽकृतेऽपि प्रार्थने प्रसन्नेति विभावना, प्रियदर्शनस्य सौभाग्यबलं धैर्येण सोढुं न शक्यत इत्युत्प्रेक्षा वा ।

---

## साहित्यचूडामणिः

सहीति ।

सखि ! विरचय्य मानस्य मम धीरत्वेनावकाशम् ।
प्रियदर्शनविह्वलं क्षणे सहसेति तेनापसृतम् ॥

इति । इतीति अनुभूतेन प्रकारेण । अकृतेऽपीति ॥ प्रार्थनाक्रियाप्रतिषेधेऽपि ।

"क्रियाया प्रतिषेधेऽपि फलव्यक्तिर्विभावने"-ति [ दशमे ]

## सुधासागरः

इति संस्कृतम् । ये लङ्कासन्निकृष्टो गिरिर्मलयस्तन्मेखलायाः सकाशात् स्खलिता उरगीभयादिति भावः, सम्भोगेन खिन्नानां क्षुत्पीडितानामुरगीणां सर्पिणीनां स्फारा वितता उत्फुल्ला ऊर्ध्वप्रसृता ये फणास्तेषामावलयः पङ्क्तयस्ताभिः कवलने भक्षणे सति दरिद्रत्वं प्राप्ताः स्वल्पावशिष्टाः, उरगीति स्त्रीत्वेनाहारद्वैगुण्यं व्यज्यते । तेन मलयानिलाः इदानीं विरहिणीनिःश्वाससम्पर्किणः प्राप्तैश्वर्याः सन्तः झटिति शीघ्रमेव शिशुत्वेऽपि तारुण्यपूर्णा इव बहला बहुतरा जाता इत्यर्थः ।

अत्र यथोक्तेन वस्तुना निःश्वासैः प्राप्तैश्वर्याः किं किं न कुर्वन्तीति वस्तु व्यज्यते, तारुण्णपुण्णा विअ इत्युत्प्रेक्षायाः व्यक्तावनुपयोगात् । न चैवमस्या अप्रयोजकत्वम्, उक्तिविशेषपरिपोषकत्वात् । निःश्वासम्पर्कस्य बहलत्वहेतोरुपादानात् काव्यलिङ्गस्यैव व्यञ्जकतेति चेत्, न, तस्य हेतुत्वाविवक्षयाऽपि तथाऽभिव्यक्तेः । तदेतत्सर्वमभिप्रेत्य वृत्तिकृदाह—अत्र निःश्वासैरित्यादि ।

अत्रैव वस्तुना ऽलङ्कारव्यक्तिमुदाहरति—सहीत्यादि । उद्गीतिश्छन्दः ।

आर्याशकलद्वितयं व्यत्ययरचितं भवेद् यस्याः ।
सोद्गीतिः किल कथिता तद्वद् यत्यंशभेदसंयुक्ता ॥

इति लक्षणात् ।

सखि ! विरचय्य मानस्य मम धीरत्वेनाश्वासम् ।
प्रियदर्शनविशृङ्खलक्षणे सहसैव तेनापसृतम् ॥

३. ओल्लोल्लकरअ-रअणक्खएहिं तुह लोअणेसु मह दिण्णं ।
रत्तंसुअं पआओ कोवेण पुणो इमे ण अक्कमिआ ॥
[आर्द्रार्द्रकरज-रदनक्षतैस्तव लोचनयोर्मम दत्तम् ।
रक्तांशुकं प्रसादः कोपेन पुनरिमे नाक्रान्ते ॥]

अत्र किमिति लोचने कुपिते वहसीत्युत्तरालङ्कारेण न केवलमार्द्रनखक्षतानि गोपायसि यावत् तेषामहं प्रसादपात्रं जातेति वस्तु ।

---

## साहित्यचूडामणिः

वक्ष्यते । प्रियदर्शनस्य नायकत्वं मानस्य प्रतिनायकत्वं धैर्यस्य तत्सामन्तत्वमिति व्यवस्थायामुत्प्रेक्षा चेति पक्षान्तरम् ।

ओल्लोलेति ।

अद्रार्द्रकरजरदनक्षतैस्तव लोचनयोर्मम दत्तः ।
रक्तांशुकप्रसादः कोपेन पुनरिमे नाक्रान्ते ।

इति रक्तांशुकमेव प्रसादः पारितोषिकम् । प्राकृतत्वान्नपुंसकत्वम् ।

उत्तरेति । प्रश्नवाक्योन्नयनानुकूलेन । न केवलमिति । अभिनवानां नखदशनक्षतानामगोपनमित्येतावदेव न, अपितु तेषामहं प्रसादपात्रं जातेति ।

## सुधासागरः

इति संस्कृतम् । काचिन्मानभङ्गप्रकारं सखीमाह—हे सखि ! मम धीरत्वेन मद्धैर्येण मानस्याश्वासं समाधानं विरचय्य कारयित्वा प्रियदर्शनविशृङ्खलक्षणे प्रियतमालोकनकौतुकतरलितकाले । विहलमित्यत्र विह्वत्तनमिति पाठे विह्वलत्वक्षणे इत्यर्थः । सहसैव अकस्मादेव तेन प्रयोजकेण धीरत्वेनापसृतं पलायितमिति वाक्यार्थः ।

अत्र वस्तुनेत्यादि । अयमर्थः । प्रियदर्शनविश्रृङ्खलक्षणे अकस्माद्धीरत्वेनापसृतमिति वाच्येन वस्तुनाऽकृतेऽपि प्रार्थने प्रसन्नेति विभावना, नूनं प्रियदर्शनसौभाग्यबलं धैर्येण सोढुं न शक्यत इत्युत्प्रेक्षा च व्यज्यते । चकारेण संसृष्टिः सूचितेति ।

अत्रैवालङ्कारेण वस्तुना व्यक्तिमुदाहरति 'ओल्लोल्ले'-त्यादि । उद्गीतिश्छन्दः । लक्षणमुक्तम् ।

आर्द्रार्द्रकरजरदनक्षतैस्तव लोचनयोर्मम दत्तम् ।
रक्तांशुकं प्रसादः कोपेन पुनरिमे नाक्रान्ते ॥

इति संस्कृतम् । भर्तरि सपत्न्या कृतमभिनवनखक्षतादि दृष्ट्वा कोपरक्तनयना काचिद् विदग्धा भर्तुः प्रश्नमुत्तरयति—हे प्रिय ! तवार्द्रार्द्रकरजरदनक्षतैः अर्थात्

४. महिलासहस्सभरिए तुह हिअए सुहअ सा अमाअन्ती ।
अणुदिणमणण्णकम्मा अंगं तणुअं वि तणुएइ ॥
[महिलासहस्रभरिते तव हृदये सुभग, सा अमान्ती ।
अनुदिनमनन्यकर्मा अङ्गं तन्वपि तनयति ॥]

अत्र हेत्वलङ्कारेण[१] तनोस्तनूकरणेऽपि तव हृदये न वर्तते इति विशेषोक्तिः ।

---

## साहित्यचूडामणिः

महिलेति ।

महिलासहस्रभरिते तव हृदये सुभग ! सा अमान्ती ।
दिवसमनन्यकर्मा अङ्गं तन्वपि तनयति ॥ इति ।

हेत्वलंकारेणेति । तव चेतस्यवकाशलाभाय शरीरस्य तनूकरणमिति काव्यलिङ्गेन । शरीरतनूकरणरूपे कारणे पूर्णेऽपि प्रियहृदयस्यान्तर्वृत्त्यभावाद् विशेषोक्तिः । यद् वक्ष्यति [ दशमे ]—विशेषोक्तिरखण्डेषु कारणेषु फलावचः इति ॥ १६–१७½ ॥

## सुधासागरः

तत्सपत्न्या रागातिशयात् त्वयि कृतैः नखक्षतदन्तक्षतैर्मम लोचनयोर्दत्तं रक्तांशुकं प्रसादः, पुनरिमे मल्लोचने कोपेन नाक्रान्ते इत्यर्थः ।

अत्र किमितीत्यादि ।अयमाशयः । किमिति कुपिते लोचने वहसीति प्रश्नोन्नयनादुत्तरालङ्कारेण न केवलमार्द्रनखक्षतानि गोपायसि किन्तु तेषामहं प्रसादपात्रं जातेत्यपि गोपायसि आच्छादयसीति वस्तु व्यज्यते ।अत्र कोवेण इमे ण अक्कमिआ इत्यपह्नुतेर्वाक्यार्थप्रसङ्गे प्रतिषेधानुपपत्त्या प्रश्नमाक्षिप्य विश्रान्तावुत्तरालङ्कारस्यैव व्यञ्जकत्वं, नापह्नुतेः, तस्यास्तन्मुखनिरीक्षकत्वात् सत्प्रतिपक्षोत्थापकस्योपाधेर्हेत्वाभासत्वाभाववदिति । अत एव प्रदीपकारैः 'अपह्नुत्यलङ्कारसहितेन' इति तृतीये तद्प्राधान्यं सूचितमिति दिक् ।

अत्रैवालङ्कारेणालङ्कारस्य व्यक्तिमुदाहरति–महिलेत्यादि । गाथा छन्दः ।

महिलासहस्रभृते तव हृदये सुभग साऽमान्ती ।
अनुदिनमनन्यकर्मा अङ्गं तन्वपि तनयति ॥

इति संस्कृतम् । काचिद् विदग्धा सखी नायकं प्रति नायिकावृत्तान्तमावेदयति—'साऽकृत्रिमस्नेहा साध्वी, महिलासहस्रभृते धूर्तस्त्रीसहस्रसङ्कीर्णे तव हृदयेऽमान्ती अवकाशमलभमाना सती, अनुदिनं दिवसं व्याप्यानन्यकर्मा त्यक्तान्यकार्या सती अङ्गं शरीरं तन्वपि स्वतः कृशमपि तनयति कथमपि प्रवेशनाय कृशतरं

---

[१] हेत्वलङ्कारः काव्यलिङ्गम् द्र० १८२—पृष्ठपादटिप्पणी ।

**एषु कविनिबद्धवक्तृप्रौढोक्तिमात्रनिष्पन्नशरीरो व्यञ्जकः ।**

**एवं द्वादश भेदाः ॥**

[ उभयशक्तिमूलकध्वनिः ]

**शब्दार्थोभयभूरेकः,**

यथा—

अतन्द्रचन्द्राभरणा समुद्दीपितमन्मथा ।
तारकातरला श्यामा सानन्दं न करोति कम् ॥

अत्रोपमा व्यङ्ग्या ।

**भेदा अष्टादशास्य तत् ॥ १८ ॥**

अस्येति ध्वनेः ॥१८॥

---

साहित्यचूडामणिः

उभयशक्तिमूलमाह—शब्दार्थेति । एक इति । प्रकारवैचित्र्यस्य कल्पयितुमशक्यत्वात् । शक्यते वा तदर्थभागं शब्दभागं वा मनाक् प्राधान्यादनुप्रविशति, न पुनस्तुलाधृतवदुपलभ्यत इति । यथा वक्ष्यति—'वाक्ये द्व्युत्थ' इति ।

अतन्द्रेति । तन्द्राऽऽलस्यं तदभावेनौज्ज्वल्यं लक्ष्यते । श्यामा युवतिर्निशा

सुधासागरः

करोतीत्यर्थः ।

अत्र हेत्वलङ्कारेणेत्यादि । एकवचनं जात्यभिप्रायम् । तथा च महिलासहस्रभरितत्वात् तव हृदि स्थानं न लभते ततोऽङ्गं तन्वपि तनयतीति हेत्वलङ्काराभ्यां[१] तनोस्तनूकरणेऽपि तव हृदये न वर्त्तते इति विशेषोक्तिर्व्यज्यत इत्यर्थः ।

अत्र प्रथमचतुर्थोदाहरणयोः कविनिबद्धा सखी द्वितीयतृतीययोस्तु तन्निबद्धा नायिका वक्त्रीति वृत्तिकृदाह—एषु कविनिबद्धेत्यादि । एषु चतुर्ष्वित्यर्थः । एवं द्वादशभेदाः, अर्थशक्त्युद्भवध्वनेरिति शेषः ।

यद्यपि शब्दशक्तिमूलेऽप्यर्थस्य अर्थशक्तिमूलेऽपि शब्दस्य व्यञ्जकत्वमस्तीत्युभयशक्तिमूलत्वं सर्वत्रैवास्ति, तथापि तत्र तयोर्गुणप्रधानभावेनेति प्राक्[२] प्रतिपादितम्, अत्र तु द्वयोरेव प्राधान्येन व्यञ्जकत्वमित्युभयशक्तिमूलत्वम् । तथा हि—शब्दस्य परिवृत्त्यसहिष्णुतत्सहिष्णुते शब्दार्थयोः प्राधान्ये मूलम् ।

यत्र पदं परिवृत्त्यसहिष्णु तत्र पदप्राधान्यमन्यत्रार्थप्राधान्यमिति तदुदाहरति—अतन्द्रेत्यादि । अतन्द्रं जाग्रद्रूपं चन्द्राभरणमाभूषणविशेषो यस्याः, रात्रिपक्षे

---

[१] हेत्वलङ्कारार्थं द्रष्टव्या १८२–पृष्ठगता पादटिप्पणी ।

[२] १०० पृष्ठे ।

## साहित्यचूडामणिः

च। तत्र कामिनी यामिनी वा काचिद् वर्णनीया। तत्र प्रस्तुतायाम् अभिधा, अन्यत्र व्यञ्जनम्। अत्र शब्दार्थयोरुभयोरपि शक्तिर्निबन्धनम्। एतेनास्य श्लेषाद् भेदो व्याख्यातः, यत्रोभयत्रापि वाचकत्वम्। उज्ज्वलहेमाभरणालोचनकनीनिका-स्फुरणशालिनी कामिनी, उज्ज्वलेन्दुबिम्बाभरणा नक्षत्रस्फुरणयोगिनी च यामिनी। समुद्दीपितमन्मथत्वं कदाचिदालम्बनतया कदाचिदुद्दीपनत्वेन। अत्र चन्द्रादि-शब्दानां परिवृत्त्यक्षमत्वात् प्राकरणिकतत्तादृगर्थद्वयप्रतिपादनप्रवृत्तत्वाच्च शब्दार्थ-शक्त्योर्द्वयोरन्यूनत्वानतिरेकेण सामान्यम्।

निगमयति—भेदा इति। एतावति पर्वणि अष्टादश भेदाः। तथाहि—अविवक्षितवाच्यस्य द्वौ अर्थान्तरसंक्रमितवाच्योऽत्यन्ततिरस्कृतवाच्यश्चेति। विवक्षि-तान्यपरवाच्यस्य रसादिरसंलक्ष्यक्रम एकः, अनुस्वानोपमव्यङ्ग्ये शब्दशक्तिमूलौ द्वौ, अर्थशक्तिमूला द्वादश, उभयशक्तिमूल एक एवेति।

विप्रकृष्टार्थपरामर्शार्थमिदंशब्दप्रयोग इत्याह—अस्येति ध्वनेरिति।

## सुधासागरः

तादृशश्चन्द्र एवाभरणं यस्यास्तथाभूता, अत एव समुद्दीपितः प्रबलीकृतो मन्मथः कामो ययेति साधारणविशेषणम्, तथा तारकाभिः अक्षिकनीनिकाभिस्तरलाः चञ्चला रात्रिपक्षे तारकाः नक्षत्राण्येव तरला हारमध्यवर्त्तिनो रत्नविशेषा यस्यास्तथाभूता 'तरलो हारमध्यगः' इत्यमरः, 'श्यामा षोडशवार्षिकी' नायिका रात्रिश्च सानन्दं कं न करोत्यपि तु सर्वमेवानन्दयतीत्यर्थः।

चन्द्रः कर्पूरमिति सारबोधिनीकाराः।

अत्र श्यामारूपकामिनीविशेषरजन्योरुपमा व्यङ्ग्या तत्र चन्द्रतारकातरल-श्यामाशब्दाः परिवृत्त्यसहिष्णवः पर्यायान्तरोपादानेऽपरार्थबोधा-सम्भवात्। अतन्द्रा-भरणसमुद्दीपितमन्मथशब्दाश्च परिवृत्तिसहिष्णवः, अनिद्राभूषणसमुत्तेजितकामादि-पर्यायान्तरैरपि तदर्थप्रतीतेरित्युभयशक्तिमूलत्वं द्रष्टव्यम्।

एवञ्च 'अतन्द्रेत्यादेः परिवृत्त्यसहतया' इति प्रदीपकारोक्तं 'चन्द्रसमुद्दी-पिततारकाशब्दाः परिवृत्त्यसहिष्णवः अन्ये न तथेति' सारबोधिनीकारोक्तं च विद्वद्भिर्नादरणीयम्।

तदेवमस्य ध्वनेर्, न तु शब्दार्थोभयभुवः अष्टादश भेदा भवन्ति। तथाहि—अविवक्षितवाच्यस्य द्वौ भेदौ—अर्थान्तरसङ्क्रमितवाच्योऽत्यन्ततिरस्कृतवाच्यश्चेति। विवक्षितान्यपरवाच्येषु मध्येऽलक्ष्यक्रमव्यङ्ग्य एक एवेति त्रयो भेदाः। लक्ष्यक्रम-व्यङ्ग्येषु शब्दशक्तिमूलो द्विधा अलङ्कारोऽथ वस्त्वेवेति। अर्थशक्त्युद्भवस्य द्वादश भेदाः। शब्दार्थोभयभूरेक इति पञ्चदश भेदाः। पूर्वोक्तैस्त्रिभिर्भेदैः सहाष्टादशेति।

ननु रसादीनां बहुभेदत्वेन कथमष्टादशेत्यत आह—

**रसादीनामनन्तत्वाद् भेद एको हि गण्यते ।**

अनन्तत्वादिति । तथा हि नव रसाः । तत्र शृङ्गारस्य द्वौ भेदौ सम्भोगो विप्रलम्भश्च । सम्भोगस्यापि परस्परावलोकनाऽऽलिङ्गनचुम्बनादि-कुसुमोच्चय-जल-केलि-सूर्यास्तमय-चन्द्रोदय-षड्ऋतुवर्णनादयो बहवो भेदाः । विप्रलम्भस्याऽभिलाषादय उक्ताः । तयोरपि विभावानुभावव्यभिचारिवैचित्र्यम् । तत्रापि नायकयोरुत्तम-मध्यमा-ऽधमप्रकृतित्वम् । तत्रापि देशकाला-ऽवस्थादिभेदाः । इत्येकस्यैव रसस्यानन्त्यं, का गणना त्वन्येषाम् । असंलक्ष्यक्रमत्वन्तु सामान्यमाश्रित्य रसादिध्वनिभेद एक एव गण्यते ।

**वाक्ये द्व्युत्थः,**

द्व्युत्थ इति शब्दार्थोभयशक्तिमूलः ।

**पदेऽप्यन्ये,**

अपिशब्दाद् वाक्येऽपि । एकावयवस्थितेन भूषणेन कामिनीव पद-द्योत्येन व्यङ्ग्येन वाक्यव्यङ्ग्यापि भारती भासते ।

---

साहित्यचूडामणिः

वाक्य इति । उभयशक्तिसमर्थो [ ध्वनिः ] वाक्य एव, अत्र शक्तिद्वयस्य तुलाधृतवदवस्थानात् ।

अथान्येषां पदविषयत्वमप्यस्तीत्याह—पदेऽपीति । अन्ये एकैकशक्तिमूलाः सप्तदश । यदाह—

अविवक्षितवाच्यस्य पदवाक्यप्रकाशता ।
तदन्यस्यानुरणनरूपव्यङ्ग्यस्य च ध्वनेः ॥ [ध्व० ३.१ ॥]

सुधासागरः

ननु रसभावादीनां बहुत्वादष्टादशत्वमनुपपन्नमित्यत आह—'रसादीनामि'ति

द्व्युत्थः-शब्दशक्तिमूलोऽर्थशक्तिमूलश्चेति द्विविधो ध्वनिर्वाक्ये इति भ्रमं निराकुर्वन् वृत्तिकृदाह-द्व्युत्थ इत्यादि ।

अत्रेदं बोध्यम् । शब्दार्थोभयशक्तिमूलो ध्वनिर्वाक्य एव । ननु नायं नियमः, शिशुपालवधे उद्धवोक्तौ प्रबन्धेऽपि दर्शनादिति चेन्न । तत्रोभयशक्तिमूलत्वेऽपि ध्वनित्वाभावात्, तुल्यप्राधान्यात्, 'ब्राह्मणातिक्रमत्यागः' इतिवदन्यत्रापि सम्भाव्यत इति चेत्, सम्भाव्यतां, न तु क्वापि निश्चीयते येन तदादाय विभागः स्यादिति ।

तत्र पदप्रकाश्यत्वे क्रमेणोदाहरणानि —

१. यस्य मित्राणि मित्राणि शत्रवः शत्रवस्तथा ।
अनुकम्प्योऽनुकम्प्यश्च स जातः स च जीवति ॥

अत्र द्वितीयमित्रादिशब्दा आश्वस्तत्व-नियन्त्रणीयत्व-स्नेहपात्रत्वादि-संक्रमितवाच्याः ।

२. खलववहारा दीसन्ति दारुणा जहवि तहवि धीराणम् ।
हिअअवअस्सबहुमआ ण हु ववसाआ विमुज्झन्ति ॥
[खलव्यवहारा दृश्यन्ते दारुणा यद्यपि तथाऽपि धीराणाम् ।
हृदयवयस्यबहुमता न खलु व्यवसाया विमुह्यन्ति ॥]

अत्र विमुह्यन्तीति ।

---

## साहित्यचूडामणिः

अपिरुक्तसम्मुच्चय इत्याह—अपिशब्दादिति । ननु कथमेकदेशिकः पदविषयो ध्वनिर्महावाक्योपयोगीत्यत्राह—एकेति । दृष्टान्तबलादेतदङ्गीकार्यम् । यदाह—

विच्छित्तिशोभिनैकेन भूषणेनेव कामिनी ।
पदद्योत्येन सुकवेर्ध्वनिना भाति भारती ॥
अनिष्टस्य स्मृतिर्यद्वदापादयति दुष्टताम् ।
श्रुतिदुष्टादिषु व्यक्तं तद्वदिष्टस्मृतिर्गुणः ॥
[ ध्व० ३.१ परि० ] इति

"सामानाधिकरण्यं हि रूपभेदमपेक्षते ।"

इति नीत्या द्वितीयमित्रादिशब्दाः स्खलद्गतित्वादर्थान्तरपरिणमिताः । मित्रशत्र्वनुकम्प्यशब्दाः क्रमेण विस्रब्धत्वरूप आश्वस्तत्वे कदर्थनाशून्यत्वाकारे निर्यन्त्रणत्वे सौजन्यभाजनत्वलक्षणे स्नेहपात्रत्वे च संक्रमितवाच्याः । अप्रच्युतस्वभावत्वं नाम सादृश्यं सर्वत्र सम्बन्धः । वर्णनीयस्य महापुरुषलक्षणसम्पन्नत्वं व्यङ्ग्यम् । आदिपदात् सम्पन्नत्वाचकितत्वसंवर्धनीयत्वादिस्वीकारः । मित्रादीनामेकवाक्यवर्तिनामप्येकार्थीभावसमन्वयाभावात् पदप्रकाश्यता ।

## सुधासागरः

अपिशब्दस्यानुक्तसमुच्चयार्थकत्वं वारयन् वृत्तिकृदाह—अपिशब्दाद् वाक्य इति । अन्ये सप्तदशभेदा वाक्ये पदेऽपीत्यर्थः ।

एकावयवेत्यादि । अयमाशयः—

ननु पदस्य व्यञ्जकत्वे किमायातं वाक्यरूपस्य काव्यस्य ध्वनित्वे कथं वा पदमात्रस्य व्यञ्जकत्वे वाक्यस्यैव समस्तस्य चारुतेति चेत्, उच्यते—पदप्रकाश्यत्वं न

## साहित्यचूडामणिः

खलेति ।

खलव्यवहारा दृश्यन्ते दारुणा यद्यपि तथापि धीराणाम् ।
हृदयवयस्यबहुमता न खलु व्यवसाया विमुह्यन्ति ॥

हृदयमेव वयस्यः सुहृत् । मोहो हि न सर्वेषां यावदनधिगतपरमार्थानां तत्रापि केषाञ्चिदेवेति, व्यवसायसम्बन्धिनो विमुह्यतेरत्यन्ततिरस्कारः । न खल्वत्रानुपयुक्तिमात्रं यावदनुपपत्तिरेव । ततश्चासम्यक्त्वं लक्ष्यते । सामान्यविशेषभावः सम्बन्धः, असम्यग्ज्ञानविशेषत्वाद् विमोहस्य । व्यवसितकार्यनिर्वहणं व्यङ्ग्यम् ।

## सुधासागरः

पदमात्रस्य व्यञ्जकतया, किन्तु तस्य प्राधान्येन । अविवक्षितवाच्ये पदमात्रस्य व्यञ्जकत्वेऽपि यद्वाक्यवर्त्तिशब्दस्यार्थस्य वा कस्याप्यतिशयितार्थव्यञ्जकत्वं तद्वाक्यस्यैव ध्वनित्वमित्यभ्युपगमान्न कश्चिद्दोषः । एकदेशस्थितेन च तादृशपदेन समस्तमेव वाक्यं चारुतामुपगच्छतीति कामिनीवैकावयवस्थेन भूषणेन । तदुक्तं ध्वनिकृता—

एकावयवसंस्थेन[1] भूषणेनेव कामिनी ।
पदव्यङ्ग्येन सुकवेर्ध्वनिना भाति भारती ॥ ध्व. ३.१ सं. ॥

इति ।

तत्र वाक्यव्यङ्ग्यमुदाहृतम् । पदव्यङ्ग्यमुदाह्रियते । तत्राविवक्षितवाच्ययोरर्थान्तरसङ्क्रमितवाच्यं यथा—यस्येत्यादि । वाच्योऽर्थः स्पष्टः । अत्र द्वितीयेत्यादि । द्वितीयमित्रशब्द आश्वस्तत्वे शत्रुशब्दो नियन्त्रणत्वे अनुकम्प्यशब्दः स्नेहपात्रत्वे सङ्क्रमितवाच्य इत्यर्थः । नायकस्य दृढप्रकृतित्वं व्यङ्ग्यमुपादानलक्षणायाः फलमिति भावः ।

ननु 'त्रासस्मि वञ्चित' इति वाक्यप्रकाश्ये पूर्वमुदाहृतम्, तस्मादस्य पदप्रकाश्यस्य को भेद इति चेत्, न, अनवबोधात् । तद्धि प्रत्येकपदव्यङ्ग्यभिन्नं समस्तवाक्यव्यङ्ग्यं तस्मादत्र सावधानेन भाव्यमित्येवंरूपं यत्तत्पदम् । इदन्तु केवलमित्रादिपदव्यङ्ग्याभिप्रायमिति ।

क्रमप्राप्तमत्यन्ततिरस्कृतवाच्यमुदाहरति—खलेत्यादि । मुखविपुला छन्दः ।

खलव्यवहारा दृश्यन्ते दारुणा यद्यपि तथापि धीराणाम् ।
हृदयवयस्यबहुमता न खलु व्यवसाया विमुह्यन्ति ॥

इति संस्कृतम् । अयमर्थः । यद्यपि खलानां धूर्तानामधीराणामिति यावत्, व्यवहाराश्चरितानि, दारुणा दुःखदाः अन्येष्टप्रतिबन्धका इति यावत्, दृश्यन्ते प्रसिद्धा इति भावः, तथापि धीराणां महतां हृदयस्य वयस्याः सदर्थग्राहकत्वात् स्निग्धास्ते च

[1] विच्छित्तिशोभिनैकेनेति प्रकाशितः पाठः ।

३. लावण्यं तदसौ कान्तिस्तद् रूपं स वचःक्रमः ।
तदा सुधास्पदमभूदधुना तु ज्वरो महान् ॥

अत्र तदादिपदैरनुभवैकगोचरा अर्थाः प्रकाश्यन्ते । यथा वा—

मुग्धे मुग्धतयैव नेतुमखिलः कालः किमारभ्यते
मानं धत्स्व धृतिं बधान ऋजुतां दूरे कुरु प्रेयसि ।
सख्यैवं प्रतिबोधिता प्रतिवचस्तामाह भीतानना
नीचैः शंस हृदि स्थितो हि ननु मे प्राणेश्वरः श्रोष्यति ॥

अत्र भीताननेति । एतेन हि नीचैः शंसनविधानस्य युक्तता गम्यते । भावादीनां पदप्रकाश्यत्वेऽधिकन्न वैचित्र्यमिति न तदुदाहियते ।

---

## साहित्यचूडामणिः

लावण्यमिति । तदा सम्भोगसमये । अधुना विप्रलम्भवेलायाम् । ज्वरो महानिति साध्यवसाना तदादीत्यदसः स्वीकारः ।

मुग्धे इति । भीताननेत्येतत् प्राधान्येन रसद्योतकपदम् । तदेवोपपादयति—एतेनेति । प्राणेश्वरस्य स्वहृदयावस्थानद्योतकेन । युक्तता औचित्यम् । नन्वलक्ष्यक्रमो रस इव भावादिरपि पदप्रकाश्यतायामुदाहार्य इत्यत्राह—भावादीनामिति । अधिकं वाक्यप्रकाश्यत्वातिरिक्तं न वैचित्र्यम् । ग्रन्थगौरवचाकित्येन न तदुदाहियते विदग्धैः स्वयमुन्नेयमिति यावत् । यथा—एवंवादिनि देवर्षावित्यत्र लज्जायां व्यज्यमानायामधोमुखीति पदम् ।

## सुधासागरः

ते बहुमताः शिष्टसम्मताः व्यवसाया विचाराः खलु न विमुह्यन्ति । खलानां दारुणा व्यवहारा इति जानन्तोऽपि धीरास्तेषामप्युपकारमेव कुर्वन्तीत्याशयः ।

अत्र विमोहेनाप्रवृत्तिर्लक्ष्यते । न च तत्र वाच्यस्य कथमपि प्रवेशः । इष्टकार्यकारित्वं व्यङ्ग्यं लक्षितलक्षणाफलम् । यद्यपि व्यवसाये विमोहाभावो नान्वयायोग्य इति कुतो लक्षणा, तथापि धीराणामधीरेभ्यो वैलक्षण्यं प्रतिपाद्यम् । न च लक्षणां विना तत् सम्भवति अधीरव्यवसायेऽपि मोहाभावादित्यवश्यं लक्षणा स्वीकार्येति । तदेतत्सर्वमभिप्रेत्य श्रीवाग्देवतावतार आह—अत्र विमुह्यन्तीति ।

अलक्ष्यक्रमव्यङ्ग्यमुदाहरति—लावण्यमित्यादि । कस्यचिद् वियोगिनः परामर्शोऽयम् । अवयवस्य संस्थानसौष्ठवं रूपम् । अवयविनस्तदेव लावण्यम् । कान्तिरुज्वलता । स्पष्टमन्यत् । अत्र विप्रलम्भार्थे वाक्येऽनुभवैकगोचरमर्थं प्रकाशयतां तत्पदानां प्राधान्यम् । एवमग्रेऽपि पदप्राधान्यं द्रष्टव्यम् । तदेतद्वृत्तिकृदाह—अत्र तदादीत्यादि ।

न केवलं सर्वनामपदानामेव रसादिव्यञ्जकता किन्त्वन्येषामपीति ध्वनयन् सम्भोगेऽप्युदाहरति—मुग्धे इत्यादि । शार्दूलविक्रीडितं छन्दः । विदितरहस्या

४. रुधिरविसरप्रसाधितकरवालकराल-रुचिरभुज-परिघः ।
झटिति भ्रुकुटिविटङ्कितललाटपट्टो विभासि नृप, भीम ॥

अत्र भीषणीयस्य भीमसेन उपमानम् ।

५. भुक्तिमुक्तिकृदेकान्तसमादेशनतत्परः ।
कस्य नानन्दनिस्यन्दं विदधाति सदागमः ॥

काचित् सङ्केतदायिनमेवं मुख्यया वृत्त्या शंसति ।

---

## साहित्यचूडामणिः

रुधिरेति । हे नृप ! त्वं भीमोऽसि भीषणस्योक्तयुक्त्या भयानकस्वभावस्य राज्ञो वृकोदर उपमानम् ।

भुक्तीति । सदागमः सत्पुरुषस्य प्रियतमस्य प्राप्तिः अथ च सत्पुरुषाऽर्थोपयुक्त आगमः शास्त्रम् । प्रियतमागमनरूपोऽर्थ उच्यते । शास्त्रानुकूलो ध्वन्यते । तत्राभिधायां भुक्तिमुक्ती सङ्केतद्विधातौ, एकान्तसमादेशनं सङ्केतदानम्, आनन्दनिष्यन्दः क्रीडासौख्यम् । व्यञ्जने तु भुक्तमुक्ती प्रवृत्तिनिवृत्तिकर्मप्रतिपाद्ये फले, एकान्तसमादेशनं विविक्तिदेशोपदेशः, आनन्दनिष्यन्दः परमपुरुषार्थोन्मेषः ।

## सुधासागरः

काचित् स्वसखीमाह—हे मुग्धे ! उपदेशाग्राहिणि, मुग्धतयैवाविचारेणैवाखिलः कालः सर्वं वयो, नेतुं गमयितुं किमारभ्यते, प्रेयसि भर्त्तरि, मानं धत्स्व, धृतिं बधान, ऋजुतां दूरीकुरु, ऋत्यकः इति प्रकृतिभावः, सख्या वयस्यया एवमुक्तप्रकारेण प्रतिबोधितोपदिष्टा काचिदकृत्रिमानुरागा नायिका भीतानना सती प्रतिवचः उत्तरं तां सखीं प्रत्याह नीचैः शंस मन्दमुच्चारय, ननु हृदि संस्थितोऽतिसन्निकृष्टो हि मे प्राणेश्वरः श्रोष्यतीत्यर्थः ।

अत्र भीताननेति पदं नीचैःशंसनविधानयोग्यतां प्रकाशयत् प्राधान्येन रागातिशयं व्यञ्जयति । तदेतदाह वृत्तिकारः—अत्र भीताननेत्यादिना ।

भावादीनामित्यादि । भावादीनां तु वाक्येऽपि न तादृशं चारुत्वं पदप्रकाश्यत्वे सुतरामिति तत्प्रभेदा नोदाहर्तव्या इति भावः ।

अथ लक्ष्यक्रमव्यङ्ग्यध्वनिप्रभेदेषु शब्दशक्तिमूलेऽलङ्कारव्यक्तिमुदाहरति रुधिरेत्यादि । गीतिश्छन्दः । लक्षणमुक्तम् । हे नृप ! हे भीम भयङ्कर रुधिरस्य विसरः प्रसरस्तेन प्रसाधितः प्रकर्षेणाऽऽरक्तीकृतः अत एव करालो भयङ्करो यः करवालः खड्गस्तेन रुचिरो वीरश्लाघ्यः परिघ इव विपुलो भुजो यस्य स तादृशः, तथा झटिति द्रुतं भ्रुकुट्या विटङ्कितस्तरङ्गितो ललाटपट्टो भालफलको यस्य तथाभूतस्त्वं विभासि शोभसे इत्यर्थः ।

अत्र भीमेति भीषणीयार्थेन नृपसम्बोधनविशेषेण भीमसेनोपमा व्यज्यते ।

अत्रैव वस्तुना वस्तुव्यक्तिमुदाहरति—'भुक्तीत्यादि । काचिद् विदग्धकुलटा

६. सायं स्नानमुपासितं मलयजेनाङ्गं समालेपितं
यातोऽस्ताचलमौलिमम्बरमणिर्विस्रब्धमत्रागतिः ।
आश्चर्यं तव सौकुमार्यमभितः क्लान्ताऽसि येनाधुना
नेत्रद्वन्द्वममीलनव्यतिकरं शक्नोति ते नासितुम् ॥

अत्र वस्तुना कृतपरपुरुषपरिचया क्लान्ताऽसीति वस्तु अधुनापदद्योत्यं व्यज्यते ।

---

## साहित्यचूडामणिः

सायमिति । उपासितम् आदरेणानुष्ठितम् । विस्रब्धं, न पुनरावेगयुक्तम् । येन हेतुना । तव नेत्रद्वन्द्वं मीलनव्यतिकररहितम् आसितुं स्थातुं न शक्नोति मीलितमेव वर्तते । पूर्वार्धेन श्रान्त्यतिशयस्य धर्मकालप्रयुक्तत्वशङ्का प्रतिक्षिप्यते । उत्तरार्धेन च परपुरुषोपभोगानन्तरं स्नातासीति व्यज्यते । अत्र प्राधान्यमधुनापदस्य, नेत्रद्वन्द्वविकारस्य वासनावशेन तत्कालेऽपि विद्यमानत्वात् ।

## सुधासागरः

सन्मन्त्रोपदेशव्याजेन सङ्केतदायिनमत्युज्ज्वलशिष्टवेषधारिपाखण्डिनं प्रति एवं श्रोतृषु स्वसाधुतां सूचयितुमभिधाख्यप्रसिद्धव्यापारेण शास्त्रं स्तुवत्याह—भुक्तिमुक्तीत्यादि । अक्षरार्थस्तु—'भुक्तिः स्वर्गादिभोगः सम्भोगश्च, मुक्तिरपवर्गः स्मरसन्तापत्यागश्च, एकान्तः परमात्मस्वरूपं विविक्तस्थानञ्च, समादेशो नियोगः आह्वानञ्च, सदागमः सन्मन्त्रशास्त्रं सतः सुन्दरतरुणस्यागमनञ्च । एवञ्च भुक्तिमुक्तिकारकं यदेकान्तसमादेशनं तत्र तत्परो दक्षः । सदागमः सच्छास्त्रमानन्दनिष्यन्दप्रमोदप्रस्रवणम् । 'स्यन्दू प्रस्रवणे' धातुः । निःस्पन्दमिति पाठे जाड्यमित्यर्थः । कस्य न विदधाति अपि तु सर्वस्यापि सकामनिष्कामस्य प्रमोदनिर्भरं करोत्येवेत्यर्थः । तदेतत् सर्वमभिप्रेत्य श्रीवाग्देवतावतार आह—काचित् सङ्केतदायिनमेवं मुख्यया वृत्त्या शंसतीति ।

अत्र वक्तृबोद्धव्यवैशिष्ट्यबलात् सदागमपदेन प्राधान्येनोपपतिस्तुतिरूपं वस्तु व्यज्यते । अत एवोक्तं प्रदीपकारैः 'काचित्सङ्केतदायिनमेवं मुख्यया वृत्त्या शंसति तत्र सदागमपदेन स्तुतिर्व्यज्यते' इति । एवञ्च मधुमतीकारैर्यद्व्याख्यातं 'मुख्यया व्यञ्जनयेत्यर्थः'इति तत्प्रामादिकमेव, 'तत्र मुख्यो व्यापारोऽस्याभिधोच्यते' इति सूत्रेणैवाभिधाया मुख्यत्वप्रतिपादनात् । यच्च स्वजनकरत्नपाणिभट्टाचार्यकृतकाव्यदर्पणाख्यटिप्पणसमर्थनम्—'यत्तु पितृचरणैरुक्तं मुख्यया शक्त्येति, तत्प्रकृतव्यञ्जनाया अभिधामूलत्ववत परम्परया तत्प्रायत्वमभिप्रेत्येति तद्वृथैवेति ध्येयम्' । एतयोरुदाहरणयोः शब्दप्राधान्यं परिवृत्त्यसहत्वाद् द्रष्टव्यम् ।

अथार्थशक्त्युद्भवेषु स्वतः सम्भविन्यर्थे व्यञ्जके वस्तुना वस्तुव्यक्तिं पदप्राधान्येनोदाहरति—सायमित्यादि । शार्दूलविक्रीडितं छन्दः । प्राक् श्रमालस्याद्य-

७ तदप्राप्तिमहादुःखविलीनाशेषपातका ।
तच्चिन्ताविपुलाह्लादक्षीणपुण्यचया तथा ॥
चिन्तयन्ती जगत्सूतिं परब्रह्मस्वरूपिणम् ।
निरुच्छ्वासतया मुक्तिं गतान्या गोपकन्यका ॥

अत्र जन्मसहस्रैरुपभोक्तव्यानि दुष्कृतसुकृतफलानि वियोगदुःखचिन्तनाह्लादाभ्यामनुभूतानीत्युक्तम् । एवं चाशेष-चय-पदद्योत्ये अतिशयोक्ती ।

---

## साहित्यचूडामणिः

तदप्राप्तीति । निरुच्छ्वासतया योगाभ्यासोचितया । अतिशयोक्ती इति । प्रकारभेदेन प्रतिपादिते उभे मिथो निरपेक्षे, न पुनरेका, तथात्वे वाक्योदाहरणत्वप्रसङ्गात् । तत्र प्राधान्यमशेषचयशब्दयोः यौ वियोगदुःखचिन्ताह्लादयोर्बाहुल्यप्रतिपादनेन पापपुण्ययोर्निरन्वयविनाशं व्यङ्क्तः ।

## सुधासागरः

पनोदाय स्नानादिना संस्कृतां भर्तृशयनागारागतां श्रीष्माभिसारिकां प्रति तदागमनं प्रतीक्षन्ती (?) काचिद् विदग्धा सखी विदितरहस्याऽहमिति सूचयितुमाह । अयमर्थः । हे सखि । त्वया सायङ्काले स्नानं श्रमनाशकाङ्गप्रक्षालनमुपासितं यत्नतः कृतम्, मलयजेनोत्तमचन्दनेनाङ्गं समालेपितं समन्ताच्चर्चितम्, अम्बरमणिः सूर्योऽस्ताचलमौलिं यातः अस्तमित इत्यर्थः । एतेन नक्तमहत्त्वाभावः सूचितः । विस्रब्धं निर्भयं यथा स्यात्तथा, अत्र पतिसमागमस्थाने, आगतिरागमनम्, तव सौकुमार्यमाश्चर्यमत्युत्कृष्टम्, येन सौकुमार्येणाधुना ईदृशे समयेऽभितः बाह्यतोऽभ्यन्तरतश्च क्लान्तासि, तादृशक्लममेव प्रकटयति अमीलनव्यतिकरं न विद्यते मीलनस्य मुद्रणस्य व्यतिकरः सम्बन्धो यत्र तथाभूतम्, एतेन निद्राभावः सूचितः, ते नेत्रद्वन्द्वमासतुं जाग्रद्रूपतयाऽवस्थातुं न शक्नोतीति ।

अत्र तव सौकुमार्यमाश्चर्यं येनाधुना क्लान्तासीति वस्तुना कृतपरपुरुषपरिचया गाढोन्मर्दनात् क्लान्तासीति वस्तु 'अधुना'-पदप्राधान्येन व्यज्यते । तदेतद्वृत्तिकृतोक्तम्—अत्र वस्तुनेत्यादिना ।

वस्तुनाऽलङ्कृतेः पदप्राधान्येन व्यक्तिमुदाहरति—तदप्राप्तीत्यादि । पूर्वश्लोकोक्तविशेषणविशिष्टाऽन्या काचिद्गोपकन्यका निरुच्छ्वासतया प्राणायामेन, जगत्सूतिं सकललोकजनकं सगुणमिति यावत्, परब्रह्मस्वरूपिणं कर्तृकारणत्वाद्युपाधिरहितं कृष्णं सगुणनिर्गुणविलक्षणं नन्दतनयं चिन्तयन्ती मुक्तिङ्गतेत्यर्थः ।

८. क्षणदाऽसावक्षणदा वनमवनं व्यसनमव्यसनम् ।
बत वीर, तव द्विषतां पराङ्मुखे त्वयि पराङ्मुखं सर्वम् ॥

अत्र शब्दशक्तिमूलविरोधाङ्गेनार्थान्तरन्यासेन विधिरपि त्वामनुवर्त्तते इति सर्वपदद्योत्यं वस्तु ।

---

## साहित्यचूडामणिः

क्षणदा रात्रि अक्षणदा तद्विपरीता च । वनं काननम् अवनं रक्षणं तद्विपरीतं च । व्यसनं तात्पर्यम् अव्यसनम् अजीवशेषाणां क्षेपणं पशुपालनादिराजीवः तद्विपरीतं च । क्षणदादिरूपाणां शक्तिरभिधारूपा तन्मूलो यो विरोधालंकारः तस्याङ्गेन समर्थनोपकरणभूतेनार्थान्तरन्यासेन ।

"सामान्यं वा विशेषो वा तदन्येन समर्थ्यते"

## सुधासागरः

अत्राशेषचयपदप्रभावादनेकजन्मसहस्रभोग्यदुष्कृतसुकृतफलराशितादात्म्याध्यवसितभगवद्विरहदुःखस्मरणसुखयोः प्रत्यायनमित्यतिशयोक्तिद्वयप्रतीतिरशेषचयपदहेतुका द्रष्टव्या ।

अत एवोक्तं प्रदीपकारैः—अत्र जन्मसहस्रैरुपभोक्तव्यानि दुष्कृतसुकृतफलानि वियोगदुःखचिन्तनाह्लादाभ्यां कयाप्यऽनुभूतानीत्युक्तम् । एवञ्च दुष्कृतसुकृतफलराशितादात्म्येनाध्यवसितौ भगवद्वियोगदुःखचिन्ताह्लादौ प्रतीयेते इति निगीर्याध्यवसानरूपातिशयोक्तिद्वयमशेषचयपदाभ्यां द्योत्यते इति ।

यत्तु रविभट्टाचार्य्यैरुक्तम्—अत्रातिशयोक्तिपदं समाख्याबलेनालङ्कारसामान्यवाचकमप्यत्र विशेषालङ्कारविशेषपरम्, प्रयत्नविषये तदवतारात् । इह च तद्वियोगदुःखोपभोगजनकयत्नेन समस्तपातकजन्यदुःखोपभोगस्य तद्वियोगदुःखजनकपातकनाशेन समस्तपातकनाशप्रतीतेर्विशेषालङ्कारद्वयमशेषपदद्योत्यम् । एवञ्च तच्चिन्ताह्लादभोगजनकयत्नेन सकलपुण्यजन्यसुखोपभोगस्य तच्चिन्ताह्लादजनकपुण्यनाशेन समस्तपुण्यनाशप्रतीतेरपरविशेषालङ्कारद्वयं च चयपदद्योत्यम् । चयाशेषपदाभ्यां विना स्वस्वजनकपातकपुण्ययोरेव विलयप्रतीतौ व्यञ्जनैव न स्यात् । एवञ्चाशेषचयपदयोरतिशयोक्तिद्वयं प्रत्येकमेव द्योत्यमिति ज्ञेयमिति । तन्न सम्यक् । योगरूढस्यातिशयोक्तिपदस्य समाख्याबलेन तादृशार्थकल्पने तत्रापि विशेषालङ्कारपरत्वाङ्गीकारे बीजाभावात् । यच्चातिशयोक्तिचतुष्टयं प्रदर्शितम् तद् वृत्तिविरुद्धम् । वृत्तौ द्वयोर्द्योतकयोर्द्वयोर्द्योत्ययोश्च यथासंख्येनैवान्वयः स्वारसिकः, न तु द्वयारेकैकत्रान्वय इति सुधीभिर्ध्येयम् । तदेतत्सर्वमभिप्रेत्य श्रीवाग्देवतावतार आह—अत्र जन्मसहस्रैरुपभोक्तव्यानीत्यादि ।

अत्रैवालङ्कारेण वस्तुनः पदप्राधान्येन व्यक्तिमुदाहरति—क्षणदेत्यादि । हे वीर बत खेदे, भवद्द्विषतां तव शत्रूणामसौ सुरतादिभोगक्षमा, क्षणदा रात्रिरक्षणदा

६. तुह वल्लहस्स गोसम्मि असि अहरो मिलाणकमलदलो ।
इअ णववहुआ सोऊण कुणइ वअण महिसंमुहम् ॥
[तव वल्लभस्य प्रभाते आसीदधरो म्लानकमलदलम् ।
इति नववधूः श्रुत्वा करोति वदनं महीसम्मुखम् ॥]

अत्र रूपकेण त्वयाऽस्य मुहुर्मुहुः परिचुम्बनं तथा कृतं येन म्लानत्वमिति मिलाणादिपदद्योत्यं काव्यलिङ्गम् ।

एषु स्वतःसम्भवी व्यञ्जकः ।

---

## साहित्यचूडामणिः

इति वक्ष्यमाणेन विधिरपि त्वामनुवर्तते यतस्त्वयि पराङ्मुखे सर्वं पराङ्मुखं विपरीतस्वभावमिति वस्तु व्यज्यते । तत्र प्राधान्यं सर्वपदस्य ।

तुहेति ।

तव वल्लभस्य गोसर्गे आसीदधरो म्लानकमलदलम् ।
इति नववधूः श्रुत्वा करोति वदनं महीसम्मुखम् ॥ इति ।

रूपकेणाधरो म्लानकमलमिति व्यस्तपदेन । त्वयेति कर्तुर्निर्देशः परिचुम्बनेनेति करणस्य । काव्यलिङ्गं व्यङ्ग्यं हेतोर्वाक्यपदार्थता ।

## सुधासागरः

तदितरा क्षणमुत्सवं न ददातीत्यक्षणदा च, वनमरण्यमवनं नारण्यं रक्षकञ्च, व्यसनं द्यूतादि अव्यसनं व्यसनभिन्नम् , व्यस्यति बहुलीभवतीति व्यसनं पश्चान्नञ्समासात् संक्षिप्तं च । उक्तविरोधमुपपादयति युक्तोऽयमर्थः । त्वयि पराङ्मुखे सर्वं पराङ्मुखं जातमिति शेषः ।

अत्र पराङ्मुखे त्वयि पराङ्मुखं सर्वमित्यर्थान्तरन्यासेन विधिरपि त्वामनुवर्त्तते इति वस्तु सर्वपदप्राधान्येन व्यज्यते ।

ननु नायमर्थान्तरन्यासः वनं रक्षकमित्यादेर्वाच्यस्यार्थस्यानुपपादकत्वादिति चेन्न । शब्दशक्त्या व्यङ्ग्यस्य क्षणदा क्षणदाभिन्नेति विरोधस्योपपादकत्वेन तथात्वात् । तदेतद्वृत्तिकृदाह—अत्र शब्दशक्तीत्यादि ।

अत्रैवालङ्कारेणालङ्कारस्य प्राधान्येन व्यक्तिमुदाहरति—तुहेत्यादि । सर्वविपुलेयमार्या ।

तव वल्लभस्योपसि आसीदधरो म्लानकमलदलम् ।
इति नववधूः श्रुत्वा करोति वदनं महीसंमुखम् ॥

इति संस्कृतम् । कस्याश्चिन्नवोढां प्रति वचनमिदम् । स्पष्टम् । प्राकृते लिङ्गानियमाद्दलस्य पुंस्त्वं बोध्यम् ।

१०. राईसु चंदधवलासु ललिअमप्फालिऊण जो चावम् ।
एकच्छत्तं विअ कुणइ भुअणरज्जं विजंभंतो ॥
[रात्रीषु चन्द्रधवलासु ललितमास्फाल्य यश्चापम् ।
एकच्छत्रमिव करोति भुवनराज्यं विजृम्भमाणः ॥]

अत्र वस्तुना येषां कामिनामसौ राजा स्मरस्तेभ्यो न कश्चिदपि तदादेशपराङ्मुख इति जाग्रद्भिरुपभोगपरैरेव तैर्निशाऽतिवाह्यते इति भुअणरज्जपदद्योत्यं वस्तु प्रकाश्यते ।

---

## साहित्यचूडामणिः

'राईसु'-इति ।

रात्रिषु चन्द्रधवलासु ललितमास्फाल्य यश्चापम् ।
एकच्छत्रमिव करोति भुवनराज्यं विजृम्भमाणः ॥ इति ।

तेभ्यो नेति । यः कश्चिदपि । तैः कामिभिः । भुवनेति । सार्वत्रिकीह सार्वभौमस्याज्ञा ।

अराले वक्रे वयसि यौवने । सा च दृक् च । व्यतिकरं मिश्रणम् । अवस्थाश्चिन्तामोहादयः ।

## सुधासागरः

अत्राधरो म्लानकमलदलमिति रूपकेणालङ्कारेण त्वया तथा मुहुर्मुहुश्चुम्बनं कृतं येन तस्य म्लानत्वमिति काव्यलिङ्गं मिलाणकमलदलपदप्राधान्येन द्योत्यते । तदेतदुक्तं वृत्तिकारैः—अत्र रूपकेणेत्यादि ।

एषु चतुर्षु भेदेषु स्वतः सम्भवी व्यञ्जकः ।

अथ कविप्रौढोक्तिमात्रनिष्पन्नशरीरे व्यञ्जकार्थे भेदचतुष्टये वस्तुना वस्तुव्यक्तिं पदप्राधान्येनोदाहरति राईस्वित्यादि । सर्वविपुला छन्दः । यस्यामार्यायां प्रथमपादमुल्लङ्घ्य यतिः सा मुखविपुला, यस्यां तृतीयपादमुल्लङ्घ्य यतिः सा जघनविपुला, यस्यां तु पूर्वोत्तरार्द्धयोरपि तादृशी यतिः सा सर्वविपुलेति छन्दोविद्भिः प्रतिपादनात् ।

रात्रीषु चन्द्रधवलासु ललितमास्फाल्य यश्चापम् ।
एकच्छत्रमिव करोति भुवनराज्यं विजृम्भमाणः ॥

इति संस्कृतम् । यः प्रकृतः कामश्चन्द्रेण धवलासूज्वलासु रात्रीषु विजृम्भमाणो वर्द्धमानः सन्, ललितं कुसुममयं चापं धनुरास्फाल्य भुवनराज्यमेकच्छत्रमिव करोतीत्यर्थः ।

अत्रेत्यादि । वस्तुना वाच्यरूपेणेत्यर्थः, येषां कामिनां कामिनश्च कामिन्यश्च कामिनस्तेषां कामिनामित्यर्थः, 'पुमान्स्त्रिया' इत्येकशेषः, असौ प्रजापरिपालनपरो राजा

११. निशितशरधियाऽर्पयत्यनङ्गो
दृशि सुदृशस्त्वबलं वयस्यराले ।
दिशि निपतति यत्र सा च तत्र
व्यतिकरमेत्य समुन्मिषन्त्यवस्थाः ॥

अत्र वस्तुना युगपदवस्थाः परस्परविरुद्धा अपि प्रभवन्तीति व्यतिकरपदद्योत्यो विरोधः ।

१२. वारिज्जन्तो वि पुणो सन्दावकदत्थिएण हिअएण ।
थणहरवअस्सएण विसुद्धजाई ण चलइ से हारो ॥
[वार्यमाणोऽपि पुनः सन्तापकदर्थितेन हृदयेन ।
स्तनभरवयस्येन विशुद्धजातिर्न चलत्यस्या हारः ॥]

अत्र विशुद्धजातित्वलक्षणहेत्वलङ्कारेण हारोऽनवरतं कम्पमान एवास्ते इति 'ण चलइ'-पदद्योत्यं वस्तु ।

---

## साहित्यचूडामणिः

युगपदिति । इतरथा व्यतिरेकानौचित्यात् ।

वारिज्जन्तो इति ।

वार्यमाणोऽपि पुनः सन्तापकदर्थितेन हृदयेन ।
स्तनभरवयस्येन विशुद्धजातिर्न चलत्यस्या हारः ॥ इति ।

विरहवेदनातुरायां हारादिशिशिरोपचारद्वेषिण्यां नायिकायां सख्या उक्तिः । विशुद्धा निर्मला जातिरुत्पत्तिर्यस्येत्यभिधा । आश्रयपरित्यागादिदोषशून्यजातिरितिव्यञ्जनम् ।कम्पमान एवेति । किं भविष्यतीति भीत्या । चलति मोक्तुं प्रभवति ।

## सुधासागरः

स्मरस्तेभ्यस्तदर्थं कन्दर्पप्रजारूपकामुकमित्यर्थमिति यावत्, तादर्थ्ये चतुर्थी, कश्चिदपि स्त्रीपुरुषात्मको जनो, विरक्तोऽपि कश्चिदेक इति भावः, तदादेशपराङ्मुखः कामाज्ञाभञ्जकः सुरतविमुख इति यावत् नासीदिति, जाग्रद्भिरुपभोगपरैरेव तैः आसमुद्रक्षितिनिवासिभिः सकामनिष्कामैः सर्वैरपि निशाऽतिवाह्यते इति वस्तु भुवनराज्यपदप्राधान्येन द्योत्यते इति वृत्त्यर्थः ।

अखण्डाऽऽज्ञाविषयो हि साम्राज्यम् । चापास्फालनेन भुवनराज्यस्यैकच्छत्रीकरणं कविप्रौढोक्त्यैव सिद्धमिति कविप्रौढोक्तिमात्रनिष्पन्नशरीरत्वं द्रष्टव्यम् । एवञ्च तेभ्य इत्यस्य तेषु मध्ये इति व्याख्यानं कुर्वतां श्रीवत्सलाञ्छनभट्टाचार्य-चण्डीदासभट्टाचार्य-गोविन्दमहामहोपाध्यायप्रभृतीनां महतामपि महान् प्रमादः ।

## सुधासागरः

अत्रैव वस्तुनाऽलङ्कृतेः पदप्राधान्येन व्यक्तिमुदाहरति—निशितेत्यादि। पुष्पिताग्रा छन्दः। अनङ्गः कामदेवो निशितशरधिया तीक्ष्णबाणबुद्ध्या अराले कामिहिंस्रत्वात्कुटिले वयस्यभिनवतारुण्ये वर्त्तमानायाःसुदृशो मृगाक्ष्याः दृशि कटाक्षे, स्वबलं स्वकीयमोजोऽर्पयति ददाति, अत एव सा दृष्टिश्च यत्र दिशि यस्मिन् कामिशरीरात्मकप्रदेशे, दिशि स्थिते कामिजने वा निपतति, तत्र विषयेऽवस्थाः हसित-रुदित-प्रलपित-मूर्च्छितादयो व्यतिकरमेत्य समुन्मिषन्ति युगपद् भवन्तीत्यर्थः।

अत्र व्यतिकरमेत्यवस्थाः समुन्मिषन्तीति वस्तुना परस्परविरुद्धा अपि हसितरुदितनिर्वेदोन्मादादयोऽवस्था भवन्तीति विरोधालङ्कारो व्यतिकरपदप्राधान्येन व्यज्यते।

तदेतद्वृत्तिकृदाह—अत्र वस्तुनेत्यादि।

अत्रैवालङ्कारेण वस्तुनो व्यक्तिं पदप्राधान्येनोदाहरति—वारिज्जेत्यादि। गीतिश्छन्दः। लक्षणमुक्तं प्राक्।

वार्यमाणोऽपि पुनः सन्तापकदर्थितेन हृदयेन।
स्तनभरवयस्येन विशुद्धजातिर्न चलत्यस्या हारः॥

इति संस्कृतम्।

नायिकाया विपरीतरताचरणसूचिकेयं कवेः प्रौढोक्तिः। अस्याः सुन्दर्याः, विशुद्धजातिर्निर्मलतरमुक्तामयो हारः, हारस्य गाढालिङ्गनान्तरायतया यः सन्तापस्तेन कदर्थितेनातिखिन्नेन हृदयेन पुनर्वार्यमाणोऽपि मुहुरपसार्यमाणोऽपि सन् स्तनभरवयस्येन स्तनरूपवयस्यस्य पीडा माभूदित्यभिप्रायेण न चलति, विशुद्धजातित्वाद्धेतोः कुचभररूपमित्रादपादानान्नापसरतीत्यर्थः, कुलीनाः खलूत्कटक्लेशेऽपि मित्रं न त्यजन्तीति भावः,वयस्येनेति तृतीया चलनाभावयोगे पञ्चम्यर्थसाधारणार्थिका, तथा च वयस्यतो न चलतीत्यर्थो नासङ्गतः, अत एव 'अतिग्रहाव्यथनक्षेपेष्वकर्त्तरि तृतीयायाः'[१] इति सूत्रेण तृतीयान्ताद्वा तसिर्विधीयते। अव्यथनं चाचलनमिति व्याख्यातं वैयाकरणैः[२]। चारित्र्येण न चलति चारित्र्यतो न चलतीत्युदाहृतं चेति द्रष्टव्यम्।[३]

अत एव प्रदीपकारैरुक्तम्—अत्र स्तनभरवयस्येन विशुद्धजातित्वात् हारो न चलतीति हेत्वलङ्कारेणानवतरतं कम्पमान एव हारोऽस्तीति वस्तु चलतीति पदेन व्यज्यते इति।

यत्तु रविभट्टाचार्यादिभिः स्तनभरवयस्येनेति हृदयविशेषणतया व्याख्यातम्। तद् विद्वद्भिर्नादरणीयम्। सर्वमेतदभिप्रेत्य वृत्तिकृदाह—अत्र विशुद्धजातित्वेत्यादि। अनवरतं कम्पमानः पुरुषायिते नायिकायाः पतनोत्पतनात्।

---

[१] अष्टाध्यायीसूत्रम् ५।४।४६ [२-३] सिद्धान्तकौमुदीवृत्तौ

१३. सो मुद्धसामलङ्गो धम्मिल्लो कलिअ-ललिअ-णिअदेहो ।
तीए खंधाहि बलं गहिअ सरो सुरअसङ्गरे जअइ ॥८७॥
[स मुग्धश्यामलाङ्गो धम्मिल्लः कलितललितनिजदेहः ।
तस्याः स्कन्धाद् बलं गृहीत्वा स्मरः सुरतसङ्गरे जयति ॥]

अत्र रूपकेण मुहुर्मुहुराकर्षणेन तथा केशपाशः स्कन्धयोः प्राप्तः यथा रतिविरतावप्यनिवृत्ताभिलाषः कामुकोऽभूदिति खंधपदद्योत्या विभावना । एषु कविप्रौढोक्तिमात्रनिष्पन्नशरीरः ।

१४. णवपुणिमामिअङ्कस्स सुहअ को त्तं सि भणसु मह सच्चम् ।
का सोहग्गसमग्गा पओस-रअणि व्व तुह अज्ज ॥
[नवपूर्णिमामृगाङ्कस्य सुभग, कस्त्वमसि भण मम सत्यम् ।
का सौभाग्यसमग्रा प्रदोषरजनीव तवाद्य ॥]

अत्र वस्तुना मयीवान्यस्यामपि प्रथममनुरक्तस्त्वम्, न ततः, इति णवेत्यादि पओसेत्यादिपदद्योत्यं वस्तु व्यज्यते ।

---

## साहित्यचूडामणिः

सो इति ।

स मुग्धश्यामलाङ्गो धम्मिल्लः कलितललितनिजदेहः ।
तस्याः स्कन्धाद् बलं लब्ध्वा स्मरः सुरतसङ्गरे जयति ॥ इति ।

रूपकेण धम्मिल्लः स्मरः कन्दर्पः इत्याकारेण रतिविरतावपीति । 'तद् द्वितीयसुरतस्य बभूवे'ति न्यायात् ।

## सुधासागरः

अत्रैवालङ्कारेणालङ्कारव्यक्तिं पदप्राधान्येनोदाहरति—सुमुद्धेत्यादि । गीतिश्छन्दः । लक्षणमुक्तं प्राक् ।

सुमुग्धश्यामलाङ्गो धम्मिल्लः कलितललितनिजदेहः ।
तस्याः स्कन्धाद् बलं गृहीत्वा स्मरः सुरतसङ्गरे जयति ॥

इति संस्कृतम् । सुमुग्धः सुगन्धतैलादिसंस्कारेणातिमनोहरः श्यामलमङ्गं यस्य स तादृशो धम्मिल्लः केशपाश एव कलितो धृतो ललितः सुन्दरतमो निजदेहः स्वशरीरं येन तथाभूतः स्मरः कामस्तस्याः नायिकायाः स्कन्धादंसात् सेनानिवेशाच्च बलं सामर्थ्यं सैन्यं च गृहीत्वा सुरत एव सङ्गरे जयतीत्यर्थः । अत्र रूपकेणेत्यादिवृत्तिः । स्पष्टार्था ।

१५. सहि णवणिहुवणसमरम्मि अङ्कवाली सहिए णिविडाए ।
हारो णिवारिओ विअ उच्छेरन्तो तदो कहं रमिअम् ॥
[सखि, नवनिधुवनसमरेऽङ्कपालीसख्या निबिडया ।
हारो निवारित एवोच्छ्रियमाणस्ततः कथं रमितम्[१] ॥]

अत्र वस्तुना हारच्छेदानन्तरमन्यदेव रतमवश्यमभूत्, तत् कथय कीदृगिति व्यतिरेकः कहंपदगम्यः ।

## साहित्यचूडामणिः

णवेति ।

नवपूर्णिमामृगाङ्कस्य सुभग ! कस्त्वमसि भण मम सत्यम् ।
का सौभाग्यसमग्रा प्रदोषरजनीव तवाद्य ॥ इति ।

नवपूर्णिमाचन्द्रस्य त्वं काऽसि किं कनिष्ठो ज्येष्ठो वेति भावः । न ततः पश्चान्नानुरक्तः, हरिद्रारागोऽसीति यावत् ।

सहीति ।

सखि ! नवनिधुवनसमरेऽङ्कपालीसख्या निबिडया ।
हारो 'निवारित एवोद्वर्तमानः ततः कथं रमितम्' ॥

## सुधासागरः

अथ कविनिबद्धवक्तृप्रौढोक्तिमात्रनिष्पन्नशरीरव्यञ्जकार्थध्वनिभेदचतुष्टये वस्तुना वस्तुनो व्यक्तिं पदप्राधान्येनादाहरति—णवेत्यादि । मुखविपुला छन्दः ।

नवपूर्णिमामृगाङ्कस्य सुभग कस्त्वमसि भणतु मम सत्यम् ।
का सौभाग्यसमग्रा प्रदोषरजनीव तवाद्य ॥

इति संस्कृतम् । काचिदनेकनारीरतलम्पटं चञ्चलचित्तमुपपतिमनङ्गीकुर्वाणा वदति—'हे सुभग नवपूर्णिमामृगाङ्कस्य त्वं कोऽसि, मम सत्यं भणतु, काऽद्य प्रदोषरजनीव तव सौभाग्यसमग्रेत्यन्वयः ।

त्वं सुन्दरतरोऽसि तव काचित् पुण्यकारिणी स्त्रीत्यापाततोऽर्थः, नवपदेन तरलत्वं पूर्णिमापदेन तिथ्यन्तरवन्नायिकान्तरसंसर्गः, मृगाङ्कपदेन ख्यातकलङ्कत्वम्, प्रदोषपदेन प्रकृष्टदोषत्वम्, रजनीपदेन मालिन्यं व्यज्यते, नवस्तत्कालोदितश्चन्द्रः प्रदोषो रजनीमुखमनयोः सम्बन्धः क्षणिक एवेति न त्वामङ्गीकरोमीत्यभिप्रेतोऽर्थः । तदेतदाह वृत्तिकारः—अत्र वस्तुनेत्यादि । अत्र कविनिबद्धा परकीया वक्त्री ।

प्रदीपकारास्तु—अत्र पदे रजनीवेत्युपमानैरपेक्ष्येण कथं व्यञ्जकत्वमिति चिन्त्यमित्याहुः । तत्रेयं चिन्ता । इवपदानुपादाने रजनी तव केत्येतावताऽपि व्यञ्जनासिद्धिरिति ।

अत्रैव वस्तुनाऽलङ्कारव्यक्तिं पदप्राधान्येनोदाहरति—सहीत्यादि । मुखविपला

[१] रमतेरुदितत्वविकल्पात् प्राप्तोऽपीडप्रसिद्धत्वात् त्याज्य एव ।

१६. पविसन्ती घरवारं विवलिअवअणा विलोइऊण पहम्।
खंधे घेत्तूण घडं हाहा णट्ठो त्ति रुअसि सहि किं ति।
[ प्रविशन्ती गृहद्वारं विवलितवदना विलोक्य पन्थानम्।
स्कन्धे गृहीत्वा घटं हाहा नष्ट इति रोदिषि सखि, किम्॥ ]

अत्र हेत्वलङ्कारेण सङ्केतनिकेतनं गच्छन्तं दृष्ट्वा यदि तत्र गन्तुमिच्छसि तदाऽपरं घटं गृहीत्वा गच्छेति वस्तु किंतिपदद्योत्यम्।

यथा वा—

विहलंखलं तुमं सहि दट्ठूण कुठेण तरलतर-दिट्ठिम्।
वारप्फंसमिसेण अ अप्पा गुरुओत्ति पाडिअ विहिण्णो॥
[ विश्रृङ्खलां त्वां सखि, दृष्ट्वा कुटेन तरलतरदृष्टिम्।
द्वारस्पर्शमिषेण चात्मा गुरुक इति पातयित्वा विभिन्नः॥]

---

## साहित्यचूडामणिः

इति। अङ्कपाल्येव सखी।

अन्यदेव,

"प्रवृत्ते रतिचक्रे तु नैव शास्त्रं न च क्रमः"

इति क्रमेण साटोपं किञ्चित् सुरतमभूत्। व्यतिरेक इति। रतान्तरेभ्यो वैलक्षण्यात्। स च कथमित्यनेन पदेन व्यङ्ग्यः।

'पविसन्ती'-ति।

## सुधासागरः

छन्दः।

सखि नवनिधुवनसमरेऽङ्कपालीसख्या निबिडया।
हारो निवारित एव उद्वृण्वन् ततः कथं रमितम्॥

इति संस्कृतम्। काचिदत्यन्तविश्वस्ता रसज्ञा सखी नवोढामाह हे सखि नवनिधुवन-समरे नूतनसुरतसङ्ग्रामे, निबिडया प्रगल्भया, अङ्कपाली आलिङ्गनम् 'अङ्कपाली परीरम्भे'–इति मेदिनीकारः। सैव सुखहेतुत्वात्सखी तया अङ्कपालीसख्या हारः उद्वृण्वन् सन् उक्तार्थतामागच्छन् सन् दृढालिङ्गनजनितनिजचिह्नपङ्क्तेरेव शोभा-धायकत्वात्पुनरुक्ततामधिगच्छन्निति यावत्। निवारित एव निरर्थकत्वाद् व्यवधान-बुद्ध्या त्रोटित एव। ततोऽनन्तरं कथं रमितमित्यर्थः।

अत्र वस्तुना हारच्छेदानन्तरमित्यादि। अन्यदेव रतं—प्रौढाङ्गनारताद् विलक्षणं नवोढायास्ते सुरतमित्यर्थः।

अत्रैवालङ्कारेण वस्तुनो व्यक्तिं पदप्राधान्येनोदाहरति–पविसन्तीत्यादि।

अत्र नदीकूले लतागहने कृतसङ्केतमप्राप्तं गृहप्रवेशावसरे पश्चादागतं दृष्ट्वा पुनर्नदीगमनाय द्वारोपघातव्याजेन बुद्धिपूर्वं व्याकुलया त्वया घटः स्फोटित इति मया चिन्तितम्, तत्किमिति नाश्वसिषि, तत्समीहितसिद्धये व्रज, अहं ते श्वश्रूनिकटे सर्वं समर्थयिष्ये इति द्वारस्पर्शनव्याजेनेत्यपह्नुत्या वस्तु ।

---

## साहित्यचूडामणिः

प्रविशन्ती गृहद्वारं विवलितनयना विलोक्य पन्थानम् ।
स्कन्धाद् गृहीत्वा कुटं हाहा नष्ट इति रोदिषि सखि ! किमिति ॥ इति ।

झटिति हारस्फोटने मार्गावलोकनं हेतुः काव्यलिङ्गम् । गच्छन्तं, न तु गतवन्तं गमिष्यन्तं वा ईषद्विलम्बितगमनं गृहप्रवेशवेलायामवलोकितम् ।

## सुधासागरः

गीतिच्छन्दः ।

प्रविशन्ती गृहद्वारं विवलितनयना विलोक्य पन्थानम् ।
स्कन्धे गृहीत्वा घटं हाहा नष्ट इति रोदिषि सखि किमिति ॥

इति संस्कृतम् । अत्यन्तविदग्धायाः कस्याश्चिन्निगूढाशयोक्तिरियम् । हे सखि गृहद्वारं प्रविशन्ती त्वं पन्थानं विलोक्य निष्क्रान्तमपि मार्गं दृष्ट्वा । विवलितनयना सम्भ्रमाच्चञ्चलनेत्रा सती, घटं स्कन्धे गृहीत्वा दुर्वहमिव मस्तकादुत्तार्य कथञ्चिदंसे धृत्वा पातनबुद्ध्या हाहा नष्ट इति किमिति रोदिषीत्यर्थः । अत्र हेत्वलङ्कारेणेत्यादि नष्ट इति रोदिषीति हेत्वलङ्कारः[१] । गच्छन्तं कामुकम् । स्पष्टमन्यत् ।

अत्र गृहद्वारप्रवेशनादेः स्वतः सम्भवित्वेऽपि एतादृशव्यवहारस्य दुर्घटत्वाद् दुरूहत्वाच्च प्रौढोक्तिमात्रनिष्पन्नत्वं भवतीति सूचितम् । एवञ्च प्रकृतार्थस्य स्वतः सम्भवित्वात्प्रौढोक्तिमात्रनिष्पन्नत्वं नास्तीत्युदाहरणान्तरमाहेति मधुमतीकारसारबोधिनीकारादिव्याख्यानमनादेयम् । न खलु श्रीवाग्देवतावतारः सर्वथा लोकबाधितं प्रौढोक्तिसिद्धं न जानातीति सम्भवति–किन्तु लोकाप्रसिद्धे ईदृशलोकोत्तरोक्तिप्रतिपादितेऽर्थेऽपि प्रौढोक्तिमात्रनिष्पन्नत्वं सम्भवतीति समाज्ञापयति । अत एव प्रमादशङ्कानुदयायोदाहरणान्तरमाह—यथावेतीति सुधीभिर्ध्येयम् ।

विहलमित्यादि । गीतिश्छन्दः ।

विह्वलां त्वं सखि दृष्ट्वा कुडेन तरलतरदृष्टिम् ।
द्वारस्पर्शमिषेण चात्मा गुरुरिति पातयित्वा विभिन्नः ॥ इति संस्कृतम् ।

---

[१] द्र० १८२ पृष्ठे टिप्पणी ।

१७. जोह्णाइ महुरसेण अ विइण्णतारुण्णउस्सुअमणा सा ।
बुड्ढा वि णवोढव्विअ परवहुआ अहह हरइ तुह हिअअम् ॥
[ ज्योत्स्नया मधुरसेन च विस्तीर्णतारुण्योत्सुकमनाः सा ।
वृद्धाऽपि नवोढेव परवधूरहह हरति तव हृदयम् ॥]

अत्र काव्यलिङ्गेन वृद्धां परवधूं त्वमस्मानुज्झित्वाऽभिलषसीति त्वदीयमाचरितं वक्तुं न शक्यमित्याक्षेपः परवहूपदप्रकाश्यः ।

एषु कविनिबद्धवक्तृप्रौढोक्तिमात्रनिष्पन्नशरीरः । वाक्यप्रकाश्ये तु पूर्वमुदाहृतम् । शब्दार्थोभयशक्त्युद्भवस्तु पदप्रकाश्यो न भवति । इति पञ्चत्रिंशद् भेदाः ।

---

## साहित्यचूडामणिः

'जोह्णाए' इति ।

ज्योत्स्नया मधुरसेन च वितीर्णतारुण्योत्सुकमनाः सा ।
वृद्धापि नवोढेव परवधूरहह हरति तव हृदयम् ॥ इति ।

ज्योत्स्नामधुरसाभ्यां वितीर्णं दत्तं तारुण्यं यौवनं यस्यै वृद्धायै । ज्योत्स्नया सुधामय्या जरापलितनाशः मधुना माधुर्योत्पादनम् ।

आक्षेप इति । वक्तुमिष्टस्याप्यर्थस्य विशेषाभिधित्सया निषेधरूपः । पञ्चत्रिंशदिति । वाक्यप्रकाशतायामष्टादश पदप्रकाशत्वे सप्तदशेति ।

## सुधासागरः

कुडो घट इति भास्करादयः । श्रीवत्सलाञ्छनादयस्तु कुटो घट इत्याहुः ।

हे सखि कुडेन कर्त्रा तरलदृष्टिं त्वां विह्वलां वोढुमशक्तां दृष्ट्वा द्वारस्पर्शमिषेण आत्मा स्वस्वरूपं घटव्यपदेश्यः कम्बुग्रीवादिमान् मृण्मयो देह इति यावत् । गुरुः दुर्वह इति पातयित्वा विभिन्नः । अन्तर्भावितण्यर्थत्वात् स्फोटित इत्यर्थः ।

अत्र नदीकूले इत्यादि । आगतमुपपतिम् । चेतितमवगतम् । आश्वसिषि समाधानं करोषि स्पष्टमन्यत् ।

अत्रैवालङ्कारेणालङ्कारव्यक्तिं पदप्राधान्येनोदाहरति जोह्णेत्यादि । गीतिश्छन्दः । लक्षणमुक्तम् ।

ज्योत्स्नया मधुरसेन च वितीर्णतारुण्योत्सुकमनाः सा ।
वृद्धापि नवोढेव परवधूरहह हरति तव हृदयम् ॥

इति संस्कृतम् । स्पष्टम् । कस्याश्चित्परासक्तपतिं प्रत्युक्तिरियम् । वृद्धत्वं प्रौढोक्तिसिद्धं बोध्यम् । अत्र काव्यलिङ्गेनेत्यादि । सा परवधूत्वेन तव हृदयं हरतीति काव्यलिङ्गालंकारः । तेनाक्षेपो व्यज्यते । स्पष्टमन्यत् ।

इति पञ्चत्रिंशद्भेदा इति । वाक्यप्रकाश्याष्टादशपदप्रकाश्यसप्तदशभेदाभ्यां मिलित्वा पञ्चत्रिंशद्भेदत्वमित्यर्थः ।

**प्रबन्धेऽप्यर्थशक्तिभूः ॥१६॥**

यथा गृध्रगोमायुसंवादादौ—

अलं स्थित्वा श्मशानेऽस्मिन् गृध्रगोमायुसंकुले ।
कङ्कालबहुले घोरे सर्वप्राणिभयङ्करे ॥
न चेह जीवितः कश्चित् कालधर्ममुपागतः ।
प्रियो वा यदि वा द्वेष्यः प्राणिनां गतिरीदृशी ॥

इति दिवा प्रभवतो गृध्रस्य पुरुषविसर्जनपरमिदं वचनम् ।

अमुं कनकवर्णाभं बालमप्राप्तयौवनम् ।
गृध्रवाक्यात् कथं मूढास्त्यजध्वमविशङ्किताः ॥
आदित्योऽयं स्थितो मूढाः स्नेहं कुरुत साम्प्रतम् ।
बहुविघ्नो मुहूर्त्तोऽयं जीवेदपि कदाचन ॥

इति निशि विजृम्भमाणस्य गोमायोर्जनव्यावर्त्तननिष्ठं च वचनमिति प्रबन्ध एव प्रथते। अन्ये त्वेकादश भेदा ग्रन्थविस्तरभयान्नोदाहृताः । स्वयन्तु लक्षणतोऽनुसर्त्तव्याः । अपिशब्दात् पदवाक्ययोः ॥१६॥

---

## साहित्यचूडामणिः

प्रबन्धेऽपीति । यदाह—

अनुस्वानोपमात्मापि प्रभेदो य उदाहृतः ।
ध्वनेरस्य प्रबन्धेषु भासते सोऽपि केषुचित् ॥ ध्व० ३.१५ इति ।

कालधर्मो मरणम् । जीवितः प्रत्युज्जीवितः । दिवा प्रभवतः दिवसे बहिः-सञ्चारसमर्थस्य । पुरुषाणां व्यावर्तने तात्पर्यवद् वचनम् इष्टस्येवानिष्टस्यापि प्रत्यूहोऽस्तीति ।

## सुधासागरः

अर्थशक्तिमूलः पदवाक्ययोः प्रबन्धे च । प्रबन्धश्च सङ्घटितनानावाक्यसमुदायः । स च ग्रन्थरूपस्तदवान्तरप्रकरणरूपश्च । तत्र पदवाक्ययोरुदाहृतं, प्रबन्धे तूदाहरति— अलमित्यादिना । कङ्कालः शरीरास्थि, कालधर्मो मरणम् । स्पष्टमन्यत् ।

इति दिवेत्यादि । दिवा प्रभवतो रात्रावन्धत्वान्मृतावेक्षकजनसमुदायपरावर्त्तनाभिप्रायं वाक्यमेलकमित्यर्थः ।

## साहित्यचूडामणिः

प्रबन्ध एवेति । पद्यते गम्यतेऽनेनार्थ इति पदं सुप्तिङन्तम्, एकार्थपरः पदसमूहो वाक्यं, प्रबन्धान्तरवान्तरवाक्यं प्रकरणं, विधिनिषेधावगतिहेतुकं महावाक्यं प्रबन्धः, तत्रैव प्रकाशते इति । एतत् कविनिबद्धप्रौढोक्तिनिष्पन्ने वस्तुनि व्यङ्ग्यं वस्तु । अन्ये त्वेकादश भेदाः स्वयं लक्ष्यतः प्रेक्षणीयाः । तत्र वस्तुनालंकारो यथा—

इअ अथिरसामत्थे अण्णस्स वि परिअणम्मि को आसंघो ।
तत्थ वि णाम दहमुहो तस्स ठिओ एस पडिभडो मज्झ भुओ[१] ॥

इति सुग्रीववाक्यानन्तरं—

किं अण्णणा परिअणो परस्स ओ परिअणेण दे पडिवक्खो ।
सोहइ पत्थिज्जन्तो जिआहिमाणस्स किं जअस्सि वि ग्गहणं[२] ॥

इत्यादि जाम्बवद्वाक्यरूपे प्रबन्धे वस्तुना यो यो विमृश्यकारी स स जितकाशी, यो यश्च नैवं स नैवमित्यनुमानालङ्कारो व्यङ्ग्यः । अलङ्कारेण वस्तु यथा—

एकातपत्रं जगतः प्रभुत्वं नवं वयः कान्तमिदं वपुश्च ।
अल्पस्य हेतोर्बहु हातुमिच्छन् विचारमूढः प्रतिभासि मे त्वम् ॥

इति सिंहवाक्यानन्तरं,

क्षतात् किल त्रायत इत्युदग्रः क्षत्रस्य शब्दो भुवनेषु रूढः ।
राज्येन किं तद्विपरीतवृत्तेः प्राणैरुपक्रोशमलीमसैर्वा ॥

इत्यादिदिलीपवाक्यरूपे प्रबन्धे गुरुवचनानुपालनन्याससंरक्षणादिवैलक्षण्येन महापुरुषत्वलाभ इति काव्यलिङ्गेन पुत्रोत्पत्त्यादिकमैश्वर्यं प्रासङ्गिकं सिध्यतीति वस्तु प्रकाश्यते । अलंकारेणालङ्कारो यथा—

धूमज्योतिस्सलिलमरुतां सन्निपातः क्व मेघः
सन्देशार्थाः क्व पटुकरणैः प्राणिभिः प्रापणीयाः ।
इत्यौत्सुक्यादपरिगणयन् गुह्यकस्तं ययाचे
कामार्ता हि प्रणयकृपणाश्चेतनाचेतनेषु ॥

इत्यादिवचनान्तरं, शापान्तो मे भुजगशयनादुत्थिते शार्ङ्गपाणौ
मासानन्यान् गमय चतुरो लोचने मीलयित्वा ।
पश्चादावां विरहगुणितं तं तमात्माभिलाषं
निर्वेक्ष्यावः परिणतशरच्चन्द्रिकासु क्षपासु ॥

## सुधासागरः

आदित्योऽयमित्यादि । स्पष्टम् । इति निशीत्यादि । प्रबन्ध एव प्रथते—व्यञ्जकत्वेनेति शेषः । अन्ये त्वित्यादिवृत्तिः स्पष्टार्था ।

---

१ इत्यस्थिरसामर्थ्येऽन्यस्यापि परिजने कोऽध्यवसायः ।
तत्रापि नाम दशमुखस्तस्य स्थित एष प्रतिभटो मम भुजः ॥

२ किमात्मना परिजनः परस्योत परिजनेन ते प्रतिपक्षः ।
शोभते प्रार्थ्यमानो जिताभिमानस्य किं जयेऽपि ग्रहणम् ॥

## पदैकदेशरचनावर्णेष्वपि रसादयः ॥

### साहित्यचूडामणिः

इत्यादौ विरोधालङ्कारेण महापुरुषाणां कोपेऽपि न तद्भृत्या विपद्येरन्निति विशेषोक्ति-र्व्यज्यते । इत्थमन्यदुन्नेयम् ॥ १९ ॥

इतोऽप्यलक्ष्यक्रमभेदान् काँश्चित् प्रदर्शयति–पदेति ।

एकदेश अवयवाः, रचना संघटना, वर्णान्य (?) क्षराणि ।

सुप्तिङ्वचनसम्बन्धैस्तथा कारकशक्तिभिः ।
कृत्तद्धितसमासैश्च द्योत्योऽलक्ष्यक्रमः क्वचित् ॥ ध्व. ३.१६ ॥

इति ध्वनिदृशा बहुधा पदावयवाः । तत्र प्रत्ययात् पूर्वमुपादीयमाना प्रकृतिः, प्रकृतेः परं प्रयुज्यमानः प्रत्ययः । स्वादीनां प्रत्याहारः सुप्, तिबादीनां तिङ् । पूर्वत्र कारकाणि उत्तरत्र क्रिया । उक्तं हि—

'तिङ्सुबन्तचयो वाक्यं क्रिया वा कारकान्विते' -ति [अमरे],

शक्तिसंख्याविभागकृत् प्रत्ययविशेषो विभक्तिः । स्वतन्त्रो हेतुः कर्ता । क्रिययावाप्यं कर्म । साधकतमं करणम् । सम्यगस्मै प्रदीयत इति सम्प्रदानम् । उक्तं च—

अनिराकरणात् कर्तुस्त्यागाङ्गं कर्मणेप्सितम् ।
प्रेरणानुमतिभ्यां च लभते सम्प्रदानताम् ॥ [वा० प० ३.७.१२९] इति ।

अपायावधिरपादानम् । आधारोऽधिकरणम् । व्यतिरिक्तः शेषः । कारकाणां प्रवृत्तिविशेषः क्रिया, यां धात्वर्थमामनन्ति । क्रियैव क्रियापरिच्छेदहेतुः कालः । वचनमेकत्वादि । प्रथममध्यमोत्तमाः पुरुषाः । पृथगर्थानामेकार्थीभावः समासः । प्रथमानिर्दिष्टं समास उपसर्जनं, यत् पूर्वं निपात्यते । भावकारकाभि-धायिनो धातुप्रत्ययाः कृतः । भावकारकाभिसम्बन्धाभिधायित्वे सत्यधातुप्रत्यया-स्तद्धिताः । अलिङ्गसंख्या-शक्तीन्यव्ययानि । जात्यादि-प्रवृत्तिनिमित्तानुपग्राहिणोऽ-सत्त्वभूतार्थाभिधायिनो लिङ्गसंख्याशक्तिशून्या उच्चावचार्थनिपातिनो निपाताः । समासयोग्या निपाता एव कतिपये गतयः । गतिविशेषा एव प्रादय उपसर्गाः । क्रियाजन्यसम्बन्धावच्छेदहेतवः कर्मप्रवचनीयाः,

क्रियाविशेषजन्यानां सम्बन्धानां प्रकाशने ।
कर्मप्रवचनीयाः स्युर्निमित्तमवधारिताः ॥

### सुधासागरः

रसादयोऽलक्ष्यक्रमाः पदैकदेशरचनायां वर्णेषु । अपिशब्दात् प्रबन्धे । पदवाक्ययोस्तु पदेऽप्यन्ये इत्यनेनैव प्रतिपादिताः । पदं तावद् द्विविधम् । सुबन्तं तिङन्तं च । तदेकदेशो नामधातुस्वरूपप्रकृतिभागः, सुप्तिङ्स्वरूपो विभक्तिभागश्च, उपसर्गादि-रूपश्च । तत्र पदवाक्ययोरुदाहृतं प्राक् ।

तत्र प्रकृत्या यथा—

रइकेलिहिअणिअसणकरकिसलअरुद्धणअणजुअलस्स ।
रुद्दस्स तइअणअणं पव्वईपरिचुंबिअं जअइ ॥
[ रतिकेलिहृतनिवसनकरकिसलयरुद्धनयनयुगलस्य ।
रुद्रस्य तृतीयनयनं पार्वतीपरिचुम्बितं जयति ॥]

अत्र जयतीति न तु शोभते इत्यादि । समानेऽपि हि स्थगनव्यापारे लोकोत्तरेणैव व्यापारेणास्य पिधानमिति तदेवोत्कृष्टम् । यथा वा—

---

## साहित्यचूडामणिः

इत्युक्तत्वात् । अव्ययानि सुप्तिङन्तानुसारीणि विभक्तिप्रतिरूपकाणि । प्रकृतिप्रत्ययसमुदायस्य प्रकृत्यर्थविभागमुखेन भेदकं क्रियाविशेषणम् । शब्दस्य ताद्रूप्येणाभिधानमनुकरणम् । चादिनिपातद्योत्यः समुच्चयादिर्विशेष इति पदावयवप्रपञ्चः । तत्र यथासम्भवमुदाहरति । प्रकृत्या यथा—

रईति ।

रतिकेलिहृतनिवसनकरकिसलयरुद्धनयनयुगलस्य ।
रुद्रस्य तृतीयनयनं पार्वतीपरिचुम्बितं जयति ॥ इति ।

रतिकेलौ सम्भोगलीलायां हृतं निराकृतं निवसनं पार्वतीसम्बन्धि येन, करकिसलयाभ्यां पार्वतीसम्बन्धिभ्यां रुद्धमाच्छादितं नयनयुगलं सामान्यसिद्धं यस्येति । गमकत्वात् समासः । जयतीति धातुरूपायाः प्रकृतेर्व्यञ्जकत्वम् ।

प्रत्ययांशव्यतिरेकेण प्रकृत्यंशं परिवर्तयति नन्विति । शोभा हि नेत्रत्रयसाधारणी ।

## सुधासागरः

पदैकदेशादिपूदाह्रियते । तत्र धातुरूपप्रकृत्यात्मकपदैकदेशे रसादिव्यक्तिर्यथा—
रईति । गाथा छन्दः ।

रतिकेलिहृतनिवसनकरकिसलयरुद्धनयनयुगलस्य ।
रुद्रस्य तृतीयनयनं पार्वतीपरिचुम्बितं जयति ॥

इति संस्कृतम् । रतिकेलौ हृतं निवसनमर्थाद् गौरीसम्बन्धि येन, करकिसलयाभ्यां रुद्धमर्थात्तया नयनयुगलं यस्येति बहुव्रीहिद्वयानन्तरं कर्मधारयो बोध्यः ।

चण्डीदासभट्टाचार्यास्तु—रतिकेलिहृतनिवसनया करकिसलयाभ्यां रुद्धं नयनयुगलं यस्येति विग्रहमाहुः । तत्र निवसनेत्याकारलोपश्चिन्त्यः । उत्तरार्द्धं स्पष्टार्थम् ।

अत्र रतिव्यक्तौ जिधातुरूपप्रकृतेः प्राधान्यम् । यतः स्थगनव्यापारसाम्येऽपि अन्यनेत्रयोः कराभ्यां पिधानमस्य तु लोकोत्तरेण कर्मणेति तदेवोत्कृष्टं धन्यजीवितमिति

प्रेयान् सायमपाकृतः सशपथं पादानतः कान्तया
द्वित्राण्येव पदानि वासभवनाद् यावन्न यात्युन्मनाः ।
तावत् प्रत्युत पाणिसंपुटगलन्नीवीनिबन्धं धृतो
धावित्वैव कृतप्रणामकमहो प्रेम्णो विचित्रा गतिः ॥
—अत्र पदानीति न तु द्वाराणि ।

तिङ्सुपो यथा—

पथि पथि शुकचञ्चूचारुराभाङ्कुराणां
दिशि दिशि पवमानो वीरुधां लासकश्च ।
नरि नरि किरति द्राक् सायकान् पुष्पधन्वा
पुरि पुरि विनिवृत्ता मानिनीमानचर्चा ॥

अत्र किरतीति किरणस्य साध्यमानत्वम्, निवृत्तेति निवर्त्तनस्य सिद्धत्वं तिङा सुपा च । तत्रापि क्तप्रत्ययेनाऽतीतत्वं द्योत्यते ।

---

## साहित्यचूडामणिः

इदं हि सौभाग्यस्य सर्वस्वं यत् प्रेयस्या स्वयं प्रियतमस्य लोचनपरिचुम्बनमित्याह—लोकोत्तरे·ति ।

प्रकृत्या एव प्रातिपदिकरूपाया उदाहरति—प्रेयानिति । आत्मनेति तस्य सौम्यदर्शनतया दुस्त्यजत्वं द्योत्यते प्रत्युतेति उक्तवैपरीत्येन तत एव कृतप्रणामकम् । पदानीति । द्वाराद्युपादाने कालाक्षमत्वलक्षणमौत्सुक्यमनुद्धुरीकृतं स्यात् । तिङ्सुपोरिति । द्वयोरेकत्रेति यावत् ।

नरि नरि पुंसि पुंसि, पुरि पुरि नगरे नगरे, मानिनीमानचर्चा मनस्विनी-

## सुधासागरः

रत्युत्कर्षप्रयोजकमनया व्यज्यते । अत एव जयतीत्युक्तं न तु शोभत इत्यादि । तदेतद्वृत्तिकृदाह—अत्र जयतीत्यादि । हस्तादिना कृतमाच्छादनं लौकिकम् । परिचुम्बनं तु पिधानोपकरणं केनाऽप्यदृष्टत्वाद् रागातिशयहर्षलज्जादिसम्पद्द्वारा रतातिशयपोषणाच्च लोकोत्तरमिति बोध्यम् ।

मधुमतीकारास्तु—करादिना स्थगनमात्रं चुम्बनेन तु स्थगनं क्रीडा चेति द्वयमप्युपपन्नमिति लोकोत्तरत्वमित्याहुः ।

एवमग्रेऽपि प्रकृत्यादेः रसादिव्यञ्जने प्राधान्यं तत्तदर्थव्यञ्जकतया ऽवगन्तव्यम् । नामरूपतदेकदेशे तद्व्यक्तिमुदाहरति—यथा वेति—प्रेयानिति ।

शार्दूलविक्रीडितं छन्दः । वाच्योऽर्थः स्पष्टः । अत्र द्वारादिपदं परिहृत्य पदा-

## साहित्यचूडामणिः

मानाभ्यासः। सुप्त्वेन सिद्धत्वे प्रतिपाद्यमानेऽपि भूयो भूय इत्यधिकारविहितेन क्तप्रत्ययेन मानिनीमानस्यातीतत्वं द्योत्यते।

## सुधासागरः

नीत्युक्तं तेन द्वारपर्यन्तगमनेऽप्यसहिष्णुतयोत्कण्ठाऽतिशयो व्यज्यते। तदेतद्वृत्तिकृदाह—अत्र पदानीत्यादि।

मालिनी छन्दः। वसन्तवर्णनमिदम्। रम्भाङ्कुराः कदलीपुष्पोद्गमाः। लासको नर्त्तकः, चर्चा प्रसङ्गः। स्पष्टमन्यत्।

अत्र किरतीति तिङा किरणस्य साध्यत्वं तिङ्योगव्यञ्जनया साध्यतयैव धात्वर्थोपस्थितेः। निवृत्तेति सुप्प्रत्ययेन निवृत्तेः सिद्धत्वं सुब्योगव्यञ्जनया तथैव प्रकृत्यर्थप्रतीतेः। उक्तञ्च वैयाकरणभूषणे [वाक्यप० ३.८.४८]—

साध्यत्वेन क्रिया तत्र धातुरूपनिबन्धना।
सिद्धभावस्तु यस्तस्याः स घञादिनिबन्धनः॥

इति। तथा च क्रियान्तराकाङ्क्षाऽनुत्थापकतावच्छेदकरूपवत्त्वं कारकान्वयितावच्छेदकरूपवत्त्वं वा साध्यत्वम्। एतदेव चासत्त्वभूतत्वम्। क्रियान्तराकाङ्क्षोत्थापकतावच्छेदकरूपवत्त्वं कारकानन्वयितावच्छेदकरूपवत्त्वं वा सिद्धत्वम्। एतदेव च सत्त्वभूतत्वम्। अत एव 'असत्त्वभूतो भावश्च तिङ्पदैरभिधीयते' इत्यादि वैयाकरणैरुक्तम्। तत्र सिद्धत्वेऽपि क्तप्रत्ययेनातीतत्वं व्यज्यते इति किरणनिवृत्त्योः पौर्वापर्यविपर्ययरूपातिशयोक्त्यलङ्कारप्रकाशो रसोत्कर्षे पर्यवस्यति।

यत्तु लटा साध्यत्वं क्तप्रत्ययेन भूतत्वमिति व्याख्यानम्, तदयुक्तम्। तिङ्सुब्भ्यां साध्यत्वसिद्धत्वमभिधाय तत्रापि क्तप्रत्ययेनातीतत्वमित्यनेन वृत्तिव्याख्यानेन विरोधात्। किरतीत्यत्र कर्त्तरि प्रत्ययविधानात् कर्त्ता फलव्यापारयोर्धातुलभ्यत्वाद् व्यापाराश्रयो वा तिङ्वाच्यः। साध्यत्वं तु व्यङ्ग्यमेव। एवं निवृत्तेत्यत्रापि प्रातिपदिकार्थादिसुपो वाच्यत्वम्। सिद्धत्वं तु व्यङ्ग्यमेव। तथा क्तप्रत्ययस्यापि भावादिरर्थः अतीतत्वं तु व्यङ्ग्यमेवेति सुधीभिर्न विस्मर्त्तव्यम्।

अत्र तार्किकाः—प्रयोगसमवायिनस्तिबादयो न वाचकाः, तेषां बहुत्वादनन्तशक्तिकल्पनापत्तेः। शक्यतावच्छेदकत्वकल्पनाऽप्यनेकेषु स्यादिति गौरवञ्च। किन्तु तैः स्मृता आदेशिनो लकारादयो वाचकाः, लत्वस्य जातिरूपतया तस्या एव शक्ततावच्छेदकत्वौचित्यात्। न चैवं भूल इत्यतोऽपि बोधः स्यादिति वाच्यम्, तादृशबोधे पचतीत्यादिसमभिव्याहारस्यापि कारणत्वात्। अन्यथा भवतेत्यतोऽपि बोधापत्तेः, नचैवमपि तानजानतां बोधो न स्यादिति वाच्यम्, तेषां तिङ्क्ष्वेव शक्तिभ्रमाद्

यथा वा—

लिखन्नास्ते भूमिं बहिरवनतः प्राणदयितो
निराहाराः सख्यः सततरुदितोच्छूननयनाः ।
परित्यक्तं सर्वं हसितपठितं पञ्जरशुकै-
स्तवावस्था चेयं विसृज कठिने मानमधुना ॥

अत्र लिखन्निति न तु लिखतीति; तथा आस्ते इति, न त्वासित इति, अपितु प्रसादपर्यन्तमास्ते इति; भूमिमिति न तु भूमाविति; न हि बुद्धिपूर्वकमपरं किञ्चिल्लिखति इति तिङ्सुब्विभक्तीनां व्यङ्ग्यम् ।

---

## साहित्यचूडामणिः

लिखन्निति । बहिर्वेदिकादौ । हसितं, 'शुक ! पादमरे देश' इति न्यायात् । पठितं प्रसिद्धम् । इयमिति कण्ठगतप्राणा । अधुनालमतीतचिन्तया अद्यापि त्यज्यता-

## सुधासागरः

बोधात्, अपभ्रंशाद् बोधस्थले तथा कल्पनात् । अथैवं शत्रादिस्थले कर्तृकर्मणोर्वाच्यत्वं न स्यात्, स्याच्च कृतिमात्रं तथा, वाचकस्य स्थानिनो लकारस्य तिङादाविव तुल्यत्वादिति चेत् न । तत्र लकारस्य कृतिमात्रमर्थः, कर्त्ता च शानजर्थः 'कर्त्तरि कृत्' इत्यनुशासनात् । तथा च नोक्तदोषः, नामार्थयोरभेदानुरोधादस्तु वा तत्र कर्तैवार्थः । तस्मान्न श्रूयमाणानां वाचकतेत्याहुः ।

तत्र वदामः—स्मृतानां वाचकत्वेऽव्यवस्था । तथा हि राम इत्यत्र विसर्गेण किं सिः स्मर्त्तव्यः, किं वा सुः स्मर्त्तव्यः, आहोस्विद् रुः स्मर्त्तव्यः । अथ कालापिभिः सिः, पाणिनीयैः सुः, अपरैश्च रुः स्मर्त्तव्य इति वक्तव्यम् । तर्हि येनेदानीं सर्वमधीतं तस्य विनिगमनाविरहेण प्रतिबन्धः स्यादिति सम्प्रदायविदः ।

वस्तुतस्तु तेषां लिपिवदननुगमेऽपि क्षत्यभावः । तस्माल्लकारस्य वाचकत्वे लकारमविदुषो बोधो न स्यात्, वाचकाज्ञानात् । न च तिङ्क्ष्वेव शक्तिभ्रमात्ततो बाधः, तस्य भ्रमत्वे मानाभावात् । बहूनामानुपूर्व्याः शक्ततावच्छेदकत्वादिकल्पनापत्तिर्मानमिति चेन्न । तवापि पूर्वोक्तक्रमेणादेशिनो नानात्वेन गौरवस्य तुल्यत्वात् । यदतदर्थघटितशक्तेर्भ्रमस्य ब्रह्मणाऽप्यापादयितुमशक्यत्वाच्चेत्यनवस्था स्यात् ।

किञ्च व्यवहारस्तावच्छक्तिग्राहकशिरोमणित्वेन सर्वैर्मन्यते, स च श्रूयमाणतिङादिष्वेवेति त एव शक्तास्तथा च गौरवं प्रामाणिकमिति वादिनां वाचकत्वे न दोषलेशावकाश इति दिक् । तदेतत्सर्वमभिप्रेत्य श्रीवाग्देवतावतार आह—अत्रेत्यादि ।

अथ सुप्तिङ्विशेषेषूदाहरति—यथा वा लिखन्नेति ।

[ सम्बन्धस्य यथा— ]

गामारुहम्मि गामे वसामि णअरट्ठिइं ण जाणामि ।
णाअरिआणं पइणो हरेमि जा होमि सा होमि ॥
[ ग्रामरुहाऽस्मि ग्रामे वसामि नगरस्थितिं न जानामि ।
नागरिकाणां पतीन् हरामि या भवामि सा भवामि ॥]

—अत्र नागरिकाणामिति षष्ठ्याः ।

'रमणीयः क्षत्रियकुमार आसीद्' इति कालस्य ।

एषा हि भग्नमहेश्वरकार्मुकं दाशरथिं प्रति कुपितस्य भार्गवस्योक्तिः ।

---

## साहित्यचूडामणिः

मयं मानपिशाचः । न लिखतीति । लेखनमनूद्य प्रधानभूतमासनं विधत्त इति । शत्रा प्रकाश्यते, यत्र लटो न पाटवम् । आस्त इति लटि निर्बन्धमाह—नन्विति । तत्त्वे गतो न वेति सन्देहः स्यात् । भूमिमिति द्वितीयातात्पर्यमाह—न त्विति । द्वितीया-सप्तम्योः प्रतीतिभेदमाह—नहीति । भूमौ लिखन्नित्युक्तौ भूमेरधिकरणतयोप-लक्षिताया लेखनक्रियायाः कर्मावश्यंभावाच्च वृक्षं लिखन्नित्यादिवद् बुद्धिपूर्वकमाकार-विशेषं लिखन्नित्यर्थः स्यात् । स चानुचितः नैश्चिन्त्यद्योतकत्वात् । भूमिं लिख-न्निति चिन्ताकुलतया यत्किञ्चन रेखामात्रमालिखन्नास्ते इत्यभिव्यनक्ति ।

'गामारुहे'ति

ग्रामार्होऽस्मि ग्रामे वसामि नगरस्थितिं न जानामि ।
नागरिकाणां पतीन् हरामि या भवामि सा भवामि ॥ इति ।

## सुधासागरः

स्पष्टम् । शिखरिणी छन्दः । लक्षणमुक्तम् । अत्र लिखन्नित्युक्तं न तु लिख-तीति । तेन शत्रा लिखनस्याप्राधान्यमबुद्धिपूर्वकत्वरूपम् । आस्ते इत्युक्तं न त्वासीदिति । तेन तथाऽवस्थानस्य प्रसादपर्यन्तता तिङ्विभक्त्या व्यज्यते । यद्यपि शतृप्रत्ययः सुपः प्रकृतिरेव तथापि तिङादेशिलङ्विकृतितया तिङ्त्वेनैवोदाहृतः । भूमिमित्युक्तं न तु भूमाविति । तेन बुद्धिपूर्वकं भूमौ न किञ्चिल्लिख्यते इति सुब्विभक्त्या व्यज्यते । तदाह श्रीवृत्तिकारः अत्र लिखन्नित्यादि ।

सम्बन्धस्य व्यञ्जकत्वमुदाहरति—'गामारुहे'-ति ।

गाथा छन्दः ।

ग्रामरुहाऽस्मि ग्रामे वसामि नगरस्थितिं न जानामि ।
नागरिकाणां पतीन् हरामि या भवामि सा भवामि ॥

वचनस्य यथा—

ताणँ गुणग्गहणाणं ताणुक्कंठाणं तस्स पेम्मस्स ।
ताणँ भणिआणं सुन्दर, एरिसिअं जाअमवसाणं ॥
[ तेषां गुणग्रहणानां तासामुत्कण्ठानां तस्य प्रेम्णः ।
तासां भणितीनां सुन्दर, ईदृशं जातमवसानम् ॥ ]

—अत्र गुणग्रहणादीनां बहुत्वं प्रेम्णश्चैकत्वं द्योत्यते ।

---

## साहित्यचूडामणिः

या या नगरसम्बन्धिनी सा सा ग्रामवर्तिन्यापि मया हृतभर्तृका क्रियते ।

षडर्थास्तिङन्तेन प्रकाश्यन्ते—क्रिया कालः उपग्रहः साधनं संख्या पुरुषश्चेति । तत्रादिमं त्रयं प्रकृतिरभिधत्ते, अपरं प्रत्यय इति विवेकः । तत्र कालमुदाहरति—रमणीय इति । प्रकरणं शोधयति—एषा हीति । आसीदिति लङा मत्क्रोधगोचरस्य क्षत्रियवटोरित उपरि सद्भावस्याश्रद्धेयत्वमिति ध्वन्यते ।

'ताणे'ति ।

तेषां गुणग्रहणानां तासामुत्कण्ठानां तस्य प्रेम्णः ।
तेषां भणितानां सुन्दरेदृशं जातमवसानम् ॥ इति ।

बहुत्वमिति । गृह्यमाणानां गुणानां बाहुल्यादेकस्यापि बहुधा गृह्यमाणत्वाच्च । एकत्वमिति । प्रेम्णः सर्वकालमैकरूप्यात् ।

## सुधासागरः

इति संस्कृतम् । वृषभारूढा नागरीभिः ग्रामीणेत्युपहसिता काचित्कुलटा ताः प्रत्याह । नगरस्थितिर्नगरमर्यादा वैदग्धी । स्पष्टमन्यत् ।

अत्रेत्यादि । नागरिकाणामिति षष्ठी पतिपदार्थे तादृशकलाभिज्ञतादिरूपमुत्कर्षं प्रकाशयतीत्यर्थः ।

एवञ्च यत्तावत् रविभट्टाचार्यप्रभृतिभिर्व्याख्यातम्—नन्वनादरः षष्ठीवाच्य एव, तत्कथं व्यङ्ग्य इति चेन्न । शैषिकषष्ठ्या एव वक्त्रादिवैशिष्ट्यसहकारेणानादरव्यञ्जकत्वादिति ।

यच्च भास्करभट्टाचार्यप्रमुखैर्व्याख्यातम्—षष्ठ्या अनादरो व्यङ्ग्य इत्यर्थः । ननु 'षष्ठी चानादरे' इत्यनुशासनात्कथमनादरस्य व्यङ्ग्यत्वमिति चेत् उच्यते । ताः पश्यन्तीरनादृत्येति व्यज्यते इतीति ।

यच्च चण्डीदासभट्टाचार्यादिभिर्व्याख्यातम्—नागरिकानित्यपहाय तत्पतीनित्युक्तौ तेष्वनादरः प्रतीयत एव तत्र व्यञ्जनैवेत्यर्थ इति ।

श्रीवत्सलाञ्छनभट्टाचार्यादिभिर्व्याख्यातम्—अनादरो व्यङ्ग्यो वाच्यो वा

पुरुषव्यत्ययस्य यथा—

रे रे चञ्चललोचनाञ्चितरुचे, चेतः, प्रमुच्य स्थिर-
प्रमाणं महिमानमेणनयनामालोक्य किं नृत्यसि ।
किं मन्ये विहरिष्यसे बत हतां मुञ्चान्तराशामिमा-
मेषा कण्ठतटे कृता खलु शिला संसारवारान्निधौ ॥

—अत्र प्रहासः ।

---

## साहित्यचूडामणिः

व्यत्ययरूपवैचित्र्यशालिनः प्रथममध्यमादेः पुरुषस्य यथा—रे रे इति । चेत

## सुधासागरः

स्यादित्यत्र नाग्रहः कर्त्तव्यः, किन्तु षष्ठ्याऽनादरं प्रत्याय्य रसस्यैव व्यङ्ग्यत्वम् । अत एव ग्रन्थकृता पदैकदेशेत्यादिना रसादेरेव व्यङ्ग्यत्वं प्रतिज्ञातमिति । तत्सर्वं सहृदयैर्नादरणीयम् ।

रमणीयः क्षत्रियकुमार आसीदिति कालस्येत्यादि । कालस्य—अतीतकाले विहितस्य लङ्प्रत्ययस्येति भावः । अन्यथा पदैकदेशव्यञ्जकप्रस्तावे कालव्यञ्जकत्वोपदर्शनमसङ्गतं स्यात् ।

अत एव प्रदीपकारैरुक्तम् 'रमणीयः क्षत्रियकुमारः आसीदि'-त्यत्र लङाऽतीतकालविहितेनाचिरं तदीयहिंसायाः सुकरत्वं व्यञ्जयता प्राधान्येन धूर्जटिधनुर्भङ्गजन्मा भार्गवक्रोधः प्रकृष्यत इति ।

नन्वेवं लङ् इत्येव किं नोक्तमिति चेत् न, । प्रत्ययान्तरस्याऽप्यतीतकाले विधानात् । तर्हि प्रत्ययस्येत्येवोच्यतामिति चेत् न । तथापि प्रकृतप्रत्ययस्यैव व्यञ्जकत्वं सम्भाव्येत, कालस्येत्युक्तौ तु सर्वस्याप्यतीतकालविहितप्रत्ययस्यैतादृशविषये व्यञ्जकत्वं समायातीति वाग्देवतावतारोक्तं रमणीयमेवेति सुधीभिर्ध्येयम् । अत्र रौद्रो रसः ।

वचनविशेषप्राधान्येन विप्रलम्भव्यञ्जकत्वमुदाहरति—'ताणमि'-ति ।

जघनविपुला छन्दः ।

तेषां गुणग्रहणानां तासामुत्कण्ठानां तस्य प्रेम्णः ।
तेषां भणितानां सुन्दर ईदृशं जातमवसानम् ॥

इति संस्कृतम् । स्पष्टम् । अत्र गुणग्रहणादीनां प्रेमहेतूनां नानाप्रकारकत्वेऽपि कार्यं प्रेमैकजातीयमेव न कदाचिदन्यथाभावं प्राप्तमिति बहुवचनैकवचनाभ्यां व्यज्यते । तदेतदाह वृत्तिकारः—अत्र गुणेत्यादि ।

पुरुषव्यत्ययस्य हास्यरसव्यञ्जकत्वमुदाहरति—'रे रे' इति ।

पूर्वनिपातस्य यथा—

येषां दोर्बलमेव दुर्बलतया ते सम्मतास्तैरपि
प्रायः केवलनीतिरीतिशरणैः कार्यं किमुर्वीश्वरैः ।
ये क्ष्माशक्र, पुनः पराक्रमनयस्वीकारकान्तक्रमा-
स्ते स्युर्नैव भवादृशास्त्रिजगति द्वित्राः पवित्राः परम् ॥

—अत्र पराक्रमस्य प्राधान्यमवगम्यते ।

---

## साहित्यचूडामणिः

इति संबुद्धिः। स्थिरप्रेमाणम् अक्षयानुग्रहं महिमानं सर्वभावस्वभावतया महत्त्वभूतं परमेश्वरं प्रमुच्य। किं नृत्यसि चापलमाविष्करोषि, विहरिष्यामीति किं मन्यसे। अयमत्र पुरुषव्यत्ययः यदुत्तमे मध्यमो मध्यमे चोत्तम इति।

व्यङ्ग्यार्थमाह—प्रहास इति। 'प्रहासे च' [१.४.१०६] त्यादिसूत्रात्।

## सुधासागरः

शार्दूलविक्रीडितं छन्दः। कश्चिद् विरक्तः सुन्दरीदर्शनेन क्षुभितं स्वस्वान्त-मुपहसति—रे रे चञ्चलाभ्यां लोचनाभ्यामञ्चिताऽऽविष्कृता रुचिरङ्गनाभिलाषो येन स तादृशेति सम्बोधनविशेषणम्, एवंविधं चेतः, स्थिरं प्रेम यत्र तादृशं महि-मानमात्मावलोकनप्रतिष्ठां प्रमुच्य प्रकर्षेण त्यक्त्वा, एणनयनां मृगाक्षीमालोक्य किं नृत्यसि किमर्थं नानाचेष्टां करोषि। त्वं मन्ये संसारवारांनिधौ जगदम्बुधौ मृगाक्ष्याऽहं विहरिष्यसे, हतामनर्थदायिनीमिमामन्तराशां गूढसुखलिप्सां मुञ्च त्यज। खलु निश्चयेन एषा हरिणाक्षी संसारवारांनिधौ रिरंसया स्थितस्येति शेषः, सरागस्येति यावत्, कण्ठदेशे गलप्रदेशे, कृता संसारप्रवर्त्तकदैवेनाधःपतनाय निबद्धा, शिला विपुलपाषाणः। अपमृत्युहेतुरेवेयमेणनयनेति भावः।

अत्र 'त्वम्' इति युष्मद्युपपदे 'मन्यसे' इति मध्यमपुरुषस्य योग्यत्वेऽपि 'मन्ये' इत्युत्तमपुरुषः 'अहम्' इत्यस्मद्युपपदे सति 'विहरिष्ये' इत्युत्तमपुरुषस्य योग्यत्वेऽपि 'विहरिष्यसे' इति मध्यमपुरुषः। एवं मध्यमोत्तमयोर्विपर्ययः प्रहासम-भिव्यनक्ति।

ननु 'प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च' इति सूत्रेण पुरुषव्यत्यय-विधानात् प्रहासो वाच्य एवेति चेत्। उच्यते। अभिधा हि पदशक्तिरिति निर्विवादम्। तत्र प्रहासे तावन्नोत्तमपुरुषस्याभिधा ततस्तदप्रतीतेः। न चोत्तम-पुरुषमात्रं पदम्। न वा नैयायिकरीत्या प्रहासो वाक्यार्थ इति शङ्क्यम्, पदार्थ-

विभक्तिविशेषस्य यथा—

प्रधनाध्वनि धीरधनुर्ध्वनिभृति विधुरैरयोधि तव दिवसम् ।
दिवसेन तु नरप, भवानयुद्ध विधिसिद्धसाधुवादपदम् ॥

—अत्र दिवसेनेत्यपवर्गतृतीया फलप्राप्तिं द्योतयति ।

भूयो भूयः सविधनगरीरथ्यया पर्यटन्तं
दृष्ट्वा दृष्ट्वा भवनवलभीतुङ्गवातायनस्था ।
साक्षात्कामं नवमिव रतिर्मालती माधवं यद्
गाढोत्कण्ठालुलितललितैरङ्गकैस्ताम्यतीति ॥

—अत्रानुकम्पावृत्तेः करूपतद्धितस्य ।

---

## साहित्यचूडामणिः

येषामिति । दोर्बलमेव न तु नीतिबलम् । केवलेति । दोर्बलशून्यनीतिशरणैः । क्ष्माशक्र ! भूपुरन्दर ! भवादृशा न सन्त्येव । नियोगे लिङ् । यदि सन्ति द्वौ त्रयो वा । नयस्य पूर्वनिपातौचित्यम् अल्पाच्तरत्वात्, तथापि पराक्रमस्य क्षत्रियविषये प्राधान्याद् 'अभ्यर्हितं पूर्वमि'ति पूर्वनिपातः । विशेषलक्षणयोगाद् व्यत्यस्तसामान्यलक्षणत्वं विभक्तेर्विशेषः ।

दिवसेनायुद्धेति तृतीयया अपवर्गः फलप्राप्तिरित्यर्थः । एवं दिवसमयोधीति 'कालाध्वनोरत्यन्तसंयोग' इति द्वितीयया विधुराणां क्लेशबाहुल्यमुन्मील्यते ।

अनुकम्पायां वृत्तिर्विधानं यस्य करूपस्य तद्धितस्य, मालत्यवस्थाद्योतकत्वात् ।

## सुधासागरः

संसर्गरूपताविरहात् । किन्तु प्रहासे विवक्षितेऽनुशिष्टेन पुरुषव्यत्ययेन स प्रतीयते इति दिक् । पदैकदेशत्वं च तद्धर्मवत्त्वात् । एवं च पूर्वनिपातादयोऽपि पदैकदेशधर्मत्वात् पदैकदेशा एव गण्यन्ते ।

तत्र पूर्वनिपातस्य व्यञ्जकत्वमुदाहरति—'येषामि'-ति ।

शार्दूलविक्रीडितं छन्दः । बल-नयोभयविशिष्टा एव राजानः समर्था इत्यभिप्रेत्याह—येषां दोर्बलमेव, एवकारेणान्यव्यवच्छेदः, ते राजानः प्रायो दुर्बलतयाऽसम्मताः अप्रयोजकाः, इतरांशभागिनोऽप्यप्रयोजका एवेत्याह ये तदितरपक्षाङ्गीकारिणस्तैरपि केवलनीतिरीतिशरणैरुर्वीश्वरैः किं कार्यम्, न किमपीत्यर्थः, हे क्ष्माशक्र पृथ्वीन्द्र ये पुनः पराक्रमनययोः स्वीकारेण कान्तक्रमाः शोभनाचारास्ते भवादृशाः पवित्राः प्रशस्तास्त्रिजगति लोकत्रये द्वित्राः द्वौ वा त्रयो वा नैव स्युः । भूलोके द्वितीयोऽसम्भावित एवेति भावः ।

परिच्छेदातीतः सकलवचनानामविषयः
पुनर्जन्मन्यस्मिन्ननुभवपथं यो न गतवान् ।
विवेकप्रध्वंसादुपचित-महामोह-गहनो
विकारः कोऽप्यन्तर्जडयति च तापं च कुरुते ॥

—अत्र प्रशब्दस्योपसर्गस्य ।

---

## साहित्यचूडामणिः

प्रशब्दस्येति । संस्कारपर्यन्तं विवेकप्रणाशस्य विवक्षितत्वात् ।

## सुधासागरः

नन्वत्र पूर्वनिपातस्य कथमलक्ष्यक्रमव्यञ्जकतेति चेत् । उच्यते । पराक्रमनयेत्यत्र नयस्याल्पाच्तरत्वेन पूर्वनिपाते प्राप्ते पराक्रमस्य तथाभावोऽभ्यर्हितत्वं द्योतयति । तथा च पराक्रमप्राधान्येन नयस्वीकारो नृपोत्कर्षद्वारा तद्विषयकरतिं पुष्णातीति भावव्यञ्जकत्वं निर्बाधम् । एतत्सर्वमभिप्रेत्य वृत्तिकृतोक्तम्—अत्र पराक्रमस्येत्यादि ।

उपपदविभक्तिविशेषस्य व्यञ्जकत्वमुदाहरति—'प्रधने'ति । गीतिश्छन्दः ।

हे नृप धीराणां धनुषां ध्वनिं बिभर्त्तीति तथाभूते । प्रधनाध्वनि प्रधनं युद्धमेवाध्वा प्रवेशनिस्सरणहेतुत्वात्, तस्मिन् । तव विधुरैर्भवद्वैरिभिर्दिवसमभिव्याप्याऽयोधि निरन्तरं प्रहृतम् । भवांस्तु दिवसेन विधिसिद्धमनाहार्यम्, जयाज्जातमिति यावत्, साधुवादपदम् साधु साध्विति वादस्य पदं स्थानं यथा स्यात्तथा अयुद्ध युद्धं कृतवान् इत्यर्थः ।

अत्र भवान् दिवसेनायुद्धेत्यपवर्गे तृतीया । अपवर्गश्च फलप्राप्तौ सत्यां क्रियापरित्यागः । अतो भवत्पदार्थस्य युद्धरूपक्रियायाः यत्फलं विजयस्तत्प्राप्तिस्तृतीयया द्योत्यते । यस्तु युद्धविधीत्यादिक्रियाविशेषणमिति व्याख्यातवान्, स छन्दोभङ्गमपि नाज्ञासीत् ।

प्रत्ययरूपस्य प्रकृत्येकदेशस्य व्यञ्जकत्वमुदाहरति—'भूयो भूय' इति । मन्दाक्रान्ता छन्दः । लक्षणमुक्तम् । गाढोत्कण्ठया ललितेभ्योऽपि ललितैः सुन्दरतरैः, ललितलुलितैरिति पाठे ललितं सुन्दरं लुलितं परिवर्त्तनं येषां तथा भूतैरङ्गकैरित्यर्थः । स्पष्टमन्यत् । अत्रानुकम्पार्थक-कस्वरूपतद्धितव्यङ्ग्येन दुःखक्षमत्वानधिकारिणा सौकुमार्येण विप्रलम्भः परिपोष्यते ।

यत्तु मधुमतीकारैर्व्याख्यातम्- अत्राल्पार्थे कन्, नत्वनुकम्पायां व्यङ्ग्यत्वाभिधानविरोधादिति, यच्चैतदनुसृत्य प्रदीपकारैर्व्याख्यातम्—अत्राङ्गकैरेति कस्वरूपेतेनाल्पार्थकेनानुकम्पातिशयो व्यज्यते इति, तदत्रानुकम्पावृत्तेः करूपतद्धितस्येति स्वरसभङ्गादुपेक्ष्यम् ।

कृतं च गर्वाभिमुखं मनस्त्वया
किमन्यदेवं निहताश्च नो द्विषः ।
तमांसि तिष्ठन्ति हि तावदंशुमान्
न यावदायात्युदयाद्रिमौलिताम् ॥

—अत्र तुल्योगिताद्योतकस्य 'च' इति निपातस्य ।

रामोऽसौ भुवनेषु विक्रमगुणैः प्राप्तः प्रसिद्धिं परा-
मस्मद्भाग्यविपर्ययाद् यदिपरं देवो न जानाति तम् ।
वन्दीवैष यशांसि गायति मरुद् यस्यैकबाणाहति-
श्रेणीभूतविशालतालविवरोद्गीर्णैः स्वरैः सप्तभिः ॥

अत्रासाविति भुवनेष्विति गुणैरिति सर्वनामप्रातिपदिकवचनानां न त्वदिति न मदिति अपि तु अस्मदित्यस्य सर्वाक्षेपिणः, भाग्यविपर्यया-दित्यन्यथासंपत्तिमुखेन न त्वभावमुखेनाभिधानस्य ।

---

## साहित्यचूडामणिः

कृतं चेति । यत्रैव च क्षणे वर्णनीयमनसो गर्वाभिमुख्यं तत्रैव सर्वशत्रुविनाश इत्येवमर्थद्योतकस्य च इति निपातस्य । निपातानां वाचकत्वाभावेन द्योतकत्वात् पदैकदेशप्रायत्वमिति यावत् । तत्र च द्वित्राणामुपसर्गाणां निपातानां च प्रयोगो न्याय्यः नाधिकानाम् । तत्रोपसर्गाणां यथा—प्रभ्रश्यत्युत्तरीयत्विषि तमसि समुद्वीक्ष्य वीता-वृतीन् द्रागिति सम्यगुच्चैर्विशेषेणेक्षणमिति विवक्षणात् । यथा वा मनुष्यवृत्त्या समुपाचरन्तम्' इति । सम्यगुपांशवासमन्ताच्चरन्तमिति विवक्षणात् । निपातानां यथा—'हा धिक्कष्टमहो क यामि शरणमिति ।

## सुधासागरः

उपसर्गरूपस्य तदेकदेशस्य व्यञ्जकत्वमुदाहरति—परिच्छेदे'-ति ।

शिखरिणीछन्दः । सकलानि शक्तलक्षकव्यञ्जकानि । पुनरन्यदा । स्पष्टमन्यत् ।

अत्र प्रध्वंसादिति प्रशब्दः प्रकृत्येकदेशो विवेकसमूलोन्मूलनस्वरूपं ध्वंसप्रकर्षं द्योतयति, उपसर्गाणामवाचकत्वात् । तदेतद् वृत्तिकृदाह—अत्र प्रशब्दस्येत्यादि ।

निपातरूपपदैकदेशस्य व्यञ्जकत्वमुदाहरति—'कृतं चे'ति ।

स्पष्टम् । वंशस्थं वृत्तम् । लक्षणमुक्तं प्राक् ।

अत्र चद्वयेन मनोगर्वाभिमुखीकरणशत्रुहननयोरेककालतारूपः समुच्चयो द्योत्यते । यद्यपि चेति भिन्नमेव पदं न त्वन्यस्यैकदेशस्तथापि केवलस्य तस्यासाधु-त्वात्पदैकदेशत्वोपचारेणोदाहरणम् । अत एवोक्तं भोजराजेनोपमाप्रकरणे—'नहीवादेः सार्थकत्वेऽपि पृथक्पदतामनुशास्तीति' । एतेन तिङ्समभिव्याहृता उपसर्गा अपि व्याख्याताः ।

तरुणिमनि कलयति कलामनुमदनधनुर्भ्रुवोः पठत्यग्रे।
अधिवसति सकलललनामौलिमियं चकितहरिणचलनयना ॥

अत्र इमनिजव्ययीभावकर्मभूताधाराणां स्वरूपस्य। तरुणत्वे इति, धनुषः समीप इति, मौलौ वसतीति, त्वादिभिस्तुल्ये एषां वाचकत्वे अस्ति कश्चित् स्वरूपस्य विशेषो यश्चमत्कारकारी। स एव व्यञ्जकत्वं प्राप्नोति।

एवमन्येषामपि बोद्धव्यम्।

---

## साहित्यचूडामणिः

राम इति। असाविति रामस्य प्रसिद्धत्वमद्वितीयत्वं च ध्वन्यते। भुवनेष्विति सार्वलौकिकप्रसिद्धत्वम्। गुणैरिति न पुनः कृत्रिमवैतालिकसंकेतेन। गुणानां बहुमुखत्वं प्रथमानत्वं बहुवचनेन ध्वन्यते।

असाविति सर्वनाम्नस्तद्वचनस्यैकत्वस्य च। भुवनेषु गुणैरिति प्रातिपदिकयोस्तद्वचनयोर्बहुवचनयोश्च। सम्भूय सर्वेषां बहुवचनम्। सर्वाक्षेपणः एकैकव्यतिरेकात् सर्वराक्षसक्रोडीकरणक्षमस्य। भाग्यविपर्ययादिति। नखल्वत्र भाग्यस्य प्रागभावः, अपितु बुद्धिपूर्वकमागृहीतैरस्माभिः प्रध्वंसः प्रस्तूयते। यदि मैथिली प्रत्यर्पणादाग्रहमत्यक्ष्याम सुखेनस्तदभाविष्यामेत्याह—अन्यथेति। मुखमुपायः। अभिधानस्यैवंविधस्य निर्देशस्य व्यञ्जकत्वम्।

अथ विप्रतिपत्तिविषयमुदाहरति—तरुणिमनीति। एतेषां स्वरूपश्रवणमेव

## सुधासागरः

अथ बहूनां व्यञ्जकत्वमुदाहरति—'रामोऽसा'-विति।

शार्दूलविक्रीडितं छन्दः रावणामात्यस्येयमुक्तिः। वाच्यार्थः स्पष्टः।

अत्रासाविति-निरन्तरभावनावशेन प्रत्यक्षायमाण इति सर्वनाम्नः, भुवनेष्विति न तु देशेष्विति भुवने वेति भुवनरूपप्रातिपदिकस्य बहुवचनस्य च, विक्रमगुणैरिति न तु गुणेन दर्पेणेति प्रातिपदिकवचनयोर्व्यञ्जकत्वम्।

किञ्च अस्मद्भाग्येत्यत्र न त्वद्भाग्येति न वा मद्भाग्येति कृतम्, तेनास्मदित्यस्य बहुवचनसिद्धतया सर्वापेक्षकत्वम्। तथा भाग्यविपर्ययादित्यन्यथासम्पत्तिमुखेनोक्तं न त्वभाग्यादित्यभाग्यमुखेन, अतस्तथाविधानेनाभाग्यविरहेऽपि भाग्यान्येव तादृशत्वेन परिणतानीति व्यज्यते। तदेतद्वृत्तिकारैरत्रासावित्यादिनोक्तम्।

नृसिंहठक्कुरास्तु—भाग्यपरिवृत्तौ सम्पद्विपर्ययः, अत एवोक्तम्—अन्यथासम्पत्तिमुखेनेति। सम्पत्तेरन्यथात्वमुखेनेत्यर्थः। अभाग्यविधाने सम्पत्तिसामान्याभावः प्रतीयेत न तु ध्वंसः, न चात्र सामान्याभावो विवक्षितः, तस्यासंभवादित्याहुः।

बहुव्यञ्जकत्वमन्यत्रापि दर्शयति—'तरुणिमनी'-ति।

## साहित्यचूडामणिः

शुष्कशास्त्रशब्दविलक्षणं रसाभिव्यञ्जकम्। तरुणत्व इति त्वान्तादिमनिजन्तस्य, मदनधनुषः समीप इति वाक्यादव्ययीभावस्य, मौलौ वसतीत्यधिकरणप्रयोगान्मौलिमिति कर्मप्रयोगस्य च चमत्कारकारित्वम्। अत्र महिमा विप्रतिपद्यते। तेन हि विधेयाविमर्शे निर्णीतम्—'अव्ययीभावे यथा—'सा दयितस्य समीपे नावस्थातुं न चलितुमुत्सहते' इत्यत्र दयितस्येति संबन्धितया यत् समीपस्य विशेषणं तत् तस्य सुकृतशतलभ्यतालक्षणमुत्कर्षमादधदुद्दीपने पर्यवस्यतीति प्राधान्येन विवक्षितत्वान्नोपदयितमिति समीपार्थेनाव्ययेन सह समासेऽवसादं गमितमि'ति। तदिदमाग्रहाधिक्यमित्याकूतवानाह—अस्तीति। अस्मादव्ययीभावबन्धच्छाया सहृदयैरुपलाल्यते। एवमिति। तत्रोपग्रहस्य यथा ममैव—

> अभुञ्जत भुवं प्राञ्चो देव! बाहुर्भुनक्ति ते।
> राजवत्यो यतस्तेषां राजन्वत्यस्तु ते प्रजाः॥ इति।

अन्ये राजानो भुवं करादानादभ्यवहरन्ति वर्णनीयस्तु पालयति 'भुजोऽनवने' इत्यात्मनेपदविधानात्। एवं राजवत्योऽन्येषां प्रजाः वर्णनीयस्य तु राजन्वत्यः। 'राजन्वान् सौराज्ये' इति सूत्रितत्वात्। इत्थं च—

> यस्त्वलक्ष्यक्रमव्यङ्ग्यो ध्वनिर्वर्णपदादिषु।
> वाक्ये संघटनायां च प्रबन्धेऽपि स दीप्यते॥ ध्व० ३.२॥

इति ध्वनिदृशा पदैकदेशव्यञ्जकत्वमुक्तम्।

## सुधासागरः

गीतिश्छन्दः। लक्षणमुक्तं प्राक्। चकितहरिणचलनयना त्रस्तमृगचञ्चलनेत्रा। इयं किशोरी तरुणिमनि अभिनवयौवने कलामुपचयं कलयत्युपगच्छति सति भ्रुवोरग्रे भ्रूलताग्रे शिष्यभूते अनुमदनधनुः 'मदनधनुषः कामचापस्य गुरुभूतस्य समीपे पठति सति सकलललनामौलिमधिवसति। 'अधिशीङ्स्थासां कर्म' इत्याधारस्य कर्मत्वम्। सर्वसुन्दरीशिरसि तिष्ठति, स्त्रीमात्रचूडामणित्वं प्राप्नोतीत्यर्थः।

अत्र तरुणिमनीति इमनिचस्तरुणत्वपदेन, अनुमदनधनुरित्यव्ययीभावस्य धनुःसमीप इत्यनेन, मौलिमधिवसतीति कर्मीभूताधारस्य च मौलौ वसतीत्यनेन तौल्येऽपि वाचकत्वेऽस्ति कश्चित्स्वरूपस्य विशेषो यश्चमत्कारकारी स एव व्यञ्जकः। तत्र त्वशब्देन प्रकृत्यर्थस्य प्रौढत्वं व्यज्यते। इमनिचा तु तद्व्यतिरेकाञ्चत्वम्, धनुःसमीप इत्यत्र धनुषोऽत्यन्तं गुणीभावः, अव्ययीभावे तु पूर्वपदार्थस्य प्राधान्येऽप्युत्तरपदार्थस्य किञ्चिदेवाप्राधान्यम्, कर्मभूताधारस्थले तु व्याप्तिरवगम्यते। आधारत्वं तु एकदेशवृत्तितयाऽपि सम्भवतीत्यवसेयम्।

**वर्णरचनानां व्यञ्जकत्वं गुणस्वरूपनिरूपणे उदाहरिष्यते[१]।**

**अपिशब्दात् प्रबन्धेषु नाटकादिषु।**

**एवं रसादीनां पूर्वगणितभेदाभ्यां[२] सह षड् भेदाः।**

**भेदास्तदेकपञ्चाशत्।**

**व्याख्याताः[३]।**

## साहित्यचूडामणिः

रचनावर्णयोस्तु कथमित्यत्राह—वर्णेति। गुणनिरूपणस्य वर्णरचनाविचारव्यतिरेकेण कर्तुमशक्यत्वादष्टम उल्लासे तत्प्रपञ्चनौचित्यम्। अथासाधारणानलक्ष्यक्रमभेदान् परिगणयति—एवमिति। पूर्वेति। पदवाक्यविषयाभ्याम्। षडिति। वर्णपदैकदेशपदवाक्यप्रबन्धसंघटनासु विद्यमानत्वात्।

अथोक्तान् ध्वनिभेदानुपसंहरति—भेदा इति। पञ्चत्रिंशदनन्तरं प्रबन्धविषयस्य वाच्यशक्तिमूलस्य द्वादश पदैकदेशरचनावर्णप्रबन्धविषयतया रसादेर्भूयोऽपि चत्वार इति षोडश, आहत्यैकपञ्चाशत्।

## सुधासागरः

वर्णरचनयोर्व्यञ्जकत्वं गुणस्वरूपनिरूपणे उदाहरिष्यते। प्रबन्धे तु नाटकादौ रसादिव्यञ्जकत्वं द्रष्टव्यम्। एतत्सर्वमभिप्रेत्य श्रीवाग्देवतावतार आह—अत्रेमनिजव्ययीभावेत्यादि।

यत्तु पूर्वं प्रबन्धशब्देन सङ्घटितावान्तरवाक्यसमूहोऽभिहितः, इदानीं तु सङ्घटितमहावाक्यमित्यपौनरुक्त्यमिति कश्चिदाह—तदज्ञानात्। पूर्वं ह्यर्थशक्तिमूलमात्रस्य प्रबन्धविषयत्वमुक्तम्, अत्र त्वसंलक्ष्यक्रमव्यङ्ग्यस्येति पौनरुक्त्याभावात्।

एवं रसादीनामित्यादि। पूर्वगणितभेदाभ्यां वाक्यपदप्रकाश्याभ्याम्। षडितिवाक्य-पद-पदैकदेश-वचन-रचना-प्रबन्धव्यङ्ग्यभेदाद् रसादीनामलक्ष्यक्रमाणां षड् भेदा भवन्तीत्यर्थः।

---

[१] अष्टम उल्लासे ९-११-कारिकोदाहरणैः।

[२] पूर्वं ४।१९—कारिकया गणिताभ्यां, रसप्रकरणे 'शून्यं वासगृहमि'-त्यादिभिः ३५-पृष्ठ-गताभ्यां 'लावण्ये'-त्यादिना 'मुग्धे मुग्धतये'-त्यादिना च क्रमाद् वाक्य-पद-प्रकाश्यतया प्रतिपादिताभ्यामित्यर्थः।

[३] जरत्तरेष्वानन्दवर्धनेन १४ एव भेदा उदाहृताः, प्रतीहारेन्दुराजेन २० भेदाः, अभिनवगुप्तेन च ३५ भेदाः। अभिनवगुप्तमतस्यायमस्मत्कृतः संग्रहः—

प्रबन्धमर्थशक्त्युत्थे, शब्दोत्थे वस्त्वलंकृती।
पदांशमक्रमे गुप्तो नादत्ते, नोभयोत्थितम्॥
एवं षोडशभेदानां हानौ त्रिंशच्च पञ्च च।
शैव-तत्त्व-समा भेदाः संख्यया लोचने ध्वनेः॥—इति सं०

**तेषां चान्योन्ययोजने ॥ २० ॥**

**सङ्करेण त्रिरूपेण संसृष्टया चैकरूपया ।**

**न केवलं शुद्धा एवैकपञ्चाशद् भेदा भवन्ति, यावत् तेषां स्वप्रभेदैरेकपञ्चाशता संशयाऽऽस्पदत्वेन, अनुग्राह्यानुग्राहकतया, एकव्यञ्जकानुप्रवेशेन चेति त्रिविधेन सङ्करेण, परस्परनिरपेक्षरूपयैकप्रकारया संसृष्टया चेति चतुर्भिर्गुणने—**

**वेदखाब्धिवियच्चन्द्राः [ १०४०४ ]—**

---

## साहित्यचूडामणिः

अथ सङ्करसंसृष्टिं स्पष्टयति—तेषां चेति ।

सङ्करस्य त्रैरूप्यमाह—संशयेति । एकतरनिर्धारणे प्रमाणाभावात् सन्देहविषयतया, उपजीवकोपजीव्यत्वमनुग्राह्यानुग्राहकभावः, एकस्मिन्नसहाये व्यञ्जके क्वचिदुभयोर्ध्वन्योरनुप्रवेश इति त्रिविधः सङ्करः । संसृष्टिं व्याचष्टे—परस्परेति ।

सङ्करे हि सर्वत्र मिथः सापेक्षत्वं संसृष्टौ पुनरेवन्नास्ति, तस्मादेकप्रकारतेति चतुर्गुणने सति फलितां संख्यां सङ्केतभाषयाह—वेदेति ।

## सुधासागरः

व्याख्याता इति । अविवक्षितवाच्यस्य द्वौ भेदौ, तौ च प्रत्येकं पदवाक्ययोरिति चत्वारः । विवक्षितान्यपरवाच्येषु मध्येऽलक्ष्यक्रमव्यङ्ग्यः पद-वाक्य-पदैकदेश-वचनरचना-वर्ण-प्रबन्ध-भेदेन षड्विधः । लक्ष्यक्रमेषु शब्दशक्तिमूलस्य द्वौ भेदौ, तौ च प्रत्येकं पदवाक्ययोरिति तस्य चत्वारो भेदाः । अर्थशक्तिमूलस्य द्वादश भेदाः, ते च प्रत्येकं पदवाक्यप्रबन्धेष्विति षट्त्रिंशदस्य भेदाः । उभयशक्तिमूलस्तु वाक्य एवेति एकपञ्चाशद् भेदाः प्रदर्शिता इत्यर्थः ।

संशयेनाङ्गाङ्गिभावेनैकव्यञ्जकानुप्रवेशेन चेति त्रिविधः सङ्करः, उक्तप्रकारत्रयं विना संयोगः संसृष्टिः । एवमेकपञ्चाशतो भेदानामेकपञ्चाशद्भेदयोजनमिति । तावता तावद्गुणनेन सहस्रद्वयमेकाधिका षट्शती च । संयोजनं च संसृष्ट्यादिचतुष्प्रकारैरिति तावता चतुर्भिर्गुणने दश सहस्राणि चतुरधिकानि चत्वारि शतानि च सम्पद्यन्ते तदाह—'वेदखाब्धी'ति ।

न चानुग्राह्यानुग्राहकभावेन सङ्करस्थलेऽनुग्राहकस्याङ्गतया गुणीभाव इति न ध्वनिसङ्करत्वमिति वाच्यम् । तत्र हि स्वतश्चमत्कारिण एव तस्य किञ्चित्परोपकारकतामात्रं न तु शेषशेषिभाव एवेति ।

शुद्धभेदैः[1] सह—

**शरेषुयुगखेन्दवः [ १०४५५ ] ॥ २१ ॥**

## साहित्यचूडामणिः

एते हि सर्वे मिश्रभेदाः शुद्धभेदैः सह कियन्त इत्यत्राह—शरेति ।

## सुधासागरः

नन्वस्त्वेकपञ्चाशद्भेदेष्वेकतराणां पञ्चाशता योजनं, स्वस्य तु स्वेन कथं योजनेति चेन्न । व्यक्तिभेदमादाय विजातीयवत्सजातीयेनापि सङ्कर इति सूत्राशयात् ।

अत्राऽर्वाचीनाः—गणनेयमयुक्ता अग्रिमाग्रिमभेदस्य योजने एकैकभेदह्रासात् । तथा हि—अर्थान्तरसङ्क्रमितवाच्यस्यात्यन्ततिरस्कृतवाच्येन योजने यो भेदः स एवात्यन्ततिरस्कृतवाच्यस्यार्थान्तरसङ्क्रमितवाच्येन योजनायाम् । एवमन्यत्रापि । तस्मात्—

एको राशिर्द्विधा स्थाप्य एकमेकाधिकं कुरु ।
समार्द्धेनाऽसमो गुण्य एतत् सङ्कलितं लघु ॥

इत्युक्तदिशा द्विपञ्चाशदर्धेन षड्विंशत्या एकपञ्चाशतं गुणयेत् । तथा च 'रसदस्राग्निमेदिन्यः' इति त्रयोदश शतानि षड्विंशत्यधिकानि [१३२६] जायन्ते । योगश्चतुःप्रकार इति तेषु चतुर्भिर्गुणितेषु 'वेदाभ्रदहनेषवः' [५३०४] पञ्च सहस्राणि चतुरधिकं शतत्रयं सङ्कीर्णभेदा इत्येव ज्याय इति वदन्ति ।

अत्र ब्रूमः—अनुभवसिद्धौ तावत् पुण्ड्रककान्ताधरादिषु[2] रसेष्विव ध्वनिष्वपि हृद्यतातिशयानतिशयौ । तथा चार्थान्तरसङ्क्रमितवाच्यस्य यत्रातिशयस्तत्रात्यन्ततिरस्कृतवाच्येन तद्योजनम्, यत्र तु तद्वैपरीत्यं तत्रात्यन्ततिरस्कृतवाच्यस्येतरेण योजनमिति व्यपदेशः । एवमन्यत्राप्यूह्यम् । एतदेव प्राधान्यमादाय गणना सौत्री । नन्वेवं यत्रोभयोस्तुल्यमेव चारुत्वं तस्य भेदान्तरत्वं स्यादिति । मैवम् । अपकर्षाभावस्यातिशयपदेन विवक्षितत्वात्, तत्रोभयभेदसङ्करस्वीकारात् । एतादृशे चावस्थाने पदालम्बनमात्रमेव महत् पौरुषमिति सहृदयभावमास्थायालोचनीयमिति ।

मधुमतीकारास्तु—विनिगमनाभावेन गुणप्रधानभावस्य नियन्तुमशक्यतयोभयप्राधान्यमाश्रित्य गणनायाः साधुत्वम्, स्वतन्त्रेच्छाया नियन्तुमशक्यत्वात् । अत एव 'जातिश्चतुर्भिः' इत्यादिपरिगणनं न विरुध्यते । एतन्न्यायेन तत्र षोडशत्वापत्तेः । तन्न्यायेन वाऽत्र गणितन्यूनतापत्तिरित्यपि निरस्तमित्याहुः । तदेतत्सर्वमभिप्रेत्य श्रीवृत्तिकृदाह—न केवलं शुद्धा एवैकपञ्चाशद् भेदा भवन्तीत्यादि ।

शुद्धभेदैरेकपञ्चाशद्भिः (ता)सह । गाथा छन्दः ।

---

[1] ५१×५१×४=१०४०४+५१=१०४५५ भेदाः ।
[2] दीक्षु० इति मुद्रितः पाठः ।

तत्र दिङ्मात्रमुदाह्रियते—

खणपाहुणिआ देअर जाआए सुहअ किंपि दे भणिआ ।
रुअइ डोहरवलहीघरम्मि अणुणिज्जउ वराई ॥
[क्षणप्राघुणिका देवर जायया सुभग, किमपि ते भणिता ।
रोदिति गृहपश्चाद्भागवलभीगृहेऽनुनीयतां वराकी ॥]

—अत्रानुनयः किमुपभोगलक्षणेऽर्थान्तरे संक्रमितः किमनुरणनन्यायेनोपभोग एव व्यङ्ग्ये व्यञ्जक इति सन्देहः ।

---

## साहित्यचूडामणिः

दिङ्मात्रमिति । ग्रन्थगौरवप्रसङ्गात् ।

उत्सवप्राभृतिका देवर! जायया सुभग ! किमपि ते भणिता ।
रोदिति निष्कुटवलभीगृहेऽनुनीयतां वराकी ॥

इति उत्सवव्याजेन गृहानीतविपक्षपक्ष्मलाक्षीकं देवरमुद्दिश्य प्रजावत्याः परिहासोक्तिः । अनुनीयतामिति यो ध्वनिः स किमविवक्षितवाच्यभेदयोरर्थान्तरसंक्रमितवाच्यः, उत विवक्षितान्यपरवाच्यभेदेषु संलक्ष्यक्रमे वाच्यशक्तिमूले वस्तुना वस्तु ध्वन्यते, इतिः प्रकारे, इति संशयः । तत्र जायया किमपि भणितेति भणनस्योपालम्भरूपस्य, प्रजावतो कल्पनामात्रप्रवर्तितत्वे योग्यताभावेन मुख्यार्थभङ्गात् सामान्यविशेषभावात् सम्बन्धाद् रहस्यसंरक्षणलक्षणाच्च प्रयोजनादुपभोगरूपार्थान्तरसंक्रमणमनुनयस्य, अथानुरणनरूपत्वमिति संशयः ।

## सुधासागरः

क्षणप्राघुणिका देवर जायया सुभग किमपि ते भणिता ।
रोदिति पश्चाद्भागवलभीगृहेऽनुनीयतां वराकी ॥

इति संस्कृतम् । हे सुभग, हे देवर ! ते जायया स्त्रिया, किमपि भणिता किञ्चित्कथिता, क्षणप्राघुणिका उत्सवातिथिः, काचित्सरलहृदया पश्चाद्भागवलभीगृहे रोदिति अनुनीयतां वराकीत्यर्थः ।

अत्रानुनयतेर्वाच्योऽनुनयः किमुपभोगलक्ष्णे लक्ष्ये सङ्क्रमितः आहोस्विद्विवक्षित एवोपभोगस्य व्यञ्जक इत्यविवक्षितवाच्यविवक्षितान्यपरवाच्ययोः सन्देहः सङ्करः ।

स्निग्धश्यामलकान्तिलिप्तवियतो वेल्लद्बलाका घना
वाताः सीकरिणः पयोदसुहृदामानन्दकेकाः कलाः ।
कामं सन्तु दृढं कठोरहृदयो रामोऽस्मि सर्वं सहे
वैदेही तु कथं भविष्यति हहा हा देवि, धीरा भव ॥

—अत्र लिप्तेति पयोदसुहृदामिति च अत्यन्ततिरस्कृतवाच्ययोः संसृष्टिः । ताभ्यां सह रामोऽस्मीत्यर्थान्तरसङ्क्रमितवाच्यस्यानुग्राहकभावेन रामपद-लक्षणैकव्यञ्जकानुप्रवेशेन चार्थान्तरसंक्रमितवाच्यरसध्वन्योः सङ्करः ।

एवमन्यदप्युदाहार्यम् ॥२१॥

इति काव्यप्रकाशे ध्वनिनिर्णयो नाम
चतुर्थ उल्लासः ॥ ४ ॥

---

## साहित्यचूडामणिः

अथान्यत् सङ्करद्वयं संसृष्टिं चोदाहरति—स्निग्धेति । राम्शब्दे ध्वनिविशेषा-वकाशप्रदानाय कठोरहृदयपदम् ,यथा—'तद् गेहं नतभित्ती'त्यादौ तदित्युक्तेऽपि नत-भित्तीत्यादि । यतो न गुणीभूतव्यङ्ग्यत्वशङ्का । उद्दीपनविभावोपोद्बलितो विप्रलम्भः परस्पराधिष्ठानतया रतेर्विभावानां साधारण्यमभिमन्यमानस्ततः प्रभृति प्रियतमां हृदये निधाय व्यवहरन् स्मरणसरणिधारावाहिकया प्रत्यक्षीभावितां हृदयस्फोटनोन्मुखीं सुमुखीं ससंभ्रममाह—हहाहेति ।

## सुधासागरः

अपरसङ्करद्वयं संसृष्ट्या सहोदाहरति —'स्निग्धे'-ति ।

शार्दूलविक्रीडितं छन्दः । स्निग्धा नीरनिर्भरेण मसृणा अत एव श्यामला-ऽत्यन्तकृष्णा या कान्तिस्तया लिप्तं सम्यगाच्छादितं वियदम्बरं यैस्ते तथाभूताः, वेल्लन्ती विलासात् खेलन्ती बलाका बकपङ्क्तिर्येषु ते तथाविधा घनाः मेघाः, सीकरिणोऽम्बुकणधारिणो वाताः वायवः, पयोदसुहृदां मेघमित्राणां मयूराणां कलाः मधुराव्यक्ताः, आनन्दकेकाः प्रमोदोत्पन्नगिरः, कामं सन्तु सुतरां भवन्तु, नाऽहं विरहिमारकेभ्यो बिभेमीति भावः, हेतुमाह दृढं बलवत् कठोरं कर्कशं हृदयमन्तः-करणं यस्य तादृशोऽहं रामोस्मि, सर्वं सहे पितृमरणमातृवियोगवनवासजटाधारण-फलमूलाहारादिवज्जानकीविरहमपि सोढुं शक्नोमि । सर्वंसहेति भूमिसम्बोधनमिति केचित् । वैदेही आजन्मसुखसंवर्द्धिताऽतिसुकुमारी राजकुमारी तु कथं भविष्यति केन प्रकारेण जीविष्यति, हहाहेति त्रयो निपाताः खेदातिशये । स्मृतिसङ्कल्पोपनीतां सीतां सम्बोध्याह—देवि धीरा भव । देवत्वेन परमसौकुमार्येऽपि धैर्यौचित्यं व्यज्यते ।

## साहित्यचूडामणिः

उदाहरणानुरोधेन पूर्वं संसृष्टिमुपदर्शयति—लिप्तेति। लेपो मूर्तधर्मः, तत्रापि चित्रफलकादौ, न कदाचिद् गगनस्येति मुख्यार्थभङ्गः। उपरञ्जनातिशयो लक्ष्यः। कार्यकारणभावः सम्बन्धः। लिप्तं हि वस्तु गाढमुपरज्यते। वियतश्छायाधिक्यं व्यङ्ग्यम्। सुहृत्त्वं च कस्यचिन्महापुरुषस्य न सर्वस्येति मुख्यार्थभङ्गः। स्वभावसंवादो लक्ष्यः। सामान्यविशेषभावः सम्बन्धः, तद्विशेषत्वात् सौहार्दस्य। केकानां विरहपीडावहत्वं व्यङ्ग्यम्। एवमत्यन्ततिरस्कृतवाच्ययोरन्योन्यनिरपेक्षयोरैकाधिकरण्येन संसृष्टिः। अथ संकरयोस्तावदनुग्राह्यानुग्राहकभावमुद्भावयति—आभ्यामिति। लिप्तपयोदसुहृल्लक्षणाभ्यां सह रामोऽस्मीत्यस्यानुग्राह्यत्वमुपजीवकता। तयोः पुनरनुग्राहत्वमुपजीव्यता। तथाहि उद्दीपनविभावसंरम्भानुद्भवे सहिष्णुतातिशयलक्षणस्य हृदयकाठिन्यस्य वक्तुमशक्यत्वं, प्रावृषेण्यं विशेषमवलम्ब्य विप्रलम्भवर्णनौचित्यं चेति। अथ तृतीयं संकरमुल्लिङ्गयति—रामेति। रामोऽस्मीति स्ववचनेन बाधितमुख्यार्थो रामशब्दः कलत्रभ्रंशादिदुःखसहिष्णुत्वं लक्षयति। आधाराधेयभावः सम्बन्धः। जीवितस्य न कदाचिद् अत्याहितशङ्केति व्यङ्ग्यम्। एवं रामपदलक्षणमेकं व्यञ्जकमनुप्रविश्य तदीयस्यार्थान्तरसंक्रमितवाच्यस्य महावाक्यार्थरूपस्य रसध्वनेश्च संकरः। एकस्मिन् शब्दार्थयुगलात्मनि व्यञ्जकेऽनुप्रविष्टत्वादन्योन्यसापेक्षतेति संकरस्यास्य संसृष्टेर्वैलक्षण्यम्। एवमिति। तथाह्यत्रैव यथोक्तविशेषणाघटनादयः। कामं सन्त्विति समुच्चयेन तथापि कठोरहृदयोऽस्मीति विशेषोक्तिर्व्यज्यते, मरणसामग्र्यामपि मरणाभावस्वभावस्य कठोरहृदयत्वस्य भावात्। तथा च वैदेही तु कथं भविष्यतीति वस्तुव्यङ्ग्यो व्यतिरेकालंकारः संकीर्यते। यत्रानुग्राह्यानुग्राहकभावः रामोऽस्मि सर्वं सह इति काव्यलिङ्गव्यङ्ग्यस्य सीताप्रत्यक्षायमाणत्वनिबन्धनस्य भाविकस्य पर्यायोक्तस्य च संशयगोचरः संकरः। अनुग्राह्यानुग्राहकभाव-

## सुधासागरः

अत्र लिप्तेत्यादि। अयमाशयः—वियतो निःस्पर्शस्य लेपनासम्भवेन मुख्यार्थबाधाल्लिप्तपदं सम्पर्कं लक्षयत् दतिशयं व्यनक्ति। पयोदे चाचेतने सौहृदाभावात् सुहृत्पदं परस्परोपकारित्वं लक्षयत् परस्परातिशयं प्रकाशयति। पयोदानां मयूरनिष्ठकेकाद्युपकारशीलत्वात्, मयूराणां च पयोदशोभाधायकत्वात्। एवं च लेपसुहृत्त्वयोः सर्वथाऽन्वयाप्रवेशाद् वाच्यार्थयोरत्यन्ततिरस्कार इति लक्षणामूलाविवक्षितवाच्यान्तर्गतात्यन्ततिरस्कृतवाच्यव्यङ्ग्ययोर्ध्वनिभेदयोः परस्परनैरपेक्ष्येणाऽवस्थानात् संसृष्टिः। रामपदं च सर्वसहत्वानुपयुक्तशक्यार्थतया सकलदुःखभाजनत्वं लक्षयत् सीतां विनाऽपि जीविष्यामीति व्यञ्जयदेव विप्रलम्भं व्यनक्ति। तथा च लक्षणामूलाविवक्षितवाच्यान्तर्गतद्वितीयध्वनिभेदस्य रामोऽस्मीत्यर्थान्तरसङ्क्रमितवाच्यस्य ताभ्यां संसृष्टिरूपतापन्नोक्तभेदाभ्यां सहाऽनुग्राह्यानुग्राहकभावेन सङ्करः। अर्थान्तरसङ्क्रमितवाच्यबोधं विनाऽत्यन्ततिरस्कृतवाच्ययोश्चारुत्वालाभात्, एताभ्यां

## साहित्यचूडामणिः

शालिनः संशयविषयस्य च ध्वन्योरन्योन्यसंसृष्टिः। कथं भविष्यतीति धीरा भवेति पदैकदेशलक्षणयोर्ल्लोटोरुपजीव्योपजीवकभावेन संकर इति। यथावा ममैव—

सौभाग्याय नमस्तवास्तु यदयं त्वत्कल्पमन्यं जनं
धत्ते वक्षसि वल्लभो घटयति भ्रातैव ते कौस्तुभः।
इत्यालीपरिहाससंभृतरुषं संलक्ष्य लक्ष्मीं प्रिया-
माकल्पानवधीरयन्नवतु वो देवः पुराणः पुमान्॥ इति।

अत्र सौभाग्याय नमः इति वस्तुनोपालम्भो व्यज्यते यत्र नमःपदस्यौल्बण्यम्। तस्य चानुग्राह्यस्य कौस्तुभो घटयतीति वस्तुव्यङ्ग्येन लक्ष्मीप्रतिबिम्बनध्वनिनानुग्राहकेण संकरः। भ्रातैवेति शब्दशक्तिसमुद्भवस्य नायिकाहंकारभङ्गस्य व्यङ्ग्यस्य प्रतिबिम्बलाभादालीपरिहास इत्यर्थशक्तिसमुत्थितस्य काव्यलिङ्गस्य च पूर्ववत् संकरः। क्वचित् संशयविषयतया च पार्यते निर्बोद्धुम्। सर्वैश्चामीभिर्भावस्य भगवद्गोचरायाः कविसम्बन्धिन्या रतेः संकरः। अवधीरयन्नित्यत्र तेषामेव व्यञ्जकतान्तं निमज्जनमिति सिद्धम्॥ २०,२१॥

इयमवहितचेतश्चातुरीचर्वणीया प्रसरतु सरसा वः श्रेयसी काव्यरेखा।
प्रचुरसुकृतचर्याशालिनो यां लभन्ते प्रभवति भुवनेऽस्मिन् पञ्चषाः प्राज्ञ एव॥

इति साहित्यचक्रवर्तिलौहित्यभट्टगोपालविरचितायां
साहित्यचूडामणौ काव्यप्रकाश-विमर्शिन्यां
चतुर्थ उल्लासः॥ ४॥

## सुधासागरः

विना चार्थान्तरसङ्क्रमितवाच्यस्य रूपासिद्धेः, तयोरुद्दीपकत्वात्। अनुग्राह्यस्य चारुत्वार्थमनुग्राहकापेक्षा, अनुग्राहकस्य स्वरूपनिष्पत्तयेऽनुग्राह्यापेक्षेति दशमोल्लासे सङ्करव्याख्याऽवसरे प्रतिपादयिष्यामः। एवं रामपदलक्षणैकव्यञ्जकानुप्रवेशेन चार्थान्तरसङ्क्रमितवाच्यरसध्वन्योः सङ्करः सङ्करस्यान्यो भेदः। रामपदेनैव लक्षणामूलाविवक्षितवाच्यान्तर्गतार्थान्तरसङ्क्रमितवाच्यस्य अभिधामूलविवक्षितान्यपरवाच्यान्तर्गतालक्ष्यक्रमभेदविप्रलम्भस्य च व्यञ्जनात्। विप्रलम्भे वाक्यव्यङ्ग्येऽप्यस्य प्राधान्यादिति। एवमन्यदप्युदाहार्यमिति॥ २०,२१॥

संसृष्टिरुदाहृता। सङ्करस्य द्वौ भेदावुदाहृतौ अवशिष्टो निश्चयात्मकस्तृतीयः सङ्करभेदः स्वयमुक्तरीत्योदाहरणीय इत्याशयः॥ २०, २१॥

इति श्रीमत्पदवाक्यप्रमाणपारावारीणदीक्षित-
भीमसेन-कृते काव्यप्रकाशविवरणे सुधासागरे
ध्वनिभेदप्रभेदनिर्णयश्चतुर्थ उल्लासः॥ ४॥

# पञ्चम उल्लासः

एवं ध्वनौ निर्णीते गुणीभूतव्यङ्ग्यप्रभेदानाह—

अगूढमपरस्याङ्गं वाच्यसिद्ध्यङ्गमस्फुटम् ।
सन्दिग्धतुल्यप्राधान्ये काक्वाक्षिप्तमसुन्दरम् ॥ १ ॥
व्यङ्ग्यमेवं गुणीभूतव्यङ्ग्यस्याष्टौ भिदाः स्मृताः ।

१. कामिनीकुचकलशवद् गूढं चमत्करोति, अगूढं तु स्फुटतया वाच्यायमानमिति गुणीभूतमेव ।

---

## साहित्यचूडामणिः

नौमि सौम्यसमस्ताङ्गीं नित्यशुद्धां सरस्वतीम् ।
त्रैलोक्यसौधकूटस्य स्फाटिकीं सालभञ्जिकाम् ॥

उल्लाससङ्गतिमाह—एवमिति ।

उद्दिशति—अगूढमिति । एवमिति । व्यङ्ग्यार्थस्वभावाधीनोऽयं काव्यभेदः ।

कोऽयं व्यङ्ग्यस्य गूढतायां निर्बन्ध इत्याह—कामिनीति ।

अगूढतायामनौचित्यमाह—अगूढं त्विति । वाच्यायमानं वाच्यवदाचरत् । तद्वा तादृगेति न कश्चिद् विशेषः । यदाह—

संवृत्याभिहितं वस्तु यत्रालंकार एव वा ।
काव्याध्वनि ध्वनिर्व्यङ्ग्यप्राधान्यैकनिबन्धनः ॥ ध्व० ३.४२ सं० ॥ इति ।
मुख्या महाकविगिरामलङ्कृतिभृतामपि ।
प्रतीयमानच्छायैव भूषा लज्जेव योषिताम् ॥ ध्व० ३.३७ ॥

इत्युपमयाप्येतत् प्रकाश्यते । गोपनासारसौन्दर्यानुप्राणनत्वं हि तत्र साधर्म्यम् ।

## सुधासागरः

एवं ध्वनावित्यादि । एवं भेदप्रभेदाभ्यां ध्वनौ निर्णीते उत्तमकाव्ये प्रदर्शित इति यावत्, गुणीभूतव्यङ्ग्यस्य भेदानाह अवसरप्राप्तमध्यमकाव्यभेदान् दर्शयतीत्यर्थः ।

वाच्यापेक्षयाऽचमत्कारित्वेनात्र व्यङ्ग्यस्य गुणीभावः । तच्च स्वत एवासुन्दरत्वेऽपि अगूढत्वादिविशेषणसप्तकेन चेत्यर्थः । अगूढञ्चासहृदयैरपि वेद्यम् । तादृशं वाच्यायमानतया न तथा चमत्करोति यथा कामिनीकुचकलशवत् गूढम् । किञ्चिद् गूढमिति यावत् । तदुक्तम्—

अगूढं यथा—

यस्यासुहृत्कृततिरस्कृतिरेत्य तप्त-
सूचीव्यधव्यतिकरेण युनक्ति कर्णौ ।
काञ्चीगुणग्रथनभाजनमेष सोऽस्मि
जीवन्न संप्रति भवामि किमावहामि ॥

—अत्र 'जीवन्' इत्यर्थान्तरसंक्रमितवाच्यस्य ।

---

## साहित्यचूडामणिः

यस्येति । अत्र जीवन्नित्यर्थान्तरसंक्रमितवाच्यस्यागूढत्वम् । स्ववचने बाधितमुख्यार्थं जीवत्वं पौरुषवत्तायां परिणमितम् । एकार्थसमवायः संबन्धः । बहिर्यात्रा विधेयेति व्यङ्ग्यम् । अस्य चागूढत्वं स्पष्टं वाच्यवन्निश्चमत्कारत्वात् । तद्वशाच्च तद्वतः काव्यस्य गुणीभूतव्यङ्ग्यत्वम् । वस्तुमात्रादित्रयेऽपि गुणीभूतव्यङ्ग्यत्वमस्ति । तद् यथायोगमवगन्तव्यम् ।

## सुधासागरः

नान्ध्रीपयोधर इवातितरां प्रकाशो नो गुर्जरीस्तन इवातितरां निगूढः ।
अर्थो गिरामपिहितः पिहितश्च कश्चित् सौभाग्यमेति मरहट्टवधूकुचाभः ॥

इति ।

एवञ्च कामिनीकुचकलशन्यायेन सहृदयैकवेद्यमेव व्यङ्ग्यं ध्वनित्वमुपयाति । सहृदयैरपि दुःखसंवेद्यमसहृदयैरपि वेद्यं वेत्युभयमपि गुणीभूतव्यङ्ग्यमेवेति बोध्यम् । एवमन्येष्वपि भेदेष्वनुभव एव साक्षी ।

अपरस्याङ्गम् । अपरस्य रसादेः स्वनैरपेक्ष्येण लब्धसिद्धेरुपकारकम् ।

वाच्यसिद्ध्यङ्गम् । वाच्यस्य सिद्धिरेव यदधीना तत् ।

अस्फुटम् । सहृदयानामपि दुःखसंवेद्यम् ।

सन्दिग्धतुल्यप्राधान्ये इति । सन्दिग्धप्राधान्यं तुल्यप्राधान्यं चेति द्वयमित्यर्थः ।

काक्वाक्षिप्तम् । यया काक्वा विना वाक्यार्थ एव नात्मानं लभते तया प्रकाश्यम् । काका हठेनोपस्थापितमिति वा ।

असुन्दरम् । स्वभावादेव वाच्यापेक्षयाऽचारु ।

तदेतत्सर्वमभिप्रेत्य श्रीसूत्रिकृदाह—कामिनीत्यादि ।

उक्तभेदेष्वगूढमुदाहरति—'यस्यासुहृदि'ति ।

वसन्ततिलकाच्छन्दः । कीचककृतंपराभवं निवेदयन्तीं द्रौपदीं प्रति बृहन्नलारूपस्यार्जुनस्योक्तिरियम् । दासस्य तप्तशलाकया कर्णवेध इति देशाचारः ।

उन्निद्रकोकनदरेणुपिशङ्गिताङ्गा
गायन्ति मञ्जु मधुपा गृहदीर्घिकासु ।
एतच्चकास्ति च रवेर्नवबन्धुजीव-
पुष्पच्छदाभमुदयाचलचुम्बि बिम्बम् ॥

—अत्र चुम्बनस्यात्यन्ततिरस्कृतवाच्यस्य ।

अत्रासीत् फणिपाशबन्धनविधिः, शक्त्या भवद्देवरे
गाढं वक्षसि ताडिते हनुमता द्रोणाद्रिरत्राहृतः ।
दिव्यैरिन्द्रजिदत्र लक्ष्मणशरैर्लोकान्तरं प्रापितः,
केनाप्यत्र मृगाक्षि, राक्षसपतेः कृत्ता च कण्ठाटवी ॥

—अत्र केनाप्यत्रेत्यर्थशक्तिमूलानुरणनरूपस्य । 'तस्याप्यत्र' इति युक्तः पाठः ।

---

## साहित्यचूडामणिः

उन्निद्रेति । चुम्बनं हि कामिमिथुनादिविषयो वक्त्रसंयोगः, तदचेतनानां न सम्पद्यते; दूरे शैलशृङ्गसूर्यबिम्बयोरित्यत्यन्ततिरस्कारः । तेन च संयोगमात्रं लक्ष्यते, सामान्यविशेषभावः सम्बन्धः । कालावस्थानिवेदनं व्यङ्ग्यम् । तच्च वाच्यायमानत्वादगूढम् । यदाह—

## सुधासागरः

स्पष्टमन्यत् । अत्र जीवन्नित्यभिमतकार्यशक्तत्वे सङ्क्रमितवाच्यम् । तस्य मरणमेव श्रेय इति व्यङ्ग्यमसहृदयैरपि वाच्यवत् प्रतीयत इति गुणीभूतम् । तदेतद् वृत्तिकृदाह 'अत्र जीवन्नित्यर्थान्तरसङ्क्रमितवाच्यस्ये'ति । व्यङ्ग्यमगूढमिति शेषः ।

उन्निद्रे-'ति ।

वसन्ततिलका च्छन्दः । प्रातःकालवर्णनमिदम् । स्पष्टम् । अत्र चुम्बतेर्वक्त्रसंयोगो मुख्योऽर्थः । स चाचेतने रविबिम्बे तेन रूपेणानन्वयाद्बाधित इति सामान्यविशेषभावसम्बन्धेन संयोगमात्रं लक्षयतोऽस्यात्यन्ततिरस्कृतवाच्यत्वम् । व्यङ्ग्यश्चास्याशेषः कालारम्भः । स च वाच्यायमानतया गुणीभूतः । नन्वत्र लक्ष्यतावच्छेदकस्य संयोगत्वस्य वक्त्रसंयोगेऽपि सत्त्वात्कथमत्यन्ततिरस्कृतवाच्यत्वमिति चेत् लक्ष्यतावच्छेदकस्य सत्त्वेऽपि वाच्यस्य संयोगविशेषस्यान्वयाप्रवेशात् । तदेतद्वृत्तिकृदाह—अत्र चुम्बनस्येत्यादि ।

अत्रासीदि-'ति ।

२. अपरस्य रसादेर्वाच्यस्य वा वाक्यार्थीभूतस्य, अङ्गं रसादि, अनुरणनरूपं वा। यथा—

अयं स रशनोत्कर्षी पीनस्तनविमर्दनः।
नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः॥

—अत्र शृङ्गारः करुणस्य।

---

## साहित्यचूडामणिः

अव्युत्पत्तेरशक्तेर्वा निबन्धो यः स्खलद्गतेः।
शब्दस्य स च न ज्ञेयः सूरिभिर्विषयो ध्वनेः॥ ध्व० २.३२ इति॥

इतरथा नेयार्थत्वं गुणीभूतव्यङ्ग्यता वेति कारिकार्थः।

विवक्षितान्यपरावाच्ये वाच्यशक्तिमूलानुरणनरूपमगूढमुदाहरति—

अत्रेति। भवत्या देवरे लक्ष्मणे। मयाप्यत्रेति वाच्यभागे यद्वदात्मप्रशंसा एवं केनाप्यत्रेति व्यङ्ग्येऽपीति तस्यागूढत्वम्।

उचितं पाठमाह—तस्यापीति। कण्ठाटवीकर्तने कर्तृविवक्षायामयं क्लेशः, न पुनस्तत्सम्बन्धिनि देशे।

अपरस्याङ्गमित्यत्रापरशब्दं द्विधा व्याख्याति—रसादेरिति। आदिपदाद् भावादेः। वाच्यस्येत्येतावत्युक्ते पदार्थमात्रस्येति प्रतीयेत। तच्चानुचितम्, अङ्गित्वानुपपत्तेरित्याह—वाक्यार्थीभूतस्येति। अङ्गभूतस्यापि द्वैविध्यमाह—रसादीति। रसादेरङ्गं रसादि वाच्यस्याङ्गमनुरणनरूपम्। यदाह—

व्यङ्ग्यस्य प्रतिभामात्रे वाच्यार्थानुगमेऽपि वा।
न ध्वनिर्यत्र वा तस्य प्राधान्यं न प्रतियते॥ ध्व० १.१३ सं० इति॥

तत्र रसस्याङ्गं रसमुदाहरति—अयमिति। प्रस्तुतकरुणौचित्यात् स इति स्मर्यमाणः शृङ्गारानुगुण्येन। एवं रसान्तरेऽपि द्रष्टव्यम्।

## सुधासागरः

शार्दूलविक्रीडितं छन्दः। विमानेनायोध्यां प्रतिप्रयाणे सीतां प्रति रामस्येयमुक्तिः। स्पष्टम्। अत्रानुनायकोपनायकेषु निर्दिष्टेषु चतुर्थवाक्येऽनुक्तोऽपि धीरोदात्तनायको राम एवार्थशक्त्या प्रतीयते। स च केनापीत्युपादानेन वाच्यायमानतयाऽगूढः कृत इत्यर्थशक्तिमूलानुरणनरूपव्यङ्ग्यस्यागूढत्वमिति गुणीभूतव्यङ्ग्यत्वं द्रष्टव्यम्। 'तस्याप्यत्र' इति पाठे गूढतया ध्वनित्वमव्याहतमेव। अत्र श्लोके प्रतिवाक्यमत्रेत्युपादानं प्रत्येकमेवाद्भुतत्वं व्यनक्ति। तदाह श्रीवृत्तिकारः—अत्र केनापीत्यादि।

अपरस्य प्रधानस्य रसादेः वाक्यार्थीभूतवाच्यस्य वा अङ्गम् अलक्ष्यक्रम-

कैलासालयभाललोचनरुचा निर्वर्त्तितालक्तक-
व्यक्तिः पादनखद्युतिर्गिरिभुवः सा वः सदा त्रायताम् ।
स्पर्धाबन्धसमृद्धयेव सुदृढं रूढा यया नेत्रयोः
कान्तिः कोकनदानुकारसरसा सद्यः समुत्सार्यते ॥

—अत्र भावस्य रसः ।

---

## साहित्यचूडामणिः

अथ भावस्याङ्गं रसमाह—कैलासालयेति । कैलासालयः परमेश्वरः । स्पर्धाबन्ध आरुण्यजातीयत्वादीर्ष्यानुवृत्तिः, तेन दीप्तयेव ।

भावस्य रस इति । कविसम्बन्धिन्याः पार्वतीगोचराया रतेरङ्गमीर्ष्याविप्रलम्भः ।

## सुधासागरः

व्यङ्ग्यमनुस्वानाभसंलक्ष्यक्रमव्यङ्ग्यं वेति द्विविधं यथाक्रमं बोध्यम् । तदुक्तमपरस्येत्यादिना वृत्तिकृद्भिः । तत्र प्रथमे रसस्याङ्गभावेन गुणीभूतमुदाहरति—'अयं स' इत्यादिना । स्पष्टम् । अत्रेत्यादि । अत्र भूरिश्रवसश्छिन्नहस्तमासाद्य तद्वधूनां प्रलापे शृङ्गारोचितरशनाकर्षित्वादिविलासस्मरणं विगलद्धृदयत्वाच्छोकावेगमधिकमुपजनयतीति शृङ्गारस्य करुणपोषकत्वाच्छृङ्गारः करुणस्याङ्गमित्यर्थः । निष्पन्नस्य रसस्यापराङ्गत्वाभावाद् रसपदेनात्र रस्यते इति व्युत्पत्त्या स्थायिभावो द्रष्टव्यः ।

रसस्यैव भावाङ्गतामुदाहरति 'कैलासालये'ति ।

शार्दूलविक्रीडितं छन्दः । अत्र मानेन त्यक्तालक्तकाया गिरिभुवः कोपवशान्नेत्रयोः शोणा कान्तिरासीत् सा पादप्रणते शिवेऽपगतेति तत्त्वम् । तत्रोत्प्रेक्षते सा, कैलासालयस्य शिवस्य भाललोचनरुचा ललाटनयनदीप्त्या, निर्वर्त्तिता सम्पादिताऽलक्तकस्य यावकस्य व्यक्तिः प्रकटता यत्र तथाभूता, गिरिभुवः पार्वत्या, पादनखद्युतिः वः सदा त्रायतां युष्मान्निरन्तरं रक्षताम्, स्पर्धाबन्धेन ईर्ष्याग्रहेण समृद्धयेव प्रवृद्धयेव, समिद्धयेति पाठे देदीप्यमानयेत्यर्थः, यया नखद्युत्या नेत्रयोरर्थात् पार्वतीलोचनयोः, सुदृढं रूढा बलवदुपचिता, अत एव कोकनदानुकारा रक्तोत्पलानुहारिणी चासौ सरसा सातिशया, कान्तिरारक्तच्छविः सद्यः समुत्सार्यते झटित्यपनीयत इत्यर्थः ।

अत्र कविनिष्ठे पार्वतीविषयकप्रीतिरूपे भावे पार्वतीपरमेश्वरयोः शृङ्गारोऽङ्गम् । तदुक्तं वृत्तिकृताऽत्रेत्यादिना ।

अत्युच्चाः परितः स्फुरन्ति गिरयः स्फारास्तथाम्भोधय-
स्तानेतानपि बिभ्रती किमपि न क्लान्ताऽसि तुभ्यं नमः ।
आश्चर्येण मुहुर्मुहुः स्तुतिमिति प्रस्तौमि यावद् भुवस्
तावद् बिभ्रदिमां स्मृतस्तव भुजो वाचस्ततो मुद्रिताः ॥

—अत्र भूविषयो रत्याख्यो भावो राजविषयस्य रतिभावस्य ।

बन्दीकृत्य नृप, द्विषां मृगदृशस्ताः पश्यतां प्रेयसां
श्लिष्यन्ति प्रणमन्ति लान्ति परितश्चुम्बन्ति ते सैनिकाः ।
अस्माकं सुकृतैर्दृशोर्निपतितोऽस्यौचित्यवारांनिधे,
विध्वस्ता विपदोऽखिलास्तदिति तैः प्रत्यर्थिभिः स्तूयसे ॥

—अत्र भावस्य रसाभास-भावाभासौ प्रथमार्धद्वितीयार्धद्योत्यौ ।

---

## साहित्यचूडामणिः

अथ भावस्याङ्गभावमुदाहरति—अत्युच्चा इति । तान् प्रागुपन्यस्तान् गिरीन् । एतान् अनन्तरोक्तान् अम्बुधींश्च । भूविषयो भावः कविसम्बन्धी तस्यैव राजविषयस्याङ्गमिति भावो भावस्याङ्गम् ।

अथ भावस्य रसभावाभासावङ्गमुदाहरति—बन्दीकृत्येति । नृपेति सम्बुद्धिः । पश्यतामित्यनादरे षष्ठी । तदिति । यस्मादस्माकं दृशोर्निपतितोऽसि ।

वंशवीर्यश्रुतादीनि वर्णयित्वा रिपोरपि ।
तज्जयान्नायकोत्कर्षकथनं च धिनोति नः ॥

इति नीत्या श्लाघनीयवंशादिकानां नायकपरिपन्थिनामसूर्यपश्येषु शुद्धान्तेषु सैनिकैः परामर्शस्यानौचित्यप्रवृत्तत्वात् पूर्वत्रार्धे रसाभासः । उत्तरत्र तु कृच्छ्रगतैः परपुरुषैर्विपक्षस्तुतावनौचित्याद् भावाभासः । उभयं कविसम्बन्धिनो भावस्य राजविषयस्याङ्गम् ।

## सुधासागरः

भावे भावस्याङ्गमुदाहरति 'अत्युच्चा' इति ।

शार्दूलविक्रीडितं छन्दः । स्फाराः विस्तीर्णाः, किमपि किञ्चिदपि स्पष्टमन्यत् । अत्रेत्यादि, अङ्गमिति शेषः ।

'बन्दीकृत्ये'ति ।

शार्दूलविक्रीडितं छन्दः । 'सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम्' इति लक्षणात् । हे नृपते सैनिकाः भटाः, द्विषां शत्रूणां मृगदृशः सुन्दरीः बन्दीकृत्य ताः पश्यतां प्रेयसाम्, अनादरे षष्ठी 'षष्ठीचानादरे' इत्यनुशासनात्, तथा च

अविरल-करवाल-कम्पनैर्भ्रुकुटी-तर्जन-गर्जनैर्मुहुः ।
ददृशे तव वैरिणां मदः स गतः क्वापि तवेक्षणे क्षणात् ॥
—अत्र भावस्य भावप्रशमः ।

साकं कुरङ्गकदृशा मधुपानलीलां
कर्तुं सुहृद्भिरपि वैरिणि ते प्रवृत्ते ।
अन्याभिधायि तव नाम विभो, गृहीतं
केनापि तत्र विषमामकरोदवस्थाम् ॥
—अत्र त्रासोदयः ।

---

## साहित्यचूडामणिः

अथ भावस्याङ्गं भावप्रशममुदाहरति—अविरलेति । वैरिणां चापलहर्षादि-नान्तरीयकस्य मदस्य गर्वस्य व्यङ्ग्यस्य प्रशमो वर्णनीयविषयरतिरूपस्य भावस्याङ्गम् । एषु च रसवदाद्यलङ्कारव्यपदेश इत्यनन्तरमुद्घाटयिष्यते ।

भावोदयमुदाहरति—साकमिति । केनापि परिजनादिना । अन्याभिधायि यथा विश्वनाथशब्देन राजा परमेश्वरोऽप्युच्यते । असोढेति । तस्मिन्नुत्कटे काले उल्लसन्नसद्भावो यस्य । अथ च तथापि । कपटबटुवेषापनयने कृत्रिमब्रह्मचारि-

## सुधासागरः

शोकानुरागकातरेण चक्षुषा ताः स्वस्वयोषितः पश्यतः पतीननाहत्येत्यर्थः, श्लिष्यन्ति गाढमालिङ्गन्ति, प्रणमन्ति रिरंसया प्रसादयन्ति, लान्ति आदानं कुर्वन्ति, परितः ओष्ठललाटाक्षिषु कपोलयोश्च चुम्बन्ति, तत् तस्मात् कारणात्तैः पराजितैः प्रत्यर्थि-भिर्वैरिभिरित्यमुना प्रकारेण त्वं स्तूयसे । प्रकारमाह 'हे औचित्यवारांनिधे ! अस्माकं सुकृतैरस्मत्पुण्यैर्दृशोर्निपतितोऽसि चक्षुर्गोचरतां प्राप्तोऽसि, अखिलाः विपदो विध्वस्ताः, दृशोरित्यत्रापि चास्माकमित्यस्यान्वयो बोध्यः । अत्र प्रथमार्द्धे शृङ्गारो-ऽननुरक्तविषयतया द्वितीयार्द्धे तु रतिरूपो भावः शत्रुविषयतयाऽऽहार्यत्वादाभासः । तौ च रसाभासभावाभासौ राजविषयकरतिभावस्याङ्गभूतौ । तदेतद् वृत्तिकृदाह—अत्र भावस्येत्यादि ।

भावशान्तेर्भावाङ्गतामुदाहरति—'अविरले'ति । स्पष्टम् ।
वैतालीयं छन्दः । उक्तञ्च वृत्तरत्नाकरे—

षड्विषमेऽष्टौ समे कलास्ताश्च समे स्युर्नो निरन्तराः ।
न समाऽत्र पराश्रिता कला वैतालीयेऽन्ते रलौ गुरुः ॥ इति ।

अयमर्थः । विषमपादे षण्मात्राः ततो रगणलघुगुरवो भवन्ति । समपादे

असोढा तत्कालोल्लसदसहभावस्य तपसः
कथानां विस्रम्भेष्वथ च रसिकः शैलदुहितुः ।
प्रमोदं वो दिश्यात् कपटबटुवेषापनयने
त्वराशैथिल्याभ्यां युगपदभियुक्तः स्मरहरः ॥

—अत्रावेगधैर्ययोः सन्धिः ।

पश्येत् कश्चिच्चल चपल रे का त्वराऽहं कुमारी
हस्तालम्बं वितर हहहा व्युत्क्रमः क्वासि यासि ।
इत्थं पृथ्वीपरिवृढ, भवद्विद्विषोऽरण्यवृत्तेः
कन्या कश्चित् फलकिसलयान्याददानाऽभिधत्ते ॥

—अत्र शङ्काऽसूयाधृतिस्मृतिश्रमदैन्यविबोधौत्सुक्यानां शबलता ।

---

## साहित्यचूडामणिः

नेपथ्यावधूनने । त्वराशैथिल्याभ्याम् आदरोपेक्षाभ्याम् , युगपद् एकदैवाक्रान्तः ।

आवेगधैर्ययोस्त्वराशैथिल्यशब्दद्वयव्यङ्ग्ययोः सन्धिः । पश्येत् कश्चि-

## सुधासागरः

त्वष्टौ कलास्ततो रगणलघुगुरवो भवन्ति । किञ्च समे पादे षट् कलाः षट् लघवः निरन्तराः न भवन्ति । तथाऽत्र वैतालीये सर्वपादेषु समाः कलाः । समो लः पराश्रितो न भवति, समा लघुकला परया कलया सह गुरुर्न भवतीति यावदिति ।

अत्र भावस्येत्यादि, वैरिणो गर्वरूपो भावस्तस्य शमो राजविषयकरतिभावेऽङ्गमित्यर्थः । ननु गत इति प्रशमस्य वाच्यतया कथं भावप्रशमतेति चेत् । उच्यते । गत इत्यनेन गमनस्य मुख्यार्थस्य बाधाच्छान्त इत्यर्थो लक्ष्यते, तेन प्रशमातिशयो व्यज्यते इति ।

भावोदयस्य भावाङ्गतामुदाहरति—'साकमि'ति ।

वसन्ततिलका छन्दः । हे विभो राजन् ! ते वैरिणि कुरङ्गकदृशा मृगाक्ष्या सुहृद्भिः स्निग्धैरपि साकं सार्द्धं मधुपानलीलां मद्यपानक्रीडां कर्त्तुं प्रवृत्ते सति केनापि जनेन अन्याभिधायि अनेकार्थतया त्वद्भिन्नस्यापि बोधकं तव नाम त्वद्वाचकपदं गृहीतमुच्चारितं सत् तत्र क्रीडामन्दिरे, विषमां कम्पादिकर्त्रीमवस्थामकरोदित्यर्थः । अत्र त्रासस्योदय इति । विषमावस्थाव्यङ्ग्यस्य त्रासस्वरूपभावस्योदयः राजविषयकरतिभावस्याङ्गमित्यर्थः ।

भावसन्धेर्भावाङ्गतामुदाहरति—'असोढे'-ति ।

शिखरिणी छन्दः । 'रसै रुद्रैश्छिन्ना यमनसभलागः शिखरिणी'—इति

एते च रसवदाद्यलङ्काराः[१] ।

यद्यपि भावोदयभावसन्धिभावशबलत्वानि नालङ्कारतया उक्तानि, तथाऽपि कश्चिद् ब्रूयादित्येवमुक्तम् ।

यद्यपि स नास्ति कश्चिद् विषयः यत्र ध्वनिगुणीभूतव्यङ्ग्ययोः स्वप्रभेदादिभिः सह सङ्करः संसृष्टिर्वा नास्ति, तथाऽपि 'प्राधान्येन व्यपदेशा भवन्ती'ति क्वचित् केनचिद् व्यवहारः ।

---

## साहित्यचूडामणिः

दिति शङ्का । चल चपल रे इत्यसूया । का त्वरेति धृतिः । अहं कुमारीति स्मृतिः । हस्तालम्बं वितरेति श्रमः । हहहा व्युत्क्रम इति विबोधः । क्वासीति दैन्यम् । यासीत्यौत्सुक्यम् । अमीषां शबलता राजविषयस्य रतिभावस्याङ्गम् ।

त एते रसवदाद्यलङ्कारा इत्याह—एत इति । रसवत्प्रेयऊर्जस्विसमाहितादयः । रसोऽत्रास्तीति रसवत् । यदाहोद्भटः—

## सुधासागरः

लक्षणात् । तत्काले तत्क्षणे उल्लसन् असहभावः कालापेक्षाऽसहिष्णुता अर्थाद् गौर्याः यत्र तथाभूतस्य तपसोऽसोढा सोढुमशक्तः, अथ च शैलदुहितुः पार्वत्याः कथानां शिवानुरागव्यञ्जकालापानां विस्रम्भेषु प्रणयेषु रसिकः सतृष्णः, अत एव कपटवटोर्व्याजब्रह्मचारिणो वेषस्य कृत्रिमाकारस्यापनयने परित्यागे त्वराशैथिल्याभ्यां युगपदभियुक्तः समकालमेवाऽऽविष्टः स्मरहरो महेश्वरो वो युष्मभ्यं प्रमोदं दिश्यात् आनन्दं दद्यादित्यर्थः । अत्रेत्यादि । स्मरहरगतयोरावेगधैर्ययोः सन्धिर्नृपविषयकरतिभावस्याङ्गमित्यर्थः ।

भावशबलताया भावाङ्गत्वमुदाहरति—'पश्येदि'-ति ।

मन्दाक्रान्ता छन्दः । 'मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ ताद् गुरू चेद्' इति लक्षणात् । हे पृथ्वीपरिवृढ भूमिस्वामिन् अरण्यवृत्तेः भयाद् वननिवासिनो भवद्विद्विषः कन्या फलकिसलयान्यादाना सती कञ्चिदभियोक्तारं रतिलम्पटमित्थमभिधत्ते, कथमित्याकाङ्क्षायां पूर्वार्द्धमाह । अत्र शङ्केत्यादि । पश्येत् कश्चिदिति शङ्का । चल चपल रे इत्यसूया । का त्वरेति धृतिः । अहं कुमारीति स्मृतिः । हस्तालम्बं वितरेति श्रमः । हहहेति दैन्यम् । व्युत्क्रम इति विबोधश्च कन्यागमनरूपः । काऽसि यासीत्यौत्सुक्यम् । एषां शबलता नृपविषये रतिभावेऽङ्गमित्यर्थः ।

---

[१] ४.३—कारिकावृत्तावुक्ताः १८ पृष्ठे ।

## साहित्यचूडामणिः

"रसवद् दर्शितस्पष्टशृङ्गारादिरसोदयम्,,। इति।

रत्या प्रियतयोपलक्षितं भाववृन्दमत्रास्तीति प्रेयस्वत्। तदुपचारात् प्रेयोऽपि। यदाह—

> रत्यादिकानां भावानामनुभावादिसूचनैः।
> यत् काव्यं बध्यते सद्भिस्तत् प्रेयस्वदुदाहृतम्॥ इति।

ऊर्जसो बलस्य विद्यमानत्वादूर्जस्वि। बलयोगाद्यनौचित्येन प्रवृत्तिः यदाह—

> अनौचित्यप्रवृत्तानां कामक्रोधादिकारणात्।
> भावानां च रसानां च बन्ध उर्जस्वि कथ्यते॥ इति।

समाहितमिति परिहाररूपत्वात्। यथाह—

> रसभावतदाभासवृत्तेः प्रशमबन्धनम्।
> अन्यानुभावनिश्शून्यरूपं यत्तत् समाहितम्॥

इति रसस्य परविश्रान्तिलक्षणस्य प्रशाम्यदवस्था न संभवतीति व्यतिरिक्तविषयमेतद-वगन्तव्यम्।

इत्थं च रसभावतदाभासभावप्रशमानां चतुर्णां यथायोगमङ्गत्वे रसवदादयश्च-त्वारोऽलङ्कारा इति निष्कर्षः। युगपल्लक्षणमेतेषां चित्तवृत्तिविशेषरूपं साधर्म्यं सूचयितुम्।

## सुधासागरः

'ते च गुणीभूतव्यङ्ग्याभिधाने उदाहरिष्यन्त' इति पूर्वोक्तं स्ववचनं सङ्गमयति—एते चेत्यादि। एते च गुणीभूता रसादयो रसवदाद्यलङ्कारव्यपदेशं लभन्ते।

यद्यपीत्यादि। ननु गुणीभूतो रसो रसवत्। भावस्तु प्रेयः। रसभावाभासौ ऊर्जस्वि। भावशान्तिः समाहित इत्यस्यैव पूर्वेषामलङ्कारव्यवहारो न पुनर्भावोद-यादिषु, तत्कथमेतदुच्यते इति चेत्, यद्यन्यवचनं विना मद्वचसि नादरस्तर्हि कश्चि-त्प्रेक्षावानवश्यं ब्रूयात् रसादिना तुल्यन्यायत्वादित्यर्थः।

अयमत्र श्रीवृत्तिकृतामाशयः—भावोदयादिष्वितरोत्कर्षकत्वस्यालङ्कारत्वव्य-वहारजीवस्य सत्त्वेऽप्यलङ्कारत्वानुक्तिरबोधायैव पर्यवस्यतीत्याक्षिप्ताः प्राञ्चः। परन्तु रसवदाद्यलङ्काराः प्राचामेवाभिमता न तु स्वस्यापि, अमीषां गुणानामिव साक्षादुप-कारकत्वेनाङ्गोपकारद्वारकाङ्ग्युपकारकत्वाभावात्, तस्माद् गुणीभूतव्यङ्ग्यत्वमेवेति।

ननु 'अयं स रशने'त्यत्र प्रकरणगम्यस्य करुणस्य प्राधान्येन सम्भवति ध्वनित्वे कथं गुणीभूतव्यङ्ग्यतेत्यत आह—यद्यपीत्यादि।

---

[१] अलंकारसर्वस्वसूत्रमित्यर्थः। 'एते पृथगलंकारा' इति पृथगेव सूत्रमिति निर्णीतमस्मा-भिरलङ्कारसर्वस्व-संस्करणे।

## साहित्यचूडामणिः

ननु भावप्रशमपर्यन्तमेते चत्वारः प्रपञ्चिताः, तत् कथं भावोदयादीन-प्युदाहृत्योक्तमित्यत्राह—यद्यपीति। कश्चिद् ब्रूयादिति। यत् सूत्रं—'भावोदय-भावसन्धिभावशबलताश्चैते[1] पृथगलङ्कारा' इति। भावप्रशमवदेतेऽप्यलङ्कारा इत्यर्थः। यच्चाह दण्डी—[ काव्यादर्शे २.१ ]

'ते चाद्यापि विकल्प्यन्ते कस्तान् कार्त्स्न्येन वक्ष्यति' इति।

ननु 'किंकुर्वता रसादिना रसादिः परिष्क्रियते? ननूपमयापि किंकुर्वत्या वाक्यार्थः परिष्क्रियते? ननु तयोपमीयत इति चेत् तर्हि रसेनापि रसीक्रियत इति को विशेषः।

ननु ध्वनिगुणीभूतव्यङ्ग्ययोः सङ्करः संसृष्टिर्वा नियमभावी, यतो निश्शेषच्युतेत्यादौ ध्वनावपि मिथ्यावादिनीति बान्धवजनस्याज्ञातपीडागमेत्यत्र वाच्यातिशयासम्भवाद् गुणीभूतव्यङ्ग्यत्वम्। शुद्धे हि ध्वनित्वे 'सत्यं निरूपमौन-गर्भवदनव्याख्यातभावाक्षरमि'—त्यादिवद् भवितव्यं तदतिशयेन। एवं 'ग्रामतरुणमि'त्यादौ शृङ्गारस्फुरणस्यानपह्नवनीयत्वात् सङ्करो गुणीभूतव्यङ्ग्यस्येति चेत्, तत्राह—यद्यपीति। आदिपदादन्यप्रभेदः। तथापीति। प्रधानेन व्यपदेशा भवन्तीति। यस्य यत्रोपपत्तिबाहुल्यं तत्र तेन व्यपदेशः। यदाह—'पत्युः शिरश्चन्द्रकलामि'—त्युदाहृत्य—

प्रकारोऽयं गुणीभूतव्यङ्ग्येऽपि[2] ध्वनिरूपताम्।
धत्ते रसादितात्पर्यपर्यालोचनया पुनः ॥ ध्व० ३.४० ॥

इति क्रमे "तस्माद् वाक्यमत्र ध्वनिः। पदानि तु गुणीभूतव्यङ्ग्यानि। यत्र वाक्ये गुणीभूतव्यङ्ग्यैरुद्भासितेऽपि रसादितात्पर्यं नास्ति, तत्र गुणीभूतव्यङ्ग्यतैव समुदायधर्मः" इति।

## सुधासागरः

विषय आश्रयः। आदिपदेन विजातीयप्रभेदपरिग्रहः।

क्वचिदित्यादि। यत्र यन्मुखेन चमत्कारस्तत्र तेनैव व्यवहार इत्यर्थः। तेनात्र करुणस्य गुणीभूतव्यङ्ग्यशृङ्गारमुखेन चमत्कारित्वात्तेनैव व्यवहारो न ध्वनित्वेन। तदाह—प्राधान्येति। प्राधान्यन्तु चमत्कारप्रयोजकत्वमित्यर्थः। अयमाशयः—ननूदाहृतेषु ध्वनिगुणीभूतव्यङ्ग्ययोर्भेदेषु ध्वनिभेदैरलङ्कारभेदैर्वाऽवश्यं सङ्करः संसृष्टिर्वा वर्त्तते, तत्कथं ध्वनिरिति क्वचित्, क्वचिद् गुणीभूतव्यङ्ग्य इति, तत्रापि क्वचिदलङ्कारध्वनिरिति, क्वचिद्रसादिध्वनिरित्यादि, एवं तद्गुणीभूत-व्यङ्ग्य इत्यादिव्यपदेशानां नियम इति चेत्, प्राधान्यात्। यत्र हि यत्प्रधानं

---

[1] द्रष्टव्या २४० पृष्ठगता टिप्पणी    [2] 'योऽपि०' इति प्रसिद्धः पाठः।

जनस्थाने भ्रान्तं कनकमृगतृष्णान्धितधिया
वचो वैदेहीति प्रतिपदमुदश्रु प्रलपितम् ।
कृतालङ्काभर्तुर्वदनपरिपाटीषु घटना
मयाऽऽप्तं रामत्वं कुशलवसुता न त्वधिगता ॥

—अत्र शब्दशक्तिमूलानुरणनरूपो रामेण सहोपमानोपमेयभावो वाच्याङ्गतां नीतः ।

---

## साहित्यचूडामणिः

प्रकृतमनुसरन्नाह—जनस्थान इति । राजस्थानादौ पर्यटितम् कनकेन धनसामान्यं लक्ष्यते, तदेव मृगतृष्णा अर्कमरीचिका तया हृता बुद्धिर्यस्य । वैशब्दः प्रसिद्धौ । अलं पूर्णं कृत्वा काभर्तुः कुत्सितप्रभोः वदनं व्यक्ता वाक् स्तोत्ररूपा तस्य परिपाटीषु परम्परासु घटना उद्योगः इति निर्विण्णस्य कस्यचित् प्राकरणिकं प्रमेयम् । अन्यस्तु जनस्थाने खरदूषणावासे । कनकमृगः काञ्चनहरिणः, तत्र तृष्णा प्रेयसीप्रयोजिता । वैदेहि ! सीते ! लङ्काभर्ता दशकन्धरः । तस्य यानि वदनानि मुखानि तत्परिपाट्यामिषुघटना शरयोजना । एवञ्च मया राघवत्वमात्तं स्वीकृतं किन्तु कुशलवौ सुतौ तनयौ यस्याः सा सीता न प्राप्ता, कुशलमक्लेशलभ्यं वसु वित्तं यस्य तस्य भावश्च । अतश्च जनस्थानादिशब्दानां या शक्तिरभिधा तन्मूलानुस्वानलक्षणो रामेण सह याच्ञाखिन्नस्य पुंस उपमानोपमेयभाव इत्युपमालङ्कारो वाच्यस्य 'मयात्तं रामत्वमि'त्यभिधेयस्याङ्गतां नीतः । एतेन व्यतिरेको व्याख्यातः, कुशलवसुता न त्वधिगतेत्युक्तत्वात् ।

## सुधासागरः

तत्र तेन व्यपदेशः । प्राधान्यञ्चातिशयितश्चमत्कारः । स च सहृदयैकवेद्य इति नासिद्ध इति ।

अथ वाच्याङ्गभावेन शब्दशक्तिमूलस्य लक्ष्यक्रमस्य गुणीभावमुदाहरति—'जनस्थान' इति ।

शिखरिणी छन्दः । कवेर्वाक्यमिदम् । मया जनानां स्थाने नगरग्रामादौ । कनके या मृगतृष्णा निष्फलाशा, यद्वा कनकस्य मृगो मार्गणं प्रार्थना वा तत्र या तृष्णा तयाऽन्धिताऽन्धीकृता विवेकशून्यीकृता या धीस्तया भ्रान्तम् । वै निश्चयेन देहीति वचः प्रतिपदं प्रतिस्थानमुदश्रु उत्थिताश्रुजलं यथा स्यात्तथा प्रलपितम् । अलमतिशयेन काभर्त्तुः कुत्सितभर्त्तुर्लब्धधनिनो वदनपरिपाटीषु मिथ्यावचनपरम्परासु घटना एवमेवेति समर्थना कृता । रामेणाऽपि लङ्काभर्त्तू रावणस्य वदनपरिपाट्यां वक्त्रपरम्परायामिषूणां बाणानां घटना कृता । इत्थं मया रामत्वमाप्तम्, परन्तु कुशलमायतिशुद्धं वसु धनं यस्य तत्ता तु नाधिगता । रामेण कुशलवौ सुतौ यस्याः सा सीता प्राप्तेति भावः । अत्र पादत्रयद्योत्याऽपि रामेण सहोपमा मयाऽऽप्तं

आगत्य सम्प्रति वियोगविसंष्ठुलाङ्गी-
मम्भोजिनीं क्वचिदपि क्षपितत्रियामः ।
एनां प्रसादयति पश्य शनैः प्रभाते
तन्वङ्गि, पादपतनेन सहस्ररश्मिः ॥

—अत्र नायकवृत्तान्तोऽर्थशक्तिमूलो वस्तुरूपो निरपेक्षरविकमलिनीवृत्तान्ताध्यारोपेणैव स्थितः ।

---

## साहित्यचूडामणिः

एवं शब्दशक्तिमूलोऽलङ्कार उदाहृतः । अथार्थशक्तिमूलं वस्तुमात्रमुदाहरति—आगत्येति । क्वचिदपि मेरुपार्श्वादौ विपक्षभवने च ।

नायकश्च नायिका च नायकौ, तयोर्वृत्तान्तो यथानिर्दिष्टार्थसामर्थ्यसमुत्थितसूर्यपद्मिन्योर्वृत्तान्ततयाध्यारोपितेनैव स्वरूपेण स्थितः वस्तुरूप इति पूर्वोदाहरणादभिन्नस्वरूपः । गुणीभूतव्यतिरेके वक्तुरसंबन्धाभिधायित्वप्रसङ्ग इति सूचयितुमेवकारः । निरपेक्षेत्येतेन वाच्यसिद्ध्यङ्गादस्य भेद उपपाद्यते । तद्धि वाच्यस्य या सिद्धिरुत्पत्त्यवस्था तत्राङ्गम् । एतत् तु सिद्धस्य वाच्यस्य पश्चादन्वयदशायामङ्गम् । स्वसिद्धिं प्रति निरपेक्षे रविकमलिनीवृत्तान्तेऽध्यारोपेण स्थित इति यावत् ।

## सुधासागरः

रामत्वमित्यनेन वाच्यतां नीता, तदङ्गं च शब्दशक्तिमूलाऽनुरणनरूपो द्वितीयोऽर्थः । तदेतदाह श्रीवृत्तिकारः—अत्र शब्दशक्तीत्यादि ।

वाच्य एवार्थशक्तिमूलस्याङ्गभावमुदाहरति—'आगत्ये'-ति ।

वसन्ततिलका च्छन्दः । हे तन्वङ्गि ! पश्य क्वचिदपि द्वीपान्तरे नायिकान्तरे च क्षपिताऽविवाहिता त्रियामा रात्रिर्येन तथाभूतः सहस्ररश्मिः सूर्यः सम्प्रति प्रभाते प्रातःकाले जाते सति शनैः रहस्यभङ्गभीत्या मन्दमागत्य वियोगेन विसंष्ठुलं सङ्कुचितं मुकुलितमिति यावत् । पक्षान्तरे विपर्यस्तं कार्श्यादिना पूर्वावस्थातो विसंवादि अङ्गं यस्यास्तादृशीमम्भोजिनीं पद्मिनीं नायिकाविशेषं च पादपतनेन-किरणपातेन प्रणामेन च प्रसादयति विकासयति अनुनयति चेति ।

अत्र नायकेत्यादि । नायक इत्येकशेषः । अर्थशक्तिमूलो नायकनायिकावृत्तान्तो वाच्यरविकमलिनीवृत्तान्ताध्यारोपेण तदङ्गतयैव स्थित इत्यर्थः । समासोक्तौ उपोढरागेण विलोलेत्यादौ, सर्वत्र प्रतीयमानार्थोपस्कृतवाच्यस्यैव प्राधान्यात्, अयं च पादपतनेनेति, श्लिष्टशब्दसद्भावेऽपि न शब्दशक्तिमूलत्वेन व्यपदेश्यः किन्त्वर्थशक्तिमूलत्वेन 'प्राधान्येन व्यपदेशः' इति न्यायात्, तद्व्यतिरेकेणाऽपि नायकनायिका-

३. वाच्यसिद्ध्यङ्गं यथा—

भ्रमिमरतिमलसहृदयतां प्रलयं मूर्च्छां तमः शरीरसादम् ।
मरणञ्च जलदभुजगजं प्रसह्य कुरुते विषं वियोगिनीनाम् ॥

—अत्र हालाहलं व्यङ्ग्यं भुजगरूपणस्य वाच्यस्य सिद्धिकृत् ।

---

## साहित्यचूडामणिः

क्रमप्राप्तं वाच्यसिद्ध्यङ्गमेवाह—वाच्येति । भ्रमिमिति । जलदभुजगजं विषमित्यत्र विषशब्देन सलिलमभिधीयते गरलं व्यज्यते । तच्च व्यङ्ग्यं जलदं प्रति भुजगरूपणस्य सिद्धिमुत्पत्तिं करोति । ततश्च व्यङ्ग्यवस्तुसमर्पणप्रवृत्तस्य वाच्यस्य सिद्धौ प्रत्युत तद् व्यङ्ग्यं प्रवर्तत इति गुणीभूतव्यङ्ग्यत्वम् । यदि च विषशब्दो हालाहलं न ध्वनेत् कथं जलदो भुजग इति रूप्येत । भ्रमिरन्तःकरणस्य वैयाकुल्यम् । अरतिरव्यवस्था । प्रलयः संज्ञानाशः । मूर्च्छा चैतन्यस्य स्तैमित्यम् । तमः शून्यकदयाप्रवेशः । मरणं देहप्राणविश्लेष इति ।

## सुधासागरः

वृत्तान्तव्यक्तिसम्भवाच्च । न वोपमाऽत्र व्यङ्ग्या, 'उल्लास्य कालकरवाले'-त्यादिवत् श्लेषाभावात् । न च वाच्यसिद्ध्यङ्गत्वम्, रविकमलिनीवृत्तान्तस्यैतन्नैरपेक्ष्येणैव सिद्धेरिति द्रष्टव्यम् ।

वाच्यसिद्ध्यङ्गं द्विधा—एकवक्तृपदवाच्याङ्गमन्यवक्तृकपदवाच्याङ्गं च । तत्राद्यमुदाहरति—'भ्रमिमे'-ति ।

जलद एव भुजगः सर्पस्तस्माज्जातं विषं पानीयमेव विषं गरलं कर्तृ प्रसह्य बलात्कारेण वियोगिनीनां भ्रमिं चेतसोऽनवस्थामरतिं विषयेष्वरुचिमलसहृदयतामुदासीनतां प्रलयं बहिरिन्द्रियचेष्टाविरहं मूर्च्छां बहिरिन्द्रियाऽसम्बन्धं तमोऽन्धकारदर्शनं शरीरसादं देहकार्श्यं मरणं विनाशं च कुरुते इति वाक्यार्थः ।

अत्र हालाहलमित्यादि । भुजगरूपस्य प्रधानीभूतभुजगरूपस्येत्यर्थः । प्राधान्यं च रूपण एव । उपमायां पूर्वपदप्राधान्याद् वाच्यस्य जलदरूपता च जलगरलोद्गारित्वरूपसाधर्म्येण जलदभुजगयोः रूपणमनुपपन्नमिति भावः । अत एव प्रदीपकारैर्व्याख्यातम्—अत्र हालाहलरूपो विषशब्दार्थो व्यङ्ग्यः, जलेऽभिधानियमात् । स च जलदभुजगेति रूपणस्य वाच्यस्य सिद्धिं करोति अन्यथोपमासन्देहसम्भवादिति ।

ननु गरलस्य न व्यङ्ग्यता, सत्यपि वृष्टिप्रकरणे प्रसिद्धिवशादभिधया विषपदेन द्रागेव गरलोपस्थितेः, यतः प्रकरणात् प्रसिद्धिरेव बलवती, अन्यथा निहतार्थविलोपप्रसङ्गात् । प्रकरणबलादप्रसिद्धस्य प्रागुपस्थितौ तद्दोषस्यानवकाशादिति चेत्, उच्यते । प्रसिद्धा गरलोपस्थितिरिति जलाभिन्ने गरले जलदाभिन्नभुजगजत्वावगमः, सर्वथा गरलप्रत्यायनन्तु व्यञ्जनयैव, अभिधाया विरतत्वात् । न च पुनरभिधयैव

यथा वा—

गच्छाम्यच्युत, दर्शनेन भवतः किं तृप्तिरुत्पद्यते
किं त्वेवं विजनस्थयोर्हतजनः सम्भावयत्यन्यथा ।
इत्यामन्त्रणभङ्गिसूचितवृथावस्थानखेदालसा-
माश्लिष्यन्पुलकोत्कराञ्चिततनुर्गोपीं हरिः पातु वः ॥

—अत्राच्युतादिपदव्यङ्ग्यमामन्त्रणेत्यादिवाच्यस्य ।
एतच्चैकत्रैकवक्तृगतत्वेन अपरत्र भिन्नवक्तृगतत्वेनेत्यनयोर्भेदः ।

---

## साहित्यचूडामणिः

गच्छामीति । तृप्तिराकाङ्क्षाशान्तिः यावज्जीवं पश्यन्त्या अपि न कश्चिदलंभावः अतो गच्छामीति । अच्युत ! अस्खलितहृदयकाठिन्य ! यस्माद् भवतो दूरतो निरीक्षणेन तृप्तिर्न संपद्यते । आमन्त्रणस्य गमनार्थं प्रयोज्यस्य वाक्यस्य भङ्गिः व्यञ्जनस्वभाववैचित्री तया सूचितो यो वृथावस्थानान्निष्फलविलम्बनात् खेदः क्लेशः तेनालसां गोपीमाश्लिष्यन्निति । अच्युततृप्त्यादीनां पदार्थानां व्यङ्ग्यम् आमन्त्रितेत्यादिवाच्यस्य सिद्धिमुत्पत्तिं करोति । यदाह—

शब्दार्थशक्त्याक्षिप्तोऽपि व्यङ्ग्योऽर्थः कविना पुनः ।
यत्राविष्क्रियते स्वोक्त्या सान्यैवालङ्कृतिर्ध्वनेः ॥ ध्व० २.३१ ॥ इति ।

## सुधासागरः

गरलप्रत्यायनमस्तु किं व्यञ्जनयेति वाच्यम्, तथा सत्यावृत्तिकल्पनापत्तेः । अस्मन्मते तु नैवम्, शब्देनाभिधेयप्रत्ययद्वारा व्यञ्जनसिद्धेः । अन्यथैवमावृत्तिकल्पने गतं शाब्दीव्यञ्जनया, न च दर्शनान्तराभिमानिनामिष्टमेवैतदिति वाच्यम्, व्यञ्जनातिरिक्तवृत्तेर्बाधितार्थबोधनासामर्थ्यात्, व्यञ्जनायास्तु बाधितार्थबोधकतयैव धर्मिग्राहकमानसिद्धत्वादित्यलं बहुना । न च जलगरलयोर्जलदभुजगयोश्च न कथमुपमेति वाच्यम्, भ्रम्याद्यष्टविधकार्यस्य गरलादेवोपपत्तेर्न तु तत्सदृशादिति ।

अन्यवक्तृकशब्दे वाच्यसिद्ध्यङ्गमुदाहरति—'गच्छाम्ये-'ति ।

शार्दूलविक्रीडितं छन्दः । वाच्यार्थः स्पष्टः ।

अत्राच्युतेत्यनेन धैर्यादस्खलितस्त्वमतो व्यर्थमवस्थानमिति । दर्शनेनेत्यादिना सम्भोगेनैव तृप्तिरिति । किन्त्वेवमित्यादिना द्वयोरकीर्त्तिर्जातैव तद्वृथैवात्मानं चञ्चयाव इति खेदश्च व्यज्यते । तच्च इत्यामन्त्रणभङ्गिसूचितवृथावस्थानखेदालसामित्येतद्वाच्यस्य सिद्धिं करोति तद्व्यक्तिं विना एतद्विशेषणपदार्थस्य शरीरालाभात् ।

४. अस्फुटं यथा—

अदृष्टे दर्शनोत्कण्ठा दृष्टे विच्छेदभीरुता ।
नादृष्टेन न दृष्टेन भवता लभ्यते सुखम् ॥

—अत्रादृष्टो यथा न भवसि वियोगभयं च यथा नोत्पद्यते तथा कुर्या इति म्लिष्टम्[1] ।

---

## साहित्यचूडामणिः

उदाहरणद्वयस्य मिथो वैषम्यमुन्मेषयति—एतच्चेति । एकत्र पूर्वस्मिन्नभिन्नाभिधातृनिष्ठतया, अपरत्र प्रस्तुते पूर्वत्रार्धे गोपी उत्तरत्र कविरित्यनेकाभिधातृवर्तितया । अस्फुटमिति । पोटास्तनसन्निवेशवदनुन्मिषितरूपमपि व्यङ्ग्यं न चमत्कारायेति भावः ।

अदृष्ट इति । नायकस्य सौभाग्यम् अस्थैर्यं च प्रकटयन्त्याः कस्याश्चिदुक्तिः ।

म्लिष्टमस्पष्टम्[2] । यदाह—

यत्र प्रतीयमानोऽर्थः प्रम्लिष्टत्वेन भासते ।
वाच्यस्याङ्गतया वापि नास्यासौ गोचरो ध्वनेः ॥ ध्व० २.३१ ॥

सर्वेष्वेव प्रभेदेषु स्फुटत्वेनावभासनम् ।
यद्व्यङ्ग्यस्याङ्गिभूतस्य तत्पूर्णं ध्वनिलक्षणम् ॥ध्व० २.३३॥ इति ।

नह्यत्र कविसंरम्भः शुद्धं व्यञ्जनमलब्ध्य विजृम्भते । किं तर्हि, नादृष्टेन न दृष्टेनेत्यादिवाच्यापेक्षया मसृणध्वन्यर्थानुकूलामभिधामुद्दिश्य, यत्र पर्यायोक्तस्यौचित्यम् ।

## सुधासागरः

व्याख्यातश्च श्रीवत्सलाञ्छनभट्टाचार्य्यैः—अच्युत तन्नामक अपरिच्युतधैर्य च । किं दर्शनेनाऽपि तु सम्भोगेन । सम्भावयतीति, अन्यथा सम्भावनमावश्यकं तत्किमित्यात्मानं वञ्चयाव इत्यर्थो व्यङ्ग्याः, ते चामन्त्रणाद्यर्थस्योपपादका इति । तदेतत्सर्वमभिप्रेत्य श्रीवाग्देवतावतार आह—अत्राच्युतेत्यादि । उदाहरणद्वयभेदकमाह—एतच्चेत्यादि ।

अस्फुटमुदाहरति—'अदृष्ट' इति । वाच्योऽर्थः स्पष्टः ।

अत्रादृष्टो यथेत्याद्युक्तं व्यङ्ग्यं क्लिष्टम्[3], सहृदयैरपि झटित्यसंवेद्यमित्यर्थः ।

---

[1–3] चूडामणौ म्लिष्टमिति सुधासागरे च क्लिष्टमिति पाठः ।

५. सन्दिग्धप्राधान्यं यथा—

हरस्तु किञ्चित्परिवृत्तधैर्यश्चन्द्रोदयारम्भ इवाम्बुराशिः ।
उमामुखे बिम्बफलाधरोष्ठे व्यापारयामास विलोचनानि ॥

—अत्र परिचुम्बितुमैच्छदिति किं प्रतीयमानं किं वावि लोचनव्यापारणं वाच्यं प्रधानमिति सन्देहः ।

६. तुल्यप्राधान्यं यथा—

ब्राह्मणातिक्रमत्यागो भवतामेव भूतये ।
जामदग्न्यस्तथा मित्रमन्यथा दुर्मनायते ॥

—अत्र जामदग्न्यः सर्वेषां क्षत्रियाणामिव रक्षसां क्षणात् क्षयं करिष्यतीति व्यङ्गयस्य वाच्यस्य च समं प्राधान्यम् ।

---

## साहित्यचूडामणिः

[ सन्दिग्धेति ] सन्दिग्धप्राधान्यं तुल्यप्राधान्यं चेति द्वे । तत्राद्यं यथेत्यर्थः ।

हरस्त्विवति । समुद्रस्य संक्षोभश्चन्द्रोदये कल्पान्ते चाविर्भवति । तत्र पूर्वौचित्येन परिवृत्तं धैर्यं यस्य । सन्देह इति । व्यापारयामास विलोचनानीत्यत्र बिम्बफलाधरोष्ठमुमामुखमुद्दिश्याभिधीयमानत्वादर्थशक्तिमूलं परिचुम्बितुमैच्छदिति किं प्रतीयमानं प्रधानम्, उत लौकिकपुरुषवैलक्षण्येन विलोचनानां त्रयाणामपि यद्व्यापारणं वाच्यभूतं तदेव प्रधाममिति संशयः । एतदेव प्रमाणं वाच्यस्य व्यङ्ग्येन सह प्राधान्यसन्देहे, यत् 'कोपं प्रभो संहर संहरे'त्यादिक्रमेण येनैव भगवानिक्षुधन्वानं धक्ष्यति तेनैव नेत्रेण पार्वतीमुखावलोकनमहोत्सवं सम्भावयामासेति ।

अथ समप्राधान्यमुदाहरति—ब्राह्मणेति । पौलस्त्यं प्रति भार्गवस्यायं सन्देशः ।

## सुधासागरः

संन्दिग्धप्राधान्यमुदाहरति—'हरस्त्वि'-ति ।

स्पष्टम् । उपजातिश्छन्दः 'अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः' इति लक्षणात् । अनन्तरोदीरितमिन्द्रवज्रोपेन्द्रवज्रालक्षणम् । अत्राधरमित्यादि । अधरं परिचुम्बितुमैच्छदिति व्यङ्ग्यं युगपल्लोचनत्रयव्यापरणं वाच्यम्, तयोश्च प्राधान्ये साधकबाधकमानाभावेन सन्देहः, वाच्यस्याऽप्यलौकिकत्वेन चमत्कारकारित्वात्, उत्कण्ठातिशयव्यञ्जकत्वाच्चेति भावः ।

तुल्यप्राधान्यमुदाहरति—'ब्राह्मणे'-ति ।

परशुरामदूतस्य रावणं प्रति वचनम् । अत्र जामदग्न्य इत्यादि दुर्मनायते इति

७. काक्वाक्षिप्तं यथा--

मथ्नामि कौरवशतं समरे न कोपाद् ?
दुःशासनस्य रुधिरं न पिबाम्युरस्तः ?
संचूर्णयामि गदया न सुयोधनोरू ?
सन्धिं करोतु भवतां नृपतिः पणेन ॥

——अत्र मथ्नाम्येवेत्यादिव्यङ्ग्यं वाच्यनिषेधसहभावेन स्थितम् ।

## साहित्यचूडामणिः

**सममिति**। व्याख्यातरूपस्य व्यङ्ग्यस्य वाच्यस्य च प्राधान्यं तुलाधृतवदवतिष्ठते, चमत्कारकारितायामविशेषात्। ब्राह्मणानां परिभवस्य प्रस्तुतस्य यस्त्यागः परिवर्जनं स भवतां रक्षसामेव संपत्तये। अन्यथेति ब्राह्मणातिक्रमस्य कर्तव्यतापक्षे युष्माकं मित्रं भवन्नयं जनो दुर्मनायते इति यद् वाच्यवैचित्र्यं तद् व्यङ्ग्येन सह समशीर्षिकामारोहति। व्यङ्ग्यापेक्षिणः कवेरविचित्रेण केवलं व्यञ्जनप्रवीणेन वाच्येन भवितव्यम्, तदपराधाधीनोऽयं गुणीभाव इत्युपनिषत्। प्राधान्यस्य सन्देहसादृश्ययोः सहृदया एव प्रमाणं व्युत्थितैरन्यथापि 'वक्तुं शक्यत्वात्।

**काक्वेति**। शब्दशक्तिरेव स्वाभिधेयसामर्थ्याक्षिप्तकाकुसहाया सती विशेषार्थप्रतिपत्तिहेतुः, न काकुमात्रं, विषयान्तरे स्वेच्छाकृतकाकुमात्रेण तथाविधार्थप्रतीत्यभावात्। स चार्थो नित्यमर्थसामर्थ्यलभ्यो व्यङ्ग्योऽपि काकुविशेषसहायशब्दव्यापारोपारूढ इति गुणीभूत एव। उन्मीलितं चैतत् तृतीयोल्लासे। यदाह—

अर्थान्तरगतिः काक्वा या चैषा परिदृश्यते।
सा व्यङ्ग्यस्य गुणीभावे प्रकारमिममाश्रिता॥ ध्व. ३.३८॥ इति।

**मथ्नामीति**। अत्र प्रतिनकारं काकुः। तया च वाचकशक्त्यनुप्रविष्टया मथ्नाम्येवेति संरम्भाडम्बरबहुलं व्यङ्ग्यमुत्थाप्यते, न स्वतन्त्रया व्यञ्जनशक्त्या, यतो गुणीभावो विशेषः वाच्यातिक्रमणसामर्थ्याभावात्।

## सुधासागरः

**गम्भीरोक्त्या** वाच्यस्याऽपि चमत्कारित्वात्, विग्रहवत् सन्धेरपि विवक्षितत्वाच्चेति **भावः**। अत एव वाच्यं साम, व्यङ्ग्यन्तु विग्रह इत्युभयोश्चमत्कारकारित्वाविशेषात् **समप्राधान्यमित्यर्थ** इति मधुमतीकारा व्याचख्युः।

काक्वाक्षिप्तमुदाहरति—'मथ्नामी'-ति।

सन्धिश्रवणकुपितस्य भीमसेनस्योक्तिरियम्। स्पष्टम्। सन्धिश्रवणकुपितस्य विरुद्धनिषेधाभिधायिवाक्येषु नञ्काकुर्निषेधान्तराक्षेपिका। अभावाभावश्चावधारणमेवेत्याह—मथ्नाम्येवेत्यादि।

---

१ 'था विवेक्तुमशा' इति पाठे।

८. असुन्दरं यथा—

वाणीरकुडंगुड्डीणसउणिकोलाहलं सुणन्तीए ।
घरकम्मवावडाए बहुए सीअन्ति अंगाइं ॥
[ वानीरकुञ्जोड्डीनशकुनिकोलाहलं शृण्वत्याः ।
गृहकर्मव्यापृताया वध्वाः सीदन्त्यङ्गानि ॥]

—अत्र दत्तसङ्केतः कश्चिल्लतागहनं प्रविष्ट इति व्यङ्ग्यात् सीदन्त्यङ्गानीति वाच्यं सचमत्कारम् ।

---

## साहित्यचूडामणिः

वाच्येति । न मथ्नामीति वाच्यलक्षणो यो निषेधस्तेन सहभावः सहावस्थानं तदतिक्रमणासामर्थ्यं तेन रूपेण स्थित इति । प्रश्नमात्रेण काकुविश्रान्तौ न गुणीभावौचित्यमिति ग्रन्थकारस्याकूतम् । तथा च न्यदर्शि 'गुरुः खेदं खिन्ने मयि भजती'त्यत्र । एतेन काकाक्षिप्तस्य वाच्यसिद्ध्यङ्गत्वानुप्रवेशः किञ्चिद् वैलक्षण्यं च व्याख्यातम् ।

वाणीरेति ।

वानीरकुडुङ्गोड्डीनशकुनिकोलाहलं शृण्वत्याः ।
गृहकर्मव्यापृताया वध्वाः सीदन्त्यङ्गानि ॥

वाच्यं सचमत्कारं, तस्मान्न सौन्दर्यमस्य । यदाह—

## सुधासागरः

नन्ववधारणस्य चमत्कारित्वे ध्वनित्वे सम्भवति कथं गुणीभाव इत्यत आह—वाच्येति । सहभावेन समकालं प्रतीयमानत्वेन । तेन व्यङ्ग्यकृतचारुत्वस्य वाच्यानिर्वाह्यत्वग्रहान्न ध्वनित्वं किन्तु गुणीभूतव्यङ्ग्यत्वमेवेति भावः । अत एवाकाकुव्यङ्ग्यस्य पदार्थस्थानीयत्वेन सूत्रे आक्षिप्तपदं झटिति प्रत्यायितमित्येतत्परम् । यत्र काकुतोऽपि विलम्बेन प्रतीतिस्तत्र ध्वनित्वमेव । यथोदाहृतं 'गुरुः खेदं खिन्ने' इत्यत्रेति द्रष्टव्यम्, अत एव प्रदीपकारै र्व्याख्यातम्—अत्र मथ्नामीति व्यङ्ग्यम् । तच्च वाच्यनिषेधस्य सहभावेनैव व्यवस्थितम्, तादृशकाकुं विना वाच्यस्य बाधितत्वेनाप्रादुर्भावात् हठेनैव तदाक्षेपाद् वेत्युक्तं प्रागिति ।

असुन्दरमुदाहरति—'वाणीरे'ति ।

वानीरकुञ्जोड्डीनशकुनिकोलाहलं शृण्वत्याः ।
गृहकर्मव्यापृताया वध्वाः सीदन्त्यङ्गानि ॥

**एषां भेदा यथायोगं वेदितव्याश्च पूर्ववत् ॥ २ ॥**

यथायोगमिति—

व्यज्यन्ते वस्तुमात्रेण यदाऽलंकृतयस्तदा ।
ध्रुवं ध्वन्यङ्गता तासां काव्यवृत्तेस्तदाश्रयात् ॥ [ध्व० २.२९]

इति ध्वनिकारोक्तदिशा वस्तुमात्रेण यत्रालङ्कारो व्यज्यते न तत्र गुणीभूतव्यङ्ग्यत्वम् ॥ २ ॥

---

## साहित्यचूडामणिः

प्रकारोऽन्यो गुणीभूतव्यङ्ग्यः काव्यस्य दृश्यते ।
यत्र व्यङ्ग्यान्वये वाच्ये चारुत्वं[1] स्यात् प्रकर्षवत् ॥ ध्व.३,३८ ॥ इति ।

इक्षुखण्डकल्पं हि काव्यं कल्पनीयम् । तत्र रसनिष्यन्दस्थानीयं व्यङ्ग्यम् ऋजीषप्रायं च वाच्यमिति वाच्यादपि व्यङ्ग्यस्य चमत्कारार्पणप्रावीण्येन भवितव्यम् । अत्र तु प्रत्युत व्यङ्ग्यादपि वाच्यस्य चारुत्वम् । तथाहि—शकुनिकोलाहलं शृण्वत्या इति हेतौ शता यस्मादस्या अङ्गानि सीदन्ति किंकर्तव्यतया विमुह्यन्ति यदेषा गृहकर्मणि व्याप्रियत इति वाच्यावस्थैवात्र सचेतसां चर्वणीया । ततश्च व्यङ्ग्यस्यासौन्दर्यं नाम वाच्यवर्तिनः प्राधान्यस्याधिक्यं तुल्यत्वसंशयविलक्षणम् । यद्यप्यत्र पर्यन्ते रसध्वनिरस्ति तथापि मध्यमकक्ष्यानिविष्टोऽसौ स्वातन्त्र्येण न रसोन्मुखी भवति, अपितु वाच्यमेवार्थमुपकर्तुं धावतीति सर्वमप्यनाकुलम् ।

अथ ध्वनिवद् गुणीभूतव्यङ्ग्यस्यापि संसृष्टिसंकरौ योज्यावित्याह—एषामिति । चकारो भिन्नक्रमः । व्यज्यन्त इति । यदा वस्तुमात्रेणालङ्कृतय उपमाद्यो ध्वन्यन्ते तदा तासां निश्चितो ध्वनिकक्ष्याप्रवेशः, यतो वाच्यकक्ष्यायामपि प्रायेण काव्यवृत्तिरलङ्कृत्याश्रयेति कारिकार्थः । एतदुक्तं भवति—

## सुधासागरः

इति संस्कृतम् । स्पष्टम् । अत्र दत्तसङ्केतः कश्चिल्लतागहनं प्रविष्ट इति व्यङ्ग्यं तस्माद् वाच्यं चमत्कारकारि, शब्दश्रवणसमकालमेव सर्वाङ्गावसादसन्तन्यमानतारूपस्य तस्यातिसौन्दर्यात्, उत्कण्ठातिशयपर्यवसन्नत्वात् । तदेतद् वृत्तिकृदाह—अत्र दत्तसङ्केत इत्यादि ।

पूर्ववत्—ध्वनेरिव । चकारो भिन्नक्रमः पूर्ववच्चेत्यर्थः । यथायोगमिति । यथासम्भवमित्यादि । अयमर्थः । न केवलमेत एव गुणीभूतव्यङ्ग्यभेदाः किन्त्वर्थान्तरसङ्क्रमितवाच्यत्वादिभिर्यथा ध्वनेर्भेदास्तथाऽसम्भविनो विहायाऽस्यापि तैरुपाधिभिः

---

१ 'वाच्यवा०' इति प्रकाशितः पाठः । यथास्थितस्तूचितः ।

## साहित्यचूडामणिः

अलंकारान्तरस्यापि प्रतीतौ यत्र भासते।
तत्परत्वं न काव्यस्य नासौ मार्गो ध्वनेर्मतः ॥ ध्व० २.२७ ॥

अलङ्कारान्तरव्यङ्ग्यभावे ध्वन्यङ्गता भवेत्।
चारुत्वोत्कर्षतो व्यङ्ग्यप्राधान्यं यदि लक्ष्यते ॥ ध्व० २.३० ॥

व्यङ्ग्यत्वेऽप्यलङ्काराणां प्राधान्यविवक्षायामेव सत्यां ध्वनावन्तःपातः, इतरथा गुणीभूतव्यङ्ग्यतैवेति ध्वतितद्वृत्तियुक्त्या वस्तुमात्रव्यङ्ग्यानामप्यलब्धप्राधान्यानामलङ्काराणां ध्वनित्वनिषेध इति कस्यचित् प्रतिभासेत, तन्निरासार्थोऽयं [व्यज्यन्ते वस्तुमात्रेणेति कारिकया] प्रतिप्रसवः ॥ २ ॥

## सुधासागरः

शुद्धभेदाः। सङ्करसंसृष्टिभ्यां योजने च तेषामेषां च सङ्कीर्णभेदा अपि बोद्धव्याः। असम्भविनश्च वस्तुमात्रेणाऽलङ्कारव्यक्तिनिबन्धनाः। तदुक्तं ध्वनिकृता—

व्यज्यन्ते वस्तुमात्रेण यदाऽलङ्कृतयस्तदा।
ध्रुवं ध्वन्यङ्गता तासां काव्यवृत्तेस्तदाश्रयात् ॥ [ध्व० २-२९] इति।

अत्र ध्वन्यङ्गता व्यङ्ग्यतया। ध्रुवं ध्वन्यङ्गता—ध्वनिनैव ता व्यज्यन्ते तद्व्यञ्जकस्य ध्वनित्वमेवेत्यर्थः। कुतः? काव्यवृत्तेस्तदाश्रयात्—काव्यवृत्तेस्तदभिसन्धानपूर्वकत्वात्, वस्तुमात्रापेक्षयाऽलङ्कारस्य चारुतानियमादित्यर्थः। इदं त्ववधेयम्। वस्त्वलङ्कारयोर्व्यङ्ग्यव्यञ्जकभावोऽत्र क्रमव्युत्क्रमाभ्यां द्विविधोऽपि विवक्षित इति षड्भेदैर्हीनः प्रस्तारः। तथा च गुणीभूतव्यङ्ग्यस्य पञ्चचत्वारिंशद् भेदाः शुद्धा द्रष्टव्याः।

ननु यद्यलङ्कारापेक्षया वस्तुमात्रस्य नातिशयनियमस्तदा कथमलङ्कारेण वस्तुमात्रव्यञ्जने ध्वनित्वमिति चेत्। उच्यते। स एवार्थो वाच्यः सन् न तथा चमत्करोति यथा व्यङ्ग्यतापन्न इत्यनुभवसिद्धम्। अतो वाच्यताऽपकर्षहेतुः, व्यङ्ग्यता तूत्कर्षायेति स्थितम्। यत्र चालङ्कारेण वस्तुमात्रं व्यङ्ग्यं तत्रालङ्कारस्य वाच्यत्वेन किञ्चिदपकर्षात्, वस्तुमात्रस्य च व्यङ्ग्यत्वेन किञ्चिदुत्कर्षाद्यज्यत एव ध्वनित्वम्। यत्र तु वस्तुनाऽलङ्कारो व्यज्यते, तत्र 'वस्त्वलङ्कारयोर्वाच्यत्वव्यङ्ग्यत्वाभ्यामतिशयेनैवोत्कर्षापकर्षाविति कुतो गुणीभूतव्यङ्ग्यत्वावकाशः।

अत्र प्रदीपकाराः—इदं तु चिन्त्यम्। एवं चारुत्वाभावनिबन्धनं गुणीभूतत्वं मा भूत्, अगूढत्वादिनिबन्धने तु तस्मिन् को वारयितेत्याहुः।

अत्र ब्रूमः—चारुत्वाभावमात्रनिबन्धनमेव हि गुणीभूतव्यङ्ग्यत्वम्, अगूढत्वादिकं तु चारुत्वाभावप्रयोजकमेदकं न तु मध्यमकाव्यताप्रयोजकम्। उक्तञ्च सूत्रकारैः—'अतादृशि गुणीभूतव्यङ्ग्यं व्यङ्ग्ये तु मध्यमम्' इति दिक्। यत्पुनरष्टानामेव भेदानां सङ्कीर्णत्वमात्रातिदेशिकमिदं सूत्रमिति केचिद् वदन्ति, तदबोधात्। तथा सति हि यथायोगमित्यनेन वस्तुव्यङ्ग्यालङ्काररूपभेदपर्युदासवैयर्थ्यम्। सङ्करादीनां यथायोगपदाभावेऽप्यव्याहतेः।

**सालङ्कारैर्ध्वनेस्तैश्च योगः संसृष्टिसङ्करैः ।**

सालङ्कारैरिति । तैरेवालङ्कारैः [1]अलङ्कारयुक्तैश्च तैः । तदुक्तं ध्वनिकृता—

स गुणीभूतव्यङ्ग्यैः सालङ्कारैः सह प्रभेदैः स्वैः ।
सङ्करसंसृष्टिभ्यां पुनरप्युद्योतते बहुधा ॥

[ ध्व० ३.४३ ] इति ।

**अन्योन्ययोगादेवं स्याद् भेदसंख्यातिभूयसी ॥ ३ ॥**

एवमनेन प्रकारेण अवान्तरभेदप्रभेदगणनेऽतिप्रभूततरा गणना । तथाहि, शृङ्गारस्यैव भेदप्रभेदगणनायामानन्त्यम्, का गणना तु सर्वेषाम् ।

---

### साहित्यचूडामणिः

एवं च ध्वनिगुणीभूतव्यङ्ग्ययोरसङ्कीर्णलक्षणयोः सङ्करसंसृष्टी पृथगुपपाद्य संप्रत्यन्योन्यमाह—सालङ्कारैरिति ।

योगो व्यतिकरः ।

तुल्ययोगिलक्षणे सम्बन्धिविशेषे सहशब्दस्य समास इत्याह—तैरिवेति । ध्वनिस्कन्धस्य पृथगनन्तरनिरूपितैर्गुणीभूतव्यङ्ग्यैर्दशमे समर्थयिष्यमाणैरुपमादिभिश्च सह संसृष्टिः सङ्करश्च । अथ सम्बन्धमात्रे समास इत्याह—अलङ्कारयुक्तैरिति । प्रथमं गुणीभूतव्यङ्ग्यानामलङ्काराणां च संसृष्टिसङ्करौ संपाद्य पश्चादमीभिर्ध्वनिस्कन्धस्य चतुर्गुणनमिति ।

अत्र ध्वनिग्रन्थं संवादयति—सगुणीभूतेति । यद् व्याख्यातं वृत्तौ 'स्वप्रभेदसंकीर्णः स्वप्रभेदसंसृष्टो गुणीभूतव्यङ्ग्यसङ्कीर्णो गुणीभूतव्यङ्ग्यसंसृष्टो वाच्यालङ्कारसङ्कीर्णो वाच्यालङ्कारसंसृष्ट' इत्यादि ।

### सुधासागरः

पूर्वं सजातीययोगो ध्वनेरुक्तः, इदानीं विजातीययोगमाह—

सालङ्कारैरितीत्यादि । भिन्नार्थैकरूपनानाशब्दैकशेषः । एकत्रालङ्कारपदस्य भावप्रधानत्वात् । तथा च तैरेवालङ्कारैरलङ्कारसहितैश्च तैरित्यर्थः । तैरेवालङ्कारैरित्यस्यायमाशयः—गुणीभूतव्यङ्ग्यैरेवालङ्कारात्मतां प्राप्तैः । आगत्य सम्प्रतीत्यादौ गुणीभूतव्यङ्ग्यस्य नायकनायिकावृत्तान्तस्य वाच्यरविकमलिनीवृत्तान्तोत्कर्षकस्य समासोक्त्यलङ्काररूपत्वादिति । तेन ध्वनिना गुणीभूतव्यङ्ग्येन वाच्यालङ्कारेण च ध्वनेर्योग इति पूर्वापराभ्यामुक्तं भवति । तदुक्तं ध्वनिकृता-स गुणीभूतेत्यादि । स ध्वनिः सालङ्कारैर्गुणीभूतव्यङ्ग्यैः प्रभेदैश्च सह सङ्करसंसृष्टिभ्यां बहुधा द्योतत इत्यर्थः ।

---

[1] 'तैरिवालङ्कारै-' रिति दाक्षिणात्याः । यथाऽत्रैव चूडामणौ ।

## साहित्यचूडामणिः

सर्वेषां सङ्कलन इति । लोष्टसञ्चारक्रमेण गुणने कृते । यदाह—

ध्वनेरित्थं गुणीभूतव्यङ्ग्यस्य च समाश्रयात् ।
न काव्यार्थविरामोऽस्ति यदि स्यात् प्रतिभागुणः ॥ ध्व० ४.६ ॥

इति । यच्चोक्तं विषमबाणलीलायां—

ण अ ताण घडई ओही ण अ ते दीसन्ति कहवि पुनरुत्ता ।
जे विब्भमा पिआणं अत्था वा सुकविवाणीणं[१] ॥ इति ।

एतदशेषोदाहरणं विरिञ्चेनापि दुष्प्रपञ्चम् ।

अयं विदग्धैरुपलालनीयो ध्वनिर्गुणीभावतिरोहितोऽपि ।
पदातिसाधारणवेषधर्मा क्रीडन् विनोदादिव सार्वभौमः ॥

## सुधासागरः

एवमनेनेत्यादि । अत्रेदमवधेयम्—

शुद्धैः सहैकपञ्चाशद्भेदैर्भेदा यथा ध्वनेः ।
सङ्कीर्णा हि समाख्याताः शरेषुयुगखेन्दवः (१०४५५) ॥
शुद्धैः शरयुगव्यक्तैः (४५) सहात्रापि तथा बुधैः ।
गुणीभूतव्यङ्ग्यभेदा बाणाब्धीन्दुगजाः (८१४५) स्मृताः ।
मध्यमोत्तमयोरेवं भेदयोर्गुणने पुनः ।
भूताश्वाङ्केषुशरभूबाणस्तम्बेरमा मताः (८५१५५९७५) ॥
चतुर्भिर्गुणने प्राग्वद् विज्ञेया गणकोत्तमैः ।
खाकाशाङ्काग्निपक्षर्तुव्योमवारिधिवह्नय [ ३४०६२३९०० ] ॥

गुणनप्रकारस्तु—

गुण्यान्त्यमङ्कं गुणकेन हन्यादुत्सारितेनैवमुपान्त्यमादीन् ।
गुण्यस्तथोऽधो गुणखण्डतुल्यस्तैः खण्डकैः सङ्गुणितो युतो वा ॥

इत्यादि लीलावत्यादौ द्रष्टव्यः ।

एकदशशतसहस्रायुतलक्षप्रयुतकोटयः क्रमशः ।
अर्बुदमब्जं खर्वनिखर्वमहापद्मशङ्कवस्तस्मात् ॥

इत्यादिदशगुणोत्तरा संख्याऽपि ज्योतिःशास्त्रे प्रसिद्धा । प्रकृताङ्कगुणने त्वयं लघुसरलप्रकारः—

गुण्याङ्को गुणकाङ्कश्च बिन्द्वन्तः सम्भवेद् यदि ।
बिन्दुवधो बिन्दवः स्थाप्याः शेषाङ्कं गुणयेत् तदा ॥

तथा चात्र [२]गुण्याङ्के चत्वारः खण्डाः । न्यूने [३]गुणकाङ्केऽपि तावन्त एव । तत्र

---

[१] न च तेषां घटतेऽवधिर्न च ते दृश्यन्ते कथमपि पुनरुक्ताः ।
ये विभ्रमाः प्रियाणामर्था वा सुकविवाणीनाम् ॥

[२-३] गुण्यो ध्वनिः । तत्र 'अयुतं, शतं, दश, एकञ्चे-'ति चत्वारः खण्डाः । गुणकश्च गुणीभूतव्यङ्ग्यराशिः ८१४५ ।

## सुधासागरः

बृहत्खण्डयोः परस्परं गुणनेऽष्टकोटयः (८००००००० )। गुणकद्वितीयखण्डेन शतात्मकेन पुनस्तद्दशसहस्रात्मकखण्डगुणने प्रयुतम् ( १०००००० ) । गुणकतृतीयखण्डेन चत्वारिंशदात्मकेन पुनस्तत्खण्डगुणने लक्षचतुष्टयम् ( ४००००० ) । चतुर्थखण्डेन पञ्चात्मकेन पुनस्तत्खण्डगुणने पञ्चाशत्सहस्राणि ( ५०००० )। अथ गुण्यद्वितीयखण्डेन शतचतुष्टयात्मकेन गुणकप्रथमखण्डस्याष्टसहस्रात्मकस्य महत्तया गुणने लक्षद्वयाधिकं प्रयुतत्रयम् ( ३२०००००)। तृतीयेन पञ्चाशद्रूपेण पुनस्तत्खण्डगुणने लक्षचतुष्टयम् (४०००००)। चतुर्थेन पञ्चात्मकेन पुनस्तद्गुणने चत्वार्ययुतानि (४००००)। अथ गुणकद्वितीयखण्डेन गुण्यद्वितीयखण्डगुणने चत्वार्ययुतानि ( ४०००० ) । गुणकतृतीयखण्डेन चत्वारिंशदात्मकेन पुनस्तद्गुणने षोडशसहस्राणि ( १६००० ) । चतुर्थेन पञ्चात्मकेन पुनस्तद्गुणने सहस्रद्वयम् (२००० )। अथ गुण्यतृतीयेन पञ्चाशद्रूपेण गुणकद्वितीयस्य शतात्मकस्य गुणने पञ्चसहस्राणि (५०००)। चतुर्थेन पञ्चात्मकेन पुनस्तद्गुणने पञ्चशती (५००)। अथ गुणकतृतीयेन चत्वारिंशद्रूपेण गुण्यतृतीयस्य गुणने सहस्रद्वयम् (२०००)। गुण्यचतुर्थेन पञ्चात्मकेन पुनस्तद्गुणने पञ्चाशदधिकं शतद्वयम् (२५०)। अथ गुण्यचतुर्थेन पञ्चात्मकेन गुणकतृतीयस्य चत्वारिंशदात्मकस्य गुणने शतद्वयम् (२००)। चतुर्थेन चतुर्थस्य गुणने पञ्चविंशतिः (२५)। सर्वेषां संमेलनेऽष्टकोटयः लक्षाधिकानि पञ्चप्रयुतानि पञ्चसहस्राणि नवशतानि पञ्चोत्तरा सप्ततिश्च— ( ८८१५५९७५ )। चतुर्भिः संसृष्ट्यादिप्रकारैर्गुणने अर्बुदत्रयम्, कोटिचतुष्टयम्, लक्षषट्कम्, अयुतद्वयम्, सहस्रत्रयम्, नवशतानीत्युक्ता काव्यभेदानां सङ्ख्या सम्पद्यते (३४०६२३९००)।

दिक्प्रदर्शनमेतच्चालङ्कारोद्भूतसङ्करैः ।
परार्धाधिकतां याति गणनेति न दर्शिता ॥

प्रकृतमनुसरामः। एवं ध्वन्यादिभेदैस्तत्प्रभेदैश्च योजनेऽतिप्रभूता सङ्ख्या भवतीत्युदाहर्तुमशक्यमिति तात्पर्यम्। एतैः प्रभेदैरुपनिबध्यमानः पुरातनोऽप्यर्थो नवनवीभवतीति न व्यर्थं ध्वनिभेदानन्त्यप्रदर्शनम्। तदुक्तं ध्वनिकृता—

ध्वनेर्यः सगुणीभूतव्यङ्ग्यस्यात्मा निदर्शितः ।
एतेनानन्त्यमायाति कवीनां प्रतिभागुणः ॥ [ ध्व. ४.१ ] इति ।

ननु ध्वनिगुणीभूतव्यङ्ग्ययोः सङ्करो न प्रत्येतुं शक्यते, अनयोः सामानाधिकरण्यासम्भवादिति चेत्। न। चित्रेण चित्रव्यञ्जने व्यङ्ग्यत्वविवक्षया ध्वनित्वेऽपि चित्रत्वविवक्षयोभयोस्तुल्यप्राधान्याद् गुणीभूतत्वमिति द्वयमपि विवक्षाभेदाच्चमत्कारप्रयोजकम्। एवमचित्रेणाचित्रव्यञ्जने व्यञ्जकस्याचित्रत्वाद् व्यङ्ग्यस्याचित्रत्वात्प्राधान्यविवक्षया ध्वनित्वम्। उभयोरचित्रत्वविवक्षया तुल्यप्राधान्याद् गुणीभूतव्यङ्ग्यत्वमपीति दिशा सर्वे भेदाः सहृदयहृदयारूढा इति श्रीवाग्देवतावतारप्रतिपादितेऽर्थे न कदाचिदप्रामाण्यशङ्कोदेतीति मन्तव्यम्।

[ व्यञ्जनासिद्धिः ]

[ १ ]

[क] सङ्कलनेन पुनरस्य ध्वनेस्त्रयो भेदाः, व्यङ्ग्यस्य त्रिरूपत्वात्। तथा हि—किञ्चिद् वाच्यतां सहते किञ्चित्त्वन्यथा। तत्र वाच्यतासहमविचित्रं विचित्रं चेति। अविचित्रं वस्तुमात्रम्। विचित्रं त्वलङ्काररूपम्। यद्यपि प्राधान्येन तदलङ्कार्यम्, तथापि ब्राह्मणश्रमणन्यायेन तथोच्यते। रसादिलक्षणस्त्वर्थः स्वप्नेऽपि न वाच्यः। स हि रसादिशब्देन शृङ्गारादिशब्देन वाऽभिधीयेत। न चाभिधीयते। तत्प्रयोगेऽपि विभावाद्यप्रयोगे तस्याऽप्रतिपत्तेः, तदप्रयोगेऽपि विभावादिप्रयोगे [तस्य] प्रतिपत्तेश्चेत्यन्वयव्यतिरेकाभ्यां विभावाद्यभिधानद्वारेणैव प्रतीयते इति निश्चीयते। तेनाऽसौ व्यङ्ग्य एव। मुख्यार्थबाधाद्यभावान्न पुनर्लक्षणीयः।

## साहित्यचूडामणिः

ननिवत्थमस्तु ध्वनीनामानन्त्यं, तत् कथङ्कारमस्य विभागव्यवहारकौतूहलमित्यत्राह—[१]किं पुनरिति। किन्त्वित्यर्थः। त्रयो भेदा इति। संक्षेपतो विभाग इति यावत्। ननु कोऽयं ध्वनिर्नाम। नैष चारुत्वस्थानं, शब्दार्थरूपत्वाभावात्। नापि चारुत्वहेतुः, गुणालङ्कारव्यतिरिक्तत्वात्। न चासौ नृत्तगीतादिवत् काव्यस्योपयोगी। कवनीयं हि काव्यं, न च नृत्तगीतादि कवनीयमिति स्वरूपमेव ध्वनेर्निर्णेतव्यमिति किमुत त्रैविध्यमिति चेद्। उच्यते। न तावद् विप्रतिपत्तिस्थानमसदेव, प्रत्युत सिद्धे धर्मिणि धर्ममात्रकृता विप्रतिपत्तिः। अन्यथा साधनदूषणानां निरधिष्ठानत्वप्रसङ्ग इत्यस्ति तावद् ध्वनिः। स एव मुख्यं चारुत्वस्थानम्।

## सुधासागरः

सम्प्रति व्यञ्जनायां वादिविप्रतिपत्तिनिरासाय प्रकरणान्तरमारभते–सङ्कलनेन पुनरस्य ध्वनेरित्यादि। अयमाशयः-एवमनन्तानां ध्वननव्यापारयोगिनां ध्वनीनां गुणीभूतव्यङ्ग्यानां च काव्यभेदानामनुगतोपाधिना सङ्कलने त्रयो भेदाः, व्यङ्ग्यस्य त्रिरूपत्वात्। सङ्कलनं सङ्ग्रहः सङ्क्षेप इति यावत्। सङ्कलनव्यवकलनव्यवहारो वेदान्तिनां समष्टिव्यष्टिव्यवहारवज्ज्योतिःशास्त्रे गणितग्रन्थेषु प्रसिद्धः। अत्र त्रिषु विश्रामो व्यञ्जनादार्ढ्यप्रतिपादनाय। अधिकतरसङ्क्षेपेऽविवक्षितवाच्यविवक्षितान्यपरवाच्यावेव द्वौ भेदौ अधिकतमसङ्क्षेपे त्वेकमेव सर्वोत्थानबीजं स्फोटात्मकं व्यङ्ग्यम्। तदेव च 'एकमेवाद्वितीयं ब्रह्म' इत्यादिश्रुतिप्रतिपाद्यं सच्चिदानन्दरूपं

१ अत्र चिन्तामणिमतो मूलपाठः 'सर्वेषां संकलनेन। किं पुनरस्य' इत्थंरूपः प्रतीयते।

## साहित्यचूडामणिः

उपचारात् तु शब्दार्थौ। तत एवायं चारुत्वहेतुः। न खलु शवकलेवरस्य किञ्चिद-लङ्कारौचित्यम्। तस्मादयमेव कवनीयो यदर्थो व्यतिरिक्तः प्रयासः। अलङ्कार-ग्रन्थेष्वप्रसिद्धिविरुद्धो हेतुः, तत एव प्रयत्नेन लक्षणीयत्वात्। तदयमत्र प्रयोगः 'प्रसिद्धं वाच्यं धर्मि[1]' तद्व्यतिरिक्तेन प्रतीयमानेन तद्वत् [2]सदाभासमानत्वात् लावण्यो-पेताङ्गनाङ्गवत्। लावण्यं चाङ्गनावयवसंस्थानाभिव्यङ्ग्यमवयवव्यतिरिक्तं च धर्मा-न्तरम्। यदाह—

प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम्।

यत्तत् प्रसिद्धावयवातिरिक्तमाभाति लावण्यमिवाङ्गनासु॥ध्व०१.४॥ इति।

अलमुद्ग्रन्थाटोपपाटवेन। त्रैविध्यस्य हेतुमाह—व्यङ्ग्यस्येति। यथा व्यञ्जक-वैचित्र्याद् ध्वनिवैचित्र्यम्, एवं व्यङ्ग्यवैचित्र्यादपि। उक्तं च वार्तिके—

## सुधासागरः

सगुणनिर्गुणविलक्षणं वस्त्विवति बोध्यम्। तदेतत्सर्वं श्रीवाग्देवतावतारैः सङ्कलन-व्यवकलनाभ्यां ब्रह्माण्डावयवगणनायामानन्त्यम्, विराड्रूपे त्वेकत्वमिति व्यञ्जन-द्वारा ध्वनितमिति सद्भिर्न विस्मर्त्तव्यम्। तथा हि-किञ्चिदित्यादिना व्यङ्ग्यस्य त्रिरूपतां दर्शयन्नेव लोकोत्तरवृत्तिं द्रढयति। अयमाशयः-किञ्चिद् व्यङ्ग्यं वाच्यत्वसहं किञ्चिच्च तदसहम्। वाच्यत्वसहत्वं त्वभिधया प्रतिपाद्यमानस्यापि चमत्कारकारित्वम्। तयोराद्यं वस्तुमात्रमलङ्कारश्च। अलङ्कारस्य प्राधान्येऽपि यथाऽलङ्कारत्वं तथोक्तं प्राक्[3]। रसादिलक्षणस्त्वर्थो न कदाचिदपि वाच्यत्वं सहते। स हि सामान्यतो रसभावादिपदैर्वा विशेषतः शृङ्गारनिर्वेदादिपदैर्वाऽभिधीयमानश्चमत्कारकारी स्यात्, नत्वेवम्, अभिधानेऽपि विभावाद्यप्रतीतौ चमत्काराभावात्। विभादिप्रतीतौ त्वनभिधानेऽपि व्यक्तस्य चमत्कारकारित्वादित्यन्वयव्यतिरेकाभ्यां विभावादिमुखेनैव प्रतीयमानस्तथेति निर्णीयते, तेनासौ रसादिर्व्यङ्ग्य एव चमत्कारगोचर इति स्थितम्।

ननु विभावादिवाचकपदैर्लक्ष्य एवास्तु रसादिः। न हि विभावादिवाचिपदं विनाऽपि तत्प्रतीतिरिति चेत्। न। मुख्यार्थबाधादिविरहात्। अत एव भूबृहस्पतिना जयरामन्यायपञ्चाननेन व्याख्यातम्-ननु विभावादिवाचकेभ्यो रसप्रतीतिनियमेन तत्र तेषां शक्त्यभावाल्लक्षणास्त्वित्यत्राह-मुख्यार्थेति। ननु यष्टीः प्रवेशयेत्यादाविव तात्पर्यविषयानुपपत्त्या लक्षणास्त्वित्यत्राह-आदीति। एवमपि सामाजिकरत्यादौ रामसीतादिपदार्थसम्बन्धाभावान्न लक्षणेत्यर्थः। ज्ञाप्यज्ञापकभावत्वलक्षणयोगस्तु वृत्तिं विनाऽसिद्धः।

किञ्च विभावादिवाचकपदानां रसादौ न रूढिलक्षणा रसादिवाचकत्वप्रसिद्धेर-भावात्। नापि प्रयोजनवती, सा हि द्विविधा। अर्थान्तरसङ्क्रमितवाच्याऽत्यन्त-तिरस्कृतवाच्या च। यत्र मुख्योऽर्थः स्वेन रूपेणोपयोगबाधितो रूपान्तरेणावगम्यते

---

[1] धर्मित्वव्यति०। [2] तदाभा०।

[3] १७२ पृष्ठे ब्राह्मणश्रमणन्यायेनेति यावत्।

## साहित्यचूडामणिः

ध्वननं ध्वन्यते तद्वद् व्युत्पत्त्या ध्वनतीत्यपि ।
व्यञ्जनाख्या परा शक्तिः क्रमेणार्थो रसादिकः ॥
वाच्यादिरर्थः शब्दश्च वाचकप्रभृतिर्ध्वनिः ।
एषां चतुर्णां संसृष्टिः प्रबन्धोऽपि महाध्वनिः ॥
स च त्रैविध्यमास्थाय काव्यालोकोक्तशिक्षया ।
वस्तुमात्रमलङ्कारो रस इत्यपि भिद्यते ॥ इति ।

त्रैविध्यं समर्थयितुं द्वैविध्यं तावदाह –

किञ्चिदिति । व्यङ्ग्यं वस्तु वाच्यतां सहते न पुनरतिशेते । अन्यथेति । वाच्यतां न सहते अतिशेते वाच्यत्वगन्धमपि नानुमन्यते । प्रथमस्य भेदस्य पुनर्द्वैविध्यमाह— वाच्यतेति । अवैचित्र्यं चित्रत्वं[1] च व्याचष्टे वस्तुमात्रमिति । मात्रग्रहणेन वैचित्र्यरूपं रूपान्तरं निरस्यते । [2]चित्रम् अलङ्काररूपं, तद्विपर्यये वाक्यार्थमात्रं यदविचित्रमुच्यते । तत्र प्रतिपादितपूर्वौ शङ्कापरिहारौ प्रतिपत्तिसौकर्याय भूयः स्मारयति- यद्यपीति । अथ किञ्चित् त्वन्यथेति यदुक्तं तत् प्रपञ्चयति—रसादीति । रसभावादिस्वभावं वस्तु वाच्यतावार्तामपि न वेदितुमर्हति । यदुक्तं—"तृतीयस्तु स्वप्नेऽपि न स्वशब्दवाच्यः, न लौकिकव्यवहारपतितः, किन्तु शब्दसमर्प्यमाणहृदयसंवादसुन्दरविभावानुभावसमुचितप्राग्विनिविष्टरत्यादिवासनानुरागसुकुमारस्वसंविदानन्द - चर्वणाव्यापाररसनीयरूपः । स एव मुख्यतयात्मे"ति[3] । अथ स्वशब्दवाच्यस्थानौचित्यं प्रकटयति 'स ही'ति । वाचकशब्दः सामान्यविशेषभावाद् द्विधा । उभयत्राप्यनौचित्यम् । यदि चाभिधीयेत तदा 'शृङ्गारहास्ये'त्यादिश्लोकपाठादेव सकलरसचर्वणोत्पत्तिप्रसङ्गः । रसशृङ्गारादिशब्दप्रयोगेऽपि विभावादीनामप्रयोगे तस्य रसादेरप्रतिपत्तेः विपर्यये तदौचित्याच्च । किञ्च विभावादिरर्थोऽपि न पुत्रजनन- न्यायेन काञ्चित् चित्तवृत्तिं जनयतीति नीत्या जननातिरिक्तोऽर्थस्यापि व्यापारो ध्वननमेव । फलितमर्थमाह—तेनेति । अथ लक्षणीयो भवतीत्यत्राह— मुख्यार्थेति ।

## सुधासागरः

तत्राद्या । न चात्र विभावादयोऽनुपयुक्ताः, न वा रूपान्तरेणावगम्यन्ते । यत्र च स्वार्थस्यात्यन्तं तिरस्कारस्तत्रान्त्या । न च प्रकृते विभावादयो न प्रतीयन्ते तत्समूहालम्बनरूपत्वाद्रसस्य । किञ्च रसादौ लक्ष्ये न प्रयोजनान्तरसम्भवः, स्वप्रकाशानन्दमयसंविद्विश्रान्तिरूपत्वाद्रसादीनाम् । अथात्र प्रयोजनं विनाऽपि लक्षणाऽऽद्रियतामिति चेत् । न । हेतुत्रयमपेक्ष्य लक्षणा भवतीति नियमात्तदन्तरेण भवन्ती वृत्तिस्तदन्यैव व्यञ्जना नाम, मात्सर्यमात्रात्त तर्ककर्कशैर्लक्षणोच्यते इति सुधीभिर्न विस्मर्तव्यमिति दिगिति ।

---

[1-2] चूडामणौ 'अविचित्रं चित्रं चे'ति मूलम् । [3] ध्वन्यालोक-१.४-लोचने ।

[ख] अर्थान्तरसंक्रमितात्यन्ततिरस्कृतवाच्ययोर्वस्तुमात्ररूपं व्यङ्ग्यं विना लक्षणैव न भवतीति प्राक् प्रतिपादितम् ।

[ग] शब्दशक्तिमूले तु अभिधाया नियन्त्रणेनानभिधेयस्यार्थान्तरस्य तेन सहोपमादेरलङ्कारस्य च निर्विवादं व्यङ्ग्यत्वम् ।

[घ] अर्थशक्तिमूलेऽपि विशेषे संकेतः कर्तुं न युज्यत इति सामान्यरूपाणां पदार्थानामाकाङ्क्षासन्निधियोग्यतावशात् परस्परसंसर्गो यत्रापदार्थोऽपि विशेषरूपो वाक्यार्थस्तत्राभिहितान्वयवादे का वार्त्ता व्यङ्ग्यस्याभिधेयताम् ।

---

## साहित्यचूडामणिः

अथ व्यङ्ग्यस्य सर्वत्र दुरपह्नवत्वमवबोधयितुमुद्युङ्क्ते—अर्थान्तरेति । प्रागिति । द्वितीयतुरीययोरुल्लासयोः । यस्मादविवक्षितवाच्यभेदावर्थान्तरसंक्रमितात्यन्ततिरस्कृतवाच्यौ, अविवक्षायाश्चानुपयुक्तिरनुपपत्तिश्चेति द्वे तु मूलं, तद्द्वारा मुख्यार्थबाधादिसामग्री, तत्र फलावश्यंभावः, तच्च व्यञ्जनैकगम्यमिति ।

अथासंलक्ष्यक्रमे विवक्षितान्यपरवाच्ये वाच्यतागन्धकणिकापि नास्तीति तदलङ्घयन्ननुरणनन्यायेन संलक्ष्यक्रमे शब्दार्थोभयशक्तिसमुत्थिते क्रमेण व्यङ्ग्यस्य सौकर्यमाह—शब्देति । अभिधायाः सङ्केतसहायायाः । नियन्त्रणं संयोगादिभिः शृङ्खलनम् । अर्थान्तरस्य वस्तुमात्रस्य । तेन सह वस्तुमात्रेण साकम् । 'उल्लास्य कालकरवालमहाम्बुवाहमि'त्यादौ वर्णनीयवृत्तान्तव्यतिरेकेण पर्जन्यवृत्तान्तरूपस्यार्थान्तरस्य पूर्वं प्रतीतिः । तदनु तेन सहोपमालङ्कारो व्यङ्ग्य इति केचित् । अलङ्कार एव व्यङ्ग्यः अन्यत्सर्वं वाच्यमित्यन्ये । एकयैव हेलया तदुभयमपि व्यङ्ग्यमित्येके । न तत्रास्माकं पक्षपातः । सर्वथालङ्कारो व्यङ्ग्य एव । अथार्थशक्तिमूले विप्रतिपत्तिरित्यभिसन्धायाह—अर्थेति । प्रथममभिहितान्वयवादे व्यङ्ग्यं समर्थयते—

## सुधासागरः

नन्वस्तु रसादौ व्यञ्जना, तदितरत्र तु तस्याः शशविषाणायमानत्वात् कुतो व्यङ्ग्यत्रैरूप्यकृतो भेद इत्याशङ्क्याह-अर्थान्तरसङ्क्रमितेत्यादि । अयमाशयः—लक्षणामूले वस्तुमात्रं व्यङ्ग्यं विना लक्षणैव न सम्भवतीति द्वितीयोल्लासे 'यस्य प्रतीतिमाधातुम्' इत्यादिमहता प्रबन्धेन प्रतिपादितम् । अभिधामूलेष्वपि शब्दशक्तिजो द्वितीयोऽर्थस्तेन सममुपमा व्यङ्ग्यैवेति निर्विवादम् । अभिधाया नियमनात् । शब्दबोध्यस्य वृत्तिविषयत्वनियमाच्च । प्रतिपादितं चैतदपि तत्रैव ।

[ङ] येऽप्याहुः[१] —

शब्दवृद्धाभिधेयाँश्च प्रत्यक्षेणात्र पश्यति ।
श्रोतुश्च प्रतिपन्नत्वमनुमानेन चेष्टया ॥
अन्यथाऽनुपपत्त्या तु बोधेच्छक्तिं द्वयात्मिकाम् ।
अर्थापत्त्याऽवबोधेत सम्बन्धं त्रिप्रमाणकम् ॥

—इति प्रतिपादितदिशा

देवदत्त गामानयेत्याद्युत्तमवृद्धवाक्यप्रयोगाद् देशाद् देशान्तरं सास्नादिमन्तमर्थं मध्यमवृद्धे नयति सति 'अनेनास्माद् वाक्यादेवंविधोऽर्थः प्रतिपन्न' इति तच्चेष्टयाऽनुमाय, तयोरखण्डवाक्यवाक्यार्थयोरर्थापत्त्या वाच्यवाचकभावलक्षणं सम्बन्धमवधार्य बालस्तत्र व्युत्पद्यते । परतः

## साहित्यचूडामणिः

विशेष इति । न युज्यते उक्तयुक्त्यानन्त्यादिदोषप्रसङ्गात् । अपदार्थोऽपीत्यत्र हेतुः विशेषरूप इति । सामान्याकारः पदार्थो विशेषरूपश्च वाक्यार्थ इति व्यवस्थितत्वात् । 'का वार्त्ते'-ति । वाक्यार्थमतिक्रम्यावस्थानादिति ।

इदानीमत्यन्तप्रतिभटानामन्विताभिधानवादिनां राद्धान्तमपवदते—येऽपीति ।

## सुधासागरः

अथार्थशक्तिमूलयोर्वस्त्वलङ्कृत्योर्वाक्यार्थावगमोत्तरगम्यतयाऽभिहितान्वये - ऽन्विताभिधाने च वृत्त्यन्तरेणैवावगम इत्यभिधातुमुपक्रमते—अर्थशक्तिमूलेऽपीत्यादि । विशेषे तद्व्यक्तिविशेषे पदार्थसंसर्गे वा न युज्यते न शक्यते आनन्त्याद् व्यभिचाराच्च । वाक्यार्थस्यापूर्वत्वेन प्रागनुपस्थितेश्च । सामान्यरूपाणां जातिरूपाणाम् । कथं तर्हि वाक्यार्थावगतिरित्यत आह—आकाङ्क्षेत्यादि । व्याख्यातमिदं द्वितीयोल्लासे । का वार्तेत्यादि । व्यङ्ग्यस्य वाक्यार्थादपि दूरभावित्वादभिधेयतायां कः प्रसङ्गः । अयमाशयः—अर्थशक्तिमूलेऽप्येवमङ्गीकर्तव्यम् । यतः पदेभ्यः प्रथमं पदार्थस्मृतिः, अथ पदार्थविशेषाणामन्वयविशेषरूपस्य वाक्यार्थस्य प्रत्ययः, ततो व्यङ्ग्यप्रतीतिरिति तृतीयकक्षायां कुतोऽभिधायाः प्रसरणम्, द्वितीयकक्षायामेव तदनपेक्षणात्, यतोऽभिहितान्वयवादेऽशक्य एवान्वय आकाङ्क्षादिवशेन प्रतीयते, 'शब्दबुद्धिकर्मणां विरम्य व्यापाराभाव' इति च सर्वसिद्धमिति ।

एवमभिहितान्वये व्यङ्ग्यार्थस्याभिधेयत्वं निरस्य अन्विताऽभिधानेऽपि तन्निरस्यति येऽप्याहुरिति । अन्विताभिधानवादिन इत्यनेन सम्बन्धः । अयमाशयः—

[१] 'येऽप्याहुस्तेषामपी'ति ५१ पृष्ठस्य १७ पङ्क्त्यान्वयः ।

'चैत्र गामानय; देवदत्त अश्वमानय; देवदत्त गां नय' इत्यादिवाक्य-प्रयोगे तस्य तस्य शब्दस्य तं तमर्थमवधारयति। इति, अन्वयव्यतिरेकाभ्यां प्रवृत्तिनिवृत्तिकारि वाक्यमेव प्रयोगयोग्यम्। इति, वाक्यस्थितानामेव पदानामन्वितैः पदार्थैरन्वितानामेव सङ्केतो गृह्यते। इति, विशिष्टा एव पदार्था वाक्यार्थो न तु पदार्थानां वैशिष्ट्यम्।

यद्यपि वाक्यान्तरप्रयुज्यमानान्यपि प्रत्यभिज्ञाप्रत्ययेन तान्येवैतानि पदानि निश्चीयन्ते इति पदार्थान्तरमात्रेणान्वितः पदार्थः सङ्केतगोचरः, तथापि सामान्यावच्छादितो विशेषरूप एवासौ प्रतिपद्यते, व्यतिषक्तानां पदार्थानां तथाभूतत्वादित्यन्विताभिधानवादिनः।

---

## साहित्यचूडामणिः

शब्दश्च वृद्धौ चाभिधेयोऽर्थश्च तान् प्रत्यक्षेण प्रमाणेन पश्यति, बाल इति शेषः। श्रोतुर्मध्यमस्य वृद्धस्य। प्रतिपन्नत्वं, 'कर्तरि क्तः', चेष्टारूपेणानुमानेन पश्यति। अन्यथानुपपत्तिरूपया चार्थापत्त्या द्व्यात्मिकां शक्तिं बोधेत् जानीयात्। इत्थं सम्बन्धं सङ्केतलक्षणं त्रिप्रमाणमवबुध्येत इति।

एतद् व्याचष्टे—देवदत्तेति। अखण्डस्य न पुनर्देवदत्तगवादिविभागेन शकलितस्य वाक्यस्य तदर्थस्य च मिथो द्व्यात्मिकां शक्तिं वाच्यवाचकलक्षणं सामर्थ्यमर्थापत्त्या निश्चित्य बाल इव बालो व्युत्पित्सुस्तत्र वाक्यप्रयोगे व्युत्पद्यते। परत इति, प्रयोगान्तरे। तत्र देवदत्तपदं हीयते चैत्रपदमुपजायते। एवमुत्तरत्रापि। तस्य तस्य तं तमर्थमवधारयति वाक्यतदर्थयोरखण्डयोरेव सतोरिति भावः। अन्वयव्यतिरेकाभ्यां आवापोद्वापलक्षणाभ्याम्। वाक्यमेव, न कदाचित् पदं, प्रवृत्तिनिवृत्ती विधिनिषेधौ कर्तुं शीलमस्य। खण्डशः पदप्रयोगे वाक्यार्थप्रतीत्यभा-

## सुधासागरः

येऽप्यन्विताभिधानवादिनः 'देवदत्त! गामानय' इत्यादिप्रयोजकवृद्धवाक्यं श्रुत्वा तदनन्तरं प्रयोज्यवृद्धेन सास्नादिमन्तमर्थं देशान्तरं नीयमानमालोक्य अयमेतद्विषयकैतादृशक्रियागोचरकार्यताज्ञानवान् एतद्विषयकचेष्टावत्त्वात्, तद्विषयकप्रवृत्तिमत्त्वाद्वा मद्वदिति प्रयोज्यवृद्धस्य ज्ञानमनुमिमीते, ततः कारणं विना कार्यानुपपत्त्याखण्डवाक्यस्यान्वयव्यतिरेकिणस्तज्ज्ञानेन कार्यत्वकारणत्वरूपां शक्तिमवधारयति। अथ ज्ञेयं सम्बन्धं विना वाक्यस्य सा शक्तिरनुपपन्नेत्यर्थापत्त्याऽखण्डवाक्यार्थेनाखण्डवाक्यस्य वाच्यवाचकभावरूपं सम्बन्धमवधारयति। यदुक्तम्—शब्दवृद्धाभिधेयानित्यादि। शब्दः श्रूयमाणः वाक्यमिति यावत्, वृद्धः प्रयोजकः पुमान्,

## साहित्यचूडामणिः

वाद् वाक्यमेव प्रयोगयोग्यं न तु पृथक् स्वतन्त्राणां पदानां प्रयोगः। परस्परमन्वितैः सास्नादिमदानयनादिभिः पदार्थैरन्वितानां वाच्यवाचकसम्बन्धानुप्रवेशयोग्यानामेव तेषां समयो गृह्यते। विशिष्टा एव अन्वयरूपवैशिष्ट्यवन्त एव पदार्था वाक्यार्थः। एवकारव्यावर्त्यमाह—नत्विति। यत्र ध्वनिवादस्य पादप्रसारिकेत्यभिप्रायः।

नन्वभिहितान्वये सामान्ये पदानां सङ्केतः, अन्विताभिधाने तु विशेषे। तत्र पूर्वस्मिन् सङ्केतवेलायां यथा सामान्यस्वीकारः एवमुत्तरत्रादि, येन गां

## सुधासागरः

अभिधेयो घटादिः, एषां प्रत्यक्षादुपस्थितिः, उपस्थितेष्वेतेषु शक्तिग्रहात् श्रोतुः प्रयोज्यवृद्धस्य चेष्टया हेतुभूतया अनुमानेन प्रतिपन्नत्वम् प्रयोज्यवृद्धस्य व्युत्पन्नत्वमवगच्छति उक्तरीत्याऽनुमिमीते, चेष्टया प्रवृत्तिरूपो यत्नः, प्रवृत्त्येच्छा, इच्छया ज्ञानम्, कदाचिच्चेष्टयैव ज्ञाने उपस्थितत्वेन वाक्यस्य कारणत्वमनुमीयत इति भावः। अथ वाक्यस्य तदर्थज्ञानजनकत्वमसति वृत्त्यन्तरे तदर्थशक्तिं विनाऽनुपपन्नमित्यनुपपत्त्या द्व्यात्मिकाम् आश्रयभूतस्य वाक्यस्य वाचकत्वं, विषयभूतस्यार्थस्य वाच्यत्वमेव द्वयमात्मा स्वरूपं यस्यास्तथाभूतां शक्तिं बुद्ध्येदित्याहुः। अथार्थापत्त्याऽऽनयनान्विता गौर्गोपदशक्या तदितराप्रतिपाद्यत्वे सति तत्प्रतिपाद्यत्वादित्याकारया सम्बन्धं विशिष्य जानाति। प्रत्यक्षमनुमानमर्थापत्तिश्चेति प्रमाणत्रयम्, अनुपपत्तेरप्यर्थापत्तिभेदत्वात्। एवञ्च त्रिप्रमाणकमिति जात्यपेक्षया त्रित्वं न तु व्यक्त्यपेक्षयेति कारिकार्थः।

एवमखण्डयोः सम्बन्धमवधार्य विशेषतो व्युत्पद्यते विशेषे सङ्केतं गृह्णाति। व्युत्पत्तिः वाच्यवाचकभावसम्बन्धग्रहणम्। तदाह वृत्तिकारः—परतश्चैत्रेत्यादि। अयमर्थः—अनन्तरं तेनैव प्रयोजकेन 'चैत्र! अश्वमानय, देवदत्त! गां नय'—इत्यादिवाक्येषु कस्यचिदन्यस्य पदस्यावापे कस्यचिदुद्वापे सति यस्य भागस्यान्वयव्यतिरेकाभ्यां यस्य वाक्यार्थभागस्यान्वयव्यतिरेकावुपलभ्येते, तत्र तस्य शक्तिमवधारयति। तच्च शक्त्यवधारणमन्वित एव पदार्थे, प्रथममन्वये एव वाक्यस्य शक्तिग्रहात्, पदार्थमात्रशक्तावुपजीव्यबाधात्, व्यवहारेणान्वितज्ञानस्यैवोपस्थापनाच्च। न च वाक्यं विना कश्चिदाद्यव्युत्पत्तिः, व्यवहारेणैवाद्यव्युत्पत्तेः, व्यवहारस्य च प्रवृत्तिनिवृत्तिरूपस्य पदमात्रेण कर्त्तुमशक्यत्वात्। अतो वाक्यस्थितानामेव पदानामन्वितेष्वेव पदार्थेषु सङ्केतग्रहादन्विता एव पदशक्यास्त एव च वाक्यार्थ इति न वाक्यार्थबोधे शक्तेर्विरामः, नत्वभिहितानां पदार्थानामन्वयोऽशक्य एव प्रतीयते योग्यतादिवशादिति युक्तम्।

ननु तथाऽपि संसर्गविशेषोऽशक्य एव, पदार्थसामान्यान्वित एव शक्तिग्रहात्। अन्यथा गामानयेति पदं श्रुत्वा अश्वमानयेत्यादिवाक्ये तदेवेदमानयपदमित्यादिप्रत्यभिज्ञा न स्यात्। पूर्वस्य गवान्वितानयनपरस्याश्वान्वितानयनेऽशक्यत्वेनार्थ-

तेषामपि मते सामान्यविशेषरूपः पदार्थः सङ्केतविषय इत्यतिविशेषभूतो वाक्या[1]र्थान्तर्गतोऽसङ्केतितत्वादवाच्य एव यत्र पदार्थः प्रतिपद्यते तत्र दूरेऽर्थान्तरभूतस्य निःशेषच्युतेत्यादौ विध्यादेश्चर्चा ।

अनन्वितोऽर्थोऽभिहितान्वये, पदार्थान्तरमात्रेणान्वितस्त्वन्विताभिधाने, अन्वितविशेषस्त्ववाच्य एव । इति, उभयनयेऽप्यपदार्थ एव वाक्यार्थः ।

---

## साहित्यचूडामणिः

बधानेत्यादौ तान्येव कतिचिदेतानि यानि पदानि गामानयेत्यादौ तदानीमनुभूतानीति प्रत्यभिज्ञारूपेण प्रत्ययेन पूर्वापरकालावगाढत्वलक्षणमनुसन्धानमुत्पद्यते । तच्च सामान्यस्वीकारादृते न संघटते । तत्र चैवमन्यैर्वक्तव्यं यत् पदार्थान्तरमात्रेणान्वयः न पुनरेतादृगिति विशेषपुरस्सरीकारेणापीति । तथा च पक्षान्तरादस्य न वैलक्षण्यमित्याशङ्क्याह—यद्यपीति ।

तथापीति । अवर्जनीयसन्निधानेन सामान्येनावच्छादितः न पुनर्वाक्ययत्नसाध्येन । व्यतिषक्तानां अन्योन्यमशक्यपृथक्कारणाम्, तथाभूतत्वाद् अवघातस्वेदवदवर्जनीयसन्निधित्वात् । ततोऽपि तस्य तत्रार्थक्रियाकारित्वाद् इत्यन्विताभिधानवादिनो येऽप्याहुरिति पूर्वपक्षः । सिद्धान्तयति—तेषामपीति । सामान्याकारः केवलमन्येषां पदार्थः । अस्माकं तु सामान्यावच्छादितो विशेषरूप इत्यस्य कोऽर्थः सामान्यविशेषयुगलमेलकस्वभाव इति । ततश्च गवानयनादिवाक्ये गोत्वादौ सामान्ये खण्डादिषु यत्किंचिद्भूतेषु विशेषेषु च पदानां सामर्थ्योपक्षयः,

## सुधासागरः

भेदेन भेदादिति चेत् । न । पदार्थत्वेन सामान्येन विशेषाणामिवान्वये शक्तिग्रहात् । अन्वितानां च विशेषरूपत्वादित्याहुरिति ।

तेषामपीत्यादि । अयमाशयः । तेषामप्यन्विताभिधानवादिनां मते सामान्येनैव रूपेण विशेषः शक्यो न तु विशेषरूपेण । तथा च पदार्थान्तरसामान्यान्विते पदानां शक्तिः, गवादिविशेषान्वितस्तु विशेषोऽवाच्य एवेति दूरेऽर्थान्तरभूतस्य तदन्तिकगमननिषेधविरोधिनस्तदन्तिकगमनस्य विध्यादेश्चर्चेति । चर्चा प्रसङ्गः । स्फुटमन्यत् ।

---

[1] 'वाक्यानन्तर्गत०' इति दाक्षिणात्याः ।

[२]

[क] यदप्युच्यते 'नैमित्तिकानुसारेण[1] निमित्तानि कल्प्यन्ते' इति, तत्र निमित्तत्वं कारकत्वं ज्ञापकत्वं वा ? शब्दस्य प्रकाशकत्वान्न कारकत्वम्, ज्ञापकत्वं तु अज्ञातस्य कथम् ? ज्ञातत्वं च सङ्केतेनैव। स चान्वितमात्रे। एवं च निमित्तस्य नियतनिमित्तत्वं यावन्न निश्चितं तावन्नैमित्तिकस्य प्रतीतिरेव कथमिति 'नैमित्तिकानुसारेण निमित्तानि कल्प्यन्ते' इत्यविचारिताभिधानम्।

---

## साहित्यचूडामणिः

तावत्येव संकेतौचित्यात्। यत् पुनरत्र वाक्यप्रयोक्तुः क्षीरभोजनाद्यर्थक्रियोपयुक्तं वस्तु, तस्य कथमन्यसाधारण्येन वाक्यार्थता। अतिविशेषेति। सामान्यस्पर्शशून्यो यत्किंचिद्विशेषव्यतिरिक्तशुद्धविशेषशब्दवाच्योऽर्थः योऽयमसंकेतितत्वाद् वाक्यार्थमध्यं नाध्यास्ते तत एवावाच्यः पदार्थो यत्र प्रतिपद्यते तत्र। उक्तमर्थं प्रस्तुतोदाहरणपृष्ठे प्रतिष्ठापयति—निश्शेषेति। अत्र वापीगमनादीनां दीर्घिकाप्रयाणादिसामान्ये तदुपश्लेषशृङ्खलितेषु विशेषेषु च संकेतः। यत् पुनरत्र दूतीस्नानोचितं वाप्यादि वस्तु न तत्रेति तस्याप्यनभिधेयत्वे का कथा विधिनिषेधयोरभिधेयत्वशङ्कायाम्। चर्चेत्युपालम्भे प्रपञ्चितं पूर्वपक्षयुगलप्रतिक्षेपं पिण्डीकरोति—अनन्वितः इति। अन्योन्यमनन्वितोऽर्थोऽभिहितान्वये। पदार्थान्तरमात्रेणातिविशेषव्यतिरिक्तेनान्वितोऽन्विताभिधाने। अन्वितविशेष इति। उक्तन्यायादतिविशेषभूतः पदार्थोऽसंकेतित एवेति।

ननु विधिर्निषेधो वा या पार्यन्तिकी प्रतिष्ठा स वाक्यार्थः। तद्वशाच्च तदनुगुणा काचित् सङ्केतादिसामग्री कल्पनीया, अभिलषितसिद्धौ तदुपायान्वेषणप्रयास इत्याशङ्क्याह—यदपीति। नैमित्तिकानां हेतुमतामर्थानामनुसारेण यद् यत्प्रयोगा-

## सुधासागरः

वादिद्वयमतं युगपदुपसंहरति—अनन्वित इत्यादि। अयमर्थः तस्मादभिहितान्वयवादेऽनन्वित एव, अन्विताभिधाननये तु पदार्थसामान्यान्वितः स्वार्थः सङ्केतविषयः, गवादिविशेषान्वितानयादिरूपस्त्वसङ्केतित एवेत्यवाच्य एव वाक्यार्थ इति।

ननु व्यङ्ग्यप्रतीतिर्नैमित्तिकी निमित्तान्तरानुपलब्धेः शब्द एव निमित्तम्, तच्च बोध्यबोधकत्वरूपं निमित्तत्वं वृत्तिं विना न भवतीत्यभिधैव वृत्तिरित्येकदेशिमतमाशङ्क्य खण्डयति—यदपीत्यादि। अयमाशयः—यदपि कैश्चिदुच्यते, शब्दश्रवणानन्तरं

---

[1] नैमित्तिकार्थानु० इत्यपि पाठः।

[ख] ये त्वभिदधति सोऽयमिषोरिव दीर्घदीर्घतरो व्यापार इति 'यत्परः शब्दः स शब्दार्थ' इति च विधिरेवात्र वाच्य इति, तेऽप्यतात्पर्यज्ञास्तात्पर्यवाचोयुक्तेर्देवानाम्प्रियाः । तथा हि, 'भूतभव्यसमुच्चारणे भूतं भव्यायोपदिश्यते' इति कारकपदार्थाः क्रियापदार्थेनान्वीयमानाः प्रधानक्रियानिर्वर्त्तकस्वक्रियाभिसम्बन्धात् साध्यायमानतां प्राप्नुवन्ति । ततश्चादग्धदहनन्यायेन यावदप्राप्तं तावद् विधीयते । यथा ऋत्विक्प्रचरणे प्रमाणान्तरात् सिद्धे 'लोहितोष्णीषाः ऋत्विजः

## साहित्यचूडामणिः

धीनप्रतीतिकं तत् तन्निमित्तकमित्याकारेण निमित्तानि सम्बन्धग्रहणादीनि कल्प्यन्ते उन्नीयन्ते। एतत् खण्डयितुं विकल्पयति—निमित्तत्वमिति। आदिमं पक्षं प्रतिक्षिपति शब्दस्येति। इतरथा क्षुरमोदकशब्दोच्चारणेषु मुखस्य पाटनपूरणे स्याताम्। द्वितीयं दळयति—ज्ञापकत्वं चेति। ज्ञातमेव हि धूमादि धूमध्वजादेर्ज्ञापकम्। सङ्केतेनैवेति। वाचकपरिज्ञाने व्यतिरिक्तकारणाभावात्। सङ्केतश्चान्वितमात्रे न पुनरतिविशेषलक्षणेऽन्वितविशेषे। एवञ्चेति। परस्पराश्रयपराहतत्वाद् न केनचिदपि प्रकारेण घटते। सानुवादं निगमयति—नैमित्तिकेति।

अथात्र केचित् तात्पर्यमवलम्ब्य प्रत्यवतिष्ठन्ते, तान् विधुरयितुमाह—ये त्विति। दूषयितुं तावदनुभाषते सोऽयमिति। वाच्यावगमोपक्रमः प्रतीयमानार्था-

## सुधासागरः

यावानर्थः प्रतीयते तत्र सर्वत्राऽपि शब्द एव निमित्तम्, यतो नैमित्तिकानुरोधेन निमित्तानि कल्प्यन्ते' इति। तदप्ययुक्तम्। शब्दस्य हि अर्थे निमित्तत्वं कारकत्वं ज्ञापकत्वं वा? न प्रथमम्, शब्दस्यार्थानुत्पादकत्वात्। चरमं पुनरनुमन्यते, परन्तु सङ्केतवत्त्वेन ज्ञातस्य। अज्ञातस्य स्वरूपमात्रेण ज्ञातस्य वा ज्ञापकत्वेऽतिप्रसङ्गात्। न चान्वयविशेषे सङ्केतग्रहः। नन्वस्तु विशेषे एव सङ्केतग्रह इत्यपेक्षायामाह एवञ्चेत्यादि। नियतनिमित्तत्वं विशेषसङ्केतवत्त्वम्। अयं भावः—अस्तु विशेष एव सङ्केतग्रह इति चेत्। न। वाक्यार्थस्यापूर्वत्वेन प्रागनुपस्थितेर्लोष्ठाद्यन्विताऽऽनयनादेर्विशेषस्योपस्थापकान्तराभावेन शब्दादेवोपस्थितिर्वाच्या। तथा च तत्र सङ्केतग्रहे शब्दात्तदुपस्थितिः, शब्दात्तदुपस्थितौ सङ्केतग्रह इत्यन्योन्याश्रयादिति। न च व्यञ्जनाऽपि तद्वद् दुर्ग्रहेति वाच्यम्, अभिधा लक्षणा वा ज्ञातैवोपयोगिनीति सत्यम्, धर्मिग्राहकमानसिद्धा व्यञ्जना त्वज्ञातैव बोधिका। न चातिप्रसङ्गः, वक्त्रादिवैशिष्ट्यापेक्षणात्, फलवत्त्वेन तथैव कल्पनादिति दिक्। तस्मान्नैमित्तिकानुरोधेन निमित्तानि कल्प्यन्ते इत्यविचारिताभिधानमिति।

अथ[१] भट्टलोल्लटाद्यभिमतं पक्षमाशङ्क्य खण्डयति येत्वित्यादि। अयमाशयः

[१] लोल्लटमतमिदमिति वादः 'इह वटे यक्ष' इति प्रसिद्धिमात्राश्रितः, प्रमाणालाभात्।

प्रचरन्ती'-त्यत्र लोहितोष्णीषत्वमात्रं विधेयं, हवनस्यान्यतः सिद्धेः 'दध्ना जुहोती'त्यादौ दध्यादेः करणत्वमात्रं विधेयम् ॥ क्वचिदुभय-विधिः क्वचित् त्रिविधिरपि, यथा रक्तं पटं वयेत्यादौ एकविधिर्द्वि-विधिस्त्रिविधिर्वा । ततश्च यदेव विधेयं तत्रैव तात्पर्यमित्युपात्तस्यैव शब्दस्यार्थे तात्पर्यम्, न तु प्रतीतमात्रे । एवं हि पूर्वो धावतीत्यादाव-पराद्यर्थेऽपि क्वचित् तात्पर्यं स्यात् ।

यत्तु 'विषं भक्षय, मा चास्य गृहे भुङ्क्था' इत्यत्र 'एतद्गृहे न भोक्तव्यमि'-त्यत्र तात्पर्यमिति स एव वाक्यार्थ इत्युच्यते, तत्र चकार एकवाक्यतासूचनार्थः । न चाख्यातवाक्ययोर्द्वयोरङ्गाङ्गिभाव इति विषभक्षणवाक्यस्य 'सुहृद्वाक्यत्वे[1]ऽङ्गता कल्पनीयेति 'विषभक्षणादपि दुष्टमेतद्गृहे भोजनमिति सर्वथा मास्य गृहे भुङ्क्था' इत्युपात्तशब्दार्थ एव तात्पर्यम् ।

## साहित्यचूडामणिः

न्तरावसायपर्यन्तोऽयमेक एव व्यापारो द्राघीयाननुवर्तते, यथैक एव सायकः शत्रोरुर-श्छदमुरश्च भित्वा प्राणानपहरति तथा शब्दोऽपि सकृदेव प्रयुज्यमानः स्वार्थाभिधानमर्थान्तरप्रतिपत्तिं च करोति । एवं च 'यत्परः शब्दः स शब्दार्थः' । इतरथा शब्दप्रयोगस्यानर्थक्यप्रसङ्गात् । अतश्च विधिरेवात्र वाच्य इति । त इत्यादिना तेषामुपालम्भः । देवानांप्रियाः गावः । शैली खल्वियं व्याख्यातॄणाम् । अतात्पर्यज्ञाः तात्पर्यशब्दस्य तात्पर्यं न जानते इति स्ववचन-विरुद्धमेषामभिधानमभग्ननालिकेरकल्पं यथाश्रुतग्रन्थग्रहणिकामात्रव्यापृतत्वादिति

## सुधासागरः

—'सोऽयमिषोरिव दीर्घदीर्घतरो व्यापारः'इति, 'यत्परः शब्दः स शब्दार्थः'इति च निःशेषेत्यादौ विधिरेव वाच्य इति भट्टमतोपजीविनः । अस्यार्थः—यथा बलवता प्रेरित इषुरेकेनैव वेगाख्येन व्यापारेण वर्मच्छेदमुरोभेदं प्राणहरणं च रिपोर्विधत्ते तथा एक एव शब्द एकेनैवाभिधाख्यव्यापारेण पदार्थस्मृतिं वाक्यार्थानुभवं व्यङ्ग्यप्रतीतिं च विधत्ते । अतो व्यङ्ग्यत्वाभिमतस्यार्थस्य वाच्यत्वमेव । किञ्च यत्र शब्दस्य तात्पर्यं स शब्दार्थ इति निःशेषेत्यादौ तात्पर्यविषयतया विधिर्वाच्य एवेति ।

तेऽप्यतात्पर्यज्ञा इत्यादि । व्याजस्तुत्या दूषयति । तात्पर्यवाचोयुक्तेस्तात्पर्यश-ब्दप्रयोगस्यातात्पर्यज्ञाः, किमुद्दिश्य 'यत्परः शब्दः स शब्दार्थः' इति प्रयुज्यते इत्यस्यानभिज्ञाः देवानांप्रियाः पशवः । वाचोयुक्तेरिति देवानांप्रिया इति चालुक् समासः । तात्पर्यविषये शब्दः प्रमाणमित्यस्य उपात्तशब्दैः प्रतिपाद्येष्वेवार्थेषु यावत् ।

[1] '०वाक्यस्य कृद्वाच्यत्वेने'ति दाक्षिणात्याः ।

## साहित्यचूडामणिः

अथ विषमोऽयं शरदृष्टान्तोपन्यासः, येन शरस्य व्यापारः स्वाभाविकत्वाद्पर्यनुयोज्यः शब्दस्य सङ्केताद्युपाधिप्रयुक्त इति [ महिमाचार्यस्य ] आशयेन दूषयितुमुपक्रमते—तथाहीति। भूतानां सिद्धविषयाणां, भव्यानां साध्यविषयाणां च शब्दानामुपादाने प्रथमं द्वितीयायोपदिश्यते, कारकाणां भूतत्वं क्रियायाश्च भव्यत्वमिति व्यवस्थायां पूर्वस्योत्तरत्र तात्पर्यम्। ननु कारकाणामपि क्वचिद् भव्यत्वमनुभूयते तत्र कथं सिद्धत्वविभाग इत्यत्राह—साध्यायमानतामिति। कारकपदार्थाः स्थालीकाष्ठादयः क्रियापदार्थेन पाकादिनान्वीयमानाः प्रधानक्रियायाः पाकरूपायाः संपादनव्यापृताः स्वेषां याः क्रियाः काष्ठस्य ज्वलनं स्थाल्या धारणम् ओदनस्य क्लेदनमित्यादयः ताभिरवान्तरभूताभिरप्यभिसंबन्धात् साध्यायमानतां प्राप्नुवन्ति, न मुख्यं साध्यत्वं नापि सिद्धत्वम्। अदग्धेति। अर्धदग्धनिर्वापिते काष्ठादौ पुनराशुशुक्षणिप्रक्षेपे यावददग्धं तावद् दह्यते नाधिकमिति न्यायेन यावदप्राप्तं तावद् विधीयते। ऋत्विक्प्रचरणस्य प्रमाणान्तरप्रतिपन्नत्वाल्लोहितोष्णीषत्वमात्रं विधेयम्।

हवनस्य जुहोत्यर्थस्य प्रमाणान्तरात् प्रसिद्धेर्दध्यादेः कारणत्वमात्रं विधेयं, न तु हवनमपि, भूतपूर्वत्वात् तस्य। न च विधेयत्वमेकस्यैवेति नियम इत्याह—क्वचिदिति। वयेति प्रथमो विधिः, पटमिति द्वितीयः, रक्तमिति तृतीयः। एकसिद्धौ

## सुधासागरः

यदंशे विधेयत्वं तत्रैव तात्पर्यं न तु प्रतिपाद्यमात्रे। अत एव सिद्धार्थानामप्रामाण्यमिति विधेयापेक्षया शब्दप्रामाण्यनियामकं तात्पर्यमित्यत्रैव 'यत्परः शब्दः स शब्दार्थः' इत्यस्य तात्पर्यमिति सिद्धान्तयति तथाहीत्यादि। अयमाशयः—तद्वाक्यवर्त्तिपदोपस्थापित एव हि तात्पर्यमुच्यते न प्रतीतिमात्रे। तथा हि 'भूतभव्यसमुच्चारणे भूतं भव्यायोपदिश्यते' इति सिद्धान्तः। अस्यार्थः—भूतं सिद्धम्, भव्यं साध्यम्, तयोः समभिव्याहारे भूतं सिद्धं भव्याय साध्यायोपदिश्यते' इति कारकपदार्थाः क्रियापदार्थेनान्वीयमानाः सिद्धा अपि प्रधानक्रियानुकूलया साध्यीभूतया स्वक्रियया योगात्साध्यायमानतामाप्नुवन्ति। स्वरूपेण सिद्धा अपि साध्यक्रियाविशिष्टतया साध्या इव भवन्ति। घटमानयेत्यादौ किलानयनं समीपदेशसंयोगः प्रधानक्रिया। तस्याः निर्वर्त्तिका स्वस्य घटस्य क्रिया पूर्वदेशसंयोगध्वंसहेतुविभागजनकस्पन्दः। घटस्य स्वरूपतः सिद्धावपि स्पन्दाश्रयत्वेन साध्यत्वम्, विशेष्यबोधे स्पन्दस्यैव तथात्वमिति क्यङः प्रयोगः। ततश्च यथा दहनेनादग्धमात्रं दह्यते न तु दग्धमिति, तथा यावदेवाप्राप्तं तावदेव शब्देन विधीयते, अंशान्तरे त्वनुवादः। प्राप्तस्याप्राप्तप्रापणरूपविधानायोगात्। यथा ऋत्विक्प्रचरणेऽतिदेशात्प्राप्ते लोहितोष्णीषा ऋत्विजः प्रचरन्तीत्यनेन लोहितोष्णीषत्वमात्रं विधीयते, न तु ऋत्विक् प्रचरणं वा। उष्णीषस्यापि प्राप्तौ तु लौहित्यमात्रम्। हवनस्यान्यतः सिद्धौ च दध्ना जुहोतीत्यनेन दध्नः करणत्वं न तु

[ग] यदि च शब्दश्रुतेरनन्तरं यावानर्थो[१] लभ्यते तावति शब्दस्याभिधैव व्यापारः, ततः कथं 'ब्राह्मण पुत्रस्ते जातः, ब्राह्मण कन्या ते गर्भिणी'—इत्यादौ हर्षशोकादीनामपि न वाच्यत्वम् ?

कस्माच्च लक्षणा। लक्षणीयेऽप्यर्थे दीर्घदीर्घतराभिधाव्यापारेणैव प्रतीतिसिद्धेः।

---

## साहित्यचूडामणिः

द्विविधिः द्विसिद्धावेकविधिः। एवमन्यत्। ततश्च यदेव विधेयं तत्रैव तात्पर्यं न पुनरन्यत्र प्रतीतमात्रे। अथ प्रमेयोपयुक्तमंशमाह—उपात्तस्यैवेति। उच्चारितस्यैव शब्दस्यार्थे तात्पर्यम्। विपर्यये बाधमाह एवं हीति। पूर्वापरयोर्ह्रस्वदीर्घवदन्योन्यसापेक्षत्वादेकतरोक्तावन्यतरप्रतीत्यवश्यम्भावः नतु तात्पर्यशक्तेः। एवञ्च घटशब्दोच्चारणेऽघटाद्यर्थेऽपि तात्पर्यप्रसङ्गः।

ननु 'अनुपात्तस्यापि शब्दस्यार्थे क्वचित् तात्पर्यं पश्यामः येन 'विषं भक्षये'-त्यादीनां शब्दानामन्यत्रानभिमतगृहेषु न भोक्तव्यमिति तात्पर्यम्, न चात्र द्वितीयवाक्योपादानम्' इत्याशङ्क्याह—यत्त्विति। 'विषं भक्षय मा चास्य गृहे भुक्थाः' इत्येकं वाक्यम्। तत्र चकारस्तयोरैक्यं वाक्ययोः प्रकटयति, अन्यथा तस्य नैरर्थक्यापत्तेः। नन्वाख्यातशब्दवाच्ययोरुभयोः कथमङ्गाङ्गिभावो घटते ? सत्यं न घटते इति। तत्रैकतरस्य [२]कृद्वाच्यतयाङ्गता कल्पनीया। तत्र भुजक्रियानिषेधस्यान्यथायितुमशक्यत्वाद् विषभक्षणवाक्ये कृद्वाच्यत्वं विश्राम्यति। सर्वथेति। मास्य गृहे भुक्था इत्येतावदुच्यताम् अलं विषभक्षणवाक्येनेति न युज्यते वक्तुम्। विभीषिकोत्पादनेनापि विमतगृहभोजनस्य निषेधनीयत्वात्।

एवं तात्पर्यवादे स्ववचनविरोधमुपपाद्य दोषान्तरमप्युद्भावयितुं व्याप्यमभ्युपगमयति—यदि चेति। व्यापकं प्रसञ्जयति—तत् कथमिति। 'पुत्रस्ते जातः'

## सुधासागरः

दधि हवनं वा। लोकेऽप्येवं रक्तं पटं वयेत्यादौ रक्तत्वपटवयनानां मध्ये एकस्य द्वयोस्त्रयाणां वाऽसिद्धौ एकविधिर्द्विविधिस्त्रिविधिर्वा। ततश्च यावदेव विधेयं तावत्येव शब्दप्रामाण्यनियामकं तात्पर्यम्। विधेयं च शब्दोपात्तमेवेति सुष्ठूक्तं शब्दोपात्त एव तात्पर्यमिति। यदि च प्रतीतमात्रे तात्पर्यं तदा पूर्वो धावतीत्यादौ पूर्वादिसमानसंवित्संवेद्यतया प्रतीतेऽपराद्यर्थेऽपि कदाचित्तात्पर्यं स्यादिति।

ननूपात्तस्यैव शब्दस्यार्थे तात्पर्यं न तु प्रतीतमात्रे इति यदुक्तम्, तदसङ्गतम्। विषं भक्षयेत्यत्र व्यभिचारादित्याशङ्क्य समाधत्ते- यत्त्वित्यादिना। अयमाशयः—

---

[१] र्थोऽवगम्यते इति पाठे। [२] द्रष्टव्या २६५ पृष्ठगता पादटिप्पणी।

किमिति च श्रुति-लिङ्ग-वाक्य-प्रकरण-स्थान-समाख्यानां[१] पूर्व-पूर्व-बलीयस्त्वम् ?

इति, अन्विताभिधानवादेऽपि विधेरपि सिद्धं व्यङ्ग्यत्वम् ।

---

## साहित्यचूडामणिः

इत्यस्मादाकर्णयितुः प्रमोदः, 'कन्या ते गर्भिणी' इति कुलकलङ्कशङ्कया शोकः । तावन्तमवधिं विशृङ्खलस्तात्पर्यप्रसर इति हर्षशोकयोरपि वाच्यत्वप्रसङ्गः ययोरुत्पाद्यत्वम् । किञ्च तात्पर्ये विजयमाने किमर्थं लक्षणास्वीकार इत्याशङ्क्याह—कस्माच्चेति । इतोऽपि युक्त्यन्तरमाह—किमिति चेति । 'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये परदौर्बल्यमर्थविप्रकर्षादि'ति[२] सूत्रम् । अत्र श्रुतिरनन्यसाकाङ्क्षः शब्दो लिङ्त्व्यदादिः । वस्तुसामर्थ्यं लिङ्गम् । पदान्तरसमभिव्याहारो वाक्यम् । वाक्यस्य वाक्यान्तरेणान्वयः प्रकरणम् । स्थानं सन्निधानम् । समाख्या पुरातनी परिभाषा । यदाहुः—

एक-द्वि-त्रि-चतुः-पञ्च-वस्त्वन्तरणकारितम् ।
श्रुत्यर्थं प्रति वैषम्यं लिङ्गादीनां प्रतीयते ॥

इति । एतेषां तात्पर्यैकनिबन्धनत्वे कथं प्राबल्यदौर्बल्यतारतम्यम् । उदाहरणं तु तन्त्रत एवानुसन्धेयं शृङ्गारप्रकाशाद् वा । विधेरपीति । न केवलमलङ्काररसध्वन्योः, यावद् वस्तुमात्ररूपस्य विधेरपीति अपिशब्दार्थः ।

## सुधासागरः

—यदपि सोऽयमिषोरिवेति, तदप्ययुक्तम् । यतः शब्दश्रवणानन्तरं यावानर्थः प्रतीयते तावति सर्वत्र यदि शब्दस्याभिधैव स्यात्तदा चैत्र पुत्रस्ते जातः कन्या ते गर्भिणीत्यादिवाक्यानन्तरं हर्षविषादयोः प्रतीतेस्तयोरपि तद्वाक्यस्याभिधा स्यात् । अथ तच्छब्दप्रतिपाद्ये सर्वत्राभिधा, हर्षादयस्तु न तत्प्रत्याय्याः इत्युच्यते तर्हि लक्षणीयेऽप्यभिधैव स्यादिति लक्षणोच्छेदः ।

किमिति च[३] 'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्'[४] इति सूत्रेण भगवान् जैमिनिः श्रुत्यादिषु पूर्वबलीयस्त्वं प्रतिपादयाम्बभूव । सर्वत्रैवाभिधाप्रसङ्गे उत्तरस्य दौर्बल्ये बीजाभावात् । सूत्रन्तु प्रकृतार्थविच्छेदकत्वेऽपि बहूपकारकत्वाद् दुरूहत्वाच्च व्याक्रियते । श्रुतिलिङ्गादयः षडिह विनियोजकाः । तत्र विरुद्धयोरेकत्रोपनिपाते समुच्चयो न सम्भवतीत्येकेनापरस्य बाधो वक्तव्यः । स च बलवता दुर्बलस्येति स्थितिः । दौर्बल्यप्रतिपादकं सूत्रं श्रुतिलिङ्गेत्यादि । अस्यार्थः—श्रुत्यादीनां समवाये एकत्रोपनिपाते तेषां मध्ये यदपेक्षया यत्परं तदपेक्षया तद् दुर्बलम् । कुतः, अर्थविप्रकर्षात् पूर्वापेक्षया

---

१-२ '०समाख्यानां परदौर्बल्यमर्थविप्रकर्षात्' इति दाक्षिणात्याः ।

३ २६८-२७६—पृष्ठानि संशोध्य प्रस्तूयन्ते । ४ मी० द० ३. ३. १४. सूत्रम् ।

## सुधासागरः

विलम्बेनार्थप्रत्यायकत्वात्। यथा चैतत्तथोदाहरणे स्फुटीकरिष्यते।

तत्र श्रुतिर्द्वितीयान्तं पदं विभक्तिमात्रानुपस्थापकत्वात्प्रकृतिप्रत्ययौ सम्भूयार्थं ब्रूत इति व्युत्पत्तेः। तथाहि—कर्मत्वबोधिका द्वितीया। कर्मत्वं क्रियाजन्येष्टफलभागित्वम्। तत्र क्रिया शेषः, तज्जन्यं फलं किञ्चिदंशः, तदाश्रयः शेषी। अत एव द्वितीयान्तपदेन शेषशेषिकिञ्चिदंशावगमः क्रियते इति वृद्धाः। न चैतत् तृतीयायामस्ति अरुणयेत्यादौ साध्यत्वस्य द्रागप्रतीतेः। तथाऽरुणागतेन तृतीयार्थसाधनत्वेन कर्मगतं साध्यत्वमाक्षिप्यत इति प्राञ्चः।

वाचस्पतिमिश्रास्तु—द्वितीयातृतीये द्वे अपि कारकविभक्तितया क्रियां प्रति प्रकृत्यर्थस्य कर्मकरणभावार्थमवगमयत इति द्वे अपि विनियोजिके। क्रियां प्रति कर्मणः शेषित्वं करणस्य च शेषत्वमिति विनियोगः। पदान्तरानपेक्षे च क्रियां प्रति शेषशेषित्वे श्रुतिमात्रात् प्रतीयेते इति [ ३.३.२५ सूत्र-] भामत्यामाहुः।

सुबुद्धिमिश्रनृसिंहठक्कुरादयस्तु—श्रवणमात्रेणार्थप्रत्यायिका हि श्रुतिरुच्यते। ताश्च कारकविभक्तयः। उपपदविभक्तयस्तु सहार्थतृतीयाद्याः सहादिसापेक्षत्वान्न तथा। एवं 'मासं गुडधानाः क्रोशं कुटिला नदी'त्यत्र द्वितीयाऽपि न श्रुतिः अन्तर्भूतक्रियापेक्षत्वादित्याहुः।

वस्तुतस्तु विधेयार्थबोधने शब्दान्तरनिरपेक्षं शब्दमात्रमेव श्रुतिरिति बोद्धव्यम्। अत एव काव्यप्रदीपकारैरुक्तम्—निरपेक्षो रवः श्रुतिरिति। उक्तञ्चान्यत्र—

अभिधातुं पदेऽन्यस्मिन्ननपेक्षो रवः श्रुतिः।
सर्वत्रावगता शक्तिर्लिङ्गमित्यभिधीयते॥
संहत्यार्थाभिधायित्वं पदानां वाक्यमुच्यते।
प्रधानवाक्यस्यान्यार्थाकाङ्क्षा प्रकरणं मतम्॥
स्थानं समानदेशत्वं समाख्या यौगिको रवः॥ रवः शब्दः।

सारबोधिनीकारादिभिरप्युक्तम्—

श्रुतिर्द्वितीया, क्षमता च लिङ्गं, वाक्यं पदान्येव तु संहतानि।
सा प्रक्रिया या कथमित्यपेक्षा, स्थानं क्रमो, योगबलं समाख्या॥ इति।

क्षमता योग्यता। श्रुतिर्यथा—व्रीहीनवहन्तीति। अत्र क्रियाफलभागित्वं कर्मत्वं बोधयन्ती द्वितीया निरपेक्षैव व्रीहीणामवघातशेषित्वं प्रतिपादयति। अत एवोक्तं श्रीवत्सलाञ्छनभट्टाचार्यैः—व्रीहीनवहन्तीत्यत्र द्वितीयाश्रवणमात्रेणावहननक्रियायां विनियोगोऽवगम्यत इति।

लिङ्गं पदार्थसामर्थ्यम्। उक्तञ्च प्रदीपकारैः—अर्थविशेषप्रकाशनसामर्थ्यं लिङ्गमिति। तद्यथा—बर्हिर्देवसदनं दामीति। अत्र लवनार्थप्रकाशकतया बर्हिर्लवने विनियोगः। अत एवोक्तं सारबोधिनीकारैः—बर्हिर्देवसदनं दामीत्यत्र 'दाप् लवने' इत्यस्य रूपम्, योग्यतावशाद् बर्हिश्छेदनेऽस्य मन्त्रस्य विनियोग इति।

## सुधासागरः

वाक्यं परस्परापेक्षाणां पदानां समभिव्याहारः। अत एवोक्तं प्रदीपकारैः—परस्पराकाङ्क्षावशात्क्वचिदेकस्मिन्नर्थे पर्यवसितानि पदानि वाक्यमिति। तद्यथा—'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं निर्वपामि' इत्यत्र लिङ्गेन निर्वापे विनियुज्यमानस्य समवेतार्थभागस्य एकवाक्यताबलेन देवस्य त्वेत्यादिभागस्यापि तत्र विनियोगः। यथा वा 'श्वेतं छागमालभेत' इत्यत्रान्वये श्वेतस्य छागस्य प्रत्येकमालभनक्रियाऽन्वयित्वेऽप्याकाङ्क्षादिमहिम्ना विशेषणस्य श्वेतस्य छागावच्छेदकता वाक्याद् व्यवस्थाप्यते।

प्रकरणं तु कर्त्तव्यस्य विनियोगादेः केन स्यात् कथमित्यादीतिकर्त्तव्यताकाङ्क्षा। अत एवोक्तं प्रदीपकारैः—लब्धवाक्यभावानां पदानां कार्यान्तरापेक्षावशाद् वाक्यान्तरेण सम्बन्ध आकाङ्क्षापर्यवसन्नं प्रकरणमिति। तद्यथा—'समिधो यजति' इत्यादेर्दर्शपौर्णमासकर्मभावाकाङ्क्षायां पाठवशाच्छेषत्वम्। यथा वा 'दध्ना जुहोति' इत्यत्र दधियागस्याग्निहोत्राङ्गताऽवगमः। 'अग्निहोत्रं जुहोति' इत्यस्य प्रधानवाक्यस्य कथमित्याकाङ्क्षायां तदभिधानात्।

स्थानं—सहावस्थानं सन्निधिरिति यावत्। अत एवोक्तं प्रदीपकारैः—स्थानं क्रमः। स चानेकस्याम्नातस्य सन्निधिविशेषाम्नानमिति। तद्यथा 'कुशमुष्टिः दब्धिरसि' इत्यत्र आग्नेयाग्नीषोमीयोपांशुयागाः क्रमेण ब्राह्मणेषु पठिताः। मन्त्रभागेऽपि क्रमेणानुमन्त्रणत्रयं पठितम्। तत्राग्नेयवैष्णवयोर्लिङ्गेनैव द्वयोर्विनियोगसिद्धिः। 'दब्धिरसि' इत्यत्र तु न लिङ्गादि विनियोजकं, किन्तु यस्मिन्प्रदेशे ब्राह्मणे उपांशुयागविधानं तस्मिन्नेव प्रदेशे मन्त्रेऽप्यस्य पाठ इति क्रमादुपांशुयागानुमन्त्रणेऽस्य विनियोगः। यथा वा 'हव्यकव्ये स्वाहा स्वधा' इत्यत्र हव्ये स्वाहेत्यस्य कव्ये स्वधेत्यस्य विनियोगः तुल्यक्रमत्वात्।

समाख्या योगबलम्। यथा 'हौत्रमौद्गात्रमित्यादि'। तत्र हि होतुरिदं हौत्रमित्यादियोगबलेन हौत्रादिसमाख्यातानि कर्माणि होत्रादिभिरनुष्ठेयानि। एवञ्च हवनं होतरि गानमुद्गातरि विनियुज्यते।

अथैषां विशेषोदाहरणानि—तत्र श्रुतिलिङ्गयोर्विरोधे लिङ्गस्य दुर्बलत्वम्। यथा 'कदाचन स्तरीरसि नेन्द्र सश्चसि' इत्यादिकाया ऋचो विनियोजिका श्रुतिः 'ऐन्द्र्या गार्हपत्यमुपतिष्ठते' इति। तत्र चेन्द्रप्रकाशनसामर्थ्यरूपाल्लिङ्गादिन्द्रोपस्थाने विनियोगः प्रतिभाति, अन्यप्रकाशकस्यान्यत्र विनियोगायोगात्। श्रुत्या गार्हपत्योपस्थाने स प्रतीयते। गार्हपत्यमिति द्वितीया हि कर्मविभक्तितया कामपि क्रियामपेक्ष्य प्रकृत्यर्थस्य शेषित्वं बोधयति, क्रियाजन्येष्टफलभागित्वस्य तदर्थत्वात्। एवमैन्द्र्येति तृतीया प्रकृत्यर्थस्य शेषत्वम्, क्रियाम्प्रति साधकतमत्वरूपकरणत्वस्य तदर्थत्वात्। तदत्र श्रुतिलिङ्गयोर्विरोधः। न च वाच्यं, निरपेक्षया द्वितीयया शेषित्वमात्रं प्रतीयते, न त्वैन्द्रीमृचम्प्रतीति, तच्चाग्नेयीमृचम्प्रत्यपि सम्भवतीति कुतो विरोधः। ऐन्द्र्येतिपदमपेक्ष्य विशेषबोधनाद् विरोध इति चेत्, न तर्हि श्रुतेर्विरोधः किन्तु वाक्यस्य। तच्च

## सुधासागरः

लिङ्गापेक्षया दुर्बलमेवेति। यतः शेषशेषिभावः सामान्यतः श्रुत्यैवावगम्यते, पदान्तरप्रक्षेपात्तु विशेषे व्यवस्थाप्यते, विशेषसम्बन्धमात्रस्य पदान्तरसम्बन्धात्प्रतीतेः। तस्माच्छ्रुत्या सामान्यतः प्रतिपाद्योऽसौ वाक्यलभ्यं विशेषमपेक्ष्य लिङ्गप्रतिपाद्येन विरुद्ध्यते। तत्रायं पूर्वपक्षः सामर्थ्यज्ञानमपेक्ष्य श्रुतिर्विनियोजिका। न ह्यसमर्थे श्रुतिसहस्रेणापि विनियोक्तुं शक्यते। यथा वह्निः प्रसेके जलं वा दाहे। अतो लिङ्गस्य बलवत्त्वादिन्द्रस्योपस्थानेऽस्या विनियोगः। तदनुरोधितया द्वितीया सप्तम्यर्थतया व्याख्येया। गार्हपत्यसमीपेऽनया इन्द्र उपस्थातव्य इत्यर्थः पर्यवस्यति।

सिद्धान्तस्तु—श्रुतिः स्वरूपसत्सामर्थ्यमपेक्षते न तु तद्बोधमपि, येन लिङ्गं बलवद् भवेत्। तस्य च पूर्वसत एव ज्ञानं विनियोगान्यथानुपपत्त्या पश्चादुपजायते। लिङ्गन्तु विनियोजने श्रुतिमपेक्षते। न ह्यनेनेन्द्र उपस्थातव्य इति लिङ्गात् स्वरसतः प्रतीयते, किन्त्वीदृगिन्द्र इत्येतावन्मात्रम्। तथा च प्रकरणाम्नानसामर्थ्यादिन्द्रप्रकाशनसमर्थाया ऋचोऽन्यथानुपपत्त्या विनियोगः कल्पनीयः। तथा चार्थविप्रकर्षः। तथा हि श्रुतार्थापत्तिसाधकन्यायेन शब्दोपस्थापितेनैव शाब्दी आकाङ्क्षा परिपूर्यत इति लिङ्गेनानया इन्द्र उपस्थातव्य इति श्रुतिः कल्पनीया, ततस्तया विनियोगो भवेत्। ततो यावल्लिङ्गं श्रुतिकल्पनायै प्रक्रान्तव्यापारं तावत् प्रत्यक्षया श्रुत्या गार्हपत्ये विनियोगः सिद्ध एवेति प्रकरणे निराकाङ्क्षे कयाऽनुपपत्त्या श्रुतिः कल्पनीया! तस्माच्छ्रुतेर्बलवत्त्वात्तदनुगुणतया सामर्थ्ये नीयमाने इन्द्रपदं परमैश्वर्यवाचकतया गार्हपत्यतात्पर्यकमित्यवधार्यते।

अतएव रविभट्टाचार्यैर्व्याख्यातम्—श्रुतिर्बलवती। तथा हि 'ऐन्द्र्या गार्हपत्यमुपतिष्ठते' इति श्रूयते। 'कदाचन स्तरीरसि नेन्द्र सश्चसि दाशुषे' इत्यादिकैन्द्री ऋक्। अत्रेन्द्रप्रकाशनरूपाल्लिङ्गान्मन्त्रस्येन्द्रप्रधानक्रियासाधनत्वं प्रतीयते। अन्यथेन्द्र—प्रकाशनं व्यर्थमापद्येत। तथाचैतन्मन्त्रकरणकक्रियाम्प्रति इन्द्रः प्रधानमिति व्युत्पादने लिङ्गस्योपयोगः। काऽसौ क्रियेति जिज्ञासायामैन्द्र्योपतिष्ठत इति पदद्वयात्मकवाक्येनोपस्थानक्रियापर्यवसानम्। एवं सतीन्द्रमन्त्रेणेन्द्रमुपतिष्ठत इत्यर्थः पर्यवस्यति। एवं गार्हपत्यमिति श्रुत्या द्वितीयान्तपदात्मिकया गार्हपत्यस्य प्राधान्यं प्रतीयते। तच्च गुणीभूतां किञ्चित्करणकक्रियामन्तरेण न सम्भवति, अत ऐन्द्र्योपतिष्ठत इति पदद्वयेन मन्त्रविशेषक्रियाविशेषयोः पर्यवसानं भवति। तथा सत्यैन्द्रेण गार्हपत्यमुपतिष्ठते इत्ययमर्थः प्रतीयते। तथा च लिङ्गादिन्द्रः शेषी, श्रुतेर्वह्निः शेषी प्राप्तः इत्युभयोर्विरोधे प्रधानत्वाविशेषात् व्रीहियववद्विकल्पो वा स्यात्। इन्द्रगार्हपत्ययोः प्राधान्याविशेषादुपस्थानस्य च गुणत्वात्। 'प्रतिप्रधानं गुणावृत्तिः' इति न्यायेनोपस्थानावृत्त्या श्रुतिलिङ्गयोः समुच्चयाद्देवतयोरपि समुच्चयो वेति पूर्वपक्षः।

सिद्धान्तस्तु—प्रवर्त्तमानमपि लिङ्गं शेषिणमिन्द्रं विना न पर्यवस्यति, अत इन्द्रमिति श्रुतिकल्पनमावश्यकमित्युपजीव्यजातीयत्वादावश्यकत्वाच्च गार्हपत्यमिति साक्षादुपात्तश्रुतिरेव वह्नेः शेषित्वं बोधयति। ऐन्द्र्येत्यत्र तु श्रूयमाणमिन्द्रपदं स्वो-

## सुधासागरः

चितक्रियायामध्वर्युगुणयोगेन मुख्येन्द्रसदृशवह्निपरमेव। न च विनिगमकाभावाद् गार्हपत्यपदमेवेन्द्रपरं लक्षणयास्त्विति वाच्यम्, 'प्रधानाप्रधानयोः प्रधाने झटित्यवसर' इति न्यायात्प्रथमप्रवृत्तश्रुत्या वह्नेः शेषित्वं प्रतीयते, तदानीमनुपपत्त्यभावात्, मुख्ये शब्दस्वरसाच्च। उत्तरकालन्तु प्रवर्त्तमानादैन्द्र्येति लिङ्गात् प्रथमप्रतीतार्थानुगुण्येन गौण्या वृत्त्या वह्निरेवेन्द्रशब्दार्थः कल्प्यते, न परं वैपरीत्यम्। तस्माद् वह्न्युपस्थाने मन्त्रः श्रुत्या विनियुज्यते न त्विन्द्रोपस्थाने लिङ्गेनेति श्रुत्या लिङ्गबाध इति।

लिङ्गवाक्ययोर्यथा—पुरोडाशस्य स्थानकरणस्थापनस्वरूपयोः सदनसादनयोः प्रकरणे 'स्योनन्ते सदनं कृणोमि घृतस्य धारया सुषेवं कल्पयामि तस्मिन् सीदामृते प्रतितिष्ठ व्रीहीणां मेदः सुमनस्यमान' इति मन्त्रः पठितः। अयमर्थः—भोः पुरोडाश तव स्योनं समीचीनं स्थानं कृणोमि तच्च स्थानं घृतधारया सुषेवं सुष्ठु सेवितुं योग्यं कल्पयामि, घृतप्लुतानां कपालादीनां पुरोडाशेन सुखसेव्यत्वात्। भो व्रीहीणां मेदः सारभूत त्वं सुमनस्यमानः समाहितमनस्कः सन् तस्मिन्नमृतेऽनपायिनि सीदोपविश तत्रैव प्रतितिष्ठ स्थिरो भवेति। तत्र कल्पयामीत्यन्तः पूर्वभागः सदने, शेषभागस्तु सादने प्रयोक्तव्य इति लिङ्गात् प्रतिभाति। अयं मन्त्र एकं वाक्यम्, पदाक्षेपेण यत्कल्पयामि तस्मिन्सीदेत्येकार्थावच्छिन्नत्वाद्विभागे साकाङ्क्षत्वाच्च। ततश्चैकवाक्यत्वात् समस्त एवोभयत्र विनियोक्तव्यो देवस्य त्वेत्यादिवदिति वाक्यादवगम्यते। तदनयोर्विरोधः।

अत्र पूर्वपक्षः—अस्यैकवाक्यत्वे निश्चिते पश्चात्तदुपपत्तयेऽभिधानसामर्थ्यं कल्पनीयम्, यत्कल्पितया श्रुत्या विनियोगो भवेत्। यथा देवस्य त्वेत्यादिमन्त्रे 'अग्नये निर्वपामि' इति पदयोः समवेतार्थतया तयोरेकवाक्यतयाऽताद्दृशां पदान्तराणां सामर्थ्यकल्पना, तथाचैकवाक्यत्वनिर्वाहाय क्लृप्तं सामर्थ्यं न तद्व्याहन्तुमर्हति किन्तु विनियोजिकां श्रुतिं कल्पयत्समस्तमन्त्रविनियोजिकामेव कल्पयतीति वाक्यस्योपजीव्यत्वेन बलवत्त्वात्समस्तस्यैवोभयत्र विनियोग इति।

सिद्धान्तस्तु—यद्येकवाक्यतामवगम्यैव सामर्थ्यमवधार्येत तदोपजीव्यत्वाद् वाक्यं बलवद्भवेत्। न त्वेवम्। प्रत्युतावधृतसामर्थ्यानां सन्निहितपठितानां सामर्थ्यवशेन प्रयोजनैकतया चैकवाक्यत्वावधारणम्। यावन्ति पदानि प्रधानमेकमर्थं प्रतिपादयितुं समर्थानि विभागे साकाङ्क्षाणि भवन्ति तावन्ति एकं वाक्यं भवन्ति। अनुष्ठेयश्चार्थो मन्त्रे प्रकाशमानः प्रधानम्। सदनसादने चात्र तथाभूते। तथा च सदनप्रकाशनसमर्थः पूर्वभागः सादनप्रकाशनसमर्थः शेषभाग इति प्रतीताभ्यां तत्सामर्थ्याभ्यां क्लृप्तेन श्रुतिद्वयेन प्रागेव तद्भागयोः प्रत्येकं विनियोगे सिद्धे तावतैव प्रकरणपाठोपपत्तौ समस्तमन्त्रस्यैकवाक्यताबुद्धिरुत्पन्नाप्याभासीभवति, लिङ्गेन बाधात्। तथा क्लृप्तमपि सामर्थ्यं न श्रुत्यन्तरं कल्पयितुमर्हतीत्यर्थविप्रकर्षाद् वाक्यं दुर्बलम्। तस्माद्यत्रावान्तरवाक्यविरोधिलिङ्गताऽस्ति तत्र समवेतार्थकेनैकेन पदेन

## सुधासागरः

द्वाभ्यां त्रिभिर्वा सहैकवाक्यता पदान्तराणामपि सामर्थ्यं विनियोजकश्रुतिकल्पनानुकूलं कल्पयति । यथाऽत्रैव 'स्योनन्त' इत्यादिभागानाम् ।

व्याख्यातं रविभट्टाचार्यैः—लिङ्गं वाक्याद् बलवत् । तथा हि–दर्शपौर्णमासयोः श्रूयते 'स्योनन्ते सदनं कृणोमि घृतस्य धारया सुषेवं कल्पयामि तस्मिन्सीदामृते प्रतितिष्ठ व्रीहीणां मेदः सुमनस्यमान' इति । अत्र च तस्मिन्निति तच्छब्देन प्रस्तुतप्रत्यवमर्षणाद् यत्पदसमभिव्याहारेण विभज्यमानसाकाङ्क्षत्वादेकमिदं वाक्यम् । तथा च मन्त्रद्वैताभावात्सर्वोऽप्ययं मन्त्रः स्थानकरणस्याङ्गम् । तत्र च विनियोजिका श्रुतिः कल्पनीया । सर्वेणानेन मन्त्रेण स्थानं कर्त्तव्यम् । तथा सर्वेण पुरोडाशः स्थापनीय इत्यपि श्रुतिः स्थानक्रियाङ्गत्ववत् प्रतिष्ठापनक्रियाङ्गत्वस्यापि तद्वाक्यबोधितत्वात् । एवं सदनसादनयोरस्य मन्त्रस्य विकल्पः समुच्चयो वा स्यादिति पूर्वपक्षः ।

सिद्धान्तस्तु—न पदसमुदायो वाक्यं, किन्तु यावन्ति पदानि प्रधानमेकमर्थं बोधयितुं समर्थानि विभागसाकाङ्क्षाणि च तावतां समुदायः । मन्त्रेषु चानुष्ठेयोऽर्थः प्रकाश्यमानः प्रधानम् । अत्र च मन्त्रे सदनकरणं पुरोडाशासादनं चानुष्ठेयतया द्वे अपि प्रधाने, तयोश्च कल्पयाम्यन्तो मन्त्रः सदनकरणे समर्थः तस्मिन्नित्यादिस्तु पुरोडाशासादने । तथा चोत्तरार्द्धस्य पुरोडाशासादने प्रथमार्द्धस्य सदनकरणे शक्तिं कल्पयित्वा नैकवाक्यता न वा कृत्स्नः सदनसादनयोर्विनियोक्तुं शक्यते इति यावदेकवाक्यतां कल्पयित्वा सामर्थ्यमुन्नीयते तावत्प्रत्यक्षसिद्धं सामर्थ्यमेकैकविनियोजिकां सादनं कर्त्तव्यमित्याकारिकां श्रुतिं कल्पयति यावच्च वाक्यकल्पितं पदार्थसामर्थ्यरूपं लिङ्गं श्रुतिं कल्पयति तावत्प्रत्यक्षसिद्धसामर्थ्यकल्पिता श्रुतिर्विनियोगं गृह्णातीति ।

वाक्यप्रकरणयोर्यथा दर्शपौर्णमासप्रकरणे 'इदं द्यावापृथिवी भद्रमभूत्' इत्यादिकः सूक्तवाकनिगदः पठितः । तत्र च 'इन्द्राग्नी इदं हविरजुषेतामवीवृधेतां महोज्यायोऽक्राताम्' 'अग्नीषोमाविदं हविरजुषेतामवीवृधेतां महोज्यायोऽक्राताम्' इत्यवान्तरवाक्यद्वयं श्रूयते । तत्र पौर्णमास्यामिन्द्राग्नी न देवते इति लिङ्गात्तत्पदमपनीयते । अमावास्यायान्तु समवेतार्थत्वात्तत्प्रयुज्यते । एवमग्नीषोमपदममावास्यायामसमवेतार्थत्वेनापनीयते, पौर्णमास्यान्तु प्रयुज्यते । तत्रैवं सन्दिह्यते—इन्द्राग्निपदैकवाक्यतापन्नानि अवीवृधेतामित्यादिपदानि तत्रापनेयानि, अथवा प्रयोक्तव्यान्येव इति । तत्र प्रकरणात्प्रयोगः प्रतिभाति, असमवेतार्थतया देवतामात्रस्यापनयनात् । वाक्यात्तु तान्यपनेयानीति प्रतीयते, येन सह यदेकवाक्यतापन्नं तेन सहैव तदपनयनौचित्यात् । तदनयोर्विरोधः । तत्र प्रकरणमेवाङ्गसम्बन्धप्रतिपादकमतस्तस्य बलवत्त्वाच्छेषभागः प्रयोक्तव्य एवेति पूर्वपक्षे सिद्धान्तः—प्रकरणं विनियोज्यत्वरूपसामर्थ्यमनपेक्ष्य न विनियोजकं येनैतदेवं भवेत् , किन्तु तदपेक्षमेव । कथमन्यथा 'पूष्णोऽहं देवयज्यया प्रजया पशुभिश्च जनषीय' इति पूषानुमन्त्रणं मन्त्रतद्देवताविरहिणोर्दर्शपौर्णमासयोर्न विनियुङ्क्ते । 'तिस्र एवोपसदः साह्नस्य द्वादशाहीनस्य' इत्यत्र

## सुधासागरः

चैकाहविधेयसोमयागस्वरूपे साङ्गे ज्योतिष्टोमादौ द्वादशोपसत्तां न बोधयति। सा पुनर्बहुदिवसविधेया सोमयागरूपाहीन-नामकक्रतुविशेषे नीयते। यद्वाऽन्यत्र नीयते तदवहायावशिष्टेन प्रकरणाकाङ्क्षा पूर्यते। यत्र तु विरोधिश्रुत्यादिकं नास्ति तत्र प्रकरणं विनियोजकम्। यथा 'समिधो यजति' इत्यादिबोधितस्य समिदादेः। अत्र तु यथा लिङ्गेनेन्द्रादिभागोऽपनीयते तथा वाक्येन तच्छेषभागोऽपीति क्व पश्चात्प्रवृत्तिकस्य प्रकरणस्यावकाशः। न च तथात्वमस्यासिद्धम्। यतो वाक्येन पदानां सम्बन्धः प्रत्यक्षसिद्धः, प्रकरणे तु आकाङ्क्षावशात्कल्पनीयः। तथा च वाक्ये प्रथममेवाभिधानसामर्थ्यं कल्प्यते, ततस्तेन श्रुतिस्तया विनियोग इति तृतीयः कालो विनियोगस्य। प्रकरणे तु प्रथमं वाक्ययोः सम्बन्धः कल्प्यते, ततः सामर्थ्यम्, अथ श्रुतिः, अथ विनियोग इति चतुर्थः कालः। ततो वाक्यात्प्रथमं शेषभागस्यापनये सिद्धे क्लृप्ताऽपि सिद्धश्रुतिरकिञ्चित्करी वाक्यविरोधादिति।

व्याख्यातञ्च मधुमतीकारैः—प्रकरणाद् वाक्यं बलवत्। तथा हि—ज्योतिष्टोमप्रकरणे 'द्वादशोपसदोऽहीनस्य' इति श्रूयते। उपसत्पदं स्तुतिवाचकम्। 'अह्नः खः क्रतौ' इत्यनुशासनादहीनपदं यागविशेषवाचकम्। एवञ्च प्रकरणाज्ज्योतिष्टोम एव द्वादशोपसदन्वयो न त्वहीनयागे इति पूर्वपक्षः। सिद्धान्तस्तु—प्रकरणस्य वाक्यघटितत्वाद्यावत्प्रकरणेनैकवाक्यता कल्पनीया तावत्प्रत्यक्षसिद्धवाक्येन लिङ्गं कल्पनीयम्। यावत्कल्पितवाक्येन लिङ्गकल्पनं तावत्प्रत्यक्षवाक्यकल्पितलिङ्गेन श्रुतिकल्पनम्, यावच्च कल्पितवाक्योपस्थापितलिङ्गेन श्रुतिकल्पनं तावत्प्रत्यक्षवाक्यकल्पितलिङ्गोन्नीतश्रुतिर्विनियोगं गृह्णातीत्यहीनयाग एव द्वापशोपसदन्वयो न ज्योतिष्टोम इति।

प्रकरणस्थानयोर्यथा—राजसूयस्य प्रधाननानाकर्मात्मकस्य प्रकरणे प्रधानादभिषेचनीयादनन्तरं शौनःशेफोपाख्यानमाम्नातम्। तत्र किं समस्तराजसूये तदङ्गमाहोस्विदभिषेचनीयमात्र इति सन्देहः। तत्र प्रकरणस्य बलवत्त्वात्सर्वाङ्गताऽवगम्यते, स्थानस्य तु बलवत्त्वेऽभिषेचनीयाङ्गता। तदनयोर्विरोधः। यद्यप्याकाङ्क्षासत्त्वयोरुभयोरपि तुल्यबलवत्त्वम्, 'अयमेति पुत्रो राज्ञः' इत्यादौ 'गामानय' 'प्रासादं पश्य' इत्यादावुभयविरहेणान्वयाबोधात्, तथापि विनिगमनाविरहादुभयोस्तुल्यबलवत्त्वाच्च विकल्पेनाङ्गताऽस्तु इति पूर्वपक्षे सिद्धान्तः—आकाङ्क्षासन्निधी द्वे अपि विनियोगप्रयोगप्रयोजिके इत्युभयसम्मतम्। राजसूये च कथं स्यादित्याकाङ्क्षा 'क्षत्रियस्य धृतिं' यावदनुवर्तते। सन्निधानं च प्राकरणिकत्वेन सर्वदा बुद्धिसन्निहितत्वादस्त्येव। अभिषेचनीये च सत्यपि सन्निधाने आकाङ्क्षा उत्थाप्या। तथा च यदोत्थिताकाङ्क्षेण प्रकरणेनैकवाक्यत्वं कल्पनीयं तदा सन्निधानादाकाङ्क्षोत्थापनम्। तथाचैकत्र सामर्थ्यकल्पनं श्रुत्युन्नयनं विनियोगः। अपरत्रैकवाक्यताकल्पनं सामर्थ्योन्नयनं विनियोगश्चेत्यर्थविप्रकर्षात् स्थानस्य दुर्बलत्वात् प्रकरणेन सर्वत्र राजसूये शौनःशेफोपाख्यानस्य विनियोगो न तु विकल्प इति।

## सुधासागरः

व्याख्यातं च मधुमत्याम्–प्रकरणं स्थानाद् बलवत्। नानेष्टिपशुसोमसमुदायो राजसूयः। तस्मिन्निष्टिपशुसोमयागाः बहवः प्रधानभूताः। तत्राभिषेचनीयाख्यः कश्चित् सोमयागः। तस्य सन्निधौ देवनादयः श्रूयन्ते 'अक्षैर्दीव्यति राजन्यं जिनाति शौनःशेफमाख्यापयतीति'। जिनाति जयति। बह्वृचब्राह्मणे कथितं शुनःशेफविषयमुपाख्यानं शौनःशेफम्। तदपि बह्वृचब्राह्मणे पठ्यते—यथा 'शुनःशेफः ऋषिपुत्रो हरिश्चन्द्रपुत्रेण? पुरुषमेधपशुत्वेन क्रीतः। स वरुणाय स्वस्याऽऽलम्भे कर्त्तुमारब्धे वरुणं तुष्टाव, स च तुष्टः एनं ररक्षे'-ति। तत्र सन्निबद्धा देवनादयोऽभिषेचनीयाङ्गमिति पूर्वपक्षः। सिद्धान्तस्तु राजसूयश्च बहुयागात्मक इति तत्रत्यबहुयागाङ्गत्वं देवनादीनाम्। तदुक्तम्—

> अविच्छिन्ने कथंभावे यत्प्रधानस्य पठ्यते।
> अविज्ञातफलं कर्म तस्य प्रकरणाङ्गता॥

कथंभावे 'कथं भावना निष्पद्यत' इत्याकाङ्क्षायाम्, इतिकर्त्तव्यताकाङ्क्षायामिति यावत्। यद्यप्याऽऽकाङ्क्षावत् सन्निधिरप्यपेक्षणीयस्तथापि पवित्रनामकयागमारभ्य क्षत्रधृतिपर्यन्तप्रकरणिनो राजसूयस्य सदा बुद्धिस्थत्वाद् बौद्धेन सन्निधिना नित्यसन्निकृष्टतया तत्सन्निधिरकल्पनीयः। तथा च राजसूयाकाङ्क्षारूपं महाप्रकरणं क्लृप्तदेवनाकाङ्क्षया सन्निधीयते। तथा च यावदभिषेचनीयसन्निधिपाठेनाकाङ्क्षोत्थाप्या तावत्सिद्धाकाङ्क्षेण राजसूयेनैकवाक्यता कल्प्यते। यावच्चाभिषेचनीयाकाङ्क्षया तदेकवाक्यता कल्प्यते तावत् क्लृप्तया राजसूयैकवाक्यतया तदुपकारत्वेन लिङ्गं कल्प्यते। यावत् क्लृप्तवाक्येन लिङ्गं कल्प्यते तावत् क्लृप्तलिङ्गं विनियोजिकां श्रुतिं कल्पयति। यावद् वाक्यकल्पितलिङ्गेन श्रुतिरभिषेचनीये कल्प्यते तावत् क्लृप्तया श्रुत्या विनियोगपरिग्रह इति।

स्थानसमाख्ययोर्यथा—दर्शपौर्णमासप्रकरणे पौरोडाशिकसमाख्याते काण्डे सान्नाय्यक्रमे 'शुन्धध्वं दैव्याय कर्मणे' इति मन्त्रः श्रूयते। स च प्रकरणाद्दर्शार्थः। तथात्वञ्च तस्य समवेतार्थतौचित्यात्, कस्यचिच्छुन्धने विनियोगाद् भवेत्। शुन्धनीयं चात्र द्वयमुपस्थितं सान्नाय्यपात्रं पुरोडाशपात्रं च। तत्र समाख्यावशात्पुरोडाशपात्रे विनियोगः प्रतिभाति। स्थानवशात्तु सान्नाय्यपात्राणाम्। तदनयोर्विरोधः।

तत्र पूर्वपक्षः-पौरोडाशशब्देन पुरोडाशसम्बन्धीन्युच्यन्ते। तान्यधिकृत्य प्रवृत्तं काण्डं पौरोडाशिकमिति। अतः समाख्या श्रुतित एव साक्षाद् विनियोजिका, क्रमस्तु प्रकरणाद्युन्नयनद्वारा तथेति समाख्या बलवती।

सिद्धान्तस्तु—पौरोडाशिकपदं न पुरोडाशमन्त्रविशेषयोः सम्बन्धमाह, किन्तु पुरोडाशविशिष्टं काण्डम्। वैशिष्ट्यानुपपत्त्या तु सम्बन्धस्तत्र कल्प्यते, सोऽपि न शेषशेषिभावः, किन्तु सम्बन्धमात्रम्। तद्द्वारेण तु मन्त्रभेदस्यापि तदनुमानम्। तथा च समाख्ययाऽपि क्रमादिकमुन्नीय विनियोगः, न श्रुत्यैव। एवं च समाख्यया क्रमोऽनु-

## सुधासागरः

मेयः, तेन प्रकरणं, तेन वाक्यं, तेन लिङ्गं, तेन श्रुतिस्तया विनियोग इति समाख्यायां षष्ठः कालो विनियोगस्य। स्थाने तु क्रमः प्रत्यक्ष एवेति न कल्पनीयः। तथा च तेन प्रथमत एव प्रकरणमनुमेयं, तेन च वाक्यं, तेन लिङ्गं, तेन श्रुतिस्तया विनियोग इति पञ्चमः कालः। तस्मादर्थविप्रकर्षात्समाख्या स्थानतो दुर्बलेति न पुरोडाशपात्रशुन्धनेऽस्य विनियोगः। कथं तर्हि काण्डस्य पौरोडाशिकसंज्ञा? पुरोडाशसम्बन्धिबहुमन्त्रघटितत्वादित्यवेहि।

व्याख्यातं च मधुमत्याम्—स्थानं समाख्यातो बलवद् यथा—याज्ञिकैः पौरोडाशिकाभिधायकमन्त्रबाहुल्यात्पौरोडाशिकमिति समाख्याते काण्डे आग्नेयादीनां कर्मणां क्रमेण मन्त्राः समाम्नाताः। तत्रामावासिकसान्नाय्यसन्निधौ शुन्धध्वं दैव्याय कर्मण इति शुन्धनार्थे मन्त्रः समाम्नातः। पुरोडाशशब्देन पुरोडाशसम्बन्धीन्युच्यन्ते तान्यधिकृत्य प्रवृत्तं काण्डं पौरोडाशिकम्। एवं च यावत्सन्निधिना प्रकरणाद्यनुमानपरम्परया सान्नाय्यपात्रसम्बन्धो मन्त्रस्य प्रतिपादनीयस्तावत्समाख्यया पुरोडाशपात्रसम्बन्धः प्रतिपाद्यते। एवं च तत्र काण्डोक्तानां पुरोडाशपात्राणामुलूखलजुह्वादीनामपि शोधने मन्त्रोऽयमङ्गं समाख्याबलादिति पूर्वपक्षः।

सिद्धान्तस्तु—समाख्यया सामान्यतः सम्बन्धावगमः, शेषशेषिरूपेण तदनभिधानात्। एवं च पुरोडाशपात्राणां सन्निधिर्न प्रत्यक्षसिद्धः, किन्तु पौरोडाशिकविशिष्टत्वान्यथाऽनुपपत्त्या। अन्यथा तत्प्रतिपादककाण्डस्य पौरोडाशिकमिति समाख्या न स्यात्। तस्मात् काण्डसमाख्यया सन्निधिस्तेन चाकाङ्क्षारूपं कृत्स्नं पात्रप्रकरणं तद्द्वारा वाक्यलिङ्गश्रुतीनां कल्पनम्। सान्नाय्यपात्राणान्तु सन्निधिः प्रत्यक्षसिद्धः। तथा दर्शेष्टौ बर्हिःसम्पादनस्य मुष्टिनिर्वापस्य चान्तराले सान्नाय्यपात्राणां देश उक्तः। मन्त्रस्तु तदुभयविषययोर्मन्त्रानुवाकयोर्मध्यमेऽनुवाके पठ्यते। तत्र प्रत्यक्षसन्निधिना प्रकरणादीनां चतुर्णामेव कल्पनात्सान्नाय्यपात्राणामेव शुन्धने मन्त्रान्वयो न सर्वपात्राणामिति। अत्र वाक्योदाहरणं प्राभाकरोक्तं शेषाणि भट्टोक्तानि लिखितानीति ध्येयमिति। तदयं निर्गलितोऽर्थः—

एकद्वित्रिचतुःपञ्चवस्त्वन्तरितकारितम्।
श्रुत्यर्थं प्रति वैषम्यं लिङ्गादीनां प्रतीयते।
बाधिकैव श्रुतिर्नित्यं समाख्या बाध्यते सदा।
मध्यमानां तु बाध्यत्वं बाधकत्वमपेक्षया॥ इति।

अलमतिविस्तरेणेति।

प्रकृतमनुसरामः—पूर्वोक्त इषुदृष्टान्तो वैषम्यादप्यनुपपन्नः। तथाहि—तत्र वेगव्यापारस्य स्वरूपसत एव जनकतया दीर्घदीर्घतरत्वं सम्भवति। अभिधायास्तु ज्ञाताया एवानुकूलत्वाद् व्यङ्ग्यनिष्ठतया विज्ञानादित्यन्विताभिधानवादेऽपि निःशेषेत्यादौ विधेर्व्यङ्ग्यत्वमेवेति स्थितम्।

[ ३ ]

किञ्च 'कुरु रुचिमि'ति पदयोर्वैपरीत्ये काव्यान्तर्वर्तिनि कथं दुष्टत्वम्, न ह्यत्रासभ्योऽर्थः पदार्थान्तरैरन्वित इत्यनभिधेय एवेति, एवमादि अपरित्याज्यं स्यात् ।

यदि च वाच्यवाचकत्वव्यतिरेकेण व्यङ्ग्यव्यञ्जकभावो नाभ्युपेयते, तदसाधुत्वादीनां नित्यदोषत्वं कष्टत्वादीनामनित्यदोषत्वमिति विभागकरणमनुपपन्नं स्यात्, न चानुपपन्नम्, सर्वस्यैव विभक्ततया प्रतिभासाद् । वाच्यवाचकभावव्यतिरेकेण व्यङ्ग्यव्यञ्जकताश्रयणे तु व्यङ्ग्यस्य बहुविधत्वात् क्वचिदेव कस्यचिदेवौचित्येनोपपद्यत एव विभागव्यवस्था ।

द्वयं गतं सम्प्रति शोचनीयतां
समागमप्रार्थनया कपालिनः ॥

इत्यादौ पिनाक्यादिपदवैलक्षण्येन किमिति कपाल्यादिपदानां काव्यानुगुणत्वम् ।

---

## साहित्यचूडामणिः

इतोऽपि व्यङ्ग्यापलापो न शक्यक्रिय इत्याह—किञ्चेति । चिङ्कुरुशब्दस्य भाषाविशेषे ग्राम्यत्वम् । तत्र केवलस्य चिङ्कारस्य पदत्वाभावात् न पदान्तरसमभिव्यवहारः । ततश्चैतद् ध्वननापलापे परिवर्जनीयं न स्यात् । 'अपि च पौरुषेयापौरुषेयभेदभिन्नो हि शाब्दो व्यवहारः । तत्र पौरुषेयाणां वाक्यानां पुरुषेच्छानुविधानसमारोपितोपाधिकव्यापारान्तराणां सत्यपि स्वाभिधेयाभिसंबन्धापरित्यागे किञ्चिन्मिथ्यात्वमपि संभाव्यते । अस्ति हि विभावानामपरित्यक्तस्वभावा-

## सुधासागरः

किञ्च—यदि वस्तुगत्या पदार्थान्तरेण योऽन्वितः सोऽभिधयोपस्थाप्य इत्यन्विताभिधानं तदाऽवश्यं व्यञ्जना स्वीकार्या । अन्यथा 'रुचिं कुरु' इत्यादिशब्दस्य दुष्टत्वं न स्यात्, दुष्टिहेतोरसभ्यार्थोपस्थितेस्तत्राभावप्रसङ्गात् । तदर्थस्यान्यानन्वितत्वात् । तदेतदाह—किञ्चेत्यादि । 'क्वन्तर्वर्त्तिनि'—'कुशब्दोऽन्तर्वर्त्ती यत्रेत्यर्थः । अत्रान्वित इति । तत्रैवाभिधानाङ्गीकारात् । व्यञ्जनानङ्गीकारेऽनन्वितस्यासभ्यार्थस्याशब्दतया वृत्त्यभावेन तं प्रत्यबोधकस्य चिङ्कुपदस्य दुष्टता न स्यादित्याह । एवमादीति—एवमादिपदमिति शेषः । अपरित्याज्यं काव्ये इति शेषः ।

## साहित्यचूडामणिः

नामपि सामग्र्यन्तरोपाधिवशाद् विरुद्धक्रियत्वं, यथा चन्द्रोदयादीनामाह्लादिताशेषलोकानामपि विरहाद्युपाधिवशात् सन्तापनिबन्धनत्वम्। तस्मादमीषां सत्यपि नैसर्गिके सम्बन्धे मिथ्यात्वं समर्थयितुमिच्छता वाचकत्वव्यतिरिक्तमौपाधिकं किञ्चिदभिधातव्यम्। तच्च व्यञ्जनादृते नान्यदित्यभ्यूहनीयम्[१]।'

युक्त्यन्तरमाह—यदि चेति। असाधुताया नित्यदोषत्वात् सर्वत्र परिहार्यत्वं, कष्टतादेस्तु शृङ्गारादौ परिहार्यता रौद्रादौ कामचार इति विभागकरणमनुपपन्नं स्यात्। न चानुपपन्नं, प्रामाणिकार्थपरित्यागानौचित्यात्। यदाह—

श्रुतिकष्टादयो दोषा अनित्या ये च दर्शिताः।
ध्वन्यात्मन्येव शृङ्गारे ते हेया इत्युदाहृताः॥ ध्व० २.११ इति॥

अस्मन्मते तु नायं प्रसङ्ग इत्याह—वाच्येति। इतोऽपि युक्तिमाह—द्वयमिति। कपालिशब्दे सहृदयानामतिमहती श्लाघा पिनाकिपदादौ न सम्पद्यते। तत्रार्थे परमेश्वरस्य शौर्यप्रकाशनादिनाऽपरिग्राह्यत्वमुक्तं स्यात्। कपालिशब्देन तु सर्वाकारममङ्गल्यशीलत्वमुन्मील्यते। यदाह—

## सुधासागरः

यदि चेति। असाधुत्वं व्याकरणव्युत्पत्तिविरहः। कष्टत्वं श्रुतिकटुता। अनित्यत्वं—रसविशेषापकर्षत्वम्। अयं भावः—वाच्यवाचकभावातिरेकी व्यङ्ग्यव्यञ्जकभाव इत्यवश्यं काव्यज्ञद्दष्ट्याऽपि स्वीकर्त्तव्यम्। अन्यथा कष्टत्वादयोऽनित्यदोषाः असाधुत्वादयो नित्यदोषा इति विभागो न स्यात्, [[२]सर्वत्र दुष्टत्वस्याऽ-]दुष्टत्वस्य वा प्रसङ्गात्। अयमर्थः—असाधुत्वज्ञानस्य यथा वाक्यार्थज्ञानविघटकत्वात् तत्सत्त्वे क्वचिदपि न चमत्कारः, सर्वत्र चमत्कारस्य वाक्यार्थज्ञानाधीनत्वात्, तद्वच्छ्रुतिकटुत्वादेरपि व्यञ्जनाऽनङ्गीकारे वाक्यार्थज्ञानविघटकत्वेनैव दोषत्वं वाच्यम्, तदविघटकत्वेऽदोषतापत्तेः। तथा चात्रापि नित्यदोषता स्यादिति। व्यञ्जनाऽभ्युपगमे तु व्यञ्जनीयस्य बहुविधत्वेन रौद्रादिव्यङ्ग्येऽनुकूलत्वं शृङ्गारादौ तु दुष्टत्वमिति युज्यते विभागव्यवस्था। एवं पर्यायेषु मध्ये कस्यचित्काव्यानुगुणत्वमित्यपि व्यवस्था न स्यात्, वाच्यार्थस्याविशेषात्। दृश्यते चासौ। यथेत्याह—द्वयमित्यादि।

कुमारसम्भवे कपटवटोः पार्वतीं प्रति शिवनिन्दापरेयमुक्तिः। अयमर्थः—हे पार्वति एतावत्कालमयोग्यसङ्गात्कलावतश्चन्द्रस्य कान्तिमती कलैव शोचनीयाऽऽसीत्।

---

१ ध्वन्यालोक—३.३३ वृत्तिः।   २ पूर्तिरियं प्रदीपात्।

[ ४ ]

अपि च वाच्योऽर्थः सर्वान् प्रतिपत्तॄन् प्रति एकरूप एवेति नियतोऽसौ। नहि 'गतोऽस्तमर्कः' इत्यादौ वाच्योऽर्थः क्वचिदन्यथा

---

## साहित्यचूडामणिः

उक्त्यन्तेरणाशक्यं यत् तच्चारुत्वं प्रकाशयन्।
शब्दो व्यञ्जकतां बिभ्रद् ध्वन्युक्तेर्विषयीभवेत्॥ ध्व० १.१५॥ इति ॥

नन्वेष दोषतयोद्घोष्यते व्यक्तिविवेके। तथा—कपालिशब्दोऽयं धर्मिधर्मोभयार्थवृत्तिः संज्ञिमात्रं वा प्रत्याययेत्, कपालसम्बन्धकृतं गर्हितत्वरूपं धर्ममात्रं वा, उतोभयमपि। नाद्यः। गर्हितत्वप्रतिपत्त्यै द्वितीयस्यापि कपालिग्रहणस्य कर्त्तव्यत्वात्। न द्वितीयः। तस्याश्रयसिद्धये तेनैव तत्पर्यायेण सर्वनाम्ना वा विशेषस्यावश्योपादेयत्वात्। नापि तृतीयः। एकस्यैव शब्दस्यावृत्तिमन्तरेण बह्वर्थप्रतिपादनसामर्थ्याभावात्। यतः—

अर्थभेदादविभिन्नेऽपि शब्दे सादृश्यमात्रजः।
आवृत्तिव्यवहारोऽयं मूलमस्यैकताभ्रमः॥
तत्पर्यायेण तेनैव सर्वनाम्नाथ निर्दिशेत्।
आर्थहेतुत्वनिष्पत्त्यै धर्मिधर्मोभयात्मकम्॥ व्यक्तिवि० पृ० ३८९ ॥

इति चेत्, न, कपालिशब्देन मुख्यया वृत्त्या परमेश्वरो धर्मी कथ्यते, व्यञ्जनेन तस्य प्रस्तुतकपटवटुवेषवक्तृत्वोचितं गर्हितत्वम्। शब्दभेदस्तच्छक्तिभेद इति कियानयं विशेष इति न किंचिदत्र वाच्यावचननिबन्धनमनौचित्यम्। एवञ्च 'द्वयं गतं सम्प्रति तस्य शोच्यतामि'ति सर्वनाम्ना पाठान्यथाकरणं प्रतिज्ञाभङ्गकल्पम्' इत्यलम-

## सुधासागरः

सम्प्रति सा च कपालिनः समागमप्रार्थनया अस्य लोकस्य नेत्रकौमुदी त्वं चेति द्वयं शोचनीयतां गतमिति। अत्र कपालिपदेनाशुचिबीभत्सकपालधारणया स्पर्शे दर्शनेऽप्ययोग्यतया सर्वथा हेयत्वं व्यज्यते। कपालिस्थाने पिनाकिपदप्रयोगे तु कपालिपिनाकिपदयोरभिधेयोपस्थापनाऽविशेषेऽपि पिनाकवत्तया वीरावगतेर्निन्दा न स्यात्। न च कपालसम्बन्धबोधकत्वमेव विशेषः। व्यञ्जनाऽनभ्युपगमे तावन्मात्रविशेषस्याप्रयोजकत्वात्। अन्यथा कपालसम्बन्धबोधस्येव पिनाकसम्बन्धबोधस्यापि विशेषतया कथं न तस्य काव्यानुगुणत्वं स्यादिति सुधीभिर्ध्येयम्।

अपि च वाच्योऽर्थ इत्यादि। अयमाशयः—काव्ये शास्त्रे वा वाच्यव्यङ्ग्ययोः प्रतिपत्तिहेतुव्यापारभेदनिबन्धनो भेदोऽवश्यं स्वीकर्त्तव्यः, वैधर्म्यदर्शनात्। वाच्यो ह्यर्थः सर्वैरेक एव प्रतीयते इति नियतः। व्यङ्ग्यस्तु वक्तृप्रकरणादिवशादनियतः। तथा हि—गतोऽस्तमर्क इति वाक्ये राज्ञः सेनापतीन्प्रति शत्रूणां हठेनावमर्दनावसर

भवति । प्रतीयमानस्तु तत्तत्प्रकरणवक्तृप्रतिपत्रादिविशेषसहायतया नानात्वं भजते । तथा च 'गतोऽस्तमर्कः' इत्यतः 'सपत्नं प्रत्यवस्कन्दनावसर इति, अभिसरणमुपक्रम्यतामिति, प्राप्तप्रायस्ते प्रेयानिति, कर्मकरणान्निवर्तामह इति, सान्ध्यो विधिरुपक्रम्यतामिति, दूरं मा गा इति, सुरभयो गृहं प्रवेश्यन्तामिति, सन्तापोऽधुना न भवतीति, विक्रेयवस्तूनि संह्रियन्तामिति, नागतोऽद्यापि प्रेयानित्यादिरनवधिर्व्यङ्ग्योऽर्थस्तत्र तत्र प्रतिभाति ( १ ) ।

---

## साहित्यचूडामणिः

गृहीताग्रहेण । अथ वाच्यव्यङ्ग्ययोः पूर्वस्मिन्नुत्तरस्यान्तर्भावो नोपपद्यते, येन संख्यास्वरूपकालाश्रयकारणकार्यविषयादीनां वैलक्षण्यमित्युद्भावयिष्यन्नादौ संख्याभेदमाह–वाच्य इति । गतोऽस्तमर्क इत्यत्र न कदाचिद् वाच्यभेदः सर्वत्र सूर्यास्तमयाविशेषात् । प्रतीयमानस्तु बहुसंख्याको भवति । तत्र प्रकरणादिवैशिष्ट्यं सहकारि । अवस्कन्दनेत्यादि चोरादिवक्तृत्वे । अभिसरणमित्याद्यभिसारिकाविषये । एवमन्यदुन्नेयम् । इत्यादिरिति । प्रदीपः प्रज्वाल्यतां, कुमुदान्यपचीयन्तां, नेदानीं स्नानौचित्यमित्यादि ।

## सुधासागरः

इति, दूतीनामभिसारिकाः प्रति अभिसरणमुपक्रम्यतामिति, सख्याः वासकसज्जां प्रति कर्मकरणान्निवर्त्तामहे इति, भृत्यस्य धार्मिकं प्रति सान्ध्यो विधिरुपक्रम्यतामिति, आप्तस्य कार्यवशेन बहिर्गच्छतः प्रति दूरं मा गा इति, गृहिणो गोपालकं प्रति सुरभयो गृहं प्रवेश्यन्तामिति, दिवसेऽतिसन्तप्तस्य बन्धून् प्रति सन्तापोऽधुना न भवतीति, आपणिकानां भृत्यान् प्रति विक्रेयवस्तूनि संह्रियन्तामिति, नायकागमनप्रस्तावे प्रोषितभर्तृकायास्तत्कथकं प्रति नागतोऽद्य प्रेयानिति एकस्यैव वा वक्तुर्बहून् प्रति तत्तत्प्रकरणवशादेवमादिरनवधिर्व्यङ्ग्योऽर्थः प्रकाशते । वाच्यस्तु सर्वान् प्रत्यविशिष्ट एव ।

ननु नैतद् वाच्यवैधर्म्यं, नानार्थसैन्धवादिपदे नानार्थावगतिदर्शनादिति चेन्न । एकवाक्यवर्तिनस्तस्याऽप्यर्थैक्यनियमात्, यदग्रे वक्ष्यति—लक्षणीयार्थस्य नानात्वेऽप्यनेकार्थपदाभिधेयवन्नियतत्वमेव इति । तथापि यत्र लवणाद्यधिकारिणः प्रति सकलस्वामिनः सैन्धवमानयेति पदप्रयोगस्तत्रानियतत्वं दुर्वारमिति चेत् । न । तात्पर्याज्ञानात् । न ह्यत्र सर्वैर्वाच्यैः समं सर्वव्यङ्ग्यानां भेदः प्रतिपाद्यते किन्तु गतोऽस्तमर्क इत्यस्य सर्वव्यङ्ग्ययोः । तथा च तद्वाच्यस्य नियतत्वं, तदर्थपुरस्कारेणैव सर्वेषां व्यङ्ग्यस्यापि प्रतीतेः ।

वाच्यव्यङ्ग्ययोः निःशेषेत्यादौ निषेधविध्यात्मना,*

मात्सर्यमुत्सार्य विचार्य कार्यमार्याः समर्यादमुदाहरन्तु ।
सेव्या नितम्बाः किमु भूधराणामुत स्मरस्मेरविलासिनीनाम् ॥

इत्यादौ संशय-शान्तशृङ्गार्यन्यतरगतनिश्चय-रूपेण,*

कथमवनिप, दर्पो यन्निशातासिधारा—
दलनगलितमूर्ध्नां विद्विषां स्वीकृता श्रीः ।
ननु तव निहतारेरप्यसौ किं न नीता
त्रिदिवमपगताङ्गैर्वल्लभा कीर्तिरेभिः ॥ इत्यादौ

निन्दास्तुतिवपुषा [च] स्वरूपस्य (२),
पूर्वपश्चाद्भावेन प्रतीतेः कालस्य (३),
शब्दाश्रयत्वेन शब्द-तदेकदेशतदर्थवर्ण-संघटनाश्रयत्वेन च आश्रयस्य (४),
शब्दानुशासनज्ञानेन प्रकरणादिसहायप्रतिभानैर्मल्यसहितेन तेन चावगम इति निमित्तस्य (५),
बोद्धृमात्रविदग्धव्यपदेशयोः प्रतीतिमात्रचमत्कृतयोश्च करणात् कार्यस्य (६),
'गतोऽस्तमर्क' इत्यादौ प्रदर्शितनयेन संख्यायाः (७),

कस्स व ण होइ रोसो दट्ठूण पिआए सव्वणं अहरं ।
सभमरपडमग्घाइणि वारिअवामे सहसु एण्हिं ॥
[कस्य वा न भवति रोषो दृष्ट्वा प्रियायाः सव्रणमधरम् ।
सभ्रमरपद्माघ्रायिणि वारितवामे सहस्वेदानीम् ॥]

इत्यादौ सखीतत्कान्तादिगतत्वेन विषयस्य (८),
च भेदेऽपि यद्येकत्वं, तत् क्वचिदपि नीलपीतादौ[1] भेदो न स्यात् । उक्तं हि—'अयमेव हि भेदो भेदहेतुर्वा यद् विरुद्धधर्माध्यासः कारणभेदश्च'—इति ।

---

## सुधासागरः

किञ्च नानार्थस्थले नानाप्रकरणसद्भावे नानार्थबोधनमपि यथाऽनुशासनमेव, न तु व्यङ्ग्ये तथा नियमः । अत एवोक्तम्—अनवधिर्व्यङ्ग्योऽर्थ इति वाग्देवतावतारैरिति सुधीभिः सूक्ष्मदृशाऽवधातव्यम् । तदयं नियतत्वानियतत्वरूपविरुद्धधर्मसंसर्गोऽभिहितः ।

---

*-* अनयोः 'स्वरूपस्ये'त्यत्रान्वयः । १ नीलसुखादाविति सा० चू० ।

## साहित्यचूडामणिः

अथ स्वरूपभेदं बहुमुखमभिधातुकामः प्रथमं विधिनिषेधमुखेनाह—वाच्येति। चर्चितचरमेतत्। प्रतीतिभेदमुखेनाह—मात्सर्यमिति। संशये वाचनिके सति शान्तः शृङ्गारी वा वक्ता। यद्याद्यः भूधरसम्बन्धिनां सानूनां सेव्यत्वम्। यदि द्वितीयः विलासिनीसम्बन्धिनां जघनानामिति निर्णयः, न कथञ्चित् सन्दिग्धतयावस्थानम्।

निन्दास्तुतिभ्यामाह—कथमिति। निन्दा वाचनिकी, स्तुतिर्व्यङ्ग्या। एवं हेलेत्यादौ स्तुतिर्वाचनिकी, निन्दा व्यङ्ग्या।

स्वरूपस्येति। वाच्यव्यङ्ग्ययोः स्वलक्षणस्य भेदेऽपि यद्येकत्वमित्युत्तरत्रान्वयः। निषेधे विधिः, विधौ निषेधः, संशये निश्चयः, निन्दायां स्तुतिः, इति महान् विरोधः।

कालभेदमाह—पूर्वेति। वाच्यं हि पूर्वं प्रतीयते पश्चाद् व्यङ्ग्यम्। न चैतावता व्यङ्ग्यप्रतीतौ वाच्यबुद्धिर्विप्रकृष्यते, तदाह—स्वरूपं प्रकाशयन्नेव परार्थावभासको व्यञ्जकः, यथा दीपो घटादेरिति। यथोक्तं—'त्रयः प्रकाशाः स्वपरप्रकाशा' इति।

आश्रयभेदमाह—शब्देति। वाच्यो हि पूर्णावयवंशब्दमाश्रित्य प्रवर्तते, व्यङ्ग्यं तु तादृशं शब्दं तदेकदेशं तदभिधेयं वर्णं रचनां च।

कारणभेदमाह—शब्देति। वाच्यावगमे वैशेषिकादिज्ञानमात्रमुपयोगि। व्यङ्ग्योपलम्भे तु प्रकरणादिसहकृतं यत् प्रतिभाया नैर्मल्यम् अव्युत्पत्तिकलङ्कशून्यत्वं तदाधिक्येन भाव्यम्। यदाह—

शब्दार्थशासनज्ञानमात्रादेव न वेद्यते।
वेद्यते स हि काव्यार्थतत्त्वज्ञैरेव केवलम्॥ ध्व० १.७॥

## सुधासागरः

वाच्यव्यङ्ग्ययोर्भेदकान्तराण्यपि दर्शयति—वाच्यव्यङ्ग्ययोरित्यादि। निषेधविध्यात्मना—निश्चयेन निन्दास्तुतिवपुषा वाच्यव्यङ्ग्ययोः स्वरूपस्य भेदे कालादेश्च भेदेऽपि यद्येकत्वमिति दूरेणान्वयः। अयमाशयः—एवं विलक्षणस्वरूपकालादिभेदोऽपि भेदको द्रष्टव्यः। वैधर्म्यसत्त्वेऽपि यद्यभेदः स्यात्तदा नीलाऽनीलादेरपि न कश्चिद्भेदः स्यात्, वैधर्म्यस्याविशेषात्। यदुक्तम्—'अयमेव भेदो भेदहेतुर्वा यद्-विरुद्धधर्माध्यासः कारणभेदश्च' इति। भेदोऽन्योन्याभावः। विरुद्धधर्मस्याध्यासो ज्ञानम्। इदं च ज्ञानवैधर्म्यस्यान्योन्याभावत्ववादिमतेनोक्तम्। कारणभेदो भेदहेतुरन्योन्यभावज्ञापक इति मतान्तरम्। क्रमेण योजना 'भेदो भेदहेतुर्वा यद्विरुद्धधर्माध्यासः कारणभेदश्च' इति। तथा च विरुद्धधर्माध्यासो भेदः कारणभेदो भेदहेतुरित्युभयस्याऽप्यत्र सत्त्वाद् वृत्त्यन्तराद्भेद आवश्यकः। सुप्रसिद्धश्च तत्र तत्र स्वरूपादेर्भेदः। तत्र निःशेषेत्यादौ मात्सर्यमुत्सार्येत्यादौ च स्वरूपभेदः। प्रथमे हि वाच्यो निषेधरूपः, व्यङ्ग्यस्तु विधिरूपः। द्वितीये वाच्यः संशयरूपः व्यङ्ग्यस्तु शान्ते शृङ्गारिणि वा वक्तरि तदुचितैककोटिनिश्चयरूपः। तृतीये वाच्यो निन्दारूपः

## साहित्यचूडामणिः

काव्यभेदं द्विविधमित्युपदर्शयति–बोद्धृमात्रेति। प्रतिपाद्यार्थनिबन्धनो हि प्रतिपत्तॄणां व्यपदेशः। तत्र वाच्यावबोधे पुरुषो बोद्धेति व्यवह्रियते, न पुनरज्ञो जडो वेति। व्यङ्ग्यावगमे विदग्धः सहृदय इति। स खलु सहृदयः यस्य मनोमुकुरे वर्णनीयार्थतन्मयीभवनयोग्यता। यथाह—

योऽर्थो हृदयसंवादी तस्य भावो रसोद्भवः।
शरीरं व्याप्यते तेन शुष्कं काष्ठमिवाग्निना॥ ध्व० १.१ लो०॥

इति। किञ्च वाच्यप्रतीतौ तत्प्रतीतिमात्रं फलं, व्यङ्ग्यप्रतीतौ तु चमत्कारापरपर्यायो विगलितवेद्यान्तरः कश्चिदानन्दातिशयः।

विषयभेदमाह—

कस्स वेति!

कस्य वा न भवति रोषो दृष्ट्वा प्रियायाः सव्रणमधरम्।
सभ्रमरपद्माघ्राणशीले! वारितवामे! सहस्वेदानीम्॥ इति।

काचिदविनीता केनचित् खण्डिताधरा निश्चिततत्सविधसन्निधाने भर्तरि तमनवलोकयन्त्येव विदग्धसख्या तदवश्यपरिहारार्थमुच्यते—कस्यवेति। वीतरागस्यापि रोषः स्यात्। वारिते वारणायां वामे प्रतिकूल्यशालिनी। सहस्वेदानीं उपालम्भपरम्परामिति यावत्। अत्र वाच्यमविनयवतीविषयम्। व्यङ्ग्यं तस्या अपराधो

## सुधासागरः

प्रतीयमानस्तु स्तुतिरूपः। कालभेदस्तु सर्वत्र। पूर्वं हि वाच्यः प्रतीयते पश्चात्तु व्यङ्ग्य इति। वाच्यस्य शब्दमात्रमाश्रयः, प्रतीयमानस्य तु पदशब्दैकदेशीभूतकादितदर्थवर्णसङ्घटनाः इत्याश्रयभेदः। वाच्यस्य व्याकरणकोशादिमात्रेणावगमः। प्रतीयमानस्य तु प्रतिभानैर्मल्येनाऽप्याधिकेनेति ज्ञापकभेदः। वाच्येन व्युत्पन्नमात्रस्य प्रतीतिमात्रम्। अन्येन तु विदग्धपदवाच्यस्य सहृदयस्य चमत्कृतिरिति कार्यभेदः। गतोऽस्तमर्क इत्यादौ दर्शितनयेन वाच्य एकः प्रतीयमानस्तु नानेति सङ्ख्याभेदः।

कस्स वेत्यादि। प्रोष्यागते प्रियायाः उपपतिदष्टाधरव्रणं वीक्ष्य विमनायमाने गृहपतौ विदग्धसखी समाधत्ते—

कस्य वा न भवति रोषो दृष्ट्वा प्रियायाः सव्रणमधरम्।
सभ्रमरपद्माघ्रायिणि! वारितवामे सहस्वेदानीम्॥

इति संस्कृतम्। वारितकर्मणि वामा विरुद्धाचारिणी। सहस्व पतिक्रोधनियन्त्रणमनुभवेदानीमविचारदशायाम्। स्पष्टमन्यत्। अत्र वाच्यार्थस्य सम्बोध्या सखी विषयः। तत्र हि वाच्योऽर्थः श्रोत्र्याः व्यवतिष्ठते। प्रतीयमानस्य तु भ्रमरेणास्या अधरः खण्डितो न तूपपतिनेति तत्कान्तः। आदिपदात् 'ममैवं वैदग्ध्यम्' इत्यस्य प्रतिवेशिनी। इदं मया समाहितं पुनरेवं त्वया न विधेयमित्यस्या उपपतिः। भ्रमरेणास्या अधरः खण्डितो न तु भर्त्रेति त्वयेर्ष्या न कार्येत्यस्य सपत्नी। सरल-

[ ५ ]

वाचकानामर्थापेक्षा व्यञ्जकानान्तु न तदपेक्षत्वमिति न वाचकत्वमेव व्यञ्जकत्वम्। किं च वाणीरकुडंग्वित्यादौ [४९ पृ०] प्रतीयमानमर्थमभिव्यज्य वाच्यं स्वरूपे एव यत्र विश्राम्यति तत्र गुणीभूतव्यङ्ग्येऽतात्पर्यभूतोऽप्यर्थः स्वशब्दानभिधेयः प्रतीतिपथमवतरन् कस्य व्यापारस्य विषयतामवलम्बतामिति।

---

## साहित्यचूडामणिः

नास्तीति भर्तृविषयम्। अविनयप्रच्छादनरूपं प्रातिवेशिकविषयम्। सख्याःसौभाग्यातिशयप्रख्यापनलक्षणं सपत्नीविषयम्। अतः परमत्र न प्रकटो दशनविधिरनुष्ठेय इति शिक्षाप्रदानरूपमुपपतिविषयम्। सपत्नीमध्ये खलीकृताहमिति न लज्जितव्यं, प्रत्युत अयं बहुमानोदय इत्यविनयवती विषयमेवेति। विषयभेदेऽपि यद्येकत्वमास्थीयते तत् कच्चिदपि नीलसुखादौ भेदो न स्याद् विशेषाभावात्। (तदाह) तथाविधविषये यैवैकस्य प्रतीतिः सैवेतरस्येति न शक्यं वक्तुमिति। आचार्यग्रन्थं संवादयति—उक्तं हीति। स वा तद्धेतुर्वा इति कियानयं विशेषः।

इतोऽपि न वाच्यत्वमेव व्यङ्ग्यत्वमित्याह—वाचकानामिति अर्थवतामेव शब्दानां वाचकत्वम्। अर्थवन्तोऽपि शब्दा व्यञ्जकाः निरर्थका वर्णादयोऽपीति नार्थवत्त्वनैयत्यमेतेषाम्। तदाह—'अवाचकस्यापि गीतशब्दादे रसादिलक्षणावगमदर्शनाद्, अशब्दस्यापि चेष्टादेरर्थविशेषप्रकाशनप्रसिद्धेश्च'[१] इति।

## सुधासागरः

तदेयं न कश्चित् प्रपञ्चं जानातीति नान्यथा शङ्कनीया इत्यस्याः साध्वी श्वश्रूः। अनया विना त्वत्पतिर्न जीवतीति विदितमेव, तदस्मत्समन्विते भेदो न विधेय इत्यस्योपपतिकान्ता विषय इति विषयभेदः। एवं स्वरूपादिभेदादवश्यमङ्गीकर्त्तव्यो वाच्यव्यङ्ग्ययोर्भेदः।

न केवलं वाच्यव्यङ्ग्ययोरेव वैधर्म्यं किन्तु वाचकव्यञ्जकयोरपीत्याह—वाचकानामित्यादि। अयमाशयः—वाचकव्यञ्जकयोरपि वैधर्म्याद्भेदो वक्तव्यः। यतो वाचकस्य सङ्केतितार्थापेक्षा। सङ्केतिते एवार्थेऽभिधा प्रवर्त्तते। न त्वेवं व्यञ्जकः। अन्यत्रापि व्यञ्जनया प्रत्ययजननात्। अयमर्थः—गृहीतसङ्केतं सन्तमेवार्थं वाचका बोधयन्तीति तेषां सङ्केतितार्थापेक्षा। असदेव पावनत्वादिकं तटे बोधयन्तीति व्यञ्जकानां तदनपेक्षेति।

---

[१] ध्वन्यालोक ३.३३ वृत्तिः

## साहित्यचूडामणिः

अथ ध्वनाविव गुणीभूतव्यङ्ग्ये व्यङ्ग्यसिद्धिमुपपादयति—वानीरेति। तात्पर्यं नाम शब्दानामिषूणामिव दीर्घदीर्घो व्यापार इत्यूचे। अतो यथा सायकस्य विपक्षवक्षःस्थले विश्रान्तिः, न मध्ये कुत्रचिद्, एवं शब्दशक्तिरपि पर्यन्तकाष्ठा विश्रान्ता चेद् युज्येतापि तात्पर्यम्। न चैवं गुणीभूतव्यङ्ग्ये, यस्मादत्र वाच्यस्य प्रतीयमानमर्थं प्रत्याययतो न तत्र विश्रान्तिः। अपितु पुनरपि स्वात्मन्येव, व्यङ्ग्यादपि तस्य चमत्कारोपयोगित्वात्।

अतात्पर्यभूत इति पर्यन्तकक्ष्याविश्रान्त्यभावात्। स्वशब्दानभिधेय इति असंकेतितत्वात्। प्रतीतिपथमवतरन्ननपह्नवनीयतया परिस्फुरन्। व्यञ्जनव्यतिरेकेण कस्य व्यापारस्य गोचरतामाढौकताम्। व्यङ्ग्यस्य प्राधान्येनाविवक्षायां वाच्यत्वं तावद् भवद्भिर्नास्याभ्युपगन्तव्यम्, अतत्परत्वाच्छब्दस्य। तदस्ति तावद् व्यङ्ग्यः शब्दानां विषय इति।

अयं भावः—यत्परः शब्दः स शब्दार्थ इति यदि व्यङ्ग्यस्य प्राधान्ये वाच्यत्वमेव तस्याप्राधान्ये किं युक्तमिति चिन्तायां व्यङ्ग्यत्वमेवेति वक्तव्यम्। अथ यत्रापि तस्य प्राधान्यं, तत्रापि तादृक्त्वं समर्थितं समर्थयिष्यते च इति।

## सुधासागरः

उक्तं मतद्वयं सिंहावलोकनन्यायेन पुनराक्षिपति—किञ्च—वाणीरेत्यादि। प्रतीयमानं व्यङ्ग्यम्, वाच्यमङ्गावसादरूपम्। विश्राम्यति व्यङ्ग्यमनपेक्ष्यैव विप्रलम्भं पोषयति।

गुणीभूतव्यङ्ग्ये असुन्दराख्ये। अर्थो व्यङ्ग्यः सङ्केतभङ्गश्चमत्काराप्रत्यासन्नतयाऽप्रधानत्वेन विधेयताविरहेणातात्पर्यविषयत्वादनभिधेयो 'विधेयस्यैवाभिधेयत्वम्' इत्युक्तत्वादित्यभिप्रेत्याह—अतात्पर्येत्यादि। स्वपदेन व्यङ्ग्याभिधानं तस्य शब्दस्तद्बोधकः। प्रमाणमुत्थापयति—प्रतीतिपथ-मिति। प्रतीतिरेव तत्र प्रमाणमित्यर्थः। अयमाशयः यदुक्तं तात्पर्यविषये शब्दः प्रमाणमिति, तदितोऽप्यनुपपन्नम्, यतो व्यङ्ग्यस्य वाच्यताऽभ्युपगमेऽपि नानार्थन्यायेन तात्पर्यादेव नियमो वाच्यः, अन्यथा सर्वत्र व्यङ्ग्यप्रतीतिप्रसङ्गात्। तथा च यत्र वाणीरकुडुङ्गेत्यादौ व्यङ्ग्यप्रतीतावपि वाच्य एव चारुत्वविश्रामस्तत्र तात्पर्यविषयो व्यङ्ग्योऽर्थः कथं प्रतीयेत। यत्परः शब्द इत्युक्तमते तु सुतराम्। एतेन तात्पर्यमेव व्यङ्ग्यप्रतीतौ व्यापार इत्यपि निरस्तम्। तस्मात्तात्पर्यमभिधा वा न प्रतीयमानेऽर्थे व्यापारः।

ननु 'व्यङ्ग्येषु नानात्वम्, अर्थान्तरसङ्क्रमितवाच्यध्वनित्वादिविशेषव्यपदेशविषयत्वम्, शब्दार्थाधीनत्वम्, प्रकरणादिसव्यपेक्षत्वम्' इति धर्मा दृश्यन्ते, ते च लक्ष्येष्वपीति व्यङ्ग्या लक्ष्या एवेत्यत आह—रामोऽस्मीत्यादि। रामोऽस्मीत्यत्र

[ ६ ]

ननु, 'रामोऽस्मि सर्वं सहे' इति,

'रामेण प्रियजीवितेन तु कृतं प्रेम्णः प्रिये नोचितम्' इति,

'रामोऽसौ भुवनेषु विक्रमगुणैः प्राप्तः प्रसिद्धिं पराम्' इत्यादौ लक्षणीयोऽप्यर्थो नानात्वं भजते, विशेषव्यपदेशहेतुश्च भवति, तदवगमश्च शब्दार्थायत्तः प्रकरणादिसव्यपेक्षश्चेति कोऽयं नूतनः प्रतीयमानो नाम ?

---

## साहित्यचूडामणिः

अथ लक्षणाविषयत्वं तस्यास्त्विति शङ्कते—नन्विति। आदिपदेन 'रामो द्विर्नाभिभाषत' इत्यादि। रामोऽस्मीति राज्यभ्रंशादिक्लेशसहिष्णुत्वम्। रामेण प्रियजीवितेनेति पुरुषकारपराङ्मुखत्वम्। रामोऽसाविति सर्वलोकातिशायित्वमिति लक्षणीयोऽप्यर्थो बहुत्वमवलम्बते, न केवलं व्यञ्जनीयः। विशेषेण वैलक्षण्येन यो व्यपदेशः बोद्धृत्वव्यतिरेकेण विदग्ध इति प्रत्येतुः, प्रतीतिव्यतिरेकाच्चमत्कार इति प्रत्ययस्य, तद्धेतुर्भवति। शब्दार्थेति। द्वयोरपि लक्षकतयाङ्गीकारात् किन्निबन्धनमस्य वैचित्र्यमित्यत्राह—प्रकरणादीति। नूतनः अन्यत्रानुल्लिखितपूर्वः।

## सुधासागरः

सर्वत्र दुःखभाजनत्वेन, रामेणेत्यत्र खरदूषणादिहन्तृत्वेन। यत्तूक्तं सारबोधिनीकारैः—सर्वगुणाढ्यत्वेनेति, तन्न रमणीयम्। दुष्टमारकत्वसूचनस्यैव प्रकृतकाव्यानुगुणत्वात्। तथा चैवं प्रतीतेर्नानात्वमित्यर्थः। विशेषव्यपदेशाः—अर्थान्तरसङ्क्रमितवाच्यादयो लक्षणायाः हेतुस्तद्विषयः। तस्य लक्ष्यस्यावगमो लक्षणया शब्देन प्रतिपाद्यत्वाच्छब्दायत्तः। मुख्यार्थबाधज्ञाने मुख्यार्थज्ञानस्यावश्यकतयाऽर्थायत्तः। प्रकरणादीति। तात्पर्यग्राहकत्वेन तस्यापेक्षणीयत्वात्। तात्पर्यानुपपत्तेरेव लक्षणाबीजत्वात्। तस्माल्लक्ष्ये वैधर्म्यानाश्रयत्वेन लक्ष्यतो न भेद इत्याह—कोऽयमित्यादि। प्रतीयमानोव्यङ्ग्य इत्यर्थः।

व्याख्यातं च प्रदीपकारैः—नन्वस्तु लक्षणा, न हि वाच्यवल्लक्ष्योऽपि व्यवस्थितः, विशेषव्यपदेशहेतुर्वा। यतो 'रामोऽस्मि सर्वं सहे' इत्यत्र रामपदेन सर्वदुःखभाजनत्वम्।

प्रत्याख्यानरुचेः कृतं समुचितं क्रूरेण ते रक्षसा<br>
सोढं तच्च तथा त्वया कुलजनो धत्ते यथोच्चैः शिरः।<br>
व्यर्थं सम्प्रति बिभ्रता धनुरिदं त्वद्व्यापदां साक्षिणा<br>
रामेण प्रियजीवितेन तु कृतं प्रेम्णः प्रिये नोचितम्।

उच्यते, लक्षणीयस्यार्थस्य नानात्वेऽपि अनेकार्थशब्दाभिधेयवन्नियतत्वमेव। न खलु मुख्येनार्थेनाऽनियतसम्बन्धो लक्षयितुं शक्यते। प्रतीयमानस्तु प्रकरणादिविषयवशेन नियतसम्बन्धः, अनियतसम्बन्धः, सम्बद्धसम्बन्धश्च द्योत्यते।

## साहित्यचूडामणिः

दूषयति—उच्यत इति। अनेकार्थेति। गवादिशब्दवन्नियतत्वमेव लक्षणीयस्य, न पुनर्व्यङ्ग्यस्येव सर्वतोमुखता। व्यतिरेकतो हेतुमाह—न खल्विति। अनियतेति। अव्यवस्थितसम्बन्धः—

अभिधेयेन सम्बन्धात् सादृश्यात् समवायतः।
वैपरीत्यात् क्रियायोगाल्लक्षणा पञ्चधा मता॥

इत्युक्तत्वाद् यथोचितसम्बन्धनैयत्यरहितस्यार्थस्य लक्षयितुमशक्यत्वम्, अतिप्रसङ्गात्। व्यङ्ग्यविषयमनैयत्यमाह—प्रतीयमानस्त्विति। क्वचिदनियतसम्बन्धः क्वचित् सम्बद्धसम्बन्धः इति सर्वाकारमनैयत्यम्।

## सुधासागरः

इत्यत्र कातरत्वम्। 'रामोऽसौ भुवनेषु विक्रमगुणैः' इत्यत्र खरदूषणादिहन्तृत्वं च लक्ष्यते। अतो रामपदस्य लक्ष्य एवानेको भवति, अर्थान्तरसंक्रमितवाच्यादिविशेषव्यपदेशहेतुश्च भवति, एवमन्यत्रापि स्यात्। तदुक्तं 'भाक्तमार्गस्तदन्य' इति। लक्षणीयविशेषावगमश्च प्रकरणादिसापेक्षेण शक्यार्थो न स्यादतो नास्त्यतिरिक्तः प्रतीयमानो नामेति।

सिद्धान्तयति—उच्यत इति। सम्बन्ध इति। सम्बन्धपरम्पराश्रयत्वेन प्रतीतिपरम्पराविषय इत्यर्थः। कथं च मुख्यार्थबाधं विना लक्षणेत्याह—अत्ता एत्थेत्यादि। न च मुख्यार्थबाध इति सम्बन्धः। प्राकृतमिदं व्याख्यातं तृतीयोल्लासे।

अयमाशयः—लक्षणीयस्य नानात्वेऽपि हि नानार्थसैन्धवादिपदाभिधेयस्येव नियतत्वमेव। न खल्वनियतसम्बन्धो मुख्येनार्थेन लक्षयितुं शक्यते। प्रतीयमानस्तु प्रकरणादिवशेन नियतसम्बन्धोऽनियतसम्बन्धः सम्बद्धसम्बन्धश्चेति तत्स्वरूपं सोदाहरणमग्रे [एतदुल्लासान्ते] प्रदर्शयिष्यते।

किञ्च 'अत्ता एत्थ णिमज्जइ एत्थ अहं दिअहए पलोएहि' इत्यादौ विवक्षितान्यपरवाच्ये कथं लक्षणा मुख्यार्थबाधाभावात्। ननु तात्पर्यविषयानुपपत्तिरस्त्येवेत्यत आह—लक्षणायामपीति।

नन्वस्तु निरूढलक्षणावत् सर्वत्र तदनपेक्षेत्यत आह—यथा चेत्यादि। अयमाशयः—ननु तत्रापि तात्पर्याधीनान्वयानुपपत्तिः, छत्रिणो यान्तीत्यत्रेवेति चेत्। न। लक्षणायां प्रयोजननियमात्, तस्य च व्यापारान्तरागम्यत्वात्, तदर्थं व्यञ्जनास्वीकारे

न च

अत्ता एत्थ णिमज्जइ एत्थ अहं दिअहए पलोएहि ।
मा पहिअ, रतिअन्धअ, सेज्जाए मह णिमज्जहिसि ॥

[ श्वश्रूरत्र निमज्जति अत्राऽहं दिवसके प्रलोकय ।
मा पथिक, रात्र्यन्धक, शय्यायामावयोर्निमङ्क्ष्यसि ॥ ]

इत्यादौ विवक्षितान्यपरवाच्ये ध्वनौ मुख्यार्थबाधः, तत् कथमत्र लक्षणा ? लक्षणायामपि व्यञ्जनमवश्यमाश्रयितव्यमिति प्रतिपादितम् । यथा च समयसव्यपेक्षाऽभिधा तथा मुख्यार्थबाधादित्रय-समयविशेषसव्यपेक्षा लक्षणा, अत एवाभिधापुच्छभूता सेत्याहुः । न च लक्षणात्मकमेव ध्वननम्, तदनुगमेन तस्य दर्शनात् । न च तदनुगतमेव, अभिधावलम्बनेनापि तस्य भावात् । न चोभयानुसार्येव, अवाचकवर्णानुसारेणापि तस्य दृष्टेः । न च शब्दानुसार्येव, अशब्दात्मकनेत्रत्रिभागावलोकनादिगतत्वेनापि तस्य प्रसिद्धेः । इति, अभिधा-तात्पर्य-लक्षणात्मक-व्यापारत्रयातिवर्त्ती ध्वननादिपर्यायो व्यापारोऽनपलपनीय एव ।

---

## साहित्यचूडामणिः

नन्वविवक्षितवाच्ये लक्षणया व्यञ्जनविरोध इति कथञ्चिदाशङ्क्यतां, विवक्षितान्यपरवाच्ये तु कथम्, मुख्यार्थभङ्गाद्यभावादित्याह—न चेति ।

अत्ता इति ।

श्वश्रूरत्र शेतेऽत्राहं दिवसकं प्रलोकय ।
मा पथिक ! रात्र्यन्ध ! शय्यायामावयोः शयिष्ठाः ॥

इति । महं इति निपातोऽनेकार्थवृत्तिः आवयोरित्यर्थे, ममेत्येकवचनस्य शङ्कावहत्वात् । अत्रेति । प्रयत्नादनिभृतसंभोगपरिहारेण भाव्यम्, दिवसकः कुत्सितो दिवसः । प्राकृते हि न लिङ्गनियमः । मा त्वं यावदस्तमयं त्वरिष्ठाः, न सर्वथा त्वामुपेक्षे, यस्मादत्रैवाहं तत् प्रलोकय मिथो मुखावलोकनविनोदेन दिनमतिवाहयावः,

## सुधासागरः

किं प्रथमयाऽपि लक्षणया । अथ निरूढलक्षणायामिवान्यत्राप्यस्तु प्रयोजनानपेक्षेति चेन्न । यथा हि संकेतग्रहसापेक्षाऽभिधा तथा मुख्यार्थबाधतद्योगरूढिप्रयोजनान्यतरस्य मुख्यार्थसङ्केतग्रहस्य च सापेक्षा लक्षणा, तत्कथं रूढेः प्रयोजनस्य वाऽभावे भवेत् । यतः सङ्केतग्रहसापेक्षाऽत एवाभिधापुच्छभूता सेत्याहुरिति ।

## साहित्यचूडामणिः

पश्चाच्छ्वश्रूनिद्रान्वेषणपूर्वकं यथोचितमाचराव:' इति व्याख्यायां न व्यक्तिविवेकव्याकृतावद्यावतारः।

अत्र न लक्षणासामग्री तस्याश्च प्रयोजनावश्यम्भावः तच्च व्यङ्ग्यमिति न पुनरपि व्यङ्ग्याङ्कुरोत्पत्तिरित्याह—लक्षणायामिति। यथाभिधा सङ्केतसहाया तथा मुख्यार्थबाधादिसव्यपेक्षा लक्षणा, तत्र त एव प्रमाणमित्याह—अत एवेति। अभिधायाः पुच्छभूता न तु स्वतन्त्रेत्याहुः। सङ्केतापेक्षिण्यभिधा सङ्केतितार्थापेक्षिणी लक्षणा इति कियानस्या उच्छ्रायः।

तथाविवक्षितवाच्येऽपि व्यञ्जनस्य न लक्षणया तादात्म्यमित्याह—न चेति। लक्षणाया अनुगमनेन साहचर्यमात्रेण तस्य ध्वननस्य दर्शनात्। यद्यपि—

रविसङ्क्रान्तसौभाग्यस्तुषारावृतमण्डलः ।
निःश्वासान्ध इवादर्शश्चन्द्रमा न प्रकाशते ॥ ध्व० १ ॥

इत्यत्राप्यस्त्युपचारः, तथापि न तदात्मैव ध्वनिः, तद्व्यतिरेकेणापि भावात्। यदाह—

वाचकत्वाश्रयेणैव गुणवृत्तिर्व्यवस्थिता।
व्यञ्जकत्वैकमूलस्य ध्वनेः स्याल्लक्षणं कथम् ॥ ध्व० १.१८॥ इति।

तत्रापि नियमो नास्तीत्याह—न चेति। अविवक्षितवाच्यव्यतिरिक्ते सर्वत्र ध्वननमभिधामवलम्ब्य प्रवर्तत इत्युक्तत्वात्। यदाह—

## सुधासागरः

किञ्च व्यञ्जकवाक्यस्य वाक्यान्तराद् वैलक्षण्यं प्रतीयते तत्राभिधादितोऽर्थोपस्थितौ यावती सामग्री तावती न व्यङ्ग्योपस्थिताविति स्थितेः सहकारिविशेषे कल्पनीयेऽभिधाया एव तत्कल्प्यते चेत्तदा स्वभावभङ्ग इत्यगत्या वृत्त्यन्तरं कल्प्यते, अन्यथा मुख्यार्थबाधादिसहकारेणाभिधयैव लक्ष्यार्थोपस्थितिसम्भवे लक्षणाऽपि वृत्त्यन्तरं न सिध्येत्।

अत्र जयरामन्यायपञ्चाननाः—यथा समयापेक्षत्वरूपादभिधावैधर्म्यादभिधाभेदो लक्षणायास्तथा मुख्यार्थबाधादिनिरपेक्षत्वरूपलक्षणावैधर्म्याल्लक्षणाभेदो व्यञ्जनायाः, अन्यथा मुख्यार्थबाधादिसापेक्षयाऽभिधया लक्ष्यार्थोपस्थितिसम्भवे लक्षणाऽपि वृत्त्यन्तरं न स्यात्। न च तन्निरपेक्षत्वं व्यञ्जनाया असिद्धम्, 'गच्छ गच्छसि' इत्यादौ तद्दर्शनात्। तदाहुः—'मुख्यार्थान्वयानुपपत्तिर्लक्षणाबीजमिति'।

अत्राहुः—किमिदं लक्षणाया बीजत्वम्। न तावज्जनकत्वम्, तीरादौ शक्यनीरादिसम्बन्धस्य तदजन्यत्वात्। नापि ज्ञापकत्वम्, विनाऽप्यनुपपत्तिज्ञानं तीरनीरादिसम्बन्धस्य चक्षुरादिना ग्रहात्। नापि नियमतस्तत्तात्पर्यग्राहकत्वम्,

## साहित्यचूडामणिः

भक्त्या बिभर्ति नैकत्वं रूपभेदादयं ध्वनिः ॥ ध्व० १.१४ ॥ इति ।
कस्यचिद् ध्वनिभेदस्य सा तु स्यादुपलक्षणम् ॥ ध्व० १.१९ ॥ इति ।

अभिधालक्षणोभयानुधावनसङ्कोचोऽप्यस्य न विद्यत इत्याह—न चेति । तत्र हेतुमाह—अवाचकेति । न शब्दानुसार्येव वर्णानामपि शब्दनस्वभावतया शब्दशरीरानुप्रवेश इति सर्वाकारेण शब्दप्रवृत्त्यनुसरणयन्त्रणा तस्य नास्ति । अशब्देति । शब्दस्वरूपाननुप्रविष्टकटाक्षादिगततया तस्य प्रसिद्धेः । किञ्च क्वचिदनुमानादभिप्रायादौ, कुत्रचित् प्रत्यक्षाद् दीपालोकादौ, क्वचन कारणत्वाद् गीतध्वन्यादौ च । क्वचिदपि शब्दवृत्तेरविवक्षितवाच्यादित्यनियतिरुन्नेया । उपसंहरति—इतीति ।

## सुधासागरः

प्रकरणादिव्यापारान्तरेणापि तद्ग्रहात् । अथ लक्षणाजन्यशाब्दबोधजनकत्वं तदिति चेन्न मुख्यार्थबाधबुद्धिरूपस्य तस्य सति लक्ष्यतात्पर्ये मुख्यार्थबोधविघटकत्वेन जनितान्वयबोधवारकतया प्रयोजकत्व एव विश्रामात् ।

किञ्च 'यष्टीः प्रवेशय' इत्याद्यनुरोधात् तात्पर्यविषयानुपपत्तिरेव तद्बीजं वाच्यम्, तर्हि तात्पर्यानुपपत्तिरेव बीजमस्तु । सा चेहाप्यस्ति । अथ तात्पर्यानुपपत्तिरनुपपद्यमानं तात्पर्यम्, तज्ज्ञानं च लक्ष्यार्थबोध एव जनकं न तु व्यङ्ग्यार्थबोधे, कुतः, तात्पर्याविषयस्यापि सहृदये स्फुरणात् इति चेन्न । लक्ष्यार्थबोधेऽपि सर्वत्र तत्पदस्य नानार्थोपस्थितिकालीनैकतरार्थबोधे एव तस्य जनकत्वात्, तच्चेदमिहापि, कथमन्यथा 'गङ्गायां घोष' इत्यादौ शैत्यपावनत्वादिकमेव प्रतीयते, न तु केशवालुकादिमत्त्वमिति नियमः । एतेन नानार्थपदाभिधेयार्थविशेषप्रत्यये प्रकरणादीनामननुगमेन सहकारित्वानुपपत्तेः, तात्पर्यग्राहकत्वेनानुगमे तु तात्पर्यग्रहस्यैव सहकारित्वौचित्यात् ।

स्यादेतत् । 'गङ्गायां घोषः' इत्यादौ लक्षणायाः प्रयोजनं शैत्यपावनत्वादिप्रतीतिर्व्यञ्जनयैव न तु लक्षणया, प्रयोजनाभावात् । लक्षणायाः प्रयोजनवत्त्वनियमादिति चेत् । न । लक्ष्यप्रतीतेरेव प्रयोजनत्वात् । लक्षणा हि प्रयोजनेन नियता, न तु लक्ष्यप्रतीत्यतिरिक्तप्रयोजनेन, गौरवादप्रयोजकत्वाच्च । अथ तथाऽप्याश्रयभेदाद् भेदः । लक्षणा हि पदवृत्तिः । इयं तु पदतदेकदेशकाकुरचनार्थव्यङ्ग्याद्याकाराश्रितेति चेन्न । असिद्धेः । तदेकदेशादयो ह्यर्थविशेषतात्पर्यका न तु तत्प्रतिपादका इति ।

अत्रोच्यते—इदं पदमेतदर्थस्य न वाचकं न वा लाक्षणिकं किन्तु व्यञ्जकमिति प्रामाणिकव्यवहारादेव व्यञ्जनासिद्धिः । अन्यथा एकयाऽभिधयैवार्थसिद्धौ लक्षणाऽपि विलीयेत । कियतामेव प्रयोजनान्तराद्यनियतानां लक्षणासंज्ञा । अन्येषां व्यञ्जनासंज्ञा । अस्तु प्रयोजनवती लक्षणा लक्ष्यप्रतीत्यतिरिक्तप्रयोजनवत्त्येवादुष्टा, अन्यथा लक्ष्यप्रतीतेः प्रयोजनस्य सर्वत्र सम्भवाद् दुष्टलक्षणोच्छिद्येत । अपि च व्युत्पन्नाय लक्षणाजन्यबोधे मुख्यार्थबाधादिज्ञानं प्रयोजकम् । किञ्च शक्तिलक्षणे

## सुधासागरः

ज्ञाते प्रयोजिके, व्यञ्जना तु स्वरूपसती वक्त्राद्यौचित्यज्ञानसहकारादिति नातिप्रसङ्गः। न चैवमलं व्यञ्जनया, कमलादिपदात् कदाऽप्यसौरभाद्यव्यक्तेः माधुर्यादिघटनात-श्चौजःप्रभृतेः सत्यप्यौचित्येऽव्यक्तेः। अन्यथा प्रतिकूलवर्णादेरदोषत्वापातात्। न च सम्बन्धज्ञानाभावे कथं सम्बद्धान्तरस्मृतिस्ततः स्मृत्यभावे च कथं तच्छाब्दबोध इति वाच्यम्, व्यञ्जनास्थले एवमस्वीकारात्। प्रकारात् प्रकारान्तरेणोपस्थितार्थेष्वेव व्यञ्जनायाः शाब्दबोधनियामकत्वादित्यपि क्रमः।

शक्यसम्बन्धो लक्षणा, बोध्यसम्बन्धो व्यञ्जना। न चेयमेव लक्षणा, अप-भ्रंशानामपि साधुत्वापत्तेः। न चास्याः शाब्दबोधप्रयोजकत्वकल्पने गौरवम्। एतज्ज्ञानस्य स्मृतिजनकत्व संसर्गीभूय प्रयोजकानामन्यतमत्वेनाननुगमेऽप्यदोषात्। अस्तु वा साधुशब्दमात्रनिष्ठबोधकत्वविशेषः शक्तिः, तादृशबोधकत्वविशेषप्रकार-केच्छातो लघुत्वात्। बोधकत्वविशेषो लक्षणा। भ्रमकल्पने गौरवात्, तत्तदर्थ-शाब्दबोधे तत्तदर्थशाब्दबोधकत्वज्ञानत्वेन प्रयोजकत्वे लाघवाच्च। इत्थं च वाच्य-लक्ष्यादिरूपार्थानां रचनादीनां च व्यञ्जकत्वं सूपपादम्। अर्थादीनां न व्यञ्जकत्वं किन्तु पदस्यैवेति त्वयुक्तम्। तत्तदर्थादिप्रतीत्युत्तरमेव व्यङ्ग्यप्रतीतेः, पुनः पदावृत्तौ गौरवात्, व्यञ्जनाया लक्षणान्यथासिद्धिप्रसङ्गाच्चेति मादृशामभिनवः पन्थाः। वक्तृबोद्धव्याद्यौचित्यज्ञानबोधकप्रतिभानुसंहितेन [व्यञ्जकेन] तत्पदज्ञानादिक-मुपस्थाप्यापि विशिष्टार्थबोधकतादृशबोधकत्वं व्यञ्जना, न तु तज्ज्ञानमपि शाब्द-हेतुरित्यपि क्रम इति वदन्ति।

अथ लक्षणाव्यञ्जकयोर्भेदमाह—न चेत्यादि। अयमाशयः—न लक्षणा-व्यञ्जनयोरभेदः, लक्षणामुपजीव्य तद्दर्शनात्। नापि लक्षणानुगतमेव ध्वननमिति ध्वनिस्तल्लक्षणमिति वाच्यम्, अभिधोपजीवनेनापि भावात्। न च लक्षणाभि-धोभयानुसार्येव, वर्णमात्रानुसारेणापि हि दृश्यते रसादिव्यञ्जना। शब्दमात्रेऽभिधा लक्षणा वा। नापि शब्दानुसायव, विकसन्नर्तकीनेत्रत्रिभागावलोकनादिगतत्वेनापि प्रसिद्धेः।

इदं त्ववधेयम्। अनया कटाक्षेणाभिलाषो व्यञ्जित इति सर्व-साधारणप्रसिद्धेः कटाक्षादेरभिलाषोपस्थापकत्वं व्यञ्जनयैव, परन्तु तत्र शब्द-सम्बन्धासम्भवे मानसो बोध इति। तस्मादभिधालक्षणातात्पर्यविलक्षणस्तुरीयो ध्वननव्यञ्जनद्योतनप्रकाशनादिपर्यायो व्यापारोऽनपह्नवनीय एव। तत्र 'अत्ता एत्थ णिमज्जइ' इत्यादौ व्यङ्ग्यार्थो नियतसम्बन्धः। 'कस्स व ण होइ रोसो' इत्यादाव-नियतसम्बन्धः। नियतसम्बन्धत्वं च वाच्यव्यङ्ग्यप्रतीत्योरेकविषयात्मकत्वम्। प्रथमे तस्य भावः, पथिकरूपैकविषयत्वात्। द्वितीये तु तदभावः, सखीतत्कान्तादि-विषयभेदात् इति केचित्। तन्न सम्यगाभाति। लक्ष्यस्य नियतसम्बन्धत्वमेव, व्यङ्ग्यस्य तथात्वमन्यथात्वं वेति पूर्वप्रतिपादितस्य हीदमुदाहरणमिति लक्ष्यसाधारणं नियतसम्बन्धत्वं वाच्यम्, न चोक्तं तथा भवति।

तत्र 'अत्ता एत्थ' इत्यादौ नियतसम्बन्धः, 'कस्स व ण होइ रोसो' इत्यादावनियतसम्बन्धः,

विपरीअरए लच्छी बम्हाणं दठ्ठूण णाहिकमलट्ठं ।
हरिणो दाहिणणअणं रसाउला झत्ति ढक्केई ॥
[ विपरीतरते लक्ष्मीर्ब्रह्माणं दृष्ट्वा नाभिकमलस्थम् ।
हरेर्दक्षिणनयनं रसाकुला झटिति स्थगयति ]

इत्यादौ सम्बद्धसम्बन्धः । अत्र हि हरिपदेन दक्षिणनयनस्य सूर्यात्मकता व्यज्यते । तन्निमीलनेन सूर्यास्तमयः, तेन पद्मस्य सङ्कोचः, ततो ब्रह्मणः स्थगनं, तत्र सति गोप्याङ्गस्यादर्शनेन अनियन्त्रणं निधुवनविलसितमिति ।

---

## साहित्यचूडामणिः

नियतसम्बन्ध इत्यादिना यदुक्तं तद् विभागेन दर्शयति—अत्तेति । रात्र्यन्धत्वनटितकवैदग्ध्यवन्तं पान्थं प्रति व्यङ्ग्यस्य सम्बन्धनियमः । 'कस्य व णे'त्यत्र सखी तत्कान्तस्तत्पत्न्यस्तदुपपतिरित्यादेरनेको विषय इत्युक्तम् ।

विवरीअरए इति ।

विपरीतरते लक्ष्मीर्ब्रह्माणं दृष्ट्वा नाभिकमलस्थम् ।
हरेर्दक्षिणनयनं रसाकुला झटिति स्थगयति ॥

ननु महिम्ना प्रहेलिकाप्रायमिति [ व्यक्तिवि० पृ० ९१-९२ ] दूषितमिति चेत्, तन्न ।

## सुधासागरः

अन्ये तु प्रथमे सर्वेषामेव सत्यप्रतीतिः, द्वितीये तु कान्तस्यैव सत्यतयाऽन्येषां त्वसत्यतयेति नियतानियतसम्बन्धत्वमित्याहुः । तदपि न मनोरमम् । यत एवं वाच्यप्रतीतेरेव सत्यत्वासत्यत्वप्रतीतिविषयत्वरूपं वैलक्षण्यमात्रमुच्यते, न तु व्यङ्ग्यप्रतीतेः । तस्मान्नियतसम्बन्धत्वं तेन वाक्येन सह ज्ञाप्यत्वरूपसम्बन्धनियम इति युक्तमुत्पश्यामः ।

सम्बद्धसम्बद्धयोर्यथा—विपरीतेत्यादि । गाथा छन्दः ।

विपरीतरते लक्ष्मीर्ब्रह्माणं दृष्ट्वा नाभिकमलस्थम् ।
हरेर्दक्षिणनयनं रसाकुला झटिति छादयति ॥

इति संस्कृतम् । स्पष्टम् । अत्र हरिपदेन दक्षिणनयनस्य सूर्यात्मकत्वं तन्निमीलनेन

[ ७ ]

'अखण्डबुद्धिनिर्ग्राह्यो वाक्यार्थ एव वाच्यः, वाच्यमेव च वाचकम्' इति येऽप्याहुः, तैरप्यविद्यापदपतितैः पदपदार्थकल्पना कर्त्तव्यैवेति तत्पक्षेऽप्यवश्यमुक्तोदाहरणादौ विध्यादिर्व्यङ्ग्य एव ।

## साहित्यचूडामणिः

अष्टौ[१] पुत्र ! कुरु श्लोकानिति पित्रोदितः सुतः ।
चकार पञ्च च श्लोकान् पितुराज्ञा न खण्डिता ॥

इत्यादि हि प्रहेलिका । न च तस्याः सर्वस्या नीरसत्वनियमः ।

आकृष्यादावमन्दग्रहमलकभरं वक्रमासव्य वक्त्रे
कण्ठे लग्नः सुकण्ठः पृथुनिकुचरते दत्तगाढाङ्गसङ्गः ।
बद्धासक्तिर्नितम्बे पतति चरणयोर्यः स तादृक् प्रियो मे
बाले ! लज्जा निरस्ता नहि नहि सरले ! चोलकः किं त्रपाकृत् ॥

इत्यादौ व्यभिचारात् । यदि च व्यवधानवत्त्वादिदं प्रहेलिकाप्रायं, नहि (? तर्हि) 'पत्युः शिरश्चन्द्रकलामनेने'-त्यादावपि प्रहर्षौत्सुक्यादिभावान्तरितत्वात् , तथा—

लावण्यकान्तिपरिपूरितदिङ्मुखेऽस्मिन्
स्मेरेऽधुना तव मुखे तरलायताक्षि ।
क्षोभं यदेति न मनागपि तेन मन्ये
सुव्यक्तमेव जलराशिरयं पयोधिः ॥

इत्यत्र यो वदनपूर्णेन्दुबिम्बयोरभिव्यक्तो रूप्यरूपकभावस्तदन्तरिता चाटुकावगतिरिति न तथात्वापत्तिः ? यदि तु व्यभिचार्यलङ्कारप्रयुक्तव्यवधानं सहामहे न वस्तुमात्रप्रयुक्तमित्युच्येत तदाग्रहमात्रम् , अनिबन्धनत्वात् । ततश्च

"चित्रवस्तुव्यवायिनि ।
प्रहेलिकादिरूपेऽपि वाक्ये ध्वन्यात्मता यतः ॥ व्यक्तिवि० पृ० ९३ ॥

इत्येतद् पर्यहारि । एतावदालोचनीयं—यत् 'विवरीअरए' इत्यादौ व्यञ्जनं प्रति शाब्दी शक्तिरल्पीयसी आर्थी पुनरतिप्रभूतेति ।

अथ वैयाकरणानां साधूनां ध्वनिवादविरुद्धं प्रमेयं प्रतिक्षिपति—अखण्डेति ।

## सुधासागरः

सूर्यास्तसमयस्तेन पद्मसङ्कोचस्ततो भ्रमरणस्थगनं तस्मिन्सति गोपनीयस्याङ्गस्यादर्शनेनानियन्त्रणं निधुवनविलसितमिति सम्बद्धसम्बद्धानि द्योत्यन्ते ।

वेदान्तिभिरपि दशाविशेषे व्यञ्जनाऽङ्गीकार्यैवेत्याह—अखण्डबुद्धीत्यादि ।

---

[१] अष्टिर्बीजविशेषः ।

## साहित्यचूडामणिः

अखण्डया बुद्ध्या निर्ग्राह्यत्वनियमाद् वाक्यान्तरप्रतीतः सर्वोऽप्यर्थो वाच्य एव, तथा वाक्यमेव वाचकं पदमिति ये प्राहुस्तैरप्यविद्यापदपतितैर्मायापथप्रवृत्तैः प्रकृति-प्रत्यययोरिव पदपदार्थयोः कल्पना सर्वा कर्त्तव्येति तन्मतेऽपि 'निश्शेषच्युते'-त्यादौ विध्यादिर्व्यङ्ग्य एव। तदुक्तं—'येऽप्यविभक्तं स्फोटमेव वाक्यं तदर्थमाहुः, तैरप्यविद्यापदपतितैः सर्वेयमनुसरणीया प्रक्रिया। तदुत्तीर्णत्वे तु परमेश्वराद्वयमयं ब्रह्मेत्यस्मच्छास्त्रकारेण न न विदितं तत्त्वालोकग्रन्थं विरचयतेत्यास्ताभि'ति।

## सुधासागरः

अविशिष्टमपर्यायाऽनेकशब्दप्रकाशितम्।
एकं वेदान्तनिष्णातास्तमखण्डं प्रपेदिरे॥

इत्यादिदिशा 'सत्यं ज्ञानमनन्तं ब्रह्म' 'एकमेवाद्वितीयं ब्रह्म' 'नेह नानास्ति किञ्चन' इत्यादि श्रुतिजनितयाऽखण्डबुद्ध्या निर्ग्राह्यः परब्रह्मात्मको वाक्यार्थ एव वाच्योऽखण्डमेव वाक्यं वाचकमेतादृशबुद्धिनिमित्तम्। यदाहुर्व्यासपादाः—'अनवयवमेव वाक्यमनाद्यविद्योपदर्शितालीकपदवर्णविभागमस्या निमित्तम्' इति। अस्याः बुद्धेः। केचित्तु अखण्डबुद्धिर्महावाक्यबुद्धिस्तया निर्ग्राह्यो महावाक्यार्थः स एव वाच्य इत्याहुः तस्माद् व्यङ्ग्यो वाच्य एवेति पूर्वपक्षः। समाधत्ते—तैरपीति। अविद्यापदं व्यवहारमार्गमाह, अन्यथा व्युत्पन्नाव्युत्पन्नव्यवहारो न स्यात्, तद्विशेषपदार्थोपास्थितिश्च न स्यात्। अविद्यापदे च तेषां भट्टनयस्तत्र व्यञ्जना स्थापितैवेत्युक्तोदाहरणादौ विध्यादिर्व्यङ्ग्य एवत्यर्थः।

रविभट्टाचार्या अपि व्याचख्युः— अखण्डेति। बुद्धेरखण्डत्वं वाक्यार्थगोचरत्वम्। तथा चैकमेवाद्वितीयं ब्रह्मेत्यादिश्रुतयो वाक्यार्थविधया ब्रह्म बोधयन्ति। तेन वाक्यार्थो ब्रह्मैवार्थः। तत्प्रतिपादकत्वाद् वाक्यमेव वाचकमिति का वार्त्ता व्यञ्जनाया इत्याक्षेपनिगर्वः। समाधत्ते—तैरपीति। तत्त्वदृशायां वाक्यमप्यलीकम्। अविद्यादशायां तु तैर्भट्टमतानुसारिभिरुक्तयुक्त्या व्यञ्जनमवश्यमङ्गीकार्यमित्यर्थ इति।

गोविन्दमहामहोपाध्यायैरपि व्याख्यातम्—वेदान्तिनस्तु क्रियाकारकादिपुरस्कारेण शब्दानां प्रवृत्तिर्धर्मधर्मिभावमपुरस्कृत्य न सम्भवति, धर्मधर्मिभावश्च प्रपञ्चगोचरो वा स्यात्, ब्रह्मगोचरो वा। नाद्यः, प्रपञ्चस्य बाधितत्वात्। नान्त्यः। ब्रह्मणो धर्मशून्यत्वात्। अतः पदपदार्थविभागमन्तरेणैव सत्यं ज्ञानमित्यादिवाक्यमखण्डमेवाखण्डब्रह्मवाचकमित्यातिष्ठन्ते। अतस्तन्मतानुसारेण वाक्यप्रतीयमानेऽपि वाक्यस्य शक्तिरेवेत्यपि न वाच्यम्। यतो व्यवहारमार्गे तैरपि पदपदार्थकल्पनाऽवश्यमङ्गीकर्त्तव्या। व्यवहारे तेषां भट्टनयस्वीकारात्। यदि च पदार्थकल्पनाऽविद्यायामपि नाङ्गीक्रियते, कुतस्तर्हि व्युत्पन्नाव्युत्पन्नव्यवहारः? वाक्यार्थ एवास्य सङ्केतग्रहमाश्रित्येति चेन्न, वाक्यार्थस्यापूर्वत्वेनानन्त्यात्तत्र सङ्केतग्रहस्या-

[१] ध्व० १.४–लोचने।

[ ८ ]

ननु वाच्यादसम्बद्धं तावन्न प्रतीयते, यतः कुतश्चिद् यस्य कस्यचिदर्थस्य प्रतीतेः प्रसङ्गात्। एवं च सम्बन्धो[१] व्यङ्ग्यव्यञ्जकभावोऽप्रतिबन्धेऽवश्यं न भवतीति व्याप्तत्वेन नियतधर्मिनिष्ठत्वेन च त्रिरूपाल्लिङ्गाल्लिङ्गिज्ञानमनुमानं यत् तद्रूपः पर्यवस्यति। तथा हि—

भम धम्मिअ वीसद्धो सो सुणओ अज्ज मारिओ देण।
गोला-णई-कच्छकुडङ्गवासिणा दरिअसीहेण ॥
[भ्रम धार्मिक विस्रब्धः स शुनकोऽद्य मारितस्तेन।
गोदानदीकच्छकुञ्जवासिना दृप्तसिंहेन ॥]

अत्र गृहे श्वनिवृत्त्या भ्रमणं विहितं गोदावरीतीरे सिंहोपलब्धेरभ्रमणमनुमापयति। यद् यद् भीरुभ्रमणं तत् तद् भयकारणनिवृत्त्युपलब्धिपूर्वकम्, गोदावरीतीरे च सिंहोपलब्धिरिति व्यापकविरुद्धोपलब्धिः।

## साहित्यचूडामणिः

अथ सौगतानुसारादनुमानैकप्रधानो महिमा प्रत्यवतिष्ठते वाच्यादिति। अविवक्षिताद् विवक्षिताद् वा सम्बन्धरहितं यद् वस्तु तन्न प्रतीयते, यतः कुतश्चिद् वाच्याद् यस्य कस्यचिदर्थस्य या प्रतीतिस्तस्या प्रसङ्गात्। एवं सम्बन्धो भवदभिमतो व्यङ्ग्यव्यंञ्जकभावः प्रतिबन्धहानौ न सम्पद्यते। तत् एतत् संवृत्तम्। व्याप्तत्वेन सपक्षावगाहितया। नियतेति। धर्मिणि साध्यधर्मविशिष्टे निष्पत्तिर्यस्य। एतेन पक्षवृत्तित्वसिद्धिः। नियतत्वेन विपक्षाद् व्यावृत्तिरिति त्रिरूपाद्। यदाहुः "त्रिरूपालिङ्गतोऽर्थदृगि"ति। लिङ्गिनि व्यङ्ग्यलक्षणे यद् ज्ञानमनुमानाकारं तद्रूपः पर्यवस्यति। न पुनरलौकिकशब्दशक्त्यन्तरमूलतास्योपपद्यत इति। तत्र ध्वन्युदा-

## सुधासागरः

शक्यत्वात्। अविद्यामार्गतिरस्कारे च कथमखण्डयोरपि वाच्यवाचकभावः, पारमार्थिकभेदाभावात्। तस्मात्तन्मतेऽपि विध्यादिर्व्यङ्ग्य एवेति।

अथानुमानाद् व्यङ्ग्यप्रतीतिरिति न्यायाचार्य-व्यक्तिविवेककारमहिमभट्टमतं निराकर्तुमाशङ्कते—ननु वाच्यादिति। यद्यप्यनुमितौ नियतसम्बन्धस्यापेक्षणीयत्वम्, व्यञ्जनायां तदनैयत्यम्, सम्भावनमात्रादपि तदुपपत्तेः, तथापि मया तत्रापि व्याप्तिः साधनीयेति पूर्वपक्षिणोऽभिप्रायः। तावच्छब्देन व्यक्तिवादिनो ध्वनिकारस्यापि नात्र विप्रतिपत्तिरिति दर्शयति। प्रतिबन्धः प्रतिनियतो बन्धः नियतसम्बन्ध इत्यर्थः।

[१] 'संबन्धादि'त्यभ्यस्तः पाठः।

अत्रोच्यते—भीरुरपि गुरोः प्रभोर्वा निदेशेन, प्रियानुरागेण, अन्येन चैवंभूतेन हेतुना सत्यपि भयकारणे भ्रमतीत्यनैकान्तिको हेतुः। शुनो बिभ्यदपि वीरत्वेन सिंहान्न बिभेतीति विरुद्धमपि। गोदावरीतीरे सिंहसद्भावः प्रत्यक्षादनुमानाद् वा न निश्चितः, अपि तु वचनात्, न च वचनस्य प्रामाण्यमस्ति अर्थेनाप्रतिबन्धादित्यसिद्धश्च। तत् कथमेवंविधाद्धेतोः साध्यसिद्धिः ?

तथा निःशेषच्युतेत्यादौ गमकतया यानि चन्दनच्यवनादीन्युपात्तानि, तानि कारणान्तरतोऽपि भवन्ति, अतश्चात्रैव स्नानकार्यत्वेनोक्तानीति नोपभोग एव प्रतिबद्धानीत्यनैकान्तिकानि।

व्यक्तिवादिना चाधमपदसहायानामेषां व्यञ्जकत्वमुक्तम्। न चात्राधमत्वं प्रमाणप्रतिपन्नमिति कथमनुमानम्। 'एवंविधादर्थादेवंविधोऽर्थ उपपत्त्यनपेक्षत्वेऽपि प्रकाशत' इति व्यक्तिवादिनः पुनस्तद्दूषणम् ॥ ३ ॥

इति काव्यप्रकाशे ध्वनिगुणीभूतव्यङ्ग्यसङ्कीर्णभेद—
निर्णयो नाम पञ्चम उल्लासः ॥ ५ ॥

---

### साहित्यचूडामणिः

हरणमादौ पर्यालोचयति—तथाहीति। भमेति।

भम धार्मिक ! विस्रब्धः स श्वाद्य मारितस्तेन।
गोदावरीकच्छकडुंगवासिना दृप्तसिंहेन ॥

### सुधासागरः

अवश्यं नियमेन सहृदयानां तु व्यङ्ग्यप्रतीतिर्नियतैवेत्यर्थः। व्याप्तत्वेनेत्यनेन सपक्षसत्त्वम्। नियतत्वं विपक्षव्यावृत्तत्वम्। धर्मिनिष्ठत्वम् धर्मी पक्षस्तन्निष्ठत्वम्, तेन पक्षवृत्तित्वम्। द्वयोः समासानन्तरं त्वप्रत्यय इति रूपत्रयम्। अबाधितत्वस्य सर्वसाधारण्यान्नाभिधानम्। असत्प्रतिपक्षितत्वस्य स्वार्थानुमानेऽनुपयोगान्नाभिधानम्। लिङ्गाद् हेतोः। लिङ्गिनि साध्ये साध्यविषयकं ज्ञानमित्यर्थः। अनुमानमनुमितिस्तद्रूपोऽनुमित्यात्मकः। इदं च व्यङ्ग्यव्यञ्जकभाव इत्यस्य विशेषणम्। व्यङ्ग्यव्यञ्जकभावो व्यञ्जनार्थविषयकशाब्दप्रतीतिरित्यर्थः। तत्र व्यक्तिवादिमूर्द्धाभिषिक्तध्वन्युदाहरणे प्रथममनुमानं योजयति। तथा हीत्यादि। जघनविपुला छन्दः।

भ्रम धार्मिक ! विश्वस्तः स शुनकोऽद्य मारितस्तेन।
गोदानदीकच्छकुञ्जवासिना दृप्तसिंहेन ॥

## साहित्यचूडामणिः

इति केनचिदभिमतेन यूना सह सम्भोगाभिलाषिण्या गोदावरीतीरलतानिकुञ्ज-दत्तसंकेतायास्तत्रैव समित्कुसुमादिहेतुना भ्रममाणं धार्मिकापसदमक्षममाणायाः सारमेयमारणोपन्यासेन तद्भ्रमणं प्रतिषेद्धुं कस्याश्चिदुक्तिः। भ्रम अतिसृष्टोऽसि प्राप्तः काल इति वा। धार्मिक! कुसुमाद्यर्थे युक्तं ते भ्रमणम्। विस्रब्धः शङ्काकारण-वैकल्यात्। स यस्तव भीत्युत्कर्षमकार्षीत्। श्वा नित्योपद्रवस्वभावः। अद्य दिष्ट्या वर्धसे। मारित इति न तस्य पुनरुत्थानम्। तेन यः पूर्वं कर्णाकर्णिकया श्रुतः। गोदेत्यादि, सदा निगूढं वर्तमानेन। दृप्तसिंहेन दर्पारोपान्मत्तमातङ्गमिव क्षुद्रं कुक्कुरमपि प्रहर्तुमुद्युक्तेन। अत्र स्वतस्सिद्धमपि भ्रमणं कुक्कुरभयादपोदितमिति प्रतिप्रसवात्मको विधिर्न नियोगादिरूपः।

तदेतदनुमानानुकूल्येन व्याचष्टे—अत्रेति। गृहे शुनो निवृत्त्या निषेधरूपतया विहितं सद् भ्रमणं गोदावरीतीरे सिंहसद्भावमुपलम्भयत् धार्मिकस्य भीरुस्वभावस्य भ्रमणप्रतिषेधमनुमापयति।

प्रयोगं रचयति—यद्यदिति। व्यापकेति। प्रतिषेध्यस्य यद् व्यापकं तस्य यद् विरुद्धं तस्योपलब्धिः। यथा नात्र तुषारस्पर्शोऽग्नेः' इति अनुपलब्धिषोडशके [प्रमाणवा० ३.४] काचिदेषा। भ्रमणस्य सिंहसद्भावस्य च निवर्त्यनिवर्तकभावो विरोधः।

## सुधासागरः

इति संस्कृतम्। स्वविनयं सूचयन्ती काचिदसती पुष्पाहरणाय निकुञ्जे यान्तमभि-सारविघ्नकारिणं कञ्चन धार्मिकं प्रति भीषयितुमाह—हे धार्मिकेति साक्षेपम्। परश्रेयोघातकस्य तत्त्वायोगात्। विश्वतोऽभीतस्सन् भ्रम यथेच्छं विचर, स शुनकः श्वा यद्भयाद् गृहान्न निर्यासि तेन गोदानदीकच्छकुञ्जवासिना दृप्तसिंहे-नाद्य मारितः। तेनेति प्रसिद्धिरुक्ता तेन 'मिथ्या मया नोच्यते' इति व्यज्यते।

अत्रेत्यादि। विहितं भ्रमतिविधिविषयीभूतम्। अभ्रमणमनुमापयतीति। व्याप्तिग्रहौपयिकत्वेनेति शेषः। तदेव दर्शयति—यद्यदिति। व्यापकविरुद्धेति। भीरुभ्रमणस्य व्यापिका भयकारणाभावोपलब्धिः, तद्विरुद्धं भयकारणं, तदुपलब्धि-रित्यर्थः। तथा च व्यतिरेकव्याप्तिर्दर्शिता, व्यतिरेकिणि तस्या एव तन्त्रत्वात्। ततश्च गोदावरीतीरं भीरुभ्रमणायोग्यं सिंहवत्त्वात्, यन्नैवम् तन्नैवं, यथा गृहमिति भ्रमणाभावानुमितिरिति भावः। अत एवोक्तं मिश्रैः—अत्र भीरुभ्रमणवति गृहे भयकारणश्वनिवृत्त्युपलब्धिमत्त्वज्ञानात्सपक्षत्वज्ञाने विपक्षासत्त्वं झटिति व्युत्पन्नेन स्मर्यते, तत उत्तरार्द्धे न व्यापकाभावस्य पक्षधर्मताज्ञानादनुमानमिति।

दूषयति अत्रोच्यत इति। तत्रादौ व्याप्तिविघटकं व्यभिचारमुद्भावयति—भीरुरपीत्यादि। अन्येन धनलोभादिना। अनैकान्तिको हेतुर्व्यभिचारः। बिभ्यदिति। स्पर्शेऽपायजननात्। पापजनके तद्विधे पौरुषानास्पदत्वात्।

## साहित्यचूडामणिः

अयं भावः—भीरुभ्रमणस्य भयकारणाभावपूर्वकत्वनैयत्यात् क्षुद्रसत्त्वस्य कुक्कुरस्य व्यावृत्त्या सम्भवन् भ्रमणविधिः क्रूरतरस्य केसरिणः सद्भावोपलब्ध्या तत्प्रतिषेधहेतुः। येन स श्वा मारित इति णिच्प्रयोगः। केसरिव्यापारो हि वाच्यकक्ष्यायां धार्मिकभ्रमणविधौ हेतुः। तमेव परीक्षमाणो विचक्षणस्तन्निषेधमनुमातुमर्हति। नहि कश्चित् स्वस्थचित्तः सारमेयभयादपि भ्रमितुमप्रभवन् पञ्चास्यसंचारोचिते प्रदेशे परिभ्रमतीति स्वभावविरुद्धोपलब्धौ प्रयोगः पर्यवस्यति। यथा नात्र शीतस्पर्शोऽग्नेरिति।

तदेतत् खण्डयति-अत्रोच्यत इति।

दृष्टादृष्टप्रत्यवायपरिहारार्थमुक्तं-प्रभोर्गुरोर्वेति। अन्येन मदोन्मादादिना। भयकारणसद्भावेऽपि भ्रमतीत्यनैकान्तिकः।

पक्षत्रयवृत्तित्वाद् विरुद्धोऽपीत्याह—श्वत इति। विपक्षव्याप्तो विरुद्धः।

असिद्धोऽपीत्याह गोदावरीति। विदग्धया कयाचित् स्वोत्प्रेक्षामात्रेणोपक्षिप्तत्वात् न प्रत्यक्षेण हर्यक्षसिद्धिः। अनुमानेन चेदनवस्था। पारिशेष्यादेतद्वचनादेव। न च तस्यास्ति प्रामाण्यं सौगततीर्थावगाहनादर्थेनाप्रतिबन्धादनाप्तवाक्यत्वादित्यप्यूह्यम्।

निगमयति—तत्कथमिति।

एतन्निजोदाहरणे योजयति—निश्शेषेति। चन्दनच्यवनादीनि लिङ्गान्यनैकान्तिकानि कारणान्तरतोऽपि भावाद् यतोऽत्र स्नानकारणत्वेनाप्युक्तानीति।

## सुधासागरः

सिंहादभीतौ हेतुमाह—वीरत्वेनेति। धार्मिकस्य भयानास्पदत्वात्। अतः सिंहवत्त्वभीरुभ्रमणाभावयोर्न सामानाधिकरण्यमित्याह—विरुद्धोपीति। भीरुभ्रमणेन साध्याभावेन व्याप्तत्वात्।

केचित्तु—व्यभिचरितो व्यतिरेकी विरुद्ध इति मतेनेदमिति वदन्ति।

पक्षधर्मताविघटनमाह—गोदावरीतीर इति। वचनात् कुलटावाक्यात्। न चेति। प्रामाण्यम्, नियतमिति शेषः। अर्थेनाप्रतिबन्धात् शाठ्योक्तौ प्रामाण्यसन्देहाच्छब्दार्थयोरनियतसम्बन्धादित्यर्थः। तथाचार्थनिश्चयस्तदाह-इत्यसिद्ध इति। संदिग्धा सिद्धिरित्यर्थः। नन्वस्त्वनुमानाभास इति चेन्न, व्यभिचारज्ञाने तदनुदयात्। न च व्यभिचारास्फूर्तौ तथा, सर्वज्ञानवतां सामाजिकानां तदस्फूर्तेः। तदाह—तत्कथमित्यादि। ध्वनिकारोक्तोदाहरणेऽनुमानं निरस्योक्तोदाहरणेऽपि तन्निराकुर्वन् ध्वनिलक्ष्यं समर्थयति—तथेत्यादि। प्रतिबद्धानि व्याप्तानि। ननु व्यक्तिवादिनेवास्माभिरप्यधमपदसाहाय्यमङ्गीकरिष्यते इत्यत आह—एवमित्यादि। अत्र व्याप्तेरनङ्गत्वेन सम्भावनामात्रादेव तत्सिद्धिरितिभावः। व्याख्यातञ्च गोविन्दमहामहोपाध्यायैः—

## साहित्यचूडामणिः

इदमत्रावधातव्यं—[1] 'नपुनरयं परमार्थो यद् व्यञ्जकत्वं लिङ्गत्वमेवेति। द्विविधो हि विषयः शब्दानामनुमेयः प्रतिपाद्यश्च। तत्र विवक्षालक्षणोऽनुमेयः। विवक्षा च शब्दस्य स्वरूपप्रकाशनेच्छा शब्देनार्थप्रकाशनेच्छा च। आद्या न शब्दव्यवहाराङ्गम्। सा हि प्राणित्वमात्रप्रतिपत्तिफला। द्वितीया तु शब्दविशेषावधारणान्ववसिता व्यवहितापि शाब्दे व्यवहारे कारणमिति द्वे अप्यनुमेयो विषयः शब्दानाम्। यः पुनः प्रतिपाद्यरूपः प्रयोक्तुरर्थप्रतिपादनसमीहाविषयीकृतोऽर्थः सोऽपि द्विविधः वाच्यो व्यङ्ग्यश्च। द्विविधाऽप्ययं न लिङ्गितया स्वरूपेण प्रकाशते। तथात्वे शब्दार्थचिन्तायां सम्यङ्मिथ्यादिविवादा एव न प्रवर्तेरन् धूमादिलिङ्गान्वितानुमेयान्तरवत्। तस्माद् वक्त्रभिप्राय एव लिङ्गतया शब्दानां व्यापारः, नान्यत्र। तन्मूलाच्च भ्रमादन्यत्रापि तद्योजनाप्रयासः। ततोऽपि न व्यञ्जकत्वं लिङ्गत्वमालोकादिष्वन्यथा दृष्टत्वात्। तस्माल्लिङ्गिप्रतीतिरेवेति न युक्तं वक्तुम्। यदाहोद्भटः—'नचानुमितमात्रतया स्थितो भावः काव्यस्य जीवितम्। अपि तु साधारण्येन प्रतिपन्नो रसनाव्यापारगोचरः। एवं रसेऽप्यवगन्तव्यम्। तत एव व्यङ्ग्या रसभावतदाभासतत्प्रशमाः काव्यतत्त्वविद्भिरभिधीयन्त' इति। किञ्चानुमानमपि व्यङ्ग्यव्यञ्जकभाव एवेत्युपनिषत्। तदुक्तं तत्रैव[2] 'तस्यैवानुभूतपूर्वस्य संस्कारात्मनानन्तर्विपरिवर्तिनः कुतश्चिद्व्यभिचारिणो-

## सुधासागरः

'—महिमभट्टास्तु—न तावदसम्बद्ध एव वाक्यात् प्रतीयते, सर्वस्मात्सर्वोपलब्धिप्रसङ्गात्, सम्बद्धाच्च व्यङ्ग्यव्यञ्जकभावो भवन्नानियताद्भवतीति प्रतिबद्धरूपाद् भवतीत्युपेयमि'-ति।

सम्बन्धो न स्वाधिकरणत्वेनाज्ञाते व्यङ्ग्यं प्रतिपादयति, सर्वत्र तत्प्रतीतिप्रसङ्गात्। एवञ्च व्यङ्ग्यव्यञ्जकभावोऽनुमान एव पर्यवसन्नः। यतो व्याप्तत्वेन सकलपक्षनिष्ठत्वेन च सपक्षसत्त्वाविपक्षासत्त्वपक्षसत्त्वलक्षणरूपत्रयवतो लिङ्गाल्लिङ्गिज्ञानमेवानुमानम्। तदेतदुक्तम्—अनुमानं यत्तद्रूप इति। तेनानुमानेन रूप्यते न त्वतिरिक्तया व्यक्त्येति हि तस्यार्थः। एवमनुमानादेव व्यङ्ग्यप्रतीतिः। तथा हि—भम धम्मिअ इत्यादि। सङ्केतनिकेतनीभूतं गोदावरीतीरनिकुञ्जं पुष्पावचयादिहेतोः कदाचित्सञ्चरतो धार्मिकस्य निवारणाय विनयवत्या इयमुक्तिः। तदत्र निकुञ्जवासिसिंहकृतया श्वनिवृत्त्या गृहे भ्रमणविधिर्वाच्यः। स एव निकुञ्जभ्रमणायोग्यतानुमित्यै प्रभवति। यद् भीरुभ्रमणं तद् भयकारणनिवृत्त्युपलब्धिपूर्वकम्। लिङ्गं च सिंहोपलब्धिरिति व्यापकविरुद्धोपलब्धौ पर्यवसानात् भ्रमणस्य व्यापकभयकारणाभावोपलब्धिः प्रतीता, तद्विरुद्धं यद् भयकारणं तदुपलब्धेः। यथा नात्र तुषारस्पर्शः वह्नेः। अनुमानञ्चैवम्—गोदावरीनिकुञ्जं भीरुभ्रमणायोग्यं सिंहवत्त्वादिति।

अत्रोच्यते—अभीरोरवीरस्वभावस्य भ्रमणायोग्यत्वमत्र साध्यम्, वीरस्वभावस्य वा? विशेषौदासीन्येन तत्सामान्यस्यैव वा? आद्ये व्यभिचारः। तादृशस्यापि

[1] ध्वन्यालोक ३.३३ वृत्तिः। [2] व्यक्तिविवेके पृ० ८०।

## साहित्यचूडामणिः

ऽर्थान्तरात् तत्सदृशाद्वा तत्प्रतिपादकाच्छब्दाद्वा संस्कारप्रबोधमात्रमि-' [तृतीये—]'-ति अलमत्याटोपेन। ननु निश्शेषच्युतेत्यादौ यानि चन्दनच्यवनादीनि लिङ्गतयाभिमतानि तेषां स्नानकार्यतयाप्युपादानाद् यदनैकान्तिकत्वमुक्तं तद् व्यञ्जनेऽपि समानमित्याशङ्क्याह—व्यक्तीति। वल्लभस्याधम्यमुपभोग एव पर्यवस्यति न स्नाने। नन्वेवमधमपदसहायानामेव तेषामनुमापकत्वमस्तीति चेत् तत्राह—नचेति। स्वयमप्रमितस्य कथमन्यप्रमापकत्वम्। ननु पुनरपि समः समाधिरिति चेत् तत्राह—एवंविधादिति। उपपत्त्यनपेक्षत्वेऽपि प्रमितत्वनिबन्धनपराङ्मुखत्वे सत्यपि प्रतीतिमात्रपरमार्थत्वात् काव्यव्यवहारस्य। यदुक्तं [व्यक्तिवि० पृ० ७६-७८] 'काव्यविषये च वाच्यव्यङ्ग्यप्रतीतीनां सत्यासत्यत्वनिरूपणमप्रयोजकमेवेति। तत्र प्रमाणान्तरपरीक्षोपहासायैव सम्पद्यत इति तावतापि तस्य चमत्कारौपयिकत्वम्। यदुक्तं—

मणिप्रदीपप्रभयोर्मणिबुद्ध्याभिधावतोः।
मिथ्याज्ञानाविशेषेऽपि विशेषोऽर्थक्रियां प्रति ॥प्र०वा० २.५७॥ इति।

न पुनरेवं युष्मत्पक्षे प्रमाविशेषोऽप्यनुमा, तत्करणमनुमानं, प्रमात्वं च समीचीनस्यानुभवस्य, समीचीनता च संशयविपर्ययव्युदासाधीनेति। व्यक्तिवादिनस्तु तदाधम्यस्य प्रमाणाप्रतिपन्नत्वम्। अदूषणमेव दूषणमेव न स्यात् प्रत्युत भूषणमेव स्यात्। अयमेव हि लोकतः काव्यस्यातिशयः। यदुक्तं—किमत्र परचित्तवृत्तिमात्रे प्रतिपत्तिरेव रसप्रतिपत्तिरभिमता भवतः। नैव भ्रमितव्यम्। एवं हि लोकगतचित्तवृत्त्यनुमानमात्रमिति। अपाकृतं चैतत् सामान्येन वैयाकरणैः। यथा—

अवस्थादेशकालानां भेदाद् भिन्नासु शक्तिषु।
भावानामनुमानेन प्रसिद्धिरतिदुर्लभा ॥ [वा०प० १.३२] ॥
वस्तुस्पर्शादिवान्धेन विषमे पथि धावता।
अनुमानप्रधानेन विनिपातो न दुर्लभः ॥ [वा०प० १.४२]

इत्यागमस्यैव पर्यन्ततः प्रामाण्याभिषेकौचित्यम्। प्रत्यक्षादिवदनुमानस्यापि काचित्क

## सुधासागरः

प्रभोर्गुरोर्वा निदेशेन प्रियानुरागेण निधिलाभादिशङ्कया वा भ्रमणदर्शनात्। अत एव नान्त्योऽपि। मध्यमे तु विरोधः, स्पर्शादिशङ्कयाऽपौरुषेयतया वा शुनो बिभ्यतोऽपि सिंहवद्देशे वीरस्य भ्रमणात्।

किञ्च—पक्षे सिंहसद्भावो न मानान्तरादवधारितः, किन्तु पुंश्चलीवचनात्। न च तद्वचनं निश्चायकम्, अर्थेन समं सम्बन्धानियमादित्यनिश्चयरूपासिद्धिः। एवं निःशेषच्युतेत्यादौ चन्दनच्यवनादीनि उपभोगव्यञ्जकतयोपात्तानि। न च तानि तद्व्याप्यानि कारणान्तरतोऽपि सम्भवात्। अत एवात्र स्नानकार्यत्वेनोपात्तानि। अतोऽनैकान्तिकात्कथमनुमितिः स्यात्। ननु व्यक्तिरपि कथं तैरिति चेत्, अधमपदसाहित्यादिति ब्रूमः। अस्माकमपि तत्साहित्येनानैकान्तिकताव्यतिरेक इति चेत्,

## साहित्यचूडामणिः

एवोपयोग इति तात्पर्यम्। अतश्चेदमाक्रम्यते प्रतिपत्तॄन् प्रति सा प्रतिभा नानुमीयमाना अपितु तत्तदावेशेन भासमाना। यदाह—'नायकस्य कवेः श्रोतुः समानोऽनुभवः स्मृतः' इति। एतेन वक्रोक्तिर्व्याख्याता। येन ध्वनिवक्रोक्त्योर्नात्यन्तविशेषः यतस्त एव भेदास्तान्येवोदाहरणानि। यथोक्तं—

प्रसिद्धमार्गमुत्सृज्य यत्र वैचित्र्यसिद्धये।
अन्यथैवोच्यते सोऽर्थः सा वक्रोक्तिरुदाहृता ॥ व्य०वि० १ ॥ इति।

तेन ध्वनिवदेषापि वक्रोक्तिरानुमानिकीति व्यक्तिविवेकखण्डः खण्डितः। किं च —

ध्वनेरभावो भाक्तत्वमनिर्वचनीयत्वं चेति शृङ्खलाक्रमेण त्रयो विकल्पाः। यदुक्तं वाच्यादन्यद् व्यङ्ग्यं नास्ति, सदपि वा तद् भाक्तम्, अर्थसामर्थ्याक्षिप्तत्वात्, तदनाक्षिप्तमपि वा वक्तुमशक्यमिति। तेषु प्राच्या विपर्यस्ताः, मध्यमास्तद्रूपं जानाना अपि सन्देहेन निह्नुवते, अन्तिमास्तु अनिह्नुवाना अपि लक्षयितुं न क्षमन्त इति यथोत्तरमेते भव्यबुद्धयः। पुनरभावविकल्पस्य प्राथमिकस्य तिस्रः कल्पनाः। यथा नान्यो ध्वनिरस्ति योऽस्माभिर्न गणित इत्येका, यो वा न गणितः स न शोभाकारीति द्वितीया, अथ शोभाकारी तदस्मदनुक्रान्ते गुणालंकारादावन्तःपततीति तृतीये'-ति। अयमपि य आक्षेपप्रकारस्तस्यापि तन्त्रयुक्तिभिः प्रतिक्षेपः परीक्षणीयो विचक्षणैरिति सिद्धम् ॥ ३ ॥

अमत्सराणां गुणवत्सलानां गोष्ठीविनोदे महतां कवीनाम्।
तर्कैर्विचित्रैः कतिचिद् विदग्धाः सम्यग् ध्वनिं साधयितुं क्षमन्ते ॥

जयति प्रतिभोल्लेखरूपिकाशिल्पशालिनी।
चराचरचरित्रस्य चित्रभित्तिः सरस्वती ॥



इति साहित्यचक्रवर्तिलौहित्यभट्टगोपालविरचितायां साहित्यचूडामणौ काव्यप्रकाशविमर्शिन्यां पञ्चम उल्लासः ॥ ५ ॥

## सुधासागरः

भवेदप्येवं यद्यधमत्वं प्रमाणावधारितं भवेत्, न त्वेवमस्ति। व्यक्तिरपि कथं तादृशाद् भवेदिति चेत्, धिङ् मूर्ख! व्यञ्जनायां न व्याप्तिर्न वा पक्षधर्मताया निर्धारणमङ्गम्, किन्तु सम्भावितादप्येवंविधादेवंविधोऽर्थः प्रतीयत इति मूकीभवेति। एवञ्चावाग्गोचरब्रह्मबोधिकेयमलौकिकी वृत्तिर्वाग्देवताङ्गीकृता व्यञ्जना ब्रह्मणाऽप्यपलपितुमशक्येति सुधीभिर्मन्तव्यम् ॥ ३ ॥

इति श्रीमत्पदवाक्यप्रमाणपारावारीणदीक्षितभीमसेनकृते काव्यप्रकाशविवरणे सुधासागरे ध्वनिगुणीभूतव्यङ्ग्यसङ्कीर्णभेदनिर्णयः पञ्चम उल्लासः ॥ ५ ॥

# षष्ठ उल्लासः

शब्दार्थचित्रं यत् पूर्वं काव्यद्वयमुदाहृतम् ।
गुणप्राधान्यतस्तत्र स्थितिश्चित्रार्थशब्दयोः ॥ १ ॥

न तु शब्दचित्रेऽर्थस्याचित्रत्वम्, अर्थचित्रे वा शब्दस्य । तथा चोक्तम्

रूपकादिरलङ्कारस् तस्यान्यैर्बहुधोदितः ।
न कान्तमपि निर्भूषं विभाति वनिताननम् ।
रूपकादिमलङ्कारं बाह्यमाचक्षते परे ।
सुपां तिङां च व्युत्पत्तिं वाचां वाञ्छन्त्यलङ्कृतिम् ॥
तदेतदाहुः सौशब्द्यं नार्थव्युत्पत्तिरीदृशी ।
शब्दाभिधेयालङ्कारभेदादिष्टं द्वयन्तु नः ॥ इति ॥

शब्दचित्रं यथा—

प्रथममरुणच्छायस्तावत्, ततः कनकप्रभस्,
तदनु विरहोत्ताम्यत्तन्वीकपोलतलद्युतिः ।
उदयति ततो ध्वान्तध्वंसक्षमः क्षणदामुखे
सरसबिसिनीकन्दच्छेदच्छविर्मृगलाञ्छनः ॥

अर्थचित्रं यथा—

ते दृष्टिमात्रपतिता अपि कस्य नात्र
क्षोभाय पक्ष्मलदृशामलकाः खलाश्च ।
नीचाः सदैव सविलासमलीकलग्ना
ये कालतां कुटिलतामिव न त्यजन्ति ॥

यद्यपि सर्वत्र काव्येऽन्ततो विभावादिरूपतया पर्यवसानम्, तथापि स्फुटस्य रसस्यानुपलम्भादव्यङ्ग्यमेतत् काव्यद्वयमुक्तम् । अत्र च शब्दार्थालङ्कारभेदाद् बहवो भेदाः । ते चालङ्कारनिर्णये निर्णेष्यन्ते ॥१॥

इति काव्यप्रकाशे शब्दार्थचित्रनिरूपणं नाम
षष्ठ उल्लासः ॥ ६ ॥

## साहित्यचूडामणिः

अथ परिपाटीप्राप्तं तृतीयं काव्यं प्रकटयिष्यन्नल्पप्रमेयतया कारिकामेव पठति—शब्देति। नन्वादिमोल्लासपर्यन्ते द्वैरूप्येण तृतीयं काव्यमुदाजह्रे। किमत्र पौनरुक्त्येन। उच्यते। आलंकारिकेषु केचन शब्दालङ्कारैकतात्पर्यशालिनः, केचिदर्थालङ्कारैकप्रवणाः, एके तदुभयावश्यम्भावभव्यबुद्धय इति त्रैविध्यम्। तत्रैकैकपक्षोपक्षेपानुगुण्यादाद्योल्लासोदाहरणद्वयं, यतः "स्वच्छन्दोच्चलदि"त्यादौ न काचिदार्थस्यालङ्कारस्य शङ्का, "विनिर्गतमि"त्यादौ न शाब्दस्य। इह तु तदुभयमेलकानुसारो ग्रन्थकारस्य, यत्र प्राधान्याप्राधान्यविवेकः परिशिष्यते। गुणेति। उद्रिक्ताङ्गोपादानात् क्वचित् केनचिद् व्यपदेश इति शब्दार्थयोरपि वैचित्र्यं प्रसिद्धमित्येतद् वादिविप्रतिपत्तिपूर्वं संवादयति—तथा चेति। रूपकादिरित्यर्थालङ्कारप्राधान्यवादिनां पक्षः। रूपकादिमिति पुनरितरेषाम्, तदेतत् सुप्तिङ्व्युत्पत्तिरूपम्, ईदृशी शब्दस्वरूपपर्यवसिता। अर्थव्युत्पत्त्या च काव्यम्। काव्ये द्वयं शाब्दार्थौ च व्युत्पत्तिरित्येकैकपक्षव्युदासाय।

प्रथममिति। ततः सरसबिसिनीकन्दच्छेदच्छविरित्यन्वयः। अत्रानुप्रासः प्रधानम्, उपमोपसर्जनम्। ओजश्च गुणः।

त इति। नीचाः प्रलम्बाः अधमाश्च। अलीकं ललाटं, दैर्घ्येऽपि सौशब्द्यमित्याप्ताः। तत्र सविलासं लग्नाः। अपि च यदलीकमसत्यं तत्र सौजन्यनाटितकपूर्वं लग्नाः। कालत्वं कुटिलता चाकारहृदययोर्यथासङ्ख्यम्। अत्र समुच्चयस्य प्राधान्यम्, अनुप्रासस्योपसर्जनत्वं, माधुर्यं च गुणः।

## सुधासागरः

क्रमप्राप्तं चित्रकाव्यं लक्षयति 'शब्दार्थे'ति।

यद्यपि शब्दार्थचित्ररूपभेदद्वयं प्रथमोल्लास एव दर्शितम्, तद्भेदाश्चालङ्कारप्रदर्शनेनैव दर्शिता भवीष्यन्तीति न दर्शनीयं किञ्चिदस्ति, तथापि शब्दानां चित्रतायां प्रधानीभूतायामर्थचित्रताया गुणत्वम्, एवमर्थानां चित्रतायां शब्दचित्रताया गुणत्वं, न तूभयोरुभयत्राभाव इति गुणप्राधान्येन स्थितिवशादनयोर्विभाग इति दर्शयितुं शब्दार्थालङ्कारावप्यस्माकमिष्टौ न त्वन्यतर इति च दर्शयितुमयमारम्भः। उदाहृतं स्वच्छन्देत्यादिना विनिर्गतमित्यादिना च। ननु प्रथमे व्यतिरेकालङ्कारस्यार्थस्य चित्रत्वं द्वितीये च मानदमात्ममन्दिरादिति मकारस्यासकृदावृत्त्या वृत्त्यनुप्रासेन शब्दस्य चित्रत्वमस्ति, तत्कथमयं विभाग इत्यत आह—गुणप्राधान्यत इति। यत्कृतचारुत्वस्योत्कटत्वं तस्य प्राधान्यमन्यस्य गुणत्वमिति। एतेन सर्वत्रैककाव्ये शब्दार्थालङ्कारवत्त्वमावश्यकम्, केवलं कस्यचिद् गुणत्वं कस्यचित्प्राधान्यमिति भावः। उभयालङ्काराणां चमत्कारप्रयोजकत्वे प्रामाणिकसम्मतिमाह—तथा चोक्तमित्यादि।

ननु विप्रतिपत्त्यभावात् कथं प्रामाणिकादरणमित्याशङ्क्य वादिविप्रतिपत्तिमुद्भावयति—रूपकादीति। विभाति विभावतां प्राप्नोति कुण्डलादिमत्त्वेनैव विभावनीयत्वात्। विभावादित्वेन प्राप्तानामर्थानामेव रसत्वमिति तेषां

## साहित्यचूडामणिः

ननु शब्दचित्रे चन्द्रोदयस्योद्दीपनस्य वर्णनीयतया शृङ्गारो व्यङ्ग्यः। अर्थचित्रे च कामिनीलक्षणस्यालम्बनस्येति कथमव्यङ्ग्यमिति चेत् तत्राह—यद्यपीति स्फुटस्येति। विवक्षोपारूढ एव हि काव्ये शब्दानामर्थः। यदाह—

रसभावादिविषयविवक्षाविरहे सति।
अलङ्कारनिबन्धो यः स चित्रविषयो मतः॥
रसादिषु विवक्षा तु स्यात् तात्पर्यवती यदा।
तदा नास्त्येव तत् काव्यं ध्वनेर्यत्र न गोचरः॥ ध्व० ३.४२ सं०॥ इति।

इत्थमस्य काव्यस्याधमत्वमनुसन्धेयम्, न सर्वथा। यदाह—

रसभावाङ्गभावस्तु यमकादेर्न वार्यते।
ध्वन्यात्मभूते शृङ्गारे त्वङ्गता नोपपद्यते॥ ध्व० २.१६ सं०॥ इति।

अलंकारनिर्णये नवमे दशमे चेति सिद्धम्॥ १॥

शब्दार्थचित्रघटनापटवः कवीन्द्राः संस्थानवर्णगतिबन्धविभक्तशोभाम्।
अल्पोदरामनुदरामिव राजकन्यामल्पध्वनिं भणितिमध्वनिमामनन्ति॥

इति साहित्यचक्रवर्तिलौहित्यभट्टगोपालविरचितायां साहित्यचूडामणौ काव्यप्रकाशविमर्शिन्यां षष्ठ उल्लासः॥ ६॥

## सुधासागरः

परिष्करणमुचितम्। अर्थे प्रत्याय्योपक्षीणानां शब्दानामलङ्कारस्यानादरणीयत्वात्। बाह्यमर्थसन्निधिम्। सुपां तिङां तदन्तानाम्। विशिष्टोत्पत्तिर्व्युत्पत्तिरनुप्रासादिना निर्माणम्। वाञ्छन्ति अत्यन्तोपादेयत्वेनाभिलषन्ति। ईदृशी यथा शब्दव्युत्पत्तिः। सौशब्द्यं शब्दनिर्माणसौष्ठवम्। अयमर्थः—शब्दैरभिव्यज्यमानानामास्वादानां विभावादिभिरर्थैरुपचायनम्, ते च माधुर्यादिव्यञ्जकवर्णघटितानुप्रासादिमत्तया रचिता एव तद्व्यञ्जने प्रभवन्ति, तेन शब्दालङ्काराणामावश्यकत्वम्, पाश्चात्यानामर्थालङ्काराणामकिञ्चित्करता, तैर्विनाऽपि शब्दालङ्कारैरभिव्यक्तेरिति। तदाह—बाह्यमिति। आस्वादोत्पत्तिदशायां तदनुपलम्भात् शब्देत्यादि। अभिधेयं प्रतिपाद्यं तेन लक्ष्यव्यङ्ग्ययोर्ग्रहणम्। नोऽस्माकं। द्वयोरप्यास्वादोपकारकत्वस्य सहृदयैकवेद्यत्वात् कविसंरम्भगोचरत्वाच्चेति।

व्याख्यातञ्च प्रदीपकारैः—एवं गुणीभूतव्यङ्ग्यभेदे निर्णीते चित्रभेदं दर्शयितुमवसरः। तत्र यद्यपि शब्दचित्रार्थचित्ररूपभेदद्वयं प्रथमोल्लास एव दर्शितम्, तत्प्रभेदाश्चालङ्कारप्रभेददर्शनेनैव प्रदर्शिता भविष्यन्तीति न किञ्चिदस्ति तत्र प्रदर्शनीयम्, तथापि प्रदर्शितभेदद्वयमेव तावदनुपपन्नम्, शब्दार्थालङ्कारयोरन्योन्यनैरपेक्ष्येणानुपलम्भात्, उपलम्भेऽपि बाधभयसद्भावे तृतीयभेदप्रसङ्गादिति तदुपपादयति। शब्दार्थचित्रमित्यादि। शब्दार्थालङ्कारयोरेकैकमात्रावस्थानपुरस्कारेण न विभागः, किन्तु प्राधान्यपुरस्कारेण, तथा च न काचिदनुपपत्तिरिति भावः।

## सुधासागरः

ननु तथापि विभागोऽनुपपन्न एव, यतः केचिच्छब्दालङ्कारमात्रं केचिच्चार्थालङ्कारमात्रमूरीचक्रिरे, तत्कस्य मतमाश्रित्य विभाग इति चेत्, सन्त्येव केचिदुभयाङ्गीकारिणः, तथोक्तम्—रूपकादिरलङ्कारेत्यादि। अस्यार्थः—अर्थस्यैव विभावादिरूपत्वेन रसव्यञ्जकत्वात्तन्निष्ठो रूपकादिरेवालङ्कारः कैश्चिदुक्तः। केचित्तु काव्यस्यालङ्कारो वाच्यः। काव्यञ्च कविकर्म शब्द एवेति तदाश्रिता सुप्तिङां विशिष्टोत्पत्तिरलङ्कारः। रूपकादिस्त्वर्थाश्रितोऽलङ्कारो बाह्यः। अलङ्कारप्रयोगस्तु तत्र गौण एवेति वाञ्छन्ति। व्युत्पत्तिरेव कथं नार्थालङ्कार इत्यत आह—तदेतदाहुरित्यादि। शब्दाभिधेयेति। शब्दवदर्थस्यापि कविसंरम्भज्ञाप्यत्वमर्थस्येव शब्दस्यापि रसप्रतीत्युपयोगित्वमत उभयाश्रितोऽप्युभयरूपोऽलङ्कार इतीति।

शब्दचित्रमुदाहरति-'प्रथममि'-ति। हरिणी छन्दः। 'रसयुगहयैर्न्सौ म्रौ स्लौ गो यदा हरिणी तदा' इति लक्षणात्। मृगलाञ्छनश्चन्द्रः, क्षणदामुखे रजनीप्रारम्भे उदयति, शेषं मृगलाञ्छनविशेषणम्। क्रमेण तत्तद्वर्णता। स्वभावोक्तिः।

यद्यपि किञ्चिद् व्यङ्ग्यमपि सम्भवति, तथा हि—प्रथमं तावदरुणच्छायः, अरुणस्येव छाया रक्तदीप्तिर्यस्य तथाभूतः। ननु स्वोत्कर्षासहिष्णोरनुकारोऽनुचित इति विचार्य तदनन्तरं कनकप्रभः। ननु प्रतिस्पर्द्धिकान्तामुखमण्डनमेतदित्यस्याप्यनुकारोऽनुचित इति विरहोत्ताम्यत्तन्वीकपोलतलद्युतिः। ननु यत्सम्बन्धात्कनकप्रभा त्यक्ता तदनुकारोऽत्यन्तानुचित इति ततोऽनन्तरं ध्वान्तध्वंसेत्यादिबोधितरूपान्तरमाश्रित इति। तथाऽप्यत्र न कवेस्तात्पर्यमित्यधमकाव्यत्वम्। एवमग्रेऽपि द्रष्टव्यम्। स्पष्टीकृतं चैतत्प्रथमोल्लासे।

अत्र तकाराणां ककारयोर्धकारयोः क्षकारयोश्लकारयोश्च साम्यमित्यनुप्रासप्रकर्षाच्छब्दचित्रता, अर्थालङ्कारस्योपमाया नोद्भटतेति भावः। अत एव प्रदीपकारैरुक्तम्—अर्थालङ्कार उपमा गुणीभूता शब्दालङ्कारस्त्वनुप्रासः प्रधानम्। आसमाप्ति कवेस्तत्रैव संरम्भात्, प्राधान्यस्य कविविवक्षामात्रनिबन्धनत्वादिति।

अर्थचित्रमुदाहरति। 'अर्थचित्रं यथे'ति, 'ते दृष्टी'-ति च।

अयमर्थः—ते सकलवशीकरणसमर्थाः, दृष्टिमात्रपतिता दृग्गोचरतां गता अपि, पक्ष्मलदृशां घनपक्ष्माक्षीणां सुन्दरीणाम्, पक्ष्मलेति भूम्नि लच् प्रत्ययः, अलकाश्चूर्णकुन्तलाः, खलाः शठाश्च, अत्र संसारे कस्य पुरुषस्य, क्षोभाय धैर्यविघाताय मालिन्योत्पादनाय च न भवन्ति, अपि तु सर्वस्यापि क्षोभं जनयन्ति। कथम्भूताः नीचाः लम्बायमानाः पापाश्रयाश्च, सदैव सविलासं यथा स्यात्तथा, अलीके ललाटे लग्नाः संरूढाः मिथ्यावचनोद्युक्ताश्च येऽलकाः खलाश्च कालतां कृष्णवर्णतां परपीडाकारकत्वेन यमताञ्च, कुटिलतां वक्रताम् अनभिव्यक्तपरापचिकीर्षाञ्चापि, अपिशब्दः समुच्चये, न त्यजन्ति न मुञ्चन्तीति। अत्र शब्दालङ्कारोऽनुप्रासः गुणीभूतः, श्लेषप्रतिभाहेतुः समुच्चयोऽर्थालङ्कारस्तु प्रधानम्, आरम्भादासमाप्ति तन्निर्वाहणात्।

# सप्तमे उल्लासः

काव्यस्वरूपं निरूप्य दोषाणां सामान्यलक्षणमाह—

मुख्यार्थहतिर्दोषो रसश्च मुख्यस्तदाश्रयाद् वाच्यः।
उभयोपयोगिनः स्युः शब्दाद्यास्तेन तेष्वपि सः॥ १॥

हतिरपकर्षः। शब्दाद्या इत्याद्यग्रहणाद् वर्णरचने।

## साहित्यचूडामणिः

अकलङ्कशशिच्छाया जीयाद् देवी सरस्वती।
यया कविचकोराणां पारणा परिपूर्यते॥

उल्लाससङ्गतिमासूत्रयति—काव्येति। दोषाणामिति। 'तददोषौ शब्दार्थावि'[1]त्युक्तक्रमेण दोषाणां गुणानामलङ्काराणां च लक्षणीयत्वात्।

सामान्यलक्षणमिति। तदुपक्रमत्वाद् विशेषलक्षणस्य। मुख्येति। मुख्यार्थस्य हतिर्दोषः। ननु 'स मुख्योऽर्थ' इत्युक्तयुक्त्या किं 'साक्षात्सङ्केतितस्यार्थस्य, नेत्याह—रसश्चेति। चस्त्वर्थे। गुणवृत्तिरमुख्यो व्यापारः। अभिधाव्यञ्जनयोरुभयोरपि मुख्यत्वमिति भावः। तदाह—"यदमुख्यतया व्यापारो गुणवृत्तिर्व्यञ्जनं तु मुख्यतये"ति। यद्वा वाच्यस्य मुख्यत्वं लक्ष्यादेरर्थात्[2] प्राथमिकत्वं, रसस्य तु सर्वाकार-

## सुधासागरः

यद्यपीत्यादि। अयं भावः पूर्वापरश्लोकद्वये उद्दीपनालम्बनविभावयो रसपर्यवसायित्वमिति तदुपकारकत्वेनालङ्कारता तयोः, तथापि रसस्य स्फुटत्वेनानुपलम्भाद्व्यङ्ग्यमेवैतद् द्वयमिति। एषां भेदाश्चालङ्कारभेदाद् भवन्तीत्यलङ्कारनिर्णयेनैव ते निर्णेष्यन्ते। तदाह—अत्र चेत्यादि॥ १॥

इति श्रीमत्पदवाक्यप्रमाणपारावारीणदीक्षितभीमसेनकृते
काव्यप्रकाशविवरणे सुधासागरे चित्रभेदप्रतिपादकः
षष्ठ उल्लासः॥ ६॥

काव्यस्वरूपमित्यादि। [3]अयमाशयः—एवं धर्मिणि काव्ये सप्रभेदे निरूपिते प्राप्तावसरतया दोषाभावादीनि, काव्यलक्षणस्थानि विशेषणानि विवेचनीयानि। तेषु च दोषाभावः प्रधानम्, सति दोषे गुणादेरप्यकिञ्चित्करत्वात्। यदाह—'स्याद् वपुः सुन्दरमपि श्वित्रेणैकेन दुर्भगम्' इति। सति तु दोषाभावे गुणादिकं विनापि

---

[1] 'काव्यप्रकाश २.३ कारिका। पृ० ५८।

[2] 'शाखादिभ्यो य' इति सूत्रान्मुख्यमिति मुखसादृश्ये य-प्रत्ययः। सादृश्यं च प्रथमोपस्थितिकत्वेनेति मुकुलादयः।

[3] काव्यप्रदीप एषः।

## साहित्यचूडामणिः

प्राथम्यम्। तस्य च 'विवक्षितरसभावादिप्रतीतिविघ्नविधायित्वं नाम सामान्यलक्षणमि'ति[१] व्यक्तिविवेकयुक्त्या रसचमत्कारतिरोधानं दोष इति यावत्। ननु 'व्यभिचारिरसे'त्यादि वक्ष्यमाणक्रमेण कतिपय एव रसदोषाः, अपुष्टत्वादयस्त्वर्थभागभागिन इत्यव्याप्तिर्लक्षण इति चेत्, तत्राह—तदाश्रयादिति। रसाश्रयभूतत्वादभिधेयरूपो मुख्यभूतः। औपचारिकं तन्मुख्यत्वमिति भावः। तेन हि शब्दादिविषयेषु तावद् व्याप्तिरित्याशङ्क्याह—उभयेति। रसस्य वाच्यस्य चोपयोगिनः व्यञ्जकत्ववाचकत्वादिनोपकारकाः शब्दवर्णादयः। तेन हेतुना तेषु शब्दादिष्वपि स दोषो दृश्यते। अयं भावः प्रतिकूलविभावादिग्रहादिवद् दुष्टत्वादयोऽपि रसस्यैव दोषाः। उपचारादर्थशब्दादीनामिति।

हतिशब्दो लक्षणीय इत्याह—अपकर्ष इति॥ १॥

## सुधासागरः

किञ्चिदाह्लादसम्भवात्, 'अपदोषतैव विगुणस्य गुणः' इति न्यायात्। अत एव काव्यलक्षणेऽदोषाविति दोषाभावस्य गुणालङ्कारात् प्रागुपादानम्। अतः प्रथमं तस्मिन्निरूपणीयेऽभावस्य स्वरूपतो निरूपणानर्हतया प्रतियोगिनिरूपणाधीननिरूपणीयत्वाद् हेयापरिचये तद्धानासम्भवाच्च दोषा निरूपणीयाः। न च सामान्येऽविज्ञाते विशेषजिज्ञासेति सामान्यलक्षणमाह—मुख्यार्थहतिरित्यादि। मुख्यार्थस्य हतिर्यस्मादिति व्यधिकरणत्वेऽपि गमकत्वाद् बहुव्रीहिः। करणसाधनो हतिशब्द इत्येके। मुख्यत्वमर्थस्य न शक्यत्वलक्षणं येनार्थासङ्गतिः स्यात्, किन्त्वन्यदित्याह—रसश्चेति। रस्यते इति व्युत्पत्त्या भावादिरप्युपसंगृह्यते।'

अत्र मिश्राः—मुख्यायेदं मुख्यार्थमिति चतुर्थीसमासः, तच्च शब्दार्थयुगलम्, तस्य हतिरन्यथात्वम्, यस्य येन रूपेण रसव्यञ्जकत्वं तस्य तद्रूपप्रच्यवः। फलन्तु रसस्य सम्यगनवभासः। लोकेऽपि दृष्टो दीपादिव्यञ्जकवैगुण्येन घटादेः सम्यगनवभास इत्याहुः।

वस्तुतस्तु मुख्यश्चासावर्थश्चेति कर्मधारयः। न चात्र समस्यमानपदार्थतावच्छेदकयोः परस्परव्यभिचाराभावात् कर्मधारयासम्भवाऽर्थपदवैयर्थ्यं चेति दूषणद्वयमिति वाच्यम्, भावानवबोधात्। तथाहि मुख्य इतरेच्छानधानेच्छाविषयः, तच्च सुखम्, स्वतः पुरुषार्थत्वात्। यद् वक्ष्यति—'रसश्च मुख्य' इति। एवञ्च मुख्यत्वमात्रं सुखान्तरेऽप्यतिप्रसक्तमिति तद् वारणायार्थपदम्। अर्थत्वं शब्दजन्यप्रत्यक्षविषयत्वम्। काव्यादन्यतः शब्दात् सुखस्य न प्रत्यक्षम्, सुखांशे आवरणभङ्गाभावात्, काव्योपात्तविभावादिप्रतीत्यैव तद्भङ्गात्, किन्तु शाब्दबुद्धिरेवेत्यदोषः। अर्थत्वमात्रं शब्देऽपीति मुख्यत्वमुपात्तम्। शब्दे तज्जन्यसाक्षात्कारविषयतयाऽतिव्याप्तिवारकं मुख्यपदमित्यर्थः।

---

१ व्यक्तिविवेकद्वितीयविमर्शारम्भे।

## सुधासागरः

एतेन मुख्यत्वार्थत्वयोः परस्पराव्यभिचारात्कर्मधारयानुपपत्तिरर्थपदवैयर्थ्यं चेत्यपास्तमिति भावः।

नन्वेवं नीरसेषु न कश्चिद्दोषः स्याद् विभावाद्यभावादित्यत आह–तदाश्रयाद् वाच्य इति। आश्रयणमाश्रयः। तथा च तेन रसेनाश्रयणादुपकारित्वेनापेक्षणाद् वाच्योऽपि मुख्य इत्यर्थः। न चैवं मुख्यशब्दार्थस्य नानात्वेनाननुगमः, काव्ये प्राधान्येनोद्देश्यप्रतीतिविषयत्वेनानुगमात्। तदेवं रसवति सर्व एव दोषाः, नीरसे तु अविलम्बितचमत्कारिवाक्यार्थप्रतीतिविघातका एव हेयाः इति मन्तव्यम्।

नन्वेवं तयोरेव दोषाधारत्वमुचितं न तु शब्दादीनामित्यत आह— उभयोपयोगिन इत्यादि। अत्र शब्दपदं प्रतिपादनात्मकशब्दनाव्यापारवतोः पदवाक्ययोर्वर्त्तते। तेन 'आद्यपदाद् वर्णरचने सङ्गृहीते' इति प्रकाशस्वरसः। न च तत्र बीजाभावः, अन्यथा वर्णस्यापि शब्दपदेनैव प्राप्तौ शब्दाद्या इति बहुवचनासङ्गतेः। स्यादेतत्। हतिर्विनाशः। न च दोषेण रसो नाश्यते, दुष्टेष्वपि रसानुभवात्। तस्मादलक्षणमेतत्। मैवम्। हतिशब्दस्यापकर्षवाचित्वात्। नन्वेवं रसानुत्पत्तिप्रयोजकेष्वव्याप्तिः। अथानुत्पत्तिरेव हतिशब्दार्थः, तर्हि यत्र रस उत्पद्यत एव, परन्त्वपकृष्यते, तत्राव्याप्तिः। तदेतल्लक्षणमतिदरिद्रदम्पत्योः कृशतरनिशावगुण्ठनीयवसनमिवैकेनापकृष्यमाणमपरं परिहरति। किञ्च–अर्थरूपस्य मुख्यार्थस्यानुत्पत्तिरपकर्षो वा न दोषाधीन इति।

अत्र ब्रमः—उद्देश्यप्रतीतिविघातलक्षणोऽपकर्षो हतिशब्दार्थः। उद्देश्या च प्रतीती रसवत्यविलम्बिताऽनपकृष्टरसविषया च, नीरसे त्वविलम्बिता चमत्कारिणी चार्थविषया। तथा च तादृशप्रतीतिविघातकत्वं सर्वेषामविशिष्टम्। यतो दुष्टेषु क्वचिद् रसस्याप्रतीतिरेव, क्वचित्प्रतीयमानस्यापकर्षः, क्वचिद् विलम्बः। एवं नीरसे क्वचिदर्थस्य मुख्यभूतस्याप्रतीतिरेव, क्वचिद् विलम्बेन प्रतीतिः, क्वचिदचमत्कारितेत्यनुभवसिद्धमित्युद्देश्यप्रतीत्यनुत्पादो व्यक्त एव। तद्विघातकता च कस्यचित् साक्षात्, यथा—रसदोषाणाम्, कस्यचित् परम्परया यथा—शब्दार्थदोषाणाम्। तेष्वपि कस्यचिदर्थोपस्थितेरभावात्, यथा–असमर्थत्वादेः, कस्यचिद् वाक्यार्थबोधाभावाद् यथा–च्युतसंस्कृत्यादेः, कस्यचित्तत्र बिलम्बाद् यथा—क्लिष्टत्वादेः, कस्यचित्सहृदयवैमुख्यव्यग्रताद्युत्पादनेन, यथा—निरर्थकत्वादेः। कस्यचिद्विरोध्युपस्थापनेन विपरीतार्थोपस्थापनेन वा, यथा—विरसविरुद्धमतिकृत्त्वादेरित्याद्यूह्यम्।

विघातकत्वञ्च कस्यचिज्ज्ञातस्य यथा—व्याहतत्वादेः। कस्यचित्तु स्वरूपसत एव, यथा— निहतार्थत्वादेः।

स चायं दोषो द्विविधः—नित्यश्चानित्यश्च। तत्रानुकरणादन्येन प्रकारेण समाधातुमशक्यो नित्यः, यथा—च्युतसंस्कृत्यादिः, अन्यादृशस्त्वनित्यः, यथा— अप्रयुक्तत्वादिः। तदेतत् सर्वमभिप्रेत्य श्रीवाग्देवतावतार आह-हतिरपकर्ष इत्यादि ॥१॥

विशेषलक्षणमाह—

**दुष्टं पदं श्रुतिकटु च्युतसंस्कृत्यप्रयुक्तमसमर्थम् ।**
**निहतार्थमनुचितार्थं निरर्थकमवाचकं त्रिधाऽश्लीलम् ॥२॥**
**सन्दिग्धमप्रतीतं ग्राम्यं नेयार्थमथ भवेत् क्लिष्टम् ।**
**अविमृष्टविधेयांशं विरुद्धमतिकृत् समासगतमेव ॥३॥**

## साहित्यचूडामणिः

तत्र दुष्टस्थलोपलक्षणीयत्वाद् दोषाणां दुष्टादिपदान्युद्दिशति—दुष्टमिति ।

## सुधासागरः

विशेषलक्षणमाहेति । अयमाशयः—'अथ विशेषलक्षणानि वक्तव्यानि, तत्र द्विविधोऽप्ययं त्रिविधः, शब्ददोषोऽर्थदोषो रसदोषश्चेति । तत्र शब्दार्थरसानां यथापूर्वमुपस्थितिः प्राथमिकी तत्क्रमेणैव दोषभेदा निरूणीपया इति शब्ददोषाणां प्राथम्यम् । शब्दस्त्रिधा, पदं तदेकदेशो वाक्यं च । एवं च तदाश्रितः शब्ददोषोऽपि त्रिविधः । तत्र पदानां वाक्यघटकत्वेन प्राथम्यात्प्रथमं तद्दोषनिरूपणमिति परमार्थः । तत्रेदं निरूप्यते—एवं पदैकदेशस्य पदापेक्षयाऽपि प्राथम्यात्तद्दोषनिरूपणस्यैव प्राथम्यमर्हतीति । अत्र भास्करः—सत्यमुच्यते, परन्तु पददोषेष्वेव केचित्पदैकदेश दोषाः इति समादधे । तन्नातिमनोरमम् । अस्त्वेवं तथापि पदैकदेशदोषत्वेन प्रथममभिधानापादने किमुत्तरमिति । वयन्त्वालोचयामः—उपदेशो तावत्प्राथम्यादिविचारणा । अतिदेशस्तूपदेशानन्तरमेव । न च पदैकदेशे दोषोपदेशः, अतिदेशेनैव तल्लाभे लाघवात् । न च पदैकदेशे एवास्तूपदेशः, पदे त्वतिदेश इति वाच्यम्, पदैकदेशावृत्तीनामपि केषाञ्चित् पदवृत्तित्वेन तदर्थं पदेषूपदेशस्यावश्यकत्वादि'-ति[१] पददोषविशेषलक्षणमाह ।

अत एवोक्तं श्रीवात्सलाञ्छनभट्टाचार्यैः—काव्यलक्षणे शब्दस्य प्राङ्निर्देशे तद्दोषे प्रथमं वक्तव्ये—तथाऽपि पदांशवाक्ययोः पदनिरूप्यत्वेन प्रथमं पददोषानाहेति ।

दुष्टं पदमित्यादि । दुष्टं पदमिति प्रत्येकमभिसम्बध्यते । ननु श्रुतिकटुप्रभृतिशब्दानां लक्षणपरत्वे विभागपरत्वाभावाल्लक्ष्यानुपस्थितौ कथं लक्षणवाक्यत्वनिर्वाह इति । उच्यते । श्रुतिकट्वादिपदेभ्यो रूढियोगाभ्यामुभयार्थोपस्थितौ लक्ष्यलक्षणयोरुभयोरपि प्रत्ययः । यथा 'घ्राणरसनचक्षुस्त्वक्श्रोत्राणीन्द्रियाणि भूतेभ्यः' इतीन्द्रियलक्षणसूत्रे गौतमीये ।

अथैषां लक्षणवाक्यत्वे 'त्रिधाश्लीलम्'इत्यत्र त्रिधेति निरर्थकम्, तस्य विभागमात्रार्थत्वेन लक्षणेऽनुपयोगादिति चेत् । न । अश्लीलशब्दस्य व्रीडादिव्यञ्जकत्रितयसाधारणैकावयवशक्तिविरहेण नानार्थतया लक्षणत्रयार्थत्वमित्यस्य तदर्थत्वात् ।

[१] प्रदीप एषोऽविकलः ।

१. श्रुतिकटु परुषवर्णरूपं दुष्टम् । यथा—

अनङ्ग-मङ्गल-गृहापाङ्ग-भङ्गि-तरङ्गितैः ।
आलिङ्गितः स तन्वङ्ग्या कार्तार्थ्यं लभते कदा ॥

—अत्र कार्तार्थ्यमिति ।

---

## साहित्यचूडामणिः

पदवाक्यतदुभयार्थादिभेदादमीषां बाहुविध्यं स्वयमनुसन्धेयम्, तत्तत्संज्ञया विशेषलक्षणमूहनीयमित्याशयादाह श्रुतिकट्विति । यस्य कष्टमिति व्यपदेशान्तरम् । कार्तार्थ्यमित्यादिवृद्धिप्रयुक्तं कष्टत्वम् ।

## सुधासागरः

तत्र श्रुतिकटुत्वं यद्यपि श्रुत्युद्वेजकत्वम्, तच्च पुरुषभेदेनानियतम्, तथापि तज्जनकतावच्छेदकरूपवत्वं विवक्षितम्, तच्च परुषवर्णत्वम्, तच्च दुर्वचत्वम् । तदाह—श्रुतिकटु परुषवर्णरूपमिति ।

अत्र सारबोधिनीकाराः—

परुषवर्णत्वं मुख्यार्थताऽपकर्षकत्वे सत्योजोव्यञ्जकवर्णत्वम् । वीरादिष्वदुष्टतया तदतिप्रसङ्गवारणाय सत्यन्तम्, वीरादिषु तु मुख्योत्कर्षकत्वाददोषत्वम् । न च प्रतिकूलवर्णेनास्य सङ्करः । उपधेयसाङ्कर्येऽप्युपाध्योरसाङ्कर्यात् । तथा हि—अत्र प्रकृतरसव्यञ्जकवर्णाभावाद् रसोद्बोधरूपं कार्यं न जायते, प्रतिकूलवर्णे तु प्रकृतरसप्रतिबन्धकैर्वर्णैः प्रतिबध्यत इत्यनयोरेकत्र व्यञ्जकवर्णाभावात्कारणाभावप्रयुक्तकार्याभाववत्त्वम्, अपरत्र प्रतिकूलवर्णसद्भावात्प्रतिबद्धकार्यकत्वमेव दूषकताबीजम् । इदं मधुररस एव दूषकम्, प्रतिकूलवर्णं तु सर्वत्रेति स्मर्त्तव्यमित्याहुः । वयन्तु प्रतिकूलवर्णव्याख्यावसरेऽनयोर्भेदं प्रतिपादयिष्यामः । उदाहरणम्—अनङ्गेत्यादि । शम्भल्याः कयोश्चित्समागमानुध्यानमिदम् । अयमर्थः-मद्बुद्धिस्थो युवा तन्वङ्ग्या कृशाङ्ग्या अनङ्गमङ्गलगृहापाङ्गभङ्गितरङ्गितैः कन्दर्पोत्सवमन्दिरायमाणकटाक्षप्रकारोत्तराविच्छेदैः करणभूतैरालिङ्गितः सन् कदा कार्त्तार्थ्यं लभते कृतार्थतां प्राप्स्यति । कदा योगे भविष्यति वर्त्तमानता ।

'अत्र कार्तार्थ्यमिति पदं परुषवर्णप्रायम् । किं पुनरस्य दूषकताबीजम्, उद्वेगजनकत्वमिति चेन्न । रौद्रादावपि दोषत्वप्रसङ्गात् । माधुर्यव्यञ्जकरचनामध्यगुम्फितमेव तदुद्वेजयतीति चेत्, तत्किं तादृशत्वेन ज्ञातं तथा, उत स्वरूपसदेव । नाद्यः, रसविशेषव्यञ्जकत्वाज्ञानेऽपि प्राथमिकतादृशपदश्रवणेनोद्वेगाभावप्रसङ्गात् । न चेष्टापत्तिः, अनुभवविरोधात् । अन्त्ये तु सत्यादयः प्रमाणम्, न ह्यविदितविशेषानपि तत्रैव तदुद्वेजयति नान्यत्रेति प्रमाणमस्ति । किञ्च एवं वैयाकरणादौ वक्तरि किंनिबन्धनो दोषत्वाभावः स्यात् । अत्रोच्यते—स्वायत्ते शब्दप्रयोगे कर्णोपतापकशब्दप्रयोगेण

२. च्युतसंस्कृति व्याकरणलक्षणहीनम् । यथा—

एतन्मन्दविपक्वतिन्दुकफलश्यामोदरापाण्डर-
प्रान्तं हन्त पुलिन्दसुन्दरकरस्पर्शक्षमं लक्ष्यते ।
तत् पल्लीपतिपुत्रि, कुञ्जरकुलं कुम्भाभयाभ्यर्थना-
दीनं त्वामनुनाथते कुचयुगं पत्रावृतं मा कृथाः ॥

—अत्रानुनाथते इति सर्पिषो नाथते इत्यादाविवाशिष्येव नाथतेरात्मनेपदं विहितम् 'आशिषि नाथ' इति । अत्र तु याचनमर्थः । तस्मादनुनाथति स्तनयुगमिति पठनीयम् ।

---

## साहित्यचूडामणिः

च्युतेति । संस्कृतिर्व्याकरणलक्षणं, सा गलिता यस्माद् असाधुरपशब्दश्चेति । तदुक्तम् [ महिमाचार्येण ]—

## सुधासागरः

श्रोतुरुद्वेगो रसापकर्षायेति स एव तद्बीजम् । अत एव प्रतिकूलवर्णादस्य भेदः, तस्य कर्णोपतापाहेतुत्वात् । अत एव चानुकरणे वैयाकरणादौ वक्तरि श्रोतरि वा रौद्रादौ रसे व्यङ्ग्ये नीरसे च काव्येऽस्य दोषत्वाभावः, आद्ये तस्यैवानुकरणीयतया स्वायत्त्याभावात्, द्वितीये च तत्स्वभावावगमेनोद्वेगाभावात्, तृतीये च श्रोतुस्तेनानुद्वेगात्, चतुर्थे तदनुगुणत्वेनोद्वेगाहेतुत्वात्, पञ्चमे मुख्यार्थहतेरभावात् । एवमर्थौचित्यप्रकरणादिविशेनाप्यनुद्वेजकतया दोषत्वाभाव उपपद्यते'-[इति प्रदीपः] । एवं च श्रुतिवैरस्याधायकशब्दत्वं श्रुतिकटुत्वमिति रविभट्टाचार्योक्तं नादरणीयम् ।

च्युतसंस्कृतीत्यादि । च्युता स्खलिता संस्कृतिः संस्करणं व्याकरणलक्षणानुगमो यत्र । यद्भाषासंस्कारकव्याकरणलक्षणविरुद्धं यत् तत् तद्भाषायां च्युतसंस्कृतीत्यर्थः । देश्यन्तु न लक्षणविरुद्धं किन्तु तदविषयः । संज्ञाशब्दानां बहुलवचनेन संस्कृतत्वान्न तत्रातिव्याप्तिः । अत एव सारबोधिनीकारैर्व्याख्यातम्—व्याकरणेति लक्षणसूत्रम्, तद्धीनं तदविषयः, व्याकरणव्युत्पत्तिविरहादित्यर्थः । संज्ञाशब्दानां डित्थादीनां लडहादीनां प्राकृतानां च—'उणादयो बहुलम्', 'लडहादयो बहुलम्' इति सामान्यतो व्युत्पन्नत्वान्न दोष इति । मिश्रस्तु व्याकरणेन लक्ष्यते इति लक्षणे साधुत्वमित्याहुः । यथेत्युदाहरति—एतन्मन्देति ।

शार्दूलविक्रीडितं छन्दः । हे पल्लीपतिपुत्रि मुख्यशबरकन्ये, एतत् पुरो दृश्यमानं त्वत्कुचयुगं मन्दविपक्वतिन्दुकफलवत् श्यामोदरमापाण्डुरप्रान्तं च अत एव पुलिन्दसुन्दरकरस्पर्शक्षमं भिल्लहस्तमर्दनयोग्यं लक्ष्यते । तत्कारणात् कुञ्जरकुलं हस्तिसमुदायः कुम्भाभयाभ्यर्थनात्प्राणरक्षणवाञ्छनादिति भावः, दीनं यथा स्यात्तथा त्वामनुनाथते याचते । किमित्याकाङ्क्षायामाह—कुचयुगं

## साहित्यचूडामणिः

असाधुरपशब्दश्च द्विधा शब्दः प्रकीर्तितः ।
तत्रासाधुरसाध्यो यः प्रकृतिप्रत्ययादिभिः ॥
शब्दादपेतोऽपशब्दः शब्दनाकरणात्मनः ।
शब्दना हि परामर्शो वाच्यार्थविषयोऽस्य यः ॥
एवञ्चासाधुशब्दोऽपि नापशब्दत्वमर्हति ।
न सोऽप्यभ्येति साधुत्वं तयोर्विषयभेदतः ॥[१]

'अस्मान् प्रति पुनरविषये प्रयुज्यमानः शब्दोऽपशब्द एवे'[२]-ति व्यक्तिविवेकयुक्त्या प्रकृतिप्रत्ययाद्यसिद्धस्यासाधुत्वं, त्रिगुणसामग्रीकस्य, तत्राप्यविषयप्रयुक्तस्यापशब्दत्वम् । तद्द्वैविध्यं तु विधायैवमुक्तिर्यस्मादसाधोरप्यनुमानाद् वाचकत्वमस्ति । यदाहुः—

असाधुरनुमानेन वाचकः कैश्चिदिष्यते ।
वाचकत्वाविशेषेऽपि विशेषः पुण्यपापयोः ॥
अस्वगोण्यादयः शब्दाः साधवो विषयान्तरे ।
निमित्तभेदात् सर्वत्र साधुत्वं च व्यवस्थितम् ॥[३]

कुम्भाभयेति । कुञ्जराणां कुम्भेष्वेव पुलिन्दशरपातौचित्यात् पत्रावृतं मा कृथाः । अनावृते हि कुचकुम्भे पुलिन्दसुन्दरीणां रणरणकवशात् क्षीणशक्तित्वेन गजकुम्भविदारणपटीयस्त्वं न भवतीत्यर्थः । अनुनाथत इत्येतदसाधु 'आशिषि

## सुधासागरः

पत्रावृतं मा कृथाः । भिल्लकरस्य तद्व्यासङ्गेन धनुस्त्यागात्स्यादेव प्राणरक्षणमिति भावः । केचित्तु पत्रानावरणेऽनयोः कतरः कुम्भ इति हनने मौढ्यं भविष्यतीति भावमाहुः । पल्लीपतिपुत्रीत्यनेन तव भीतत्राणमुचितमिति व्यज्यते ।

अत्र नाथते इति याचत इत्यर्थे च्युतसंस्कृतिः । सामान्यतस्तिबादिसूत्रेण प्राप्तस्यात्मनेपदस्य नियामकेन 'आशिषि नाथः' इति सूत्रेणानाशिषि तन्निषेधात् । न चाशीरर्थः, त्वामिति कर्मतानुपपत्तेः, इष्टार्थस्यैवाशंसाविषयत्वात् । तस्मान्नाथति स्तनयुगमिति पठनीयम् ।

ननु नाथते इति स्वस्वरूपं संस्कृतमेव, तथा चार्थविशेषे न तथेति वक्तव्यम्, एवं चार्थदोषत्वं प्राप्तमिति, मैवम् । यत्र शब्दपरिवर्त्तनेऽपि यो दोषोऽनुवर्त्तते तस्यार्थदोषत्वं, यस्तु तथा सति निवर्त्तते तस्य शब्ददोषत्वमिति विभागात् । तदेतदाह वृत्तिकारः—अत्रानुनाथत इत्यादि ।

अत्रार्थाप्रतीतिर्दूषकताबीजमिति नित्यदोषत्वम्, अनुकरणे त्वर्थपरत्वाभावाद्दोषत्वाभाव इति प्रदीपकाराः ।

---

[१] व्यक्तिविवेकस्य ४८४ पृष्ठे । [२] तस्यैव ४८१ पृष्ठे ।
[३] तस्यैव ४८०-८१ पृ० ।

३. अप्रयुक्तं तथाऽऽम्नातमपि कविभिर्नादृतम् । यथा—

यथाऽयं दारुणाचारः सर्वदैव विभाव्यते ।
तथा मन्ये दैवतोऽस्य पिशाचो राक्षसोऽथ वा ॥

—अत्र दैवतशब्दो 'दैवतानि पुंसि वा' इति पुंस्याम्नातोऽपि न केनचित् प्रयुज्यते ।

---

## साहित्यचूडामणिः

नाथ' इत्याशिष्येव स्वाभिलषितवस्त्वाशंसनलक्षणायामात्मनेपदस्य नियन्त्रितत्वाद् यत्प्रयोगे चापशब्दप्रसङ्गो दोषः । यथोक्तं—

यस्तु प्रयुङ्क्ते कुशलो विशेषे शब्दान् यथावद् व्यवहारकाले ।
सोऽनन्तमाप्नोति जयं परत्र वाग्योगविद् दुष्यति नापशब्दैः ॥

इति । अपशब्दे वैतदुदाहरणमस्तु आशीर्विधायकस्यात्मनेपदस्य सामग्रीवैगुण्यशालिनो याचने प्रयुज्यमानत्वाद्, यथा 'मधुकरैरपवादकरैरिव' इत्यादौ च रजितशब्दः [व्यक्तिविवेक पृ० ४८१] ।

न चात्राशीरेवार्थ इत्याह—अत्र चेति । आशीर्याचनयोरेकार्थताभ्रान्तिरविदग्धानाम् । 'आशिषि नाथः' इतिसूत्रेण नाथनीयस्य सर्पिरादेः षष्ठ्या हि भवितव्यम् । सम्भावितं चैतद्, यद् विशेषलक्षणानवसायादात्मनेपदप्रयोगेणापशब्दत्वमिति ! अन्यथा "बाधति स्कन्धः" इत्यादौ कवेः शब्दवृत्त वर्णानभिज्ञत्वप्रसङ्गः । गुणीकाराय प्रयास इति यत्रत्यः परिहारः । श्लोकस्य सौष्ठवाय पाठं परिवर्तयति—तस्मादिति । बन्धदार्ढ्याद् गुणान्तरलाभश्च ।

तथाम्नातमपीति । यथाशास्त्रं लक्ष्ययोग इति भावः ।

यथेति । यथातथयोर्ज्ञाप्यज्ञापकभावोऽर्थः । दैवत इति पुंल्लिङ्गशब्दः कविभिर्न प्रयुक्तः । पुंस्त्वस्य शास्त्रसिद्धतां द्योतयितुं 'वृन्दारका दैवतानी'त्यादौ च यावदुपयुक्तं तावदुपादत्ते दैवतानीति ।

## सुधासागरः

श्रीवत्सलाञ्छनभट्टाचार्यास्तु असाधुत्वज्ञानाभावः साधुत्वज्ञानं वा शाब्दबोधकारणम्, तदभावाच्छब्दबोधस्थगनमेव दूषकताबीजम् । साधुशब्दान्तरस्मरणे शाब्दबोधेऽपि प्रतीतिमान्थर्यं दूषकताबीजमिति तत्त्वमित्याहुः ।

वयन्तु साधुशब्दान्तरस्मरणे साधुत्वभ्रमे वा बोधेऽपि व्याकरणव्युत्पत्तिद्वाराऽर्थाप्रत्यायनमेवात्र दूषकताबीजमिति प्रतीमः ।

अप्रयुक्तमित्यादि । तथाऽनुशासनसिद्धमपि कविभिर्न प्रयुक्तमित्यर्थः । अय-

४. असमर्थं यत् तदर्थं पठ्यते, न च तत्रास्य शक्तिः । यथा—

तीर्थान्तरेषु स्नानेन समुपार्जितसत्कृतिः ।
सुरस्रोतस्विनीमेष हन्ति सम्प्रति सादरम् ॥

—अत्र हन्तीति गमनार्थम् ।

---

## साहित्यचूडामणिः

असमर्थो यस्तदर्थं पठ्यते धातुपारायणादौ । तत्र अर्थे । तस्य शक्तिर्वाचकत्वरूपा शक्तिः । परीक्षया विना [धातु-] पाठविश्वासात् पदं न योज्यमिति यावत् ।

हन्तीति । 'हन हिंसागत्योरि'ति पाठः । हिंसायामेवास्य शक्तिः, न गमने ।

## सुधासागरः

माशयः—येन रूपेणाऽऽम्नातमनुशिष्टन्तेन रूपेण कविप्रयोगाभाववत्त्वमप्रयुक्तत्वम्, अन्यथा घटपटादेरपि नपुंसकत्वेन प्रयोगेऽप्रयुक्तत्वं स्यात्, पुंस्त्वादिनाऽनुशासनादिति ।

ननु यत्किञ्चित्कविनाऽप्रयुक्तं यावता वा ? नाद्यः, एकस्य कवेः सर्वप्रयोगाक्षमत्वेन प्रयुक्तेष्वपि तत्र प्रसङ्गात् । नापरः, एतत्पद्यकर्तुरेव प्रयोगेण दैवतादेरपि पुंस्त्वादौ प्रयुक्तत्वप्रसङ्गात् । मैवम् । आलङ्कारिकसम्प्रदायस्य तन्त्रत्वात् । महाकविभिरालङ्कारिकैर्दैवतादीनां पुंस्त्वादेरप्रयोगात् । उदहारणम्—यथाऽयमित्यादि । स्पष्टम् ।

अत्रेत्यादि । अत्र दैवतानि पुंसि वेत्यनेनाम्नातः पुल्लिङ्गोऽपि दैवतशब्दः कविभिर्न क्वापि प्रयुक्तः । नन्वत्र किं दूषकताबीजम्, न तावच्छक्तिविरहः, तत्सत्त्वात् । शक्तिस्मृतिविरहः इत्यपि नास्ति, शब्दानुशासनेन तद्ग्रहे स्मृतौ बाधकाभावात् इति चेत्, पदार्थोपस्थितिविलम्बस्तद्बीजम् । अत एव श्लेषयमकादावदोषत्वम् । उद्भटालङ्कारसम्पत्त्या प्रतीत्यविलम्बस्य तत्रानुद्देश्यत्वात् । वस्तुतस्तु—

तादृशकविसमयलङ्घनप्रयोजनानुसन्धानव्यग्रतया मुख्यार्थविच्छित्तिर्दूषकताबीजम् । अत एवानुकरणे दोषत्वाभावः । यमकादावप्यदोषत्वम्, अन्यत्राप्रयुज्यमानस्यापि तदर्थं कविभिः प्रयोगस्य दर्शनेन व्यग्रताभावादिति ।

असमर्थमित्यादि । असमर्थमित्यल्पार्थे नञ्, तेन यत्तदर्थं परिपठितमपि प्रकृतस्थले विवक्षितार्थसामर्थ्यरहितमित्यर्थः । समर्थस्यैवासामर्थ्यं विरुद्धमिति चेन्न, उपसंदानोपजीवित्वात् सामर्थ्यस्य । यथा हनधातोः पद्धति-जघन-जङ्घादिषु पदादिपदोपसंदानेन मार्गाद्यर्थोपसंदानेन वा गतौ सामर्थ्यं, न पुनरविशिष्टस्य । यथा—तीर्थेत्यादि । हन्ति गच्छति । स्पष्टमन्यत् ।

अत्र हन्तीति । 'हन् हिंसागत्योः'—इति गमनार्थे पठितोऽपि हन्तिस्तत्प्रत्यायने स्वरूपायोग्यः । प्रहतोद्धतपद्धतिजङ्घादिषूपसंदानेन गतेः प्रत्यायकत्वेन न तत्पाठवैयर्थ्यम् । एवमध्ययनपरिपठितस्यापीङ्धातोरधि विना तत्र प्रयोगेऽसामर्थ्यमेवेत्यर्थः ।

अत्र स्वरूपायोग्यत्वेनार्थानुपस्थितिर्दूषकताबीजमिति नित्यता ।

५. निहतार्थं यदुभयार्थमप्रसिद्धेऽर्थे प्रयुक्तम् । यथा—

यावकरसार्द्रपादप्रहारशोणितकचेन दयितेन ।
मुग्धा साध्वसतरला विलोक्य परिचुम्बिता सहसा ॥

—अत्र शोणितशब्दस्य रुधिरलक्षणेनार्थेनोज्ज्वलीकृतत्वरूपोऽर्थो व्यवधीयते ।

६. अनुचितार्थं यथा—

तपस्विभिर्या सुचिरेण लभ्यते प्रयत्नतः सत्रिभिरिष्यते च या ।
प्रयान्ति तामाशु गतिं यशस्विनो रणाश्वमेधे पशुतामुपागताः ॥

—अत्र पशुपदं कातरतामभिव्यनक्तीत्यनुचितार्थम् ।

---

## साहित्यचूडामणिः

उभयार्थमिति । प्रसिद्धाप्रसिद्धार्थवत् । उज्ज्वलीकृतत्वमरुणीकृतत्वम् , व्यवधीयत इति । पादप्रहृते शिरसि रुधिरस्य सम्भावितत्वात् मतिविरोधश्च । तदनुगुणा मुग्धा साध्वसतरलेति वाक्यच्छाया ।

अनुचितेति । प्रस्तुतचमत्कारभञ्जकत्वात् ।

पशुपदमिति । नहि कातर्ये सुगतिसिद्धी "रणे चाभिमुखो हत" इत्युक्तत्वात् ।

## सुधासागरः

निहतार्थमित्यादि । निहतः प्रसिद्धेनार्थेनाप्रसिद्धतया व्यवहितो विवक्षितोऽर्थो यस्य तत् । प्रसिद्धस्तु भूरिप्रयोगाहितपदसंस्कारविषयः । गूढेऽप्यर्थे क्वचित्प्रयोगान्नाप्रयुक्तसङ्करः । यथेत्युदाहरति—यावकेत्यादि । यावकरसार्द्रपादप्रहारेण शोणिता उज्ज्वलीकृता रञ्जिता इति यावत्, कचाः यस्य तादृशेन दयितेन साध्वसतरला यावकरसे रुधिरभ्रमाद् भयचकिता अत एव मुग्धा मानिनी विलोक्य परिरभ्य सहसा तत्क्षणमेव चुम्बिता । सति विलम्बे नायिकायाः भ्रमोच्छेदसम्भवादिति भावः ।

अत्र शोणितेत्यादि । शोणितपदस्य रुधिरे प्रसिद्धिः, अप्रसिद्धिस्तूज्ज्वलीकृतत्वरूपे विवक्षितार्थे इति निहतार्थतेत्यर्थः । दूषकताबीजं प्रसिद्धस्यैव द्रागुपस्थितस्य बिलम्बोपस्थितिः । अतो यमकादावदोषत्वम्, तत्रोपस्थितिविलम्बस्यापि सहृदयसम्मतत्वेनाविलम्बानुद्देश्यत्वात् ।

अनुचितार्थमिति । अनुचितो विवक्षितार्थतिरस्कारकाऽर्थो यस्य तदित्यर्थः । यथेत्युदाहरति । तपस्विभिरित्यादि । सत्रिभिर्याज्ञिकैः । स्पष्टमन्यत् । अत्र शौर्ये प्रतिपाद्ये पदान्तरानपेक्षमेव पशुपदं कातरतामभिव्यनक्ति, तदर्थे तस्य दर्शनात् । विरुद्धमतिकृत्तु पदान्तरसापेक्षं तथेति तस्माद् भेदः । दूषकताबीजं च विवक्षिततिरस्कारकार्थोपस्थितिः । अतोऽस्य नित्यदोषत्वम् ।

७. निरर्थकं पादपूरणमात्रप्रयोजनं चादिपदम्। यथा—

उत्फुल्लकमलकेसरपरागगौरद्युते, मम हि गौरि !
अभिवाञ्छितं प्रसिद्धयतु भगवति, युष्मत्प्रसादेन ॥

—अत्र 'हि'-शब्दः।

८. अवाचकं यथा—

अवन्ध्यकोपस्य विहन्तुरापदां भवन्ति वश्याः स्वयमेव देहिनः।
अमर्षशून्येन जनस्य जन्तुना न जातहार्देन न विद्विषादरः॥

—अत्र जन्तुपदमदातर्यर्थे विवक्षितम्, तत्र च नाभिधायकम्।

## साहित्यचूडामणिः

पूरणेति। न पुनर्द्योतनीयार्थापेक्षीणाम्। हिशब्द इति। पादपूरणफलत्वात्, अवकरभूता निपाताः शोकादीन् द्योतयन्ति वक्तृगतान्। तत्र द्योतनीयार्थापेक्षाया अभावे निपाता न प्रयोज्या इति भावः। किञ्च प्रसिध्यत्विति प्रोपसर्गोऽवाचकः। भगवतीत्येकवचनेन सम्बोध्य युष्मत्प्रसादेनेति बहुवचनमप्यनुचितमित्यलमप्रासङ्गिकचिन्तया।

अवन्ध्येति। शत्रुपक्षे फलपर्यन्तक्रोधस्य आपदां दौर्गत्यादीनां प्रतिकर्तुर्वर्णनीयस्य देहिनो मित्रादयः स्वयमेव वश्या भवन्ति। यस्मादमर्षशून्येन वन्ध्यकोपेन जन्तुना जननमात्रधर्मत्वादापत्प्रतिक्रियायामकुशलेनेति योजना। द्वयी हि पुंसां गतिर्जातहार्दः सुहृद्भूतः विपक्षभूतश्च। तयोरादिमेन नादरो नास्था। द्वितीयेन तु न दरो न भीतिः। पञ्चम्यभावश्चिन्त्यः। तृतीयापि नौचित्यवती।

जन्तुपदमिति। विपत्प्रतीकारस्य दातृत्वोपायकत्वात्। यथोक्तम्—

## सुधासागरः

निरर्थकमित्यादि। निरर्थकमविवक्षितार्थकं वृत्तनिर्वाहमात्रप्रयोजनकमिति यावत्। अत वाक्यालङ्कारभूतं यमकादिनिर्वाहकं च खल्वादिपदमदुष्टम्। तच्च निपातरूपं चादिपदं बहुवचनाद्दे च। उदाहरणम्—उत्फुल्लेत्यादि। स्पष्टम्।

अत्र हिपदं निरर्थकम्, अर्थस्याविवक्षितत्वात्। दूषकताबीजं त्वस्य चिन्त्यताम्। तद्धि न तावदर्थानुपस्थितिः, पदान्तरैरेव यावदभिधेयोपस्थापनात्। न चैवमवाचकादौ, तत्र तदभिधेयस्य वाक्यार्थघटकस्य पदान्तरैरनुपस्थापनात्। नापि प्रतिकूलवर्णवद् रसविरोधिता, चादीनां सार्थकत्वस्थलेऽपि रसविरोधित्वप्रसङ्गात्, स्वरूपस्य ताद्रूप्यादिति। उच्यते। निरर्थकं प्रयुञ्जानस्य सहृदयानां वैमुख्यं दूषकताबीजम्, प्रयोजनानुसन्धानव्यग्रता वा।

अवाचकमिति। विवक्षितधर्मविशिष्टस्य विवक्षितधर्मिणः क्वापि न वचनं

यथा वा—

हा धिक्! सा किल तामसी शशिमुखी दृष्टा मया यत्र सा
तद्विच्छेदरुजाऽन्धकारितमिदं दग्धं दिनं कल्पितम्।
किं कुर्मः कुशले सदैव विधुरो धाता न चेत् तत् कथं
तादृग्याभवतीमयो भवति मे नो जीवलोकोऽधुना॥

—अत्र दिनमिति प्रकाशमयमित्यर्थेऽवाचकम्।

यच्चोपसर्गसंसर्गादर्थान्तरगतम्। यथा—

जङ्घाकाण्डोरुनालो नखकिरणलसत्केसरालीकरालः
प्रत्यग्रालक्तकाभाप्रसरकिसलयो मञ्जुमञ्जीरभृङ्गः।
भर्तुर्नृत्तानुकारे जयति निजतनुस्वच्छलावण्यवापी-
सम्भूताम्भोजशोभां विदधदभिनवो दण्डपादो भवान्याः॥

—अत्र दधदित्यर्थे विदधदिति।

---

## साहित्यचूडामणिः

"अर्थस्य पुरुषो दासो दासस्त्वर्थो न कस्यचित्"

इति। केवलं विवक्षैवास्मिन्, न च सामर्थ्यमित्याह—तत्रेति। नाभिधायकम् असङ्केतितत्वादिति भावः। लक्षणीयत्वपक्षे नेयार्थत्वं वक्ष्यते।

सङ्केताभाव (स) विषयतया किञ्चिद् भेदायोदाहरति 'हा धिगि'-ति।

## सुधासागरः

यत्तदित्यर्थः। अत एवासमर्थाद् भेदः, तस्य क्वचिच्छक्तिस्वीकारात्। एतादृशविशिष्ट-विरहश्च क्वचिद्धर्मिणि शक्तावपि विवक्षिते प्रकारे शक्तिविरहात्, क्वचित्प्रकारे शक्तावपि धर्मिणि शक्तिविरहात्। तत्राद्यं द्विधा, अपेक्षितयोगमनपेक्षितयोगं च। तयोराद्यं यथा—

अवन्ध्येत्यादि। वंशस्थं वृत्तम्। देहिनो लोकाः अवन्ध्यः सफलः कोपो यस्य, यः सति कोपे मारयत्येवापराधिनं तस्येत्यर्थः, तथा ऽऽपदां दारिद्र्यरूपाणां विहन्तुः दातुरिति यावत्, जनस्य स्वयमेव वश्याः भवन्ति। वैपरीत्ये दोषमाह अमर्षशून्येन क्रोधवर्जितेन विद्विषा शत्रुणापि दरो भयं न। जातहार्देन कृतस्नेहेनापि जन्तुनाऽदात्राऽऽदरो नास्ति लोकेष्विति शेषः।

यत्र पूर्वार्द्धे दारिद्र्यरूपापद्घातकया दातृत्वं विवक्षितमिति, द्वितीयार्द्धे तद्वैपरीत्यप्रदर्शकं जन्तुपदमदातरि प्रयुक्तम्, तत्र च 'जायते' इति योगमपेक्ष्य तस्य शक्तत्वेऽपि न विवक्षितयाऽदातृतया प्रकारेण शक्तिरित्यवाचकम्। तदेतदभिप्रेत्य श्रीवाग्देवतावतार आह—अत्र जन्तुपदमित्यादि।

अनपेक्षितयोगमुदाहरति हा धिगित्यादि। हा धिगिति दुःखातिशये यत्र सा मदनुभूता शशिमुखी चन्द्रानना दृष्टा, सा किल तामसी तमोयुक्ता रात्रिः, चन्द्रसद्भावे

## साहित्यचूडामणिः

शशिमुख्यां दृष्टायामपि तदा तस्या रात्रेस्तामसीत्वम् अन्धकारितस्य कथं दिनत्वमिति । तादृश्या यामवत्या प्रकृतो जीवलोकः दिनमित्यस्य प्रकाशमयमित्यत्रार्थे सङ्केताभावात्, दिनं चेत् प्रकाशमयमिति अविनाभावसम्भावनायाश्च कल्पनामात्रपरिकल्पितत्वात्। तद्वत्स्य यथा तामसीति प्रकृत्यंशेन रात्रेरप्रकाशमयत्वम् एवं दिनशब्देन प्रकाशबहुलत्वं निर्वाह्यम्। तच्च न शक्यं शक्त्यभावात्।

यच्चेति । तदप्यवाचकम्।

दण्डपादः ऋज्वायतोर्ध्वप्रसारितः। विपूर्वस्य दधातेः करोत्यर्थत्वाद् धारणं प्रत्यवाचकत्वम्। तथा शोभामन्यदीयां करोति न स्वयं वहतीति स्यात्। किञ्च दण्डपादस्य समासोक्त्या कमलसाधर्म्यनिर्वाहस्यानौचित्यम्। किं वार्थ्यं समासोक्त्यपेक्षायां च कथञ्चिद् रूपकस्यानुगुण्यं यत्रोरुनालत्वादिविशेषणानामनौन्मुख्यं दोषभूयिष्ठत्वं च। एतदुपर्यपि तत्र तत्रोदाहरिष्यते ।

## सुधासागरः

तमसोऽयोग्यत्वादिति भावः। एवं तद्विश्लेषः तस्याः वियोगः स एव रुग् रोगस्तेनान्धकारितमन्धकारीकृतम्, अत एव दग्धम्, दुःसहदुःखदत्वादमङ्गलमिदं दिनं प्रकाशमयं कल्पितम्, अन्धकारितस्य प्रकाशमयत्वायोग्यत्वादिति भावः। किं कुर्मः न किञ्चित्पौरुषसाध्यम्, कुशले इष्टे धाता सदैव चेद् विधुरो वैरी न, तत्कथमधुना मे मम जीवलोको भूलोकस्तादृग्यामवतीमयः यत्र सा दृष्टा तद्रात्रिरूपो नो भवतीत्यर्थः। शार्दूलविक्रीडितं छन्दः।

अत्र दिनपदं प्रकाशमयमित्यर्थे विवक्षितम्, तामसीत्यनेन लब्धस्य तमोमयत्वस्य वैपरीत्याभिधानायोपादानात्। तत्र च धर्मिणि योगमनपेक्ष्यैव रूढ्या दिनपदं दिनत्वेन शक्तं न पुनः प्रकाशमयत्वेनेत्यवाचकम्। तदाह वृत्तिकारः अत्र दिनमित्यादि ।

द्वितीयमुदाहरणन्तु जलं जलधरे क्षारमित्यादि प्रदीपोदाहृतं[१] द्रष्टव्यम्। 'तत्र जलधरशब्दस्य जलधारकत्वे प्रकारे सामर्थ्येऽपि न समुद्रे धर्मिणि सामर्थ्यम्। यद्यपि योगशक्तिस्तत्राप्यस्त्येव तथापि रूढ्या प्रतिबन्धादनस्तिकल्पैव।' [प्रदीपः]

तृतीयन्तूपसर्गसंसर्गादर्थान्तरगतमन्यथा च। तयोराद्यं यथा जङ्घाकाण्डेत्यादि। स्रग्धराछन्दः। 'म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्त्तितेयम्' इति लक्षणम्। अयमर्थः। भर्तुर्महेश्वरस्य 'पदार्थाभिनयो नृत्यं नृत्तं ताललयाश्रितम्' इत्युक्तलक्षणनृत्तस्यानुकारे भवान्याः अभिनवः कोमलो दण्डपादः एकशरीरत्वात्प्रसह्योर्ध्वीकृतश्चरणो जयति, कीदृशः जङ्घाकाण्ड एव उरुरतिशयितो नालो यत्र

[१] जलं जलधरे क्षारमयं वर्षति वारिदः ।
इदं बृंहितमश्वानां ककुद्मानेष हेषते ।।

-जलधरे जलधौ। बृंहितं करिगर्जितम्। हेषा हय-रवः।

९. त्रिधेति व्रीडाजुगुप्साऽमङ्गलव्यञ्जकत्वाद् । यथा—

क. साधनं सुमहद् यस्य यन्नान्यस्य विलोक्यते ।
तस्य धीशालिनः कोऽन्यः सहेताराळितां भ्रुवम् ॥

---

## साहित्यचूडामणिः

साधनं बलम्, अराळितां कुटिलताम्, निश्शङ्कद्दष्टेति । कृतमस्माकमस्य स्वभार्याकलहचिन्तयेति । इवेति । तथा नाटयन् । कुसुमसनाथे । अन्यथा पिञ्छसादृश्यासिद्धिः ।

## सुधासागरः

तादृशः तथा नखानां किरणा एव लसन्तः केसराः किञ्जल्कास्तेषामाली पङ्क्तिस्तया करालो दन्तुरः । प्रत्यग्रो नूतनो योऽलक्तको यावकरसस्तस्याभा दीप्तिः तस्याः प्रसराः प्रसरणान्येव किसलयानि नवदलानि यत्र तथाभूतः । मञ्जुमञ्जीरः सुन्दरपादकटक एव भृङ्गो यत्र । अत एव निजतनुरेव स्वच्छलावण्यवापी तत्र सम्भूतमम्भोजं पद्मं तच्छोभां विदधत् दधदिति । [अत्र प्रदीपः—]

तत्र विदधातिर्धारणे प्रयुक्तः, न च धारणे धारणत्वे वा समर्थः । विसंसर्गेण करणे नियमितशक्तिकत्वात् । अन्त्यं तु वाक्यनिष्ठावाचकतायां 'प्राभ्रभ्राड्'इत्यादावुदाहरिष्यते । तदेवं निर्दूषणे प्रकाशे यत् असमर्थे धर्मधर्मिणोर्द्वयोरपि शक्तिविरहः अवाचके तु धर्ममात्रे सः, विदधदित्युदाहरणन्त्ववाचकप्रकरणमध्येऽसमर्थस्यैव'-इति प्रलपितं तद्वाक्यावाचकत्वोदोहरणानवलोकननिबन्धनं सन्दर्भविरुद्धं चेत्यनादेयम् । दूषकताबीजन्तु विवक्षितार्थानुपस्थितिरिति नित्य एवायम् ।'

त्रिधाऽश्लीलमिति । अश्रीरस्यास्तीत्यर्थे सिध्मादित्वाल्लच् प्रत्ययः, कपिलकादित्वाद्रेफस्य लत्वम्, तथा च कान्त्यभाववदिति पर्यवसन्नम् । कान्त्यभावश्च ग्राम्यादिष्वतिप्रसक्त इति व्रीडाजुगुप्साद्यालम्बनविभावादिभूतासभ्यार्थोपस्थितिद्वारा व्रीडाजुगुप्साऽमङ्गलव्यक्तिहेतुकस्तद्विशेषो वक्तव्यः । ग्राम्यञ्च नासभ्यार्थबोधकं, किन्तु स्वत एव शोभारहितमिति न तत्सङ्कर इति बोध्यम् । न चैतत्त्रयेऽनतिप्रसक्तमनुगतं रूपमस्तीति व्रीडादिहेतुकाकान्तिमत्सु नानार्थोऽयमश्लीलशब्द इत्यर्थः । तदुक्तं वृत्तिकारैस्त्रिधेत्यादि । तच्च प्रत्येकं त्रिविधम् । क्वचिदविवक्षितस्यैवार्थस्य व्रीडाद्यालम्बनत्वात्, क्वचिदविवक्षितस्यार्थान्तरस्य प्रकृतार्थेऽन्वयिनस्तथात्वात्, क्वचित्तादृशार्थस्यानिर्वाहिणोऽपि स्मृतिमात्रहेतुत्वात् । एषु त्रिषु क्वचित्किञ्चिदुदाह्रियते ।

तत्र व्रीडाव्यक्तावर्थान्तरस्य तथाभावो यथा—साधनमित्यादि । यत् यादृशमन्यस्य न विलोक्यते तादृशं सुमहदतिविपुलं साधनं सैन्यं यस्य धीशालिनो

ख. लीलातामरसाहतोऽन्यवनितानिःशङ्कदष्टाधरः
कश्चित् केसरदूषितेक्षण इव व्यामील्य नेत्रे स्थितः ।
मुग्धा कुड्मलिताननेन ददती वायुं स्थिता तत्र सा
भ्रान्त्या धूर्त्ततयाऽथ वा नतिमृते तेनानिशं चुम्बिता ॥

ग. मृदुपवनविभिन्नो मत्प्रियाया विनाशाद्
घनरुचिरकलापो निःसपत्नोऽद्य जातः ।
रतिविगलितबन्धे केशपाशे सुकेश्याः
सति कुसुमसनाथे कं हरेदेष बर्हो ॥

—एषु साधन-वायु-विनाश-शब्दा व्रीडादिव्यञ्जकाः ।

---

## साहित्यचूडामणिः

उदाहरणं व्याचष्टे—एष्विति । साधनशब्देन पुंव्यञ्जनप्रतीत्या व्रीडा । मुखमारुतप्रदाने पर्दनप्रतीत्या जुगुप्सा । विनाशादिति विश्लेषदशायां मरणानुस्मरणादमङ्गलातङ्कशङ्का, एतेन व्रीडादिवाचकत्वं कैमुत्येन परिहर्तव्यतया व्याख्यातम् । यथा—

यः खण्डेन्दुकिरीटकैटभजितोः कामश्रियं कर्षति ।
पर्दते हदते स्तन्यं वमत्येव स्तनन्धयः ।
मुहुरुत्कौति निष्ठीवत्यात्तगर्भा पुनर्वधूः ॥
पाहि यिसमत्तं बि अण्ण कुमारी एव चद्ध उदे ।
वमैदं तु खण्डि अननि आखि उणसुम् असव इमा आ ॥ (?) इति ॥

## सुधासागरः

बुद्धिमतस्तस्य कुटिलीकृतां भ्रुवं कोऽन्यः सहेतेत्यर्थः । अत्र सैन्यार्थकस्य साधनशब्दस्य पुंव्यञ्जनमर्थान्तरम् ।

जुगुप्साव्यक्तौ तथाभूतार्थस्मृतिमात्रहेतुत्वं यथा—लीलेत्यादि । अन्यस्य वनितायाः निःशङ्कं दष्टोऽधरो येन तथाभूतः, अत एव लीलातामरसेन क्रीडाकमलेनाहतः क्रोधातिशयान्नायिकया ताडितः कश्चिद्विलासी केसरदूषितेक्षण इव नेत्रे व्यामील्य स्थितोऽभूत् । मुग्धा कुड्मलिताननेन तस्य नायकस्य वायुं ददती स्थिता मुखवातेन नेत्रपीडां शाम्यतीति भावः । तेन नायकेन भ्रान्त्याऽथवा धूर्त्ततया नतिमृते प्रणतिं विनैव सा मुग्धाऽनिशं चुम्बितेत्यर्थः । नतिं विनैव यच्चुम्बनं तत्र भ्रान्त्या धूर्त्ततयाऽथवेति प्रयोजकसन्देहः । तत्र भ्रान्तिर्मुग्धायाः नेत्रदूषितत्वज्ञानरूपा, धूर्त्तता तु नायकस्य स्फुटैव । यद्यप्युभयोरपि प्रयोजकत्वाद्विकल्पः सन्देहो वा न युज्यते तथापि प्राधान्यमाश्रित्य तदुपपत्तिरिति बोध्यम् ।

१०. सन्दिग्धं यथा—

आलिङ्गितस्तत्रभवान् सम्पराये जयश्रिया ।
आशीःपरम्परां वन्द्यां कर्णे कृत्वा कृपां कुरु ॥

—अत्र वन्द्यां किं हठहृतमहिलायां किंवा नमस्यामिति सन्देहः ।

---

## साहित्यचूडामणिः

वन्द्यां बलात्कारपरिगृहीतायामङ्गनायां कृपां कुरु, किं कृत्वा, आशीःपरम्परां कर्णे कृत्वेति किं योजना, उत वन्द्यामभिवाद्यां नमस्यामाशीःपरम्परां कर्णे कृत्वा कृपां कुरु तदुचिते विषय इति संदेहः । वस्तुवृत्त्या न सप्तमीसंदेहः अर्थद्वयेन बाधितत्वात् । तस्मात् 'स एष हि महादेव' इत्यादि शुद्धमुदाहर्तव्यम् ।

## सुधासागरः

यत्तु कैश्चिदुक्तम्—'भ्रान्त्याऽथ वा धूर्त्ततया वायुं ददतीत्यन्वय' इति, तदयुक्तम् । मुग्धेत्यस्यासाङ्गत्यापत्तेः । अत्र वायुशब्दोऽपानवायुं स्मारयति । न तु तदर्थतया वाक्यमुपपद्यते ।

अमङ्गलव्यक्तौ विवक्षितस्यैवार्थस्य तथात्वं यथा—मृदुपवनेत्यादि । मालिनी छन्दः । मृदुपवनेन मन्दानिलेन विभिन्नो, घनेन रुचिरः सुन्दरतरः कलापो, मत्प्रियायाः विनाशाद्य निःसपत्नो गतप्रतिपक्षो जातः । रतिविगलितबन्धे सुकेश्याः केशपाशे कुसुमसनाथे सति एष बर्ही मयूरः कं हरेत् न कञ्चिदनुरञ्जयेदित्यर्थः । चन्द्रकसाम्येन कुसुमसनाथतोक्तिः । बर्हीत्यत्र बर्हं इत्यपपाठः, 'पिच्छबर्हे नपुंसके' इत्यनुशासनात् ।

अत्र विनाशशब्दस्य विवक्षित एवार्थोऽमङ्गलः । एवं त्रिषु भिन्नभिन्नप्रकारोदाहरणेन प्रत्येकं त्रिप्रकारकत्वमूहनीयम्, न्यायसाम्यात् । दूषकताबीजन्त्वनुभवसिद्धरसापकर्षकताद्दशार्थोपस्थितिः । नीरसे तु चमत्कारापर्षकत्वं तस्याः । अथ वा ताद्दशार्थोपस्थित्या श्रोतुर्वैमुख्यं तद्बीजम् । असभ्यार्थोपस्थितिर्हि श्रोत्रियसमूहे चण्डालागमनमिव वैरस्यमापादयतीति । अतः शमकथायां दोषत्वाभावः, ताद्दशार्थोपस्थितेः शमपोषकत्वात् । भाव्यमङ्गलादिसूचने कामशास्त्रस्थितौ च न दोषत्वम्, वैमुख्याभावात् । शिवलिङ्ग-भगिनी-ब्रह्माण्डादिशब्देषु तु समुन्नीतगुप्तलक्षितेष्वसभ्यार्थानुपस्थितेर्नायं दोषः । तदेतदुक्तं वृत्तिकारैः—एषु साधनेत्यादि ।

सन्दिग्धमिति । सन्दिग्धत्वं विवक्षिताऽविवक्षितोभयार्थोपस्थापनानुकूलस्वरूपद्वयसन्देहविषयत्वम् । यत्तु भास्करप्रभृतिभिरुक्तम् अनिश्चितानुपूर्वीकत्वं सन्दिग्धत्वमिति, तदसत् । वाक्यदोषे 'सुरालयोल्लास' इत्यादौ मार्गणादिपदे आनुपूर्वीनिश्चयेऽपि सन्दिग्धत्वेन तदव्याप्तेः । यथेत्युदाहरति—आलिङ्गितेत्यादि । स्पष्टम् ।

अत्र वन्द्यामित्यादि । अयमाशयः—अत्र वन्द्यामिति पदं बन्दीशब्दे सप्तम्यन्तम् वन्द्याशब्दे द्वितीयान्तं वेति सन्देहः, प्रथमे हठगृहीतमहिलायां कृपां कुर्विति, द्वितीये

११. अप्रतीतं यत् केवले शास्त्रे प्रसिद्धम्। यथा—

सम्यग्ज्ञानमहाज्योतिर्दलिताशयताजुषः।
विधीयमानमप्येतन्न भवेत् कर्म बन्धनम्॥

—अत्राशयशब्दो वासनापर्यायो योगशास्त्रादावेव प्रयुक्तः।

१२. ग्राम्यं यत् केवले लोके स्थितम्। यथा—

राकाविभावरीकान्तसंक्रान्तद्युति ते मुखम्।
तपनीयशिलाशोभा कटिश्च हरते मनः॥

—अत्र कटिरिति।

---

## साहित्यचूडामणिः

सम्यगिति। कश्चित् पारदारिकमविनये नियुञ्जानस्य सुहृद इयमुक्तिः। समीहितेन ज्ञानमहाज्योतिषा खण्डित आशयो यस्य तस्य भावस्तत्ता तां जुषमाणस्य। सुपरिदृष्टोपायघटितत्वाद् दुश्शङ्काङ्कुरगोचरीकारायोग्यस्येति यावत्। योगेऽपि 'क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः [यो० सू० १] इत्युक्तत्वात्।

यथा केवलशास्त्रप्रसिद्धमप्रतीतं दोषः इत्थं केवललोकप्रसिद्धं ग्राम्यमिति।

कटिरिति। नितम्बवाचिपदं ग्राम्यमव्युत्पन्नत्वाच्छास्त्रे।

## सुधासागरः

नमस्यामाशीःपरम्परामित्यर्थोपपत्तौ साधकबाधकप्रमाणाभावात्संशयः। दूषकताबीज-मुद्देश्यार्थनिश्चयाभावः। अतो यत्र सन्देह एवोद्देश्यस्तत्र, यत्र च वाच्यादिमहिम्ना प्रकरणादिवशेन वा निश्चयः तत्र चादोषत्वमिति।

यत्तु श्रीवत्सलाञ्छनभट्टाचार्यैरुक्तम्—बन्दी वन्द्या वेत्यर्थानिश्चयादनिश्चयः। न चानुपूर्वीनिश्चयाभावात् कथमर्थद्वयोपस्थितिरिति वाच्यम्, लाघवेनानुपूर्वीज्ञान-मात्रस्यैव तन्त्रत्वात्तत्संशयेऽप्युपपत्तेः, 'श्वेतो धावति' इत्यादौ तथैवोपगमात्। अत्रार्थानिश्चय एव दूषकताबीजमिति। तन्न रमणीयम्। आनुपूर्वीनिश्चयस्यार्थो-पस्थितिं प्रति कारणत्वं न त्वर्थसन्देहं प्रत्यपि। न चार्थानिश्चयमात्रं दूषकताबीजम्, यत्रार्थानिश्चय एवोद्देश्यस्तत्रापि दोषापत्तेः।

अप्रतीतमित्यादि। नञोऽल्पार्थकतयाऽलङ्कारशास्त्रातिरिक्तैकशास्त्रप्रसिद्ध-मित्यर्थः। अत एव रविभट्टाचार्याः प्राहुः—उभयप्रसिद्धार्थकेऽलङ्कारशास्त्रमात्र-प्रसिद्धार्थके वा न दोष इति, अत एवाप्रयुक्ताद्भेदः, तस्य शब्दानुशासनेऽलङ्कारातिरिक्त-शास्त्रान्तरेऽपि प्रसिद्धेः।

यत्तु श्रीवत्सलाञ्छनभट्टाचार्यैर्व्याख्यातम्—प्रतिशास्त्रे इतं ज्ञातं प्रतीतम्, यत्किञ्चिच्छास्त्रपरिभाषितमित्यर्थ इति। यच्च गोविन्दमहामहोपाध्यायैर्व्याख्यातम्—शब्दानुशासनातिरिक्तशास्त्रमित्यर्थ इति। तदुभयमप्यवद्यम्। अलङ्कारमात्रप्रसिद्धेऽपि

१३. नेयार्थम्—

निरूढा लक्षणाः काश्चित् सामर्थ्यादभिधानवत् ।
क्रियन्ते साम्प्रतं काश्चित् काश्चिन्नैव त्वशक्तितः ॥

इति यन्निषिद्धं लाक्षणिकम् । यथा—

शरत्कालसमुल्लासिपूर्णिमाशर्वरीप्रियम् ।
करोति ते मुखं तन्वि चपेटापातनातिथिम् ॥

—अत्र चपेटापातनेन निर्जितत्वं लक्ष्यते ।

## साहित्यचूडामणिः

नेयार्थमिति । बुद्धिबलादाक्षेप्यो न तु स्वारसिकलक्षणासन्धुक्षितोऽर्थो यस्य । 'निरूढा लक्षणा' इत्यादौ यत् सामर्थ्यवैकल्यान्निषिद्धम् ।

शरदिति । त्वन्मुखं पूर्णचन्द्रमधःकरोतीति यावत् । चपेटस्य हस्तविशेषस्या-पातनमर्पणं तत्रातिथिं पूर्वभोक्तारं करोति ।

## सुधासागरः

तत्त्वापत्तेः । अत एव मुखादौ प्रयुज्यमानं चन्द्रादिपदं शास्त्रान्तराप्रसिद्धमपि अलङ्कारशास्त्रप्रसिद्धत्वान्नाप्रतीतमिति द्रष्टव्यम् ।

यथेत्युदाहरति—सम्यग्ज्ञानेत्यादि । विधीयमानं हस्तपादादिना क्रियमाणमप्ये-तत्सांसारिकं कर्म सम्यक्ज्ञानं तत्त्वज्ञानमेव महाज्योतिः, सर्वप्रकाशकत्वात् । तेन दलिताशयताजुषः विनाशितमिथ्याज्ञानजन्यवासनाभावभाजः पुरुषस्य बन्धनं बन्ध-जनकं न भवेदित्यर्थः ।

अत्राशयेत्यादि । आशयशब्दो मिथ्याज्ञानजन्यवासनार्थः । स चैवं योगशास्त्र एव प्रसिद्धः । शास्त्रादावित्यादिपदेन तत्तच्छास्त्रमात्रप्रसिद्धमन्यदप्यूह्यमिति ध्वनितम् । दूषकताबीजं तच्छास्त्रानभिज्ञस्यार्थानुपस्थितिः । अत एव यत्र तच्छास्त्राभिज्ञ एव प्रतिपाद्यः स्वयमेव वा परामर्शस्तत्र न दोषत्वम्, प्रत्युत व्युत्पत्तिसूचकतया गुणत्वम् ।

यत्तु सारबोधिनीकारैरुक्तम्—वासनायां प्रयुक्तस्याशयशब्दस्य योगशास्त्रमात्र-परिभाषितत्वाद्विरलप्रयोगेन झटिति न संस्कारोद्बोधकता, किन्तु भावनयैवेति भावना-विलम्बात्प्रतीतिमान्थर्यमेव दूषकताबीजमिति । तन्न निरवद्यम् । इदं हि सकलशास्त्रा-भिज्ञं प्रत्येव सम्भवति, न पुनस्तच्छास्त्रानभिज्ञं प्रत्यपि, सर्वज्ञस्य च दुर्लभत्वात् ।

ग्राम्यमित्यादि । ग्रामे केवले लोके प्रसिद्धं ग्राम्यं न तु शास्त्रेऽपि, अत एवाप्रयुक्ताद् भेद इति भास्करादयः । अपरे तु देश्यमनेन सङ्गृह्यते । कटिशब्दादयस्तु नोदाहर्तव्याः, किन्तु गल्लभल्लादय इत्याहुः । तदुभयमप्यसत् । कटिशब्दस्य शास्त्रेऽपि प्रसिद्धस्य व्युत्पन्नस्य चोदाहरणत्वेन दर्शितत्वात् । न खलु वाग्देवतावतारोक्तिविरुद्धं विद्वद्भिराद्रियते । तस्मात्समस्तलोकप्रसिद्धं तस्मिन् देशे सर्वैर्लोकैर्यदाख्यया यद्वस्तु

'अथ समासगतमेव दुष्टमि'ति सम्बन्धः ।
अन्यत् केवलं, समासगतं च ।

## साहित्यचूडामणिः

अथशब्दः क्लिष्टादित्रयस्य समासगामित्वमवस्थापयति। एवकारं व्याचष्टे—अन्यद्विति। केवलमसमस्तम्।

## सुधासागरः

व्यवह्रियते तदित्यर्थः। यस्मिन्देशे सर्वैर्लोकैर्यदाख्यया यद्वस्तु व्यवह्रियते तत्पदं तद्वस्तुनि तद्देशे ग्राम्यमित्याशयः। तेन देश्यमपि संङ्गृहीतम्। अत एवाऽग्रे खादनपान-गल्लादय उदाहरणीयाः। कलममहिषीदध्यादयश्च प्रत्युदाहरणीयाः।

यथेत्युदाहरति—राकेत्यादि। स्पष्टम्। अत्र कटिशब्दः। लोकानभिज्ञं प्रति तदर्थानुपस्थितिदूषकताबीजमिति ऋजवः। वस्तुतस्तु पदं त्रिविधम्, ग्राम्यं नागरमुपनागरं च। विदग्धमात्रवेद्यं नागरम्, ग्राम्यभिन्नमप्राप्तनागरभावमुपनागरम्, नागरोपनागरौ विहाय ग्राम्यशब्दप्रयोगाद्वक्तुरवैदग्ध्योन्नयनेन श्रोतुर्वैमुख्यं तदित्यालोच्यते। अत एव विदूषकादावधमे वक्तरि न दोषत्वम्, तस्य तथैवौचित्येन वैरस्याभावात्। कटिशब्दे तु ग्राम्यताप्रयोजकं नाश्लीलमिति न तत्सङ्करः।

नेयार्थमिति। नेयोऽर्थो यस्य तत्। नेयत्वं च—

निरूढा लक्षणाः काश्चित्सामर्थ्यादभिधानवत्।
क्रियन्ते साम्प्रतं काश्चित् काश्चिन्नैव त्वशक्तितः॥

—इत्यनेन रूढिप्रयोजनाभ्यां विना निषिद्धा या लक्षणाः तद्विषयत्वम्। वृत्तौ 'काश्चिन्नैव त्वशक्तित' इति चतुर्थपाद एव दृश्यते। क्वचित्तु पादचतुष्टयात्मकः पाठो दृश्यते। यथेत्युदाहरति-शरत्कालेत्यादि। हे तन्वि! ते मुखं शरत्कालसमुल्लासिपूर्णिमाशर्वरीप्रियं चपेटापातनातिथिं करोतीत्यन्वयः।

अत्रेत्यादि। अयमाशयः-अत्र चपेटापदं निर्जितत्वे लक्षणया प्रयुक्तम्, न च तत्रास्य रूढिर्न वा प्रयोजनम्, मुख्यशब्दार्थातिरेकिणोऽर्थस्याप्रतीतेरिति। अत एव रविभट्टाचार्यैर्व्याख्यातम्—प्रयोजनप्रतिपादनक्षमे वाचकशब्दे सत्यवाचकशब्दाभिधानमशक्तिः। एवं च निष्प्रयोजनलाक्षणिकपदत्वं लक्षणम्। तथा च जयतीत्येवोच्यतां किं लाक्षणिकपदप्रयोगेन, चन्द्रवैलक्षण्यप्रतीतेरुद्देश्यायास्तत एव भानात्। यत्र तु मुख्यशब्दप्रयोगेणोद्देश्याप्रतीतिस्तत्र लक्षणा 'गङ्गायां घोष' इत्यादाविवेति। दूषकताबीजं च वृत्त्यभावेनार्थानुपस्थितिरिति। नित्योऽयं दोषः।

अथेत्यादि। क्लिष्टादिकं दुष्टं पदं समासगतमेवेत्यभिसम्बन्धः। तदयमर्थः-क्लिष्टत्वादिकं दोषत्रयं पदान्तरसाहित्येनैव सम्भवति, तथा च यदि तयोः पदयोः समासस्तदैव समासेनैकपद्यात् पददोषता। असमासे वाक्यदोषत्वमेव। इतरेषां तु

१४. क्लिष्टं यतोऽर्थप्रतिपत्तिर्व्यवहिता। यथा—

अत्रिलोचनसम्भूतज्योतिरुद्गमभासिभिः।
सदृशं शोभतेऽत्यर्थं भूपाल, तव चेष्टितम्॥

—अत्राऽत्रिलोचनसम्भूतस्य चन्द्रस्य ज्योतिरुद्गमनेन भासिभिः कुमुदैरित्यर्थः।

१५. अविमृष्टः प्रधान्येनानिर्दिष्टो विधेयांशो यत्र तद्। यथा—

---

## साहित्यचूडामणिः

क्लिष्टमिति। अर्थप्रतीतिव्यवधानादृते कोऽन्यः क्लेशः।

अत्रीति। तव चरित्रं कुमुदैः सदृशं शोभते।

विधेयाविमर्शं दोषमुन्मेषयति—अविमृष्ट इति। द्विविधा हि वाक्ये प्रमेयपरिकल्पना विधेयश्चानुवाद्यश्चेति। तयोरनुवाद्याद् विधेयस्य प्राधान्येन विमर्शः कर्तव्यः, यदकरणं दोषः।

## सुधासागरः

समासेऽसमासे च पददोषत्वम्, द्वितीयपदनैरपेक्ष्येणैव दुष्टत्वादिति। तत्र क्लिष्टमर्थप्रतीतौ क्लेशवत्। यतो विवक्षितस्यान्वितविशेषस्य प्रतिपत्तिर्विलम्बिता तदित्यर्थः। निहतार्थादौ तु पदार्थोपस्थितिरेव विलम्बितेति ततो भेदः। विलम्बश्चाप्रत्यासत्तेर्वा सामान्यशक्तात्प्रकरणाद्यभावे विवक्षितविशेषस्य द्रागनुपस्थितेर्वा। आद्ये वाक्यमात्रदोषत्वं 'धम्मिल्लस्य' इत्यादौ, अन्त्ये तु पददोषत्वमपि। यथेत्युदाहरति—अत्रिलोचनेत्यादि।

अत्रात्रीत्यादि। अयमाशयः—अत्रिलोचनसम्भूतेत्यादौ सामान्यतोऽन्वयबोधाविलम्बेऽपि अत्रिलोचनसम्भूतेत्यादिना चन्द्रादेर्न द्रागुपस्थितिः, अन्यस्यापि तथा भावात्, नियामकस्याभावाच्च। एवम्, चन्द्रोद्गमभासित्वेन कुमुदस्यापि न द्रागुपस्थितिः चन्द्रविकासस्य कुसुमान्तरसाधारण्यात्। अतः कुमुदैरित्यस्य व्यवधानेनोपस्थितिः। तस्मादिदं क्लिष्टम्, चन्द्रादिपदेनैव सिद्धेरपुष्टञ्च। इदं पद्यार्धमपि पदम्, समस्तत्वात्। इदमेव च 'अत्रिदृष्टेः समुद्भूतस्योद्योतेनावभासिभिः' इति पाठे द्वितीयप्रभेदे वाक्यदोषोदाहरणं द्रष्टव्यम्। यत्र तु विशेषणं नान्यसाधारणं तत्र न दोषः। यथा—'शतार्धपञ्चांशभुजो द्वादशार्धार्धलोचनः' इत्यत्र दशभुजत्वं त्रिलोचनत्वं च रावणशिवयोरेव। इयमेव 'पदार्थे वाक्यरचना' इत्यर्थगुणं प्राञ्चो वदन्ति। दूषकताबीजं प्रतीतिविलम्बः। प्रहेलिकादौ तस्येष्टत्वाददोषत्वम्। मत्तोक्त्यादौ तु गुणत्वमपि तदौचित्यात्।

अविमृष्टेत्यादौ अविमृष्टः प्राधान्येनानिर्दिष्टो विधेयांशो यत्र तत् अविमृष्टविधेयांशम्। प्राधान्यं च तत्प्रतीतियोग्यता। सा चानुपसर्जनीभूतत्वे सत्युद्देश्या-

मूर्ध्नामुद्वृत्तकृत्ताविरलगलगलद्-रक्तसंसक्तधारा-
धौतेशाङ्घ्रिप्रसादोपनतजयजगज्जातमिथ्यामहिम्नाम् ।
कैलासोल्लासनेच्छाव्यतिकरपिशुनोत्सर्पिदर्पोद्धुराणां
दोष्णां चैषां किमेतत् फलमिह नगरीरक्षणे यत् प्रयासः ॥

—अत्र मिथ्यामहिमत्वं नानुवाद्यम् । अपि तु विधेयम् ।

---

## साहित्यचूडामणिः

मूर्ध्नामिति ।

मिथ्यामहिमत्वं नानुवाद्यम् अपितु विधेयम् । तथा च समासानुपपत्तिरित्याकूतम् । समासे च विधेयो भागो न विमृष्ट इति तस्यानुवाद्यत्वमात्रं परिशिष्येत । तथा च लङ्कोपरोधादेः प्रागपि शिरसां मिथ्यामहिमत्वप्रसङ्गः । तच्च वाक्यादेवावसीयते, न वृत्तेः, तयोः साध्यसिद्धविषयभिन्नार्थकत्वात् । तदिदं विधेयाविमर्शस्य रहस्यम् । भणिष्यति चैतद् वाक्यदोषोन्मेषे "द्विविधो विधेयाविमर्शः, पदवाक्यवृत्तिभेदादि"ति । नेदं नेदीयः ।

## सुधासागरः

नन्त्वयम् । अतो 'न्यक्कारो ह्ययम्' इत्यादौ 'क्षणमप्यमुक्ता' इत्यादौ च नाव्याप्तिः । प्रथमे उक्तरूपप्राधान्याभावेन द्वितीये विधेयस्य प्रसज्यप्रतिषेधस्यानिर्द्देशेन विशिष्टविरहसत्त्वात् ।

यथेत्युदाहरति—मूर्ध्नामित्यादि । स्रग्धरा छन्दः । लक्षणमुक्तम् । उद्वृत्तं समुद्धतम्, यद्वा वृत्तं मर्यादा उद्वृत्तं निर्मर्यादमित्यर्थः, तादृशं यत्कृत्तं कर्त्तनं तेनाविरलं निर्भरं यथा स्यात्तथा गलाद् गलन्ती या रक्तस्य संसक्ता सघना धारा तया धौतौ यावीशाङ्घ्री महेश्वरचरणौ तत्प्रसादेनोपनतः प्राप्तो यो जयस्तेन जगति जातो मिथ्या महिमा येषां तेषां मूर्ध्नाम् । कैलासस्य हरगिरेरुल्लासनेच्छायाः उत्पाटनाकाङ्क्षाया व्यतिकरः सम्पर्कः कैलासचालनरूपः । स एव पिशुनः सूचकस्तेनोत्सर्पी दिक्षु प्रकटीभूतो यो दर्पो गर्वस्तेनोद्धुराणामुद्भटानां दोष्णां बाहूनां च एषामित्युभयत्र सम्बद्ध्यते । एषां सम्यग्विद्यमानानां किमेतत् फलम्, यदिह नगरीरक्षणे लङ्कागोपने प्रयासः उद्योगः, किन्तु बहिर्निस्सृत्य राममारणमेवेत्यर्थः ।

ननु नगरीरक्षणप्रयासो राममारणं च दोष्णामेव धर्म इत्युभयमपि दोष्णामेव विशेषणम् । मूर्ध्नामित्यस्य तूद्वृत्तकृत्तनेव सम्बन्धः, चकारोऽपि विशेषणसमुच्चयार्थ इति चेत् । अत्र ब्रूमः—न खलूद्वृत्तकृत्तेत्यादिविशेषणं दोष्णामुत्कर्षकम्, स्वमस्तककर्त्तने तेषां भयासम्भवात्, किन्तु रिपुकण्ठकर्त्तनमेव पौरुषम्, मूर्ध्नान्तु तद्विशेषणं तादृशोत्कटक्लेशसहिष्णुतया लोकोत्तरशौर्यं व्यञ्जयति । किञ्च शौर्यं बलं चोभयमपि प्रबलरिपुमारणप्रयोजकमिति न तथात्वे पूर्वार्धवैयर्थ्यं शङ्क्यमिति सुधीभिर्ध्येयम् ।

यथा वा—

**स्रस्तां नितम्बादवरोपयन्ती पुनः पुनः केसरदामकाञ्चीम् ।**
**न्यासीकृतां स्थानविदा स्मरेण द्वितीयमौर्वीमिव कार्मुकस्य ॥**

**—अत्र द्वितीयत्वमात्रमुत्प्रेक्ष्यम् । मौर्वीं द्वितीयामिति युक्तः पाठः ।**

---

## साहित्यचूडामणिः

अर्थशिक्षायै भूय उदाहरति—स्रस्तामिति । न्यासीकृतां निक्षिप्ताम् ।

द्वितीयत्वमात्रमिति । प्राचीनाया मौर्व्या निक्षेप्तव्यत्वानौचित्यात् । ततश्च समासो नोपपद्यते । उत्तरपदार्थप्रधानो हि तत्पुरुषः । पूर्वपदार्थे च द्वितीयत्वमात्रे प्राधान्यौचित्यमिति समासे किमुक्तं स्यात् । ततश्च 'मौर्वीं द्वितीयामि'ति पठनीयम्, उपजात्यनुप्रवेशेन न वृत्तभङ्गशङ्का ।

## सुधासागरः

अत्र मिथ्येत्यादि । अयमाशयः—यद्यत्र मिथ्यामहिमत्वमनुवाद्यं स्यात्तदा तदनूद्य किञ्चिद् विधेयं स्यात्, प्रकृते तु यदि तदैव मिथ्यामहिमत्वं जातं तदिदानीं नगरीरक्षणे प्रयासो नानुचितः, यदि तु विधेयं स्यात्तदा तादृशेनापि कर्मणा यन्महिमवत्त्वं तदाऽभूत्तदिदानीं मिथ्या बभूव, यतः स्वनगरीरक्षणेऽप्यसामर्थ्यमिति प्रतीतिः सिद्ध्यति, अतो मिथ्यात्वस्यैवाप्राप्तत्वान्मिथ्यामहिमत्वमित्यस्य महिम्नो मिथ्यात्वमित्यर्थ एव करणीयः । तच्च मिथ्यात्वं बहुव्रीहावन्यपदार्थे गुणीभूतम् । किञ्च उद्देश्यं विधेयं च यदि पृथक्पदाभ्यामुपतिष्ठते तदा प्राप्तमुद्दिश्याप्राप्तं विधीयते, पर्वतो वह्निमानितिवत्, न तु समासे, अन्यथा वह्निमत्पर्वत इत्यभिधानापत्तेः ।

व्याख्यातं च प्रदीपकारैः—अत्र नगरीरक्षणे एव यत्प्रयासस्तन्मूर्ध्ना महिमा मिथ्येति मिथ्यात्वं विधेयम्, अप्राप्तत्वात् । अत एव नानुवाद्यम् । प्राप्तत्वे तु मिथ्यामहिम्नामफलत्वमेवोचितम्, अतः किमेतत् फलमित्यादिना नाभिसम्बन्धः स्यात् । तच्च बहुव्रीहावन्यपदार्थे गुणीभूतम्, विशेषणप्राधान्ये समासाननुशासनात् । किञ्च उद्देश्यं विधेयं च यदि पृथक्पदाभ्यामुपतिष्ठते तदा प्राप्तमुद्दिश्याप्राप्तं विधीयते । न च समासे पृथक्पदाभ्यामुपस्थितिः, अपृथगुपस्थितौ च न तथा व्युत्पत्तिरिती'-ति ।

एवं सामासान्तरेऽप्यविमृष्टत्वं द्रष्टव्यम् । तत्र कर्मधारये यथा वेत्युदाहरति—'स्रस्तामि'ति ।

कुमारसम्भवे पार्वतीवर्णनमिदम् । स्थानविदा आधारसादुगुण्यविज्ञेन स्मरेण कामेन न्यासः पुनर्ग्रहणसमर्पितं द्रव्यम् न्यासीकृता कार्मुकस्य द्वितीयमौर्वीमिव नितम्बात् स्रस्तां केसरपुष्पकाञ्चीं बकुलकुसुमक्षुद्रघण्टिकां पुनः पुनरवरोपयन्ती यथास्थानं निवेशयन्तीत्यर्थः ।

यथा वा—

वपुर्विरूपाक्षमलक्ष्यजन्मता दिगम्बरत्वेन निवेदितं वसु।
वरेषु यद् बालमृगाक्षि, मृग्यते तदस्ति किं व्यस्तमपि त्रिलोचने॥

—अत्रालक्षिता जनिरिति वाच्यम्।

## साहित्यचूडामणिः

वपुरिति।

कन्या वरयते रूपं माता वित्तं पिता श्रुतम्।
बान्धवाः कुलमिच्छन्ति मृष्टान्नमितरे जनाः॥

इति नीत्या वरगुणेषु गवेषणीयेष्वपि साकल्यं तावदास्तां नैकदेशिकोऽपि लाभोऽस्यास्तीत्युक्तं व्यस्तमपीति। यथा वपुरित्यनूद्य विरूपाक्षत्वं पृथग् विहितम् व्यासेन, एवं जन्मेत्यनूद्य विधेयेंऽशे विस्रष्टव्ये समासो नाङ्गीकार्य इति 'अलक्षिता जनिरि'-त्यर्थशिक्षार्थः पाठः, कालिदासपरिचितताया बन्धच्छायाया विघटमानत्वात्, किन्तु 'न लक्षिता[१] जनिरि'ति वाच्यं, नञ्समासेऽपि विधेयाविमर्शस्यानन्तरमेवाभिधीयमानत्वात्।

## सुधासागरः

अत्र द्वितीयत्वं मौर्व्यामुत्प्रेक्ष्य विधेयम्। अयमाशयः—स्वीयवस्तुन एव न्यासीकरणं न तु तत्सदृशस्येति नोपमा, किन्तु न्यासीकरणे हेतूत्प्रेक्षेयम्, तत्र च हेतुर्द्वितीयत्वमेव, मौर्वीत्वस्य तत्राप्रयोजकत्वात् इति। तच्च द्वितीयत्वं कर्मधारये परपदप्राधान्याद् गुणीभूतम्। मौर्वीं द्वितीयामिति पाठे तु निराबाधा प्रतीतिः। नन्वत्र काञ्च्यां द्वितीयमौर्वीत्वं विशिष्टमेवोत्प्रेक्ष्यम्, अतो नोक्तदोषावकाश इति चेत्, न, तथापि हि विशेषणांशस्य द्वितीयत्वस्य प्राधान्यम्, द्वितीयसद्भावे एकस्य न्यासीकरणौचित्यात्। मौर्वीत्वन्तु तस्याप्रयोजकम्, अन्यस्यापि सद्वितीयस्य तदौचित्यादिति वस्तुविशेषपरिचायकतामात्रम्। अयम्भावः—मौर्वीभिन्नस्यापि यस्य कस्यापि पदार्थस्य सद्वितीयस्य न्यासीकरणान्मौर्वीत्वं न न्यासीकरणे प्रयोजकं किन्तु ज्यारूपवस्तुविशेषपरिचायकमेवेति। तस्माद् विशिष्टविधावपि विशेषणमात्रप्राधान्येन वक्तव्यम्। अतएव 'आकडारादेका संज्ञा' इत्यत्रैकत्वस्याप्राधान्यप्रसङ्गभयेन समासो नाकारीति व्याख्यातारः। अन्यथा तत्राप्येकत्र संज्ञिन्युद्देश्ये एकत्वविशिष्टसंज्ञाविधाने दोषो न स्यात्। तदेतत् सर्वमभिप्रेत्य श्रीवाग्देवतावतार आह—अत्र मौर्वीं द्वितीयामिति द्वितीयत्वमात्रमुत्प्रेक्ष्यमिति।

बहुव्रीहावेव तद्धितार्थगुणीभूतेऽन्यपदार्थे गुणीभावं यथाच 'वपुर्विरूपे'-त्युदाहरति।

---

[१] छन्दोऽननुरोधेनेदं वचः।

यथा वा—

आनन्दसिन्धुरतिचापलशालिचित्त-
सन्दाननैकसदनं क्षणमप्यमुक्ता।
या सर्वदैव भवता तदुदन्तचिन्ता-
तान्ति तनोति तव सम्प्रति धिग् धिगस्मान् ॥

—अत्र न मुक्तेति निषेधो विधेयः। यथा—

नवजलधरः सन्नद्धोयं न दृप्तनिशाचरः
सुरधनुरिदं दूराकृष्टं न तस्य शरासनम्।
अयमपि पटुर्धारासारो न बाणपरम्परा
कनकनिकषस्निग्धा विद्युत् प्रिया न ममोर्वशी ॥ इत्यत्र।

---

## साहित्यचूडामणिः

तत्रैव दर्शयति—आनन्देति। अन्यस्त्रीविरहविह्वलं नायकं काचिदसूयाशालिन्युपालभते। नञ्समासे वैशसव्युदासेन निषेधो विधातव्यतया विमृष्टव्य इत्याह—न मुक्तेति। यथेति। व्यासौचित्यं दृष्टान्तेन दृश्यत इति यावत्।

न दृप्तनिशाचर इत्यादौ यथा व्यासलक्षणं सौभाग्यं तद्वदत्रापि कार्यम्।

## सुधासागरः

कन्या वरयते रूपं पित्राद्यास्तु कुलीनताम्।
मातरो धनमिच्छन्ति मिष्टान्नमितरे जनाः ॥

इत्यभिप्रायेण कपटबटोः पार्वतीं प्रति वचनमिदम्। स्पष्टम्। वंशस्थं वृत्तं 'जतौ तु वंशस्थमुदीरितं जरौ' इति लक्षणात्। अत्र वरेषु मार्गणीयानां धर्माणां वैकल्यदर्शनप्रस्तावाज्जन्मन्यलक्ष्यत्वं विधित्सितम्। तच्च समासे न्यग्भूतम्। अलक्षिता जनिरिति पौर्वापर्यविपर्ययसत्त्वेऽपि समासनिबन्धनमप्राधान्यं निवर्त्तते।

नञ्समासे 'यथा वा आनन्दे'-त्युदाहरति—

वसन्ततिलका छन्दः। विरक्तं नायकं प्रति नायिकासखीनामियमुक्तिः। प्रभो आनन्दसिन्धुः प्रमोदसागरः अतिचापलशालिचित्तस्य सन्दाननं निगडनं तस्यैकं केवलं सदनं बन्धनागारम्। उभयमिदं रूपकं नायिकाविशेषणं च एतादृशी या नायिका सर्वदैव भवता क्षणमप्यमुक्ता तदुदन्तचिन्ता तस्याः वार्त्ताप्रसङ्गः सम्प्रति तव तान्तिं ग्लानिं तनोति धिग्धिगस्मान्। अत्र न मुक्तेति निषेधो विधेयः।

यथा 'नवजले'-त्यादि। अयमाशयः—अत्रावान्तरवाक्येऽमुक्तेत्यनेन 'नवजलधरः सन्नद्धोऽयम्' इत्यादिपद्यं मेघादौ निशाचरादिभ्रमानन्तरं विशेषदर्शिनः पुरूरवस इयमुक्तिः, तत्रैव प्रसज्यप्रतिषेध एव विधेयः। न तु 'जुगोपात्मानम्' इत्यत्रेवात्रस्तत्वाद्यनुवादेनात्मनो गोपनादिवदमुक्तताद्यनुवादेनान्यत्किञ्चिद्विधेयमस्ति।

न त्वमुक्ततानुवादेनान्यदत्र किञ्चिद् विहितम् । यथा—

जुगोपात्मानमत्रस्तो भेजे धर्ममनातुरः ।
अगृध्नुराददे सोऽर्थानसक्तः सुखमन्वभूत् ॥

—इत्यत्र अत्रस्तत्वाद्यनुवादेनात्मनो गोपनादिः ।

## साहित्यचूडामणिः

नन्वमुक्तेत्यनुवाद एवास्तु का हानिरित्यत्राह—नन्विति । न खल्वमुक्तत्वं तस्यानुभाष्य किञ्चिदन्यद् विधीयते । तत्रापि समासौचित्यं दृष्टान्तेन दृश्यत इत्याह—यथेति ।

जुगोपेति । आत्मरक्षापुरस्परं त्रिवर्गप्रतिपत्तिमन्वभूदिति यावत् । यथा ह्यत्रस्त इत्यनुवादपूर्वकमात्मनो गोपनं विहितम्, एवममुक्ततानुवादेन न कस्यचिदप्यर्थस्यात्र विधानम् । किन्त्वानन्दसिन्धुत्वाद्यनुवादेनामुक्तत्वस्यैव वाक्यार्थे विधेयत्वात् । अन्यथा तद्वृत्तनैरपेक्ष्येण पूर्णवाक्यतापत्तेः । अयं भावः—अमुक्तेति नञा सह समासो नोपपन्नः, तस्य पर्युदासैकविषयत्वात्, यथा 'जुगोपात्मानमत्रस्त' इति । प्रसज्यप्रतिषेधानुकूलश्चायं प्रयोगः यत्र समासानौचित्यं, यथा 'नवजलधरः सन्नद्धोऽयं न दृप्तनिशाचरः' इति । पर्युदासस्य हि स विषयः यत्र विधौ प्रधान्यं न प्रतिषेधे । तदुक्तं—

प्रधानत्वं विधेर्यत्र प्रतिषेधेऽप्रधानता ।
पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ् ॥

## सुधासागरः

न च समासे नञः प्रसज्यप्रतिषेधोऽर्थः, किन्तु पर्युदास एव । यदुक्तम्—

विधेर्यत्र प्रधानत्वं प्रतिषेधेऽप्रधानता ।
पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ् ॥इति ॥

कथं तर्ह्यश्राद्धभोजीत्यादौ प्रसज्यप्रतिषेधलाभः । मैवम् । पर्युदासेनाक्षेपात् । ननु पर्युदासार्थोऽमुक्तत्वमेव विधीयताम्, फलाविशेषादिति चेत् । भवेदप्येवं यदि तथा सति क्षणमपीत्यनेन सम्बन्धः स्यात् । स हि मुक्तत्वेनैव प्रतियोगिना विवक्षितः । न च पर्युदासे तथा सम्भवः । समासे एकदेशेनान्वयायोगात् विशिष्टेनारोपितमुक्तत्वेनैवान्वयाच्च । नन्वेवमपि नाविमृष्टविधेयांशता, विधेयस्यानुपस्थितेः, किन्तु धारणे 'विदधत्' इतिवदवाचकत्वमेव स्यात्, समासेऽर्थान्तरनिरूणत्वादिति चेन्न । प्राधान्येनानिर्देशस्य तथाप्यक्षतेः । अत एव 'प्राधान्येनानिर्दिष्टो विधेयांशो यत्र' इत्याह वृत्तिकृत्, न त्वप्राधान्येन निर्दिष्ट इति । तर्हि विदधदित्यस्याप्यत्रैवान्तर्भाव इति चेन्न, तदर्थस्यानिर्दिष्टस्याप्यविधेयत्वात् । अमुक्तेत्यस्याविमृष्टविधेयांशस्यावाचके प्रवेश इति चेन्न, उभयोरसङ्कीर्णस्थलसम्भवे क्वचित् सङ्करेऽप्यदोषात् । दूषकताबीजं च विवक्षितार्थाप्रत्ययः । तस्मान्नित्यदोषोऽयम् ।

१६. विरुद्धमतिकृद् यथा—

सुधाकर-कराकार-विशारद-विचेष्टितः ।
अकार्यमित्रमेकोऽसौ तस्य किं वर्णयामहे ॥

—अत्र कार्यं विना मित्रमिति विवक्षितम् । अकार्ये मित्रमिति तु प्रतीतिः । यथा वा—

## साहित्यचूडामणिः

इति । तद्विपरीतः प्रसज्यप्रतिषेधः । तच्चोक्तम्—

अप्राधान्यं विधेर्यत्र प्रतिषेधे प्रधानता ।
प्रसज्यप्रतिषेधोऽसौ क्रियया सह यत्र नञ् ॥ इति ॥

एवञ्च न मुक्तेति प्रसज्यप्रतिषेधोचिते प्रयोगे यदमुक्तेति पर्युदसनं तत् खलु कवेरुक्तेरकौशलमुल्लिङ्गयति असामञ्जस्यप्रसङ्गादर्थस्य, यदत्र मुक्तताप्रतिषेधो विवक्षितः नत्वमुक्तताविधिः । तदुक्तं—

नञर्थस्य विधेयत्वे निषेधस्य विपर्यये ।
समासो नेष्यतेऽर्थस्य विपर्यासप्रसङ्गतः ॥ इति ।

समासे सति तस्य विध्यनुवादभावस्यास्तङ्गमनप्रसङ्गः । तदुक्तं—

क्रियाकर्त्रंशभागर्थो वाक्येऽपोह्यो नञा यदि ।
क्रियांश एवापोह्यः स्यान्नेष्टवानितिवत् तदा ।
अकुम्भकार इतिवद् वृत्तौ तु स्याद् विपर्ययः ॥ इति ।

कर्तृग्रहणं कर्मणोऽप्युपलक्षणमित्याकूतम् [ व्यक्तिविवेके ] ।

प्रसज्यप्रतिषेद्धव्यं विषयं विग्रहोचितम् ।
समस्य पर्युदस्यन्तमव्युत्पन्नं विदुः कथम् ॥

इति संग्रहश्लोकः ।

विरुद्धेति ।

कार्यं प्रयोजनं विना मित्रमकृत्रिमसुहृदित्यभिधातुमिच्छा अकार्येषु अन्याय्येषु

## सुधासागरः

विरुद्धमतिकृदित्यादि । पदान्तरसन्निधानेन प्रकृतप्रतीतिन्यक्कारकप्रतीतिजनकमित्यर्थः । तच्चेदमनेकधा प्रवर्त्तते । क्वचित् समासान्तरविग्रहेण, यथा सुधाकरेत्यादि । विशारदं श्रेष्ठं विचेष्टितं यस्येति समासः । स्पष्टमन्यत् । अत्र कार्यमन्तरेण मित्रमिति विवक्षितमकार्ये मित्रमिति तु प्रतीयते । अयम्भावः—कार्यस्याभावोऽकार्यम् , तेन मित्रमकृत्रिममित्रमित्यव्ययीभावे लक्षणानुसन्धाने विलम्बेन तदपेक्षया शक्तिलक्षणयोरन्यतराभावात् कर्मधारयेण झटिति कुकार्यप्रतीतिरिति अत्रोपश्लोकनविरोधिनञ्समासावयवस्य नञोऽप्रशस्तार्थकत्वम् । उक्तं च—

चिरकालपरिप्राप्तलोचनानन्ददायिनः ।
कान्ता कान्तस्य सहसा विदधाति गलग्रहम् ॥

—अत्र कण्ठग्रहमिति वाच्यम् ।

यथा वा—

न त्रस्तं यदि नाम भूतकरुणासन्तानशान्तात्मनस्
तेन व्यारुजता धनुर्भगवतो देवाद् भवानीपतेः ।
तत्पुत्रस्तु मदान्धतारकवधाद् विश्वस्य दत्तोत्सवः
स्कन्दः, स्कन्द इव प्रियोऽहमथवा शिष्यः कथं विस्मृतः ॥

---

## साहित्यचूडामणिः

कर्मसु मित्रमिति विरुद्धां बुद्धिमुत्पादयति । अयमर्थो मतिविरोधः ।

शाब्दमप्याह—चिरकालेति । गलग्रहो रोगविशेषः ।

कण्ठग्रहमालिङ्गनम् । अपर्यनुयोज्या हि शब्दशक्तिः ।

न त्रस्तमिति । भवस्य पत्नी भवानी तस्याः पतिरित्युक्तः स एव भवो न भवितुमर्हति वैयर्थ्यप्रसङ्गात् । भवानीशब्दस्य गौर्यादिपर्यायत्वेऽपि भवस्य पत्नीति शब्दस्वरूपतात्पर्यं परिहीयेत 'पुंयोगादाख्यायाम्' इत्युक्तत्वात् । गोरपीति । बलीवर्दस्यापि सतः । स इति प्रसिद्धौ । यथा किल—

## सुधासागरः

तत्सादृश्यं तदन्यत्वं तदल्पत्वं विरोधिता ।
अप्राशस्त्यमभावश्च नञर्थाः षट् प्रकीर्त्तिताः ॥ इति ॥

यथा वा—

क्वचिन्नामपदयोः समासे विरुद्धार्थनिरूढपदघटनया यथा—'चिरकाले'-ति । अत्र कण्ठग्रहार्थतया विवक्षितो गलग्रहशब्दो रोगविशेषे निरूढः । तथा च 'रूढिर्योगमपहरति' इति कण्ठग्रहार्थापहारेण रोगविशेष एव प्रतीयते ।

क्वचिद् विवक्षितविशेषपरत्वे पदवैयर्थ्यप्रसङ्गेनाविवक्षितविशेषपरत्वाद् यथा—'न त्रस्तमि'-ति । परशुरामोक्तिरियम् । धनुर्व्यारुजता भञ्जता तेन दाशरथिना भूतेषु प्राणिषु करुणासन्तानो दयासमूहस्तेन शान्तः आत्मा यस्य तथाभूतस्य भगवतो भवानीपत्तेर्देवान्महेश्वराद् यदि नाम न त्रस्तम् शान्तात् न कश्चिद् बिभेतीति, तदस्त्विति भावः । तस्य पुत्रस्तु मदेन गर्वेणान्धस्य द्वितीयमनवलोकयतस्तारकासुरस्य वधाद् विश्वस्य दत्तोत्सवो दुष्टमारकत्वेन विश्वविख्यातः स्कन्दः अथ वा स्कन्द इव प्रियोऽहं शिष्यस्ततोऽप्युग्रतरः कथं विस्मृतः । तस्मात् गर्विष्ठो दाशरथिर्मारणाय एवेति भावः ।

—अत्र भवानीपतिशब्दो भवान्याः पत्यन्तरे प्रतीतिं करोति ।

यथा वा—

गोरपि यद्वाहनतां प्राप्तवतः सोऽपि गिरिसुतासिंहः ।
सविधे निरहङ्कारः पायाद् वः सोऽम्बिकारमणः ॥

—अत्राम्बिकारमण इति विरुद्धां धियमुत्पादयति ।

श्रुतिकटु समासगतं यथा—

सा दूरे च सुधासान्द्रतरङ्गितविलोचना ।
बर्हिनिर्ह्रादनार्होऽयं कालश्च समुपागतः ॥

एवमन्यदपि ज्ञेयम् ।

---

## साहित्यचूडामणिः

संरम्भः करिकीटमेघशकलोद्देशेन सिंहस्य यः
सर्वस्यैव स जातिमात्रनियतो हेवाकलेशः किल ।
इत्याशाद्विरदक्षयाम्बुदघटाबन्धेऽप्यसंरब्धवान्
योऽसौ कुत्र चमत्कृतेरतिशयं यात्वम्बिकाकेसरी[1] ॥ इति ।

विरुद्धामिति । अम्बिकाशब्दस्य वेदभाषयोः स्वसृजननीवाचकत्वात् ।

अन्यत्तु केवलं समासगतं चेति यदुक्तं तत्र कैवल्येनोदाहारि । समासेनोदाह्रियते श्रुतिकटु समासगतं यथेति । मयूरकेकानुकूल इत्यर्थे बर्हिनिर्ह्रादनार्ह इत्युक्तत्वाद् ।

एवमन्यदपीति । तत्र च्युतसंस्कृतिर्यथा 'अन्यकारकवैयर्थ्यमि'ति । 'अषष्ठ्यतृतीयास्थस्या [ अ०सू० ६.३.९९ ] इत्यादिना दुक्प्रसंगात् ।

अश्लीलं यथा—'तत्पश्येयमङ्गमङ्गलगृहं भूयोऽपि तस्या मुखमि'ति । अत्र प्रशस्तस्त्रीव्यञ्जनप्रतीतिरिति ।

## सुधासागरः

अत्र भवानीत्यादि । अयं भावः—'अत्र भवस्य पत्नीत्यर्थे भवानीति सिद्धम् । तथा च भवपत्नीपतौ प्रतीयमाने भवातिरिक्तः स द्राक् प्रतीयते । नहि भव एवाभिधेये भवपत्नीपतिरिति प्रयोगो योग्यः सचेतसाम्' [ प्रदीपः ] ।

क्वचित् समासैक्येऽपि समस्यमानपदयोर्द्व्यर्थकतया यथा—'गोरपी'-ति । स्पष्टम् । अत्राम्बिकेत्यादि । अम्बिकारमणपदयोर्गौरीप्रीतिकरत्ववन्मातृस्वामित्वमप्यर्थः । तदुक्तं नृसिंहपुराणे—'शक्तित्वाल्लोकमातृत्वादम्बिका त्वं भविष्यसि'-इति । दूषकताबीजं विवक्षितार्थतिरस्कारकार्थोपस्थितिः । अतो यत्र विरुद्धाऽर्थो विवक्षित

---

[1] व्यक्तिविवेके विधेयाविमर्शोदाहरणमिदम् ।

**अपास्य च्युतसंस्कारमसमर्थं निरर्थकम् ।**
**वाक्येऽपि दोषाः सन्त्येते पदस्यांशेऽपि केचन ॥४॥**

केचन न पुनः सर्वे । क्रमेणोदाहरणम्—

१. सोऽध्यैष्ट वेदांस्त्रिदशानयष्ट पितॄनताप्सीत् सममंस्त बन्धून् ।
व्यजेष्ट षड्वर्गमरंस्त नीतौ समूलघातं न्यवधीदरींश्च ॥

---

## साहित्यचूडामणिः

एते च कतिपयव्यतिरेकेण वाक्येऽपि विद्यन्त इत्याह—अपास्येति । च्युतसंस्कारत्वं वाक्ये न संगच्छते, पदद्वयस्य युगपदसाधुत्वासम्भवात् । सम्भवेऽपि ययोरन्योन्यमन्वयस्तत्र पदस्य दोष इति युक्तं वक्तुं स्यान्न वाक्यस्येति । एतेन यदुक्तं शब्दहीनसंज्ञया भोजेन [सरस्वतीकण्ठाभरणे- १.१८]—

"गाण्डीवी विकटशिलानिभं भुजाभ्यामाजघ्ने विषमविलोचनस्य वक्षः"

इत्यत्र हन्तेः स्वाङ्गकर्मकादात्मनेपदस्य व्यक्षवक्षस्सम्बन्धनत्वाद् वाक्यप्रयुक्तमसाधुत्वमिति, तत् प्रत्युक्तं, यतो युक्तिचिन्तायामाजघ्न इति पदस्यैवात्रासाधुत्वम् । असमर्थमपि पदमेव । यत् पुनर्वाक्यमन्वयवैयाकुल्यादसमर्थं तदभवन्मतयोगादौ पर्यवस्यति निरर्थकं चादिपदं पदतयैव दुष्टमिति स्पष्टम् ।

सोऽध्यैष्टेति । क्रियाकारकव्याप्तत्वादयं वाक्यदोषः ।

## सुधासागरः

एव तत्रादोषत्वम् । क्लिष्टत्वादिविशेषेषु समासगतत्वमुदाहृतमेव । समासगतेषु श्रुतिकटुमुदाहरति—'श्रुतिकटु'-इति । स्पष्टम् । एवं च्युतसंस्कृत्यादयो द्रष्टव्याः ।

उक्तान् पददोषान् पदैकदेशे वाक्ये चातिदिशति—'अपास्ये'-ति ।

च्युतसंस्कारत्वादिर्भावप्रधानो निर्देशः ।

एते इति । श्रुतिकट्वादिपदप्रवृत्तिनिमित्तभूताः श्रुतिकटुत्वादय इत्यर्थः । अत्र यत्र पदान्तरसाहित्येन पदानां दुष्टत्वं स वाक्यदोषः । न चासाध्वसमर्थनिरर्थकानां दुष्टत्वे पदान्तरसाहित्यापेक्षेति तत्त्रितयापासनमिति सम्प्रदायः । तदसत् । 'सोऽध्यैष्ट' इत्यादौ श्रुतिकटोर्दुष्टत्वे पदान्तरसाहित्यस्यानपेक्षणीयतया तदुदाहरणविरोधात् । न च तत्रापि तथैवेति वाच्यम्, परुषवर्णारब्धत्वस्य स्वत एव सत्त्वात् । तथात्वेऽपि वा 'स रातु वो दुश्च्यवनः' इत्याद्यप्रगृह्याद्युदाहरणाव्याप्तिः । नहि तत्रापि दुष्टत्वे पदान्तरापेक्षेति वक्तुमपि शक्यते, अप्रयुक्तत्वस्य पदमात्रधर्मत्वात् । किञ्च अवाचकमप्यसमर्थसमानशीलं किमिति नापास्तमिति सर्वव्याख्यानेषु विनिगमकं वक्तव्यमिति ।

अत्र ब्रूमः—विवक्षितधर्मिप्रत्यायकशब्दवृत्तित्वे सति नानापदवृत्तित्वमेवात्र वाक्यवृत्तित्वमभिप्रेतम् । 'न्यक्कारो ह्ययम्' इत्यत्रापि नाव्याप्तिः, उद्देश्यविधेयाभिधायकयोर्द्वयोरपि दुष्टत्वात् । अतएवाविमृष्टविधेयांशमित्यत्रांशपदोपादनम् । 'योऽसौ

२. स रातु वो दुश्च्यवनो भावुकानां परम्पराम् ।
अनेडमूकताद्यैश्च द्यतु दोषैरसम्मतान् ॥

—अत्र दुश्च्यवन इन्द्रः । अनेडमूको मूकबधिरः ।

३. सायकसहायबाहोर्मकरध्वजनियमितक्षमाधिपतेः ।
अब्जरुचि-भास्वरस्ते भातितरामवनिप, श्लोकः ॥

—अत्र सायकादयः शब्दाः खड्गाब्धिभूचन्द्रयशःपर्यायाः शराद्यर्थतया प्रसिद्धाः ।

## साहित्यचूडामणिः

रातु ददातु । भावुकानां भद्राणाम् । द्यतु अवखण्डयतु । दुश्च्यवनादिशब्दानामिन्द्रादिपर्यायत्वेऽपि महाकविभिरुपेक्षितत्वादप्रयुक्तमेतद् वाक्यम् ।

सायकमकरध्वजक्षमाब्जश्लोकाः शरमदनसहिष्णुत्वपद्मपद्यार्थतया प्रसिद्धाः खड्गादिपर्यायतया प्रयुक्ता इति निहतार्थाः ।

## सुधासागरः

सुभगे तवागत' इत्युदाहरणे मूल एव स्फुटमेतत् । एवं च युक्तं च्युतसंस्कृत्यादिव्युदसनम् । नचाऽसमर्थसहोदरस्यावाचकस्यापि व्युदासो युक्तः, तेनापि केनचिद् विवक्षितधर्मिज्ञापनात् । यथोदाहृतेन जन्तुपदेन । व्युदस्तेषु पुनर्न कोऽपि प्रभेदो विवक्षितधर्मिप्रतिपादक इति ।

तत्र श्रुतिकटुवाक्यगतं यथा—'सोऽध्यैष्टे'-ति ।

उपजातिश्छन्दः । कामक्रोधलोभमोहमदमात्सर्याणि षड्वर्गम् । स्पष्टमन्यत् ।

ननु 'वैयाकरणे वक्तरि श्रोतरि वा कष्टत्वं गुण' इति वक्ष्यमाणत्वात् वैयाकरणोक्तमिदं कथं दुष्टमिति चेत्, उच्यते, न खलु वैयाकरणोक्तं सर्वं श्रुतिकटुत्वदुष्टम्, किन्तु वैयाकरणेन स्ववैयाकरणत्वप्रतिपिपादयिषया प्रयुक्तमेव । एवं वैयाकरणे श्रोतरि नादुष्टं गुणो वा, किन्तु वैयाकरणे श्रोतरि तद्वैयाकरणत्वप्रतिपिपादयिषया प्रयुक्तमेव । अत एव श्रीवाग्देवतावतारस्तथैवोदाहरिष्यति । ध्वनितं चेदं सर्वं श्रोतरीति पदं परिहृत्य 'प्रतिपाद्ये' इति वदता । एवं 'वैयाकरणे वक्तरि कष्टत्वं गुण' इत्यस्य स्वयं ग्रन्थकृता वक्ष्यमाणत्वेन भट्टिकाव्यस्य व्याकरणार्थनिरूपणैकतात्पर्यस्य पद्यमिदं श्रुतिकटुत्वे कथमुदाहृतमिति न जानीम इति विद्यारण्योक्तं दूषणं तेषामेवेति द्रष्टव्यम् ।

अप्रयुक्तमुदाहरति—'स रात्वि'-ति । स दुश्च्यवनो वो युष्मभ्यं भावुकानां कल्याणानां परम्परां रातु ददातु । 'रा दाने' इत्यदादिको धातुः । च पुनः । अनेडमूकशब्दश्च मूकबधिरेऽप्रयुक्त इत्यर्थः ।

निहतार्थमुदाहरति—'सायके'-ति । अत्र सायकादय इत्यादि । सायकशब्दः खड्गे मकरध्वजशब्दः समुद्रे क्षमाशब्दो भूमौ अब्जशब्दश्चन्द्रे श्लोकशब्दो यशसि

४. कुविन्दस्त्वं तावत् पटयसि गुणग्राममभितो
यशो गायन्त्येते दिशि दिशि च नग्नास्तव विभो ।
शरज्ज्योत्स्ना-गौर-स्फुट-विकट-सर्वाङ्ग—सुभगा
तथापि त्वत्कीर्तिर्भ्रमति विगताच्छादनमिह ॥

—अत्र कुविन्दादिशब्दोऽर्थान्तरं प्रतिपादयन्नुपश्लोक्यमानस्य तिरस्कारं व्यनक्तीत्यनुचितार्थः ।

---

## साहित्यचूडामणिः

कुविन्द इति । कुः पृथिवी तां लब्धवान् । गुणग्रामम् औदार्यादीनां गुणानां गणम् । पटयसि पटुं करोषि । नग्नाश्चारणाः । कुविन्दस्तन्तुवायः । गुणानां [ तन्तूनां ] ग्रामं समूहम् । पटयसि पटं करोषि । नग्ना दिगम्बराः । सर्वाङ्गेति वराङ्गपर्यन्तम् । विगताच्छादनं विलसदङ्गं यथा भवति इत्येवमर्थं प्रतिपादयन् वर्ण्यमानस्य वैजात्यकार्पण्यादिप्रयुक्तमश्लाघ्यत्वमभिव्यनक्ति ।

## सुधासागरः

च प्रयुक्तः । न चैषामेतेषु प्रसिद्धिभूयस्त्वम् । अतः प्रसिद्धैः शरमदनक्षान्तिपदपर्यायैरर्थैर्निहतार्था इत्यर्थः ।

अनुचितार्थमुदाहरति—'कुविन्द' इति । शिखरिणी छन्दः । हे विभो प्रभो कुं पृथिवीं विन्दति लभते इति कुविन्दो भूपतिस्त्वं तावद् गुणानां विद्यादानशौर्यादीनां ग्रामं समूहमभितः सर्वत्र पटयसि पटुं करोषि, 'ईदृशी विद्या, ईदृशं दानम, अहो शौर्यम्' इति लोकैः प्रशंसया निर्मलीकरोषीति यावत् । व्यङ्ग्यार्थस्तु कुविन्दस्तन्तुवायस्त्वं गुणग्रामं सूत्रसमूहं पटयसि पटं करोषीति । च पुनः एते नग्ना वन्दिनो दिशि दिशि तव यशो गायन्ति । कुविन्दपक्षे नग्ना विवस्त्राः पटलाभे त्वद्यशो गायन्तीति । तथापीत्यनेन कीर्त्तौ स्त्रीत्वारोपः । तथापि त्वयि सत्यपि यशस्विनि शरज्ज्योत्स्नावद् गौराणि अत एव स्फुटानि प्रकाशमानानि विकटानि विपुलानि यानि सर्वाङ्गाणि तैः सुभगा त्वत्कीर्त्तिर्विगताच्छादनं विगतावरणं भ्रमति । कुविन्दपक्षे विगतवस्त्रं यथा स्यात् तथा भ्रमति । सम्भावितपतिकायाः स्त्रियोऽनावरणभ्रमणं विवस्त्रभ्रमणं चानुचितमिति भावः ।

अत्र प्राकरणिके राजरूपेऽर्थे तदन्वययोग्ये चार्थे तत्तच्छब्दानामभिधाया नियमनात् तन्तुवायरूपोऽर्थस्तदन्वययोग्यश्चार्थो व्यञ्जनया गम्यते । ततश्चासम्बद्धार्थाभिधायकत्वापत्तिभयेनोपमायां पर्यवसानम् । उक्तं चास्माभिः 'भद्रात्मन' इत्यादिव्याख्यावसरे 'असम्बद्धार्थद्वयबोधकत्वेन वाक्यभेदापत्ते'रिति । एवं च राज्ञोऽनुचितं तन्तुवायौपम्यं वाक्यमहिमलभ्यमिति वाक्यमनुचितार्थम् । तदाह श्रीवृत्तिकारः—अत्र कुविन्दादीत्यादि ।

५. प्राभ्रभ्राड् विष्णुधामाप्य विषमाश्वः करोत्ययम् ।
निद्रां सहस्रपर्णानां पलायनपरायणाम् ॥
—अत्र प्राभ्रभ्राड्-विष्णुधाम-निद्रा-पर्ण-शब्दाः प्रकृष्ट-जलद-गगन-सप्ताश्व-सङ्कोच-दलानामवाचकाः ।

---

## साहित्यचूडामणिः

प्राभ्रेति । सूर्यः पद्मानि विकासयतीति यावत् । प्राभ्रभ्राडिति प्रकृष्टे जलदे भ्राजत इत्यस्यावाचकम् । पदशब्दार्थे धामपदम् । सप्तसङ्कोचशब्दवाच्ययोर्विषम-निद्राशब्दौ लाक्षणिकौ यत्र नेयार्थता । पर्णशब्दो जीर्णपत्रे निरूढ इति सर्वेषामवाचकत्वम् ।

## सुधासागरः

यत्तूक्तं प्रदीपकारैः—'अत्र कुविन्द इति तन्तुवायं, पटयसीति पटं करोषीति, गुणेति तन्तुं, नग्नेति वस्त्रहीनं, यश इत्यकारप्रश्लेषादयशः, विगताच्छादनमिति विगतवस्त्रमित्यर्थानुपश्लोक्यमानापकर्षद्योतकतयाऽनुचितान् प्रकाशयन्तीति', तत्रायश इत्यकारप्रश्लेषः प्रामादिकः, अयशस्विपतिकायाः स्त्रियो विवस्त्रभ्रमणस्यापि सम्भवेन वाक्यार्थस्यासामञ्जस्यापत्तेः । नन्वत्र कुविन्दपदात् प्रथमं जातिविशेषोपस्थितौ राजनि तन्निहतार्थमिति चेत् सत्यम् । किन्तु अप्रयुक्तनिहतार्थौ श्लेषयमकादावदुष्टाविति प्रतिपादयिष्यामः ।

अवाचकमुदाहरति—'प्राभ्रभ्राडि'-ति ।

अयं विषमाश्वः सूर्यः प्राभ्रभ्राड्विष्णुधामाप्य सजलमेघवदाकाशं प्राप्य । आङ् पूर्वस्यापे रूपम् । सहस्रपर्णानां कमलानां निद्रां पलायनपरायणां करोति दूरीकरोतीत्यर्थः । अत्रोपसर्गरूपप्रशब्दस्य धातुयोग एवानुशासनात् प्रकर्षानुपस्थापकता । एवं च प्राभ्रभ्राड्-विष्णुधाम-विषमाश्व-निद्रा-सहस्रपर्णपदानां सजलनिर्जलमेघसामान्य-गगनभूतलपातालस्थानत्रय - अयुग्मसङ्ख्यावच्छिन्न - इन्द्रियवृत्तिनिरोध-पत्रसहस्रवद्-वाचकानां सजलमेघ-गगन-सप्ताश्व-सङ्कोचन-पद्मपरत्वादवाचकत्वं बोध्यम् । अत एव प्रदीपकारैर्व्याख्यातम्—'अभ्रे भ्राजते इत्यभ्रभ्राट् जलदः, प्रकृष्टोऽभ्रभ्राड् यत्र तद् विष्णुधामेत्यस्य विशेषणम् । अत्र प्राभ्रभ्राडिति प्रकृष्टजलदे विष्णुधामेति पदे विषमाश्व इति सप्ताश्वे निद्रेति सङ्कोचे सहस्रपर्णेति सहस्रदले प्रकृष्टजलदत्वादिना प्रकारेण वाचकानि । कानिचिन्नात्र धर्मिणि शक्तान्ये' ति यथोक्तवाक्यदोषत्वमिति । तदेतत् सर्वमभिप्रेत्य श्रीवृत्तिकार आह—अत्र प्राभ्रेत्यादि ।

६ क. भूपतेरुपसर्पन्ती कम्पना वामलोचना ।
तत्तत्प्रहरणोत्साहवती मोहनमादधौ ॥
—अत्रोपसर्पण-प्रहरण-मोहनशब्दा व्रीडादायित्वादश्लीलाः ।

ख. तेऽन्यैर्वान्तं समश्नन्ति परोत्सर्गञ्च भुञ्जते ।
इतरार्थग्रहे येषां कवीनां स्यात् प्रवर्त्तनम् ॥
—अत्र वान्तोत्सर्गप्रवर्त्तनशब्दा जुगुप्सादायिनः ।

ग. पितृवसतिमहं व्रजामि तां सह परिवारजनेन यत्र मे ।
भवति सपदि पावकान्वये हृदयमशेषितशोकशल्यकम् ॥
—अत्र पितृगृहमित्यादौ विवक्षिते श्मशानादिप्रतीतावमङ्गलार्थत्वम् ।

---

## साहित्यचूडामणिः

कम्पना सेना। उपसर्पन्ती विपक्षव्यूहमभियुञ्जाना। प्रहणनं खड्गादिप्रहारः। उपसर्पणं दम्पत्योः सम्भोगारम्भः, प्रहणनं च तत्रत्यं हस्तास्फालनादि, मोहनं भावप्राप्तिरिति व्रीडादायित्वम्।

वान्तमश्नन्ति उत्सर्गं पुरीषं प्रवर्तनं मलोदीरणमिति जुगुप्सावाचकानि। प्रवर्तनमित्यत्र किञ्चिद्व्यञ्जकत्वसम्भावना। तस्मादिदं न शुद्धमुदाहरणम्।

पितृभवनमिति कस्याश्चन स्नुषाया उक्तिः। तातस्य भवनं व्रजामि। पावनवंशे हृदयं यत्र निश्शेषितश्वश्रूपारतन्त्र्यादिक्लेशं भवतीति विवक्षिते पितृभवनं

## सुधासागरः

अश्लीलेषु व्रीडादायि यथा—'भूपतेरुपे'-ति। उपसर्पणमभिगमनं रिरंसोद्योगश्च। कम्पना सेना, कम्पयुक्ता च। वामलोचना प्रतिकूलदृष्टिः, कान्तलोचना नायिका च। प्रहरणं मारणं, कामशास्त्रप्रसिद्धं दम्पतीजघनताडनञ्च। मोहनं विपक्षसम्मोहनं, निधुवनं च। एवं च शत्रून् प्रति वामे विरुद्धे लोचने यस्यास्तादृशी उपसर्पन्ती द्विषदभिमुखं गच्छन्ती भूपतेः कम्पना सेना तत्तत्प्रहरणे तस्य तस्य मारणे उत्साहो यस्यास्तथाभूता सती मोहनं विपक्षसम्मोहनमादधे इति विवक्षितवाक्यार्थप्रतीतिदशायामुपसर्पन्ती रतोद्यता कम्पना कम्पयुक्ता वामलोचनाऽपि कान्तं तद्निर्वचनीयप्रहरणेन स्वजघनेन पुरुषजघनताडने उत्साहवती सती भूपतेर्मोहनं निधुवनमादधे कृतवतीत्यर्थान्तरव्यञ्जनेन व्रीडादायित्वादुपसर्पन्तीत्यादिशब्दा अश्लीलाः दुष्टा इति भावः। तदेतत् सर्वमभिप्रेत्य श्रीवृत्तिकृदाह—अत्रोपसर्पणेत्यादि।

जुगुप्सादायि यथा—'तेऽन्यैर्वान्तमि'-ति। प्रवर्त्तनं कृतिः, पुरीषत्यागश्च। स्पष्टमन्यत्। अत्र वान्तोत्सर्गशब्दौ छर्दितपुरीषार्थकतया प्रवर्त्तनमिति पुरीषत्यागरूपार्थान्तरतया जुगुप्सां प्रयच्छन्ति।

अमङ्गलार्थं यथा—'पितृवसती'-ति। अपरवक्त्रं छन्दः। 'अयुजि ननरला गुरुः समे न्जमपरवक्त्रमिदं ततो जरौ' इति लक्षणात्। अहं परिवारगणेन सह तां

७. सुरालयोल्लासपरः प्राप्तपर्याप्तकम्पनः ।
मार्गणप्रवणो भास्वद्भूतिरेष विलोक्यताम् ॥
—अत्र किं सुरादिशब्दा देव-सेना-शर-विभूत्यर्थाः किं मदिराद्यर्था इति सन्देहः ।

८. तस्याधिमात्रोपायस्य[१] तीव्रसंवेगताजुषः ।
दृढभूमिः प्रियप्राप्तौ यत्नः स फलितः सखे ॥
—अत्राधिमात्रोपायादयः शब्दाः योगशास्त्रमात्रप्रयुक्तत्वादप्रतीताः ।

## साहित्यचूडामणिः

प्रेतभूमिः पावकान्वये चिताग्निसंस्पर्शे सत्यशेषितं निरवशेषीकृतं शोकशल्यं गृह-कर्मादिदुःखग्रन्थिर्यस्येत्यमङ्गलार्थत्वमित्याह—श्मशानादीति ।

सुरादिशब्दाः सुरकम्पनमार्गणप्रभृतयः । किं देवेति । देवानां सुराणामालय-स्योद्भावने तात्पर्यवान् अधिगतपूर्णसेनो यः सायकेष्वनुरक्त उज्ज्वलैश्वर्य इति किं योजना, किं वा मदिरागृहोल्लासपरः प्राप्तपूर्णचलनः अर्थार्जनव्यापृतः उज्ज्वलभस्मेति च सन्देहः ।

तस्येति कस्यचिन्नायकस्य नायिकया सह संघटनार्थं मिथः सुहृदोरुक्तिः ।

## सुधासागरः

पितृवसतिं स्वजनकगृहं प्रयामि, यत्र मे हृदयं पावकान्वये शुद्धिकारके वंशे सपदि शीघ्रमशेषितमुन्मूलितः शोक एव शल्यो यस्मात् तादृशं भवतीति विवक्षितार्थबोध-काले तां पितृवसतिं श्मशानं प्रयामि । यत्र श्मशाने पावकान्वये चिताग्निसम्बन्धे मे हृदयमशेषितशोकशल्यकं भस्मरूपं भवतीत्यर्थान्तरव्यञ्जनेन पितृवसतिपावकान्वय-शब्दावमङ्गलार्थत्वादश्लीलाविति भावः ।

ननु पावकशब्दस्य कथममङ्गलार्थत्वं वह्निशब्दस्येवातथात्वात् इति चेत् । मैवम् । यत्रेत्यनेन श्मशानाकृष्ट्या तत्सम्बन्धिनो वह्नेश्चिताग्नित्वप्रतीतेः । व्याख्यातं चास्माभिस्तथैव । अत एव प्रदीपकारैर्व्याख्यातम्—'अत्र पितृगृहं पावने वंशे इति च विवक्षिते पितृवसतिपावकान्वयशब्दौ श्मशानवह्निसम्बन्धरूपामङ्गलार्थान्तरौ' इति । तदेतत् सर्वमभिप्रेत्य श्रीवृत्तिकृदाह—अत्र पितृगृहमित्यादि ।

सन्दिग्धमुदाहरति—'सुरालयोल्लासे'-ति ।

सुरालयो देवगृहं, मदिरागृहं च, कम्पना सेना कम्पश्च, मार्गणो बाणो मार्गणं याचनं च, भूतिः सम्पत्तिर्भस्म च । अन्वयः स्पष्टः । अत्र प्रकरणाद्यभावात् स्तुतिर्निन्दा वेति सन्देहः । तदाह वृत्तिकृत्—अत्र किं सुरादीत्यादि ।

---

१ अधिमात्रो दृढतर उपायो यमनियमादिः । तीव्रसंवेगः परवैराग्यवान् । योगसूत्रे १—१४, २१, २२ सूत्राणि ।

९. ताम्बूलभृतगल्लोऽयं भल्लं जल्पति मानुषः ।
करोति खादनं पानं सदैव तु यथा तथा ॥

—अत्र गल्लादयः शब्दा ग्राम्याः ।

१०. वस्त्रवैदूर्यचरणैः क्षतसत्त्वरजःपरा ।
निष्कम्पा रचिता नेत्रयुद्धं वेदय साम्प्रतम् ॥

—अत्राम्बररत्नपादैः क्षत-तमाः अचला भूः कृता नेत्रद्वन्द्वं बोधयेति नेयार्थता ।

## साहित्यचूडामणिः

अतिलोकयत्नस्य प्रबद्धवैराग्यवस्त्वसेवितुः सर्वात्मना यो यत्नः उत्साहः स फलित इति । एतद् योगशास्त्रप्रसिद्धत्वादप्रतीतम् । तथाहि 'योगश्चित्तवृत्तिनिरोध' इति नीत्या शुभाशुभफलकरणवृत्त्या नियन्त्रणया (?) पश्यति । 'तदा द्रष्टुः स्वरूपेऽवस्थानम्' इति स्थित्या कूटस्थशून्यसाक्षिचैतन्यमात्रावस्थानपरमार्थस्य पुरुषार्थस्य यो यत्नोऽभ्यासपर्याय उपायः तस्यातिमात्रं मृदुमध्यातिक्रान्तम् । उक्तं हि 'मृदुमध्यातिमात्रत्वात् ततो विशेष' इति । संवेगः परमं वैराग्यं तस्य तीव्रत्वं सद्यः कार्यकारितया । यदाहुः—

'तीव्रसंवेगो नामासन्न'इति । दीर्घकालनैरन्तर्यात् सद्भिरासेवितो दृढभूमिरिति[१] ।

गल्लादयः शब्दाः केवललोकोपलालितत्वाद् ग्राम्याः ।

वस्त्रेति । वस्त्रेणाम्बरं लक्ष्यते । एकार्थवाचकत्वं सम्बन्धः । वैदूर्येण तत्सामान्यं रत्नम्, सम्भूयादित्यः । तस्य चरणाः पादाः किरणाः । सत्त्वरजसोः

## सुधासागरः

अप्रतीतमुदाहरति—'तस्याधिमात्रोपाये'-ति ।

हे सखे ! तीव्रः परमः संवेगो वैराग्यं तत्तायुक्तस्य, अतएवाधिमात्रोपायस्य अधिमात्रः सन्निहितसमाधिलाभेन दृढज्ञानवानुपायो यमनियमादिर्यस्य तादृशस्य तस्य योगिनः दृढभूमिर्दृढसंस्कारः काभिरपि चित्तवृत्तिभिरभिभवितुं न शक्यते, तथाभूतः स लोकोत्तरो यत्नो निदिध्यासनरूपः प्रयत्नः प्रियप्राप्तौ आत्मसाक्षात्कारे फलित इत्यर्थः । अयम्भावः—योगिनस्तावत् त्रिविधा भवन्ति मृदूपायो मध्योपायोऽधिमात्रोपायश्च । ते च प्रत्येकं मृदुसंवेगो मध्यसंवेगस्तीव्रसंवेगश्चेति त्रिविधाः । एवं नव भेदाः भवन्ति । तेष्वधिमात्रोपायस्तीव्रसंवेगो योगी भवति सिद्ध इति । दोषबीजमाह-अत्राधिमात्रेत्यादि ।

ग्राम्यमुदाहरति—'ताम्बूले'-ति । स्पष्टम् ।

अत्रेत्यादि । अत्र गल्लभल्लमानुषखादनपानशब्दा ग्राम्या इत्यर्थः ।

---

[१] प्रसिद्धस्तु पाठः 'तीव्रसंवेगानामासन्न' इति, 'स००० नैरन्तर्यसत्कारादरसे०' इति च । द्र० योगसूत्रस्य १.२१,१४ सूत्रे ।

११. धम्मिल्लस्य न कस्य प्रेक्ष्य निकामं कुरङ्गशावाक्ष्याः ।
रज्यत्यपूर्वबन्धव्युत्पत्तेर्मानसं शोभाम् ॥
–अत्र धम्मिल्लस्य शोभां प्रेक्ष्य कस्य मानसं न रज्यतीति सम्बन्धे क्लिष्टत्वम् ।

१२. न्यक्कारो ह्ययमेव मे यदरयस्तत्राप्यसौ तापसः
सोऽप्यत्रैव निहन्ति राक्षसकुलं जीवत्यहो रावणः ।

---

## साहित्यचूडामणिः

परो गुणस्तमः तत् क्षतं यस्याः । निष्कम्पा अचला भूः । रचिता कृता । युद्धं युगलम् । वेदनं बोधना विकास इति ।

धम्मिल्लस्येति । पूर्वमविद्यमाना बन्धस्य ग्रथनस्य व्युत्पत्तिश्चातुर्यं यस्य ।

क्लिष्टतां स्पष्टयितुं कविविवक्षितमन्वयमाह—धम्मिल्लस्येत्यादिना । एवं सम्बन्धे यथानिर्दिष्टस्य वाक्यस्य क्लिष्टत्वम् । अत्र चैतत् प्रतीतिमात्रं व्याकुलयति । क्वचित् पुनरर्थानौचित्यमुत्थापयति । यथा—

तव कण्ठासृजा सिक्ता करवाललता द्विषाम् ।
प्रसूते समरारण्ये यशःकुसुमसम्पदम् ॥ इति ।

अत्र युष्मदर्थस्य लडर्थस्य च पौर्वापर्यविपर्ययो न्याय्यः । तदुक्तं—

पदानामभिसम्बन्धस्यान्यथाभावमात्रतः ।
यत्र नेष्टा प्रतीतिः स्याद् रचनां तां परित्यजेत् ॥ इति ।

## सुधासागरः

नेयार्थमुदाहरति—'वस्त्रे'-ति ।

दम्पतीप्रबोधनपरमिदं वाक्यम् । अत्राम्बरेत्यादि। अयमाशयः–अत्र वस्त्रवैदूर्यशब्देनाम्बरमणेर्विवक्षितत्वाद् वस्त्रशब्देन गगनं विवक्षितम् । न चास्य तत्र शक्तिरिति वाचकत्वलक्षणेन शक्यसम्बन्धेन अम्बरपदं लक्षयति । तस्माच्च गगनप्रतीतिः । यद्वा, स्ववाचकवाच्यत्वलक्षणशक्यसम्बन्धेन गगनमेव लक्षयतीति लक्षितलक्षणा लक्षणा वेति वस्तुगतिः । एवं वैदूर्येत्यस्य मणौ, चरणेत्यस्य पादे, सत्त्वरजःपरेत्यस्य तमसि, निष्कम्पेत्यस्य चाचलायां भूमौ, युद्धमित्यस्य द्वन्द्वे, वेदयेत्यस्य बोधने लक्षणैव । न च तद्बीजं रूढिः प्रयोजनं वेति नेयार्थत्वमिति । 'स्त्रीपुंसौ मिथुनं द्वन्द्वं युग्मं तु युगलं युगम्' इत्यमरः ।

क्लिष्टमुदाहरति—'धम्मिल्ले'-ति । गाथा छन्दः । अत्रेत्यादि । अत्र कुरङ्गशावाक्ष्याः धम्मिल्लस्य शोभां प्रेक्ष्य कस्य मानसं न रज्यतीति सम्बन्धे प्रतीतिव्यवधानमित्यर्थः ।

धिग् धिक् शक्रजितं प्रबोधितवता किं कुम्भकर्णेन वा
स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैः किमेभिर्भुजैः ॥

—अत्रायमेव न्यक्कार इति वाच्यम्। उच्छूनत्वमात्रं चानुवाद्यम् न वृथात्वविशेषितम्। अत्र च शब्दरचना विपरीता कृतेति वाक्यस्यैव दोषो न वाक्यार्थस्य।

---

## साहित्यचूडामणिः

धिग्धिगिति। प्रबोधितं प्रबोधनं तद्वता तत्कर्मभूतेनेति मत्वन्तो निर्देशः। अयमेवेत्यनुभूयमानमरातिसद्भावमनूद्य तस्य न्यक्कारता विधेया। तद्विपरीता च वाक्यवृत्तिरासीदिति विधेयाविमर्शः। तदुक्तं—

अनुवाद्यमनुक्त्वैव न विधेयमुदीरयेत्।
न ह्यलब्धास्पदं किञ्चित् कुत्रचित् प्रतितिष्ठति॥ इति।

अवयवविपर्यासलक्षणमप्राप्तकालमिदं निग्रहस्थानमिति नैयायिकाः। नियमकथाया-मेतन्निग्रहस्थानं, न सर्वदेति चेत्। सत्यम् भवत्विति (?) स्थिता हि निर्वाह्या काव्यगुम्फनेति कविसमयः।

प्रसङ्गात् पदगतमप्याह—उच्छूनत्वमात्रमिति मिथ्यामहिमत्ववत्। ननु वाक्यार्थस्य दोषोऽयं न वाक्यस्येत्यत्राह—अत्र चेति। शब्दरचनाया एव वैपरीत्यम् अर्थस्य तादवस्थ्यात्।

## सुधासागरः

अविमृष्टविधेयांशमुदाहरति—न्यक्कार इत्यादि। न्यक्कारो धिक्कारः निन्देति यावत्। अयमेव, अन्येषां पराभवादिः मम तु रिपुसम्बन्ध एव न्यक्कार इत्यर्थः। मे यदरयः नैको द्वौ वा, पूर्वमेकोऽपि नासीत् सम्प्रति युगपदेव बहवो जाता इति बहुवचनेन ध्वन्यते। तत्राप्यसौ मानुषः, सोऽपि तापसः शस्त्रानभिज्ञः सोप्यत्रैव मत्समीप एव राक्षसकुलं आबालवृद्धाङ्गनं सर्वं निहन्ति नितरां मारयति, जीवत्यहो रावणः, अहो महदाश्चर्यमेवंविधेऽपि पराभवातिशये क्रोधाग्निनिर्दग्धोऽपि रावणो न भस्मी-भवतीति भावः। धिग्धिक् शक्रजितम्। वीप्सया निन्दाऽतिशयो व्यज्यते। प्रबोधितवतेति णिजन्ताद् भावे क्तस्ततो मतुप्, न तु क्तवतुप्रत्ययः, कर्मणि तस्या-साधुत्वात्। उत्थापितेन कुम्भकर्णेन वा किं न किञ्चित्फलम्। स्वर्ग एव ग्रामटिकाऽ-ल्पग्रामस्तस्य विलुण्ठनेन विध्वंसनेन वृथोच्छूनैरेभिर्भुजैः किं, बहुवचनेन शत्रोर्भुजद्वयं मम तु बहवो भुजास्तथापि वैकल्यमिति ध्वन्यते। श्रीवत्सलाञ्छनभट्टाचार्यास्तु—जीवतीति काका न जीवतीत्यर्थ इत्याहुः।

अत्रायमेव न्यक्कार इत्यादि। अयमाशयः—अत्र प्राप्तमरिमत्त्वम् 'अयम्' इत्यनूद्याप्राप्तं न्यक्कारत्वं विधीयतेऽतोऽयमेव न्यक्कार इति वाच्यम्। 'अनुवाद्य-

यथा वा—

अपाङ्गसंसर्गितरङ्गितं दृशोर्भ्रुवोररालान्तविलासि वेल्लितम् ।
विसारिरोमाञ्चनकञ्चुकं तनोस्तनोति योऽसौ सुभगे तवागतः ॥

—अत्र योऽसाविति पदद्वयमनुवाद्यमात्रप्रतीतिकृत् ।

तथा हि—

प्रक्रान्तप्रसिद्धाऽनुभूतार्थविषयस्तच्छब्दो यच्छब्दोपादानं नापेक्षते ।

क्रमेणोदाहरणम्—

कातर्यं केवला नीतिः शौर्यं श्वापदचेष्टितम् ।
अतः सिद्धिं समेताभ्यामुभाभ्यामन्वियेष सः ॥

---

## साहित्यचूडामणिः

तद् व्यक्तिविवेकरीत्या भूय उदाहरति—अपाङ्गेति । तरङ्गितं तरङ्गणम् । रोमाञ्चनं रोमाञ्चकरणम् ।

पदद्वयमिति । दृशोः तरङ्गितादिकं यस्तनोति असावागत इति यद्वृत्त-मनुवाद्यार्थमदोवृत्तं च विधेयार्थमिति कविविवक्षा । तदुभयं सम्भूयानुवाद्यमात्रस्य प्रतीतिं करोति ।

प्रस्तुतशिक्षायै यत्तदादिकं निस्तुषयितुमाह—तथाहीति । प्रक्रान्तः प्रकृतः प्रसिद्धः प्रख्यातः अनुभूतः स्वानुभवैकगोचरः । एवं त्रिधार्थविषयस्तच्छब्दो यत्तदोर्नित्यसम्बन्धापवादेन यच्छब्दोपादानं नापेक्षते ।

कातर्यमिति । स इति प्रकृतोऽतिथिर्नाम राजा । नात्र यद्वृत्तोपादा-नापेक्षा ।

## सुधासागरः

मनुक्त्वैव नाभिधेयमुदीरयेत्' इति वृद्धवचनात् । अन्यथा तु वैपरीत्येन विलम्बेन वा तथाभावः प्रतीयेत । 'अयं न्यक्कार' इत्युभयोः पदयोर्दुष्टत्वाद् वाक्यदोषत्वम् । अत एव समासगतमेव दुष्टं पदमित्युक्तम् । अपि च-वृथोच्छूनैरित्यसङ्गतम्, उच्छूनत्वमात्रस्यैवानुवादौचित्यात्, न तु वृथात्वविशेषितस्य, किमेभिरित्यनेन वृथात्वस्यैव विधेयत्वात् । अर्थभेदोपगमेऽपि किमेभिरिति वैफल्याभिधानविरोधात्, वृथोच्छूनत्वस्य तदौचित्यात् । ननु 'न्यक्कारोऽयम्' इत्यत्र वैपरीत्येन विधेयत्वप्रयोगा-दर्थदोष एवायं स्यादिति चेत्, न खल्वत्र विवक्षितोऽर्थो दुष्टः, किन्तु क्रमविशेषाद-विवक्षितार्थप्रत्यय एवेति शब्दविशेष एवापराध्यति, शब्दान्तरेण तत्प्रतीतेरवैकल्यात्, यथा विरुद्धमतिकृतीति ।

द्वयं गतं सम्प्रति शोचनीयतां समागमप्रार्थनया कपालिनः ।
कला च सा कान्तिमती कलावतस्त्वमस्य लोकस्य च नेत्रकौमुदी ॥

उत्कम्पिनी भयपरिस्खलितांशुकान्ता
ते लोचने प्रतिदिशं विधुरे क्षिपन्ती ।
क्रूरेण दारुणतया सहसैव दग्धा
धूमान्धितेन दहनेन न वीक्षिताऽसि ॥

---

## साहित्यचूडामणिः

कला च सेति शशिकलायाः प्रसिद्धत्वान्न यदपेक्षा ।

उत्कम्पिनीति । वासवदत्तादाहाकर्णनप्रवृद्धशोकस्य वत्सराजस्येयमुक्तिः । ते सातिशयविभ्रमायतने अपि विधुरे लोचने कान्दिशीकतया कान्ता क्वात्रेति निर्लक्षं क्षिपन्ती । अत्र तद्वृत्तव्यङ्ग्यलोचनगोचराणां वाचामगोचराणां गुणानां स्मरणं रसस्यासाधारणं निबन्धनम् । एवं 'तद् गेहं नतभित्ती'—त्यादावपि द्रष्टव्यम् ।

## सुधासागरः

न केवलं विधेयस्योपसर्जनत्वव्युत्क्रमाभ्यामेवायं वाक्यदोषः, किन्तु विधेयानुपस्थित्याऽपीत्याशयेन यथा वेत्युदाहरणान्तरं दर्शयति—'अपाङ्गे'ति । वंशस्थं वृत्तम् । हे सुभगे ! यस्तव दृशोरपाङ्गसंसर्गितरङ्गितं, भ्रुवोरारालान्तविलासवेल्लितं, तनोर्विसारिरोमाञ्चनकञ्चुकं तनोति असावागत इत्यन्वयः । स्पष्टम् । अत्र श्रीवाग्देवतावतारो विधेयानुपस्थितिं दर्शयन्नेव यत्तदोर्नित्याभिसम्बन्धमत्र 'योऽसौ' इत्यादिना महता प्रबन्धेनोपपादयति । अत्रायमाशयः—अत्र 'योऽसौ' इति पदद्वयमुद्देश्यविधेयार्थकतया विवक्षितम्, उद्देश्यवाचिनो यच्छब्दस्य स्वार्थपरामर्शवत्तच्छब्दापेक्षितत्वात् । न चैतत्तत्प्रतिपादकम्, यच्छब्दसान्निध्येन अदसादीनां प्रसिद्धपरामर्शकत्वात् । ननु केवलयोरपि यत्तदोः प्रयोगदर्शनात्सापेक्षत्वमेवानयोरसिद्धम्, उच्यते । अनयोः परस्परार्थापेक्षात्मकत्वं नियतमेव, एतदेवोच्यते 'यत्तदोर्नित्याभिसम्बन्ध'इति । स चाभिसम्बन्धः शाब्दः आर्थो वा । तत्र द्वयोरुपादाने शाब्दः । यथा—'स दुर्मतिः श्रेयसि यस्य नादरः' । एकस्य द्वयोरपि चानुपादाने स्वार्थः, अनुपात्तस्यापि सामर्थ्यादेवाक्षेपात् । तत्र तच्छब्देन यच्छब्दाक्षेपः प्रक्रान्तप्रसिद्धानुभूतार्थकेन । यथा कातर्यमित्यादि । अत्र स इति प्रक्रान्तं राजानमाह ।

द्वयं गतमित्यादि । वंशस्थं वृत्तम् । व्याख्यातमेतत् प्राक्[१] । अत्र सेति प्रसिद्धम् ।

उत्कम्पिनीत्यादि । वसन्ततिलका छन्दः । हे प्रिये ! उद्गतकम्पवती । तथा भयेन परिस्खलितमंशुकान्तं वस्त्रप्रान्तं यस्यास्तादृशी ते मदनुभूतशोभाविशेषे

[१] पञ्चम उल्लासे २७८ पृ० ।

यच्छब्दस्तूत्तरवाक्यानुगतत्वेनोपात्तः सामर्थ्यात् पूर्ववाक्यानुगतस्य तच्छब्दस्योपादानं नापेक्षते। यथा—

साधु चन्द्रमसि पुष्करैः कृतं मीलितं यदभिरामताधिके।
उद्यता जयिनि कामिनीमुखे तेन साहसमनुष्ठितं पुनः॥

प्रागुपात्तस्तु यच्छब्दस्तच्छब्दोपादानं विना साकाङ्क्षः। यथाऽत्रैव श्लोके आद्यपादयोर्व्यत्यासे। द्वयोरुपादाने तु निराकाङ्क्षत्वं प्रसिद्धम्।

---

## साहित्यचूडामणिः

एवं तदो यदनपेक्षामुक्त्वा यदोऽपि तदनपेक्षामाह—यच्छब्दस्त्विति। उत्तरेति। पूर्ववाक्यार्थगतस्य यद्वृत्तापेक्षायाः साधयिष्यमाणत्वात्।

साध्विति। चन्द्रमसि विषये पद्मैरुचितमाचरितमिति पूर्वो वाक्यार्थः। यतो रामणीयकोत्तरे तत्र सति मीलितं सङ्कुचितं तिरोहितं च। अत्र यच्छब्दस्य भविष्यदर्थस्य तच्छब्दापेक्षा न सम्पद्यते। एवम्—'आत्मा जानाति यत् पापं माता जानाति यत् पिता' इत्यादावप्यवगन्तव्यम्। तदात्मा जानाति यत् पापभूतं माता जानाति, यत् पितृभूत इति।

अपेक्षोचितं स्थानमाह—प्रागिति। पूर्ववाक्यार्थवर्त्ती यच्छब्दः तच्छब्दोपादानमन्तरेण साकाङ्क्षः न वाक्यार्थपर्यवसायी। आद्येति। प्रथमद्वितीयपादयोर्व्यत्यासे।

यदुवाच न तन्मिथ्या यद्ददौ न जहार तद्—इति। एतद् यदुपक्रमं तदुपसंहारं च वाक्यम्। विपर्ययेण यथा 'सा न काचिद् या न भवसी'ति। उभयमेकत्र यथा ममैव—

ये शिलाशकलशङ्कया रसस्राविणीषु करकासु निस्पृहाः।
अर्थिनश्च सलिले त एव ते ये हि विश्वविमुखास्त्वदुन्मुखाः॥ इति।

## सुधासागरः

लोचने प्रतिदिशं दिशि दिशि मद्दिदृक्षया क्षिपन्ती त्वमिति मध्यमपुरुषेणाक्षिप्यते, क्रूरेण निर्दयेन धूमेनान्धितेनावृतेन दहनेन दारुणतया सहसाऽविचार्यैव दग्धा न वीक्षितासीत्यर्थः। क्रूरस्य विलम्बाक्षमत्वमन्धितस्यावीक्षणं चोचितम्, अन्यथा त्वत्सौन्दर्यदर्शने कथं दहेदिति भावः। अत्र 'ते' इत्यनुभूते। एवं च त्रिष्वप्येषु यच्छब्दोपादानं नावश्यापेक्षणीयम्, तदभावेऽप्याक्षेपादेव 'यः पूर्वोक्तगुणवान्' 'या प्रसिद्धा' 'ये अनुभूते' इति च प्रत्ययाविघातात्।

यच्छब्दस्तूत्तरवाक्यगत एव सर्वत्र तच्छब्दाक्षेपसमर्थः। पूर्ववाक्यगतस्तु यच्छब्दः तदाक्षेपासमर्थतया तदुपादानमेवापेक्षते। यथाऽत्रोदाहरणे प्र पादयोर्व्यत्यासे। ननु पूर्ववाक्यगतोऽप्ययं तदाक्षेपसमर्थः। यथा—'तद

अनुपादानेऽपि सामर्थ्यात् कुत्रचिद् द्वयमपि गम्यते। यथा—

ये नाम केचिदिह नः प्रथयन्त्यवज्ञां
जानन्ति ते किमपि तान् प्रति नैष यत्नः।
उत्पत्स्यतेऽस्ति मम कोऽपि समानधर्मा
कालो ह्ययं निरवधिर्विपुला च पृथ्वी॥

—अत्र य उत्पत्स्यते तं प्रतीति।

एवं च तच्छब्दानुपादानेऽत्र[१] साकाङ्क्षत्वम्।

## साहित्यचूडामणिः

अनुपादानेऽपीति। द्विविधो हि यत्तदोरुपक्रमोपसंहारक्रमः शाब्द आर्थश्चेति। तत्र द्वयोरुपादाने शाब्दः। एकतरोपादाने आर्थः। द्वयोरनुपादानेऽप्यार्थ इति चतुर्थः प्रकारः।

ये नामेति। प्रमुखे विनयप्रदर्शनम्, अन्ततः कवित्वगर्वौद्धत्यं च। साधर्म्यशाली य उद्भविष्यति तं प्रति प्रकरणारम्भसंरम्भ इति यत् तद् युगलमर्थसामर्थ्यलभ्यम्।

प्रस्तुतं प्रमेयं प्रत्यवेक्षते—एवञ्चेति 'योऽसौ सुभगे तवागत' इत्यत्र यत्पदमेकमेवावलोक्यते न तत्प्रतिसम्बन्धि तत्पदं, तदनुपादाने च वाक्यस्य साकाङ्क्षत्वम्।

## सुधासागरः

हारितं कुवलयैः' इत्यादाविति चेत्। सत्यं समर्थो न तु सर्वत्र, किन्तु यदीत्येतावद्रूपस्तत्पर्यायः, उत्तरवाक्यगतस्तु सकलरूपस्तथेति विशेषः। यद्वा यदीत्यव्ययमिदं न तु यच्छब्दः, तच्च भिन्नस्वभावमेव। एवं चेच्छब्दोऽपि।

अनुपादानेऽपीति। वसन्ततिलका छन्दः। 'उक्ता वसन्ततिलका तभजा जगौ ग' इति लक्षणात्। ते जानन्ति किमपि अपि तु किमपि न जानन्तीत्यर्थः। उत्पत्स्यत इत्यत्र मानमाह काल इति। अस्तीत्यत्र मानमाह विपुलेति। स्पष्टमन्यत्। अत्र य उत्पत्स्यते अस्ति वा मम समानधर्मा तं प्रति यत्न इति स्फुटमेवावगम्यते। यथाश्रुते हि न पूर्वार्द्धेन कथमप्यन्वयः। यत्तु 'प्रक्रान्ताद्यर्थकस्य तच्छब्दापेक्षैव न' इति व्याख्यानं तद्व्यक्तिविवेकाद्यनालोचननिबन्धनं श्रीवृत्तिकारानभिमतं च, यदग्रे 'यच्छब्दोपादानं नापेक्षते' इत्याह, न तु 'यच्छब्दं नापेक्षते' इति। तस्माद्यथाव्याख्यातमेवादरणीयम्। एवं च 'योऽसौ सुभगे' इत्यत्र तच्छब्दस्यानुपादानादाक्षेपासम्भवाच्च यच्छब्दः साकाङ्क्षः। ननु स्यादेवैतद् यदि तच्छब्दार्थकोऽयमदःशब्दो न स्यादिति चेत्, तत्किमदसस्तच्छब्दपर्यायता।

---

१ 'अपाङ्गसंसर्गी-' ति पद्ये।

न चासाविति तच्छब्दार्थमाह—

असौ मरुच्चुम्बितचारुकेसरः प्रसन्नताराधिपमण्डलाग्रणीः ।
वियुक्तरामातुरदृष्टिवीक्षितो वसन्तकालो हनुमानिवागतः ॥

—अत्र हि न तच्छब्दार्थप्रतीतिः ।

प्रतीतौ वा—

करवालकरालदोःसहायो युधि योऽसौ विजयार्जुनैकमल्लः ।
यदि भूपतिना स तत्र कार्ये विनियुज्येत ततः कृतं कृतं स्यात् ॥

—अत्र स इत्यस्यानर्थक्यं स्यात् ।

---

## साहित्यचूडामणिः

ननु यदः केवलस्यात्र प्रयोगः न तद् इति कोऽयं दोषः यावता तदभिन्नार्थमदोवृत्तं प्रयुज्यत इत्याशङ्क्याह—न चेति तदद्शब्दयोर्भिन्नार्थत्वं प्रकटयति—'असावि'ति । मरुता मलयानिलेन चुम्बितानि चारूणि केसराणि वकुलकुसुमानि यत्र । प्रसन्नः स्वच्छः ताराधिपस्य चन्द्रमसो मण्डल एवाग्रणीः प्रधानभूतो यस्य वियुक्तानां विरहिणीनां रामाणां रमणीयानाम् आतुरया दृष्टया वीक्षितो वसन्तकालः । अथ च मरुता तातेन चुम्बिता आघ्राताः चारवः केसराः स्कन्धरोमाणि यस्य । प्रसन्नस्य वालिवधेन विगलितविरोधस्य ताराधिपस्य सुग्रीवस्य यन्मण्डलं सेनाचक्रं तस्याग्रणीः प्रथमगः । वियुक्तस्य सीताविप्रलम्भिनो रामस्यातुरया दृष्टया वीक्षितो हनुमान् । स इवासावागत इति प्रत्यक्षेण निर्दिश्यमानत्वात् कथं तच्छब्दार्थप्रतीतिः । तस्माददसस्तदभिन्नार्थतानुपपत्तिः ।

यदि च तामपह्नुत्य गतानुगतिकत्वादनयोरेकार्थत्वभ्रमः, तदभ्युपगम्यापि भ्रम इत्याह प्रतीतौ वेति ।

## सुधासागरः

तथा सति—'न चासावितो'ति ।

वंशस्थं वृत्तम् । 'जतौ तु वंशस्थमुदीरितं जरौ' इति लक्षणात् । असौ वसन्तकालो हनुमानिवागत इत्यन्वयः । उभयसाधारणं विशेषणमाह मरुद्दक्षिणानिलस्तेन चुम्बिता ईषत्स्पृष्टाः केसराः बकुला यत्र तथाभूतः । पक्षान्तरे मरुता हनुमत्पित्रा चुम्बितानि केसराणि स्कन्धलोमानि यस्य तादृशः । प्रसन्नः स्वच्छो यस्ताराधिपो नक्षत्रेशस्तस्य मण्डलं बिम्बं तस्याग्रणीः अग्रेसरः । पक्षे प्रसन्नस्ताराधिपः सुग्रीवस्तस्य मण्डलं राष्ट्रं तत्राग्रणीः । तथा वियुक्तरामाणां वियोगिनामातुरदृष्ट्या खिन्नदृशा वीक्षितः । पक्षे वियुक्तो यो रामो दाशरथिस्तस्यातुरदृष्ट्योत्कण्ठिचक्षुषा वीक्षित इत्यर्थः । अत्रादःशब्दस्तच्छब्दार्थमेवाभिदध्यान्न त्विदमर्थम् । अथात्र वैयात्यादिष्टापत्तिमालम्बसे तर्हि करवालेत्यादि । विजयः फाल्गुनः अर्जुनः कार्त्त-

अथ—

योऽविकल्पमिदमर्थमण्डलं पश्यतीश, निखिलं भवद्वपुः।
आत्मपक्षपरिपूरिते जगत्यस्य नित्यसुखिनः कुतो भयम्॥

इतीदंशब्दवद् अदःशब्दस्तच्छब्दार्थमभिधत्ते इत्युच्यते तर्ह्यत्रैव

## साहित्यचूडामणिः

विजयस्यार्जने सम्पादने प्राधान्येन समर्थः। स इत्यस्यानर्थक्यमिति, अदश्शब्देनैव तत्कार्यसिद्धेः।

नन्विदंशब्दस्य तच्छब्दस्य सादृश्यादभियुक्तप्रयोगोऽस्ति तद्वददश्शब्दस्यापि भवतु इदमेतददसां समानयोगक्षेमत्वादित्याशङ्कते—अथेति। य इति। हे ईश! परमेश्वर! इदं सर्वसंवादेन साक्षात्क्रियमाणम्, अर्थमण्डलं प्रमेयप्रपञ्चम् अविकल्पं हानोपादानादिप्रवृत्तिरहितं कृत्वा भवद्वपुः पश्यति; ओदनं पचतीतिवत्, संवित्स्वभावमेव यथामति भवति तथानुसन्धत्ते, स्वस्य यौगिकस्यात्मनो यः पक्ष ऐक्यप्रथा तेन परितः पूरिते—

संप्लुतेदम्पदद्वीपे प्राप्तैकध्ये चिदम्बुधौ।
मज्जतां नैव चेत्यानामस्ति हस्तावलम्बनम्॥

इति स्थित्या स्वात्माभेदमात्रपात्रीकृते जगति नित्यसुखिनो भेदशङ्काकलङ्कत्रोटनात् परमाह्लादचमत्कारधनस्य कुतो भयं, न कुतश्चिदपि, "द्वितीयाद् वै भयं भवती"-ति श्रुतेः।

इदंशब्दवदिति। इदंशब्दो यद्वत् तच्छाब्दार्थमभिधत्ते तद्वददश्शब्दोऽपि। एतदेतच्छब्दस्याप्युपलक्षणम्। दूषयति—तर्हीति। अत्रैव यथादर्शनं 'योऽविकल्पमि-त्यादाविव वाक्यान्तर उपादातुं युज्यते। न तत्रैवेति। न तु यत्र यद्वृत्तं तस्यैव

## सुधासागरः

वीर्यश्च तद्वदेकमल्लः। यद्वा विजये इति सप्तम्यन्तम्। स्पष्टमन्यत्। इत्यत्र स इति पुनरुक्तं स्यात्, अदःशब्देन तदर्थाभिधानात्।

नन्वर्थान्तरमस्य न निषेधामः किन्त्वनुजानीमस्तदर्थकत्वम्, कथमन्यथा—'अथ योऽविकल्पे-'ति[१]।

य इदमर्थमण्डलं प्रमेयजातं विकल्पं नानाकल्पनायोगि भवद्वपुरिति पश्यतीत्य-भेदेन सम्बन्धः। आत्मपक्षेत्यादि स्पष्टम्। स्वात्मपक्ष इति पाठे स्वशरीरवाची तस्यात्मेत्यर्थः। 'द्वितीयाद् भयं भवति' इति श्रुतेरिति भावः। इत्यत्रेदंशब्दस्यापि तच्छब्दार्थकता, इदमदसोः समानशीलत्वादिति चेत्। सत्यमात्थ। परन्तु यच्छ-ब्दाव्यवहितानन्तरवर्त्ती समानाधिकरणस्तच्छब्दोऽपि प्रसिद्धिमात्रे निरूढः, किं पुन-

१ 'स्थले न तदर्थसाकाङ्क्षत्वम्'-इति शेषः।

वाक्यान्तरे उपादानमर्हति न तत्रैव[१]। यच्छब्दस्य हि निकटे स्थितः प्रसिद्धिं परामृशति। यथा—

यत् तदूर्जितमत्युग्रं क्षात्रं तेजोऽस्य भूपतेः।
दीव्यताऽक्षैस्तदाऽनेन नूनं तदपि हारितम्॥

—इत्यत्र तच्छब्दः।

ननु कथं—

कल्याणानां त्वमसि महसां भाजनं विश्वमूर्ते,
धुर्यां लक्ष्मीमथ मयि भृशं धेहि देव, प्रसीद।
यद् यत् पापं प्रतिजहि जगन्नाथ, नम्रस्य तन्मे
भद्रं भद्रं वितर भगवन्, भूयसे मङ्गलाय॥

## साहित्यचूडामणिः

समीपे। निकटोपादानमेव दोष इति यावत्। अयं भावः—'योऽसौ सुभग' इत्यत्र यद्वृत्तेन सममदोवृत्तस्यैकवाक्यार्थत्वानुपपत्तिः, एवमिदंतदोरपि। उपपत्तौ वा यथादर्शनं व्यवहितानामेव, अव्यवहितत्वे वा भिन्नविभक्तिकानामेवोपादानं न्याय्यं यथा—"आ जन्मनः शाठ्यमशिक्षितो यस्तस्याप्रमाणं वचनं जनस्य" इति।

विभक्तिर्लिङ्गस्याप्युपलक्षणम्। तेन भिन्नलिङ्गस्याव्यवहितत्वे न दोषः। यथा 'शैत्यं हि यत् सा प्रकृतिर्जलस्ये"-ति। ननु तत्रैवोपादाने को दोषः इत्यत्राह—यच्छब्दस्येति। निकटे अव्यवहिते स्थाने स्थितः सन् तच्छब्दः प्रसिद्धिं परामृशति, नतु प्रतिसम्बन्धितां प्रतिपद्यते।

यत्तदिति राज्यदिवत् तदपि तेजो हारितमिति यच्छब्दनिकटे तिष्ठंस्तच्छब्दः प्रसिद्धमेव परामष्टुं प्रगल्भते, इतरथा पुनः स्वशब्दप्रयोगानौचित्याद् यस्मादत्र तदो द्विरुपादानं सकृच्च यदः। ननु 'यत्तदोर्नित्यसम्बन्ध' इति न्यायापवादोऽयं यथा

## सुधासागरः

रिदमादिः। यथा यत्तदूर्जितमित्यादौ वाक्यार्थः स्फुट एव। तस्माद् यो विकल्पमित्यत्रैव व्यवधानेनादःप्रयोगो युक्तो न त्वव्यवधानेन। कथं तर्हि 'न केवलं यो महतोऽपभाषते शृणोति तस्मादपि यः स पापभाग्' इत्यत्र तच्छब्दो न प्रसिद्ध्यर्थं इति चेत्। य इत्यत्र विच्छेदेन व्यवधानात्। योऽसावित्यत्र तु सम्बन्धिना यच्छब्दैकनिविष्टैकदेशत्वेनाविच्छेदात्।

ननु भवेदेवम्, यदि यत्तदोर्नित्याभिसम्बन्धः स्यात्। स एव तु नास्ति, कथमन्यथा कल्याणानामित्यादि। 'मन्दाक्रान्ता' छन्दः। हे देव त्वमिह संसारे

[१] तत्रैव तस्मिन्नेव वाक्य इति शेषः। 'तत्रैव'-ति पाठे 'अपाङ्गे'-ति पद्ये इवेत्यर्थः।

—अत्र यद्यदित्युक्त्वा तन्मे इत्युक्तम् ? उच्यते—यद्यदिति येन केनचिद् रूपेण स्थितं सर्वात्मकं वस्त्वाक्षिप्तम् । तथाभूतमेव तच्छब्देन[१] परामृश्यते ।

## साहित्यचूडामणिः

भवति प्रयोग इत्याह—नन्विति । यद्यत् पापमिति । यतः कारणभूतस्य पापकर्मलक्षणस्य दुरितस्य प्रतिघातः ततो हेतोरखिलमपि कुशलजातीयं विश्राणय । यत् श्रुतिः 'विश्वानि देवसवितरि'त्यादि । तदनुवदति—यद्यत्पापमिति । वीप्सया यदो द्विरुपादानं सकृच्च तदः । तत्र विज्ञायते एकस्य यद्वृत्तस्य नैराकाङ्क्ष्यम्, अन्यस्य विपर्यय इति । परिहरति—उच्यत इति । सर्वात्मकं सर्वाकारेण प्रक्रान्तम् । अतो द्वितीयतच्छब्दानपेक्षा वीप्सया सर्वात्मकस्यैव सतः पापस्य तच्छब्देन परामर्शात् ।

## सुधासागरः

कल्याणकारिणां महसां तेजसां भाजनमाश्रयः । त्वं पुण्यां पवित्राम्, धुर्यामिति पाठे भारक्षमां लक्ष्मीं विधत्से कुरुषे प्रसीद । अथ मयि दृशं धेहि दृष्टिं विधेहि । हे जगन्नाथ नम्रस्य यद्यत्पापं तत्प्रजहिहि 'प्रकर्षेण बाधस्व, हे भगवन्भूयसे महत्तमाय मङ्गलाय निःश्रेयसे भद्रं भद्रमत्यन्ताभीष्टं स्वभक्तिरूपं वितर देहीत्यर्थः । अत्रैकयत्परामृष्टस्यैकेन तदा परामर्शेऽपि द्वितीययच्छब्दान्निराकाङ्क्षा प्रतीतिः, द्वितीयतत्पदाभावात् । न च तत्राक्षेपोऽपि, यदः पूर्ववाक्यगतत्वादिति । मैवम् । न खल्वेकेनैव रूपेण यत्तद्भ्यां परामर्शनियम इति ब्रूमः, किन्त्वेकस्य ताभ्यां परामर्श इति । तथा चात्रापि पापात्मकं वस्तु येन केनचिद् विशेषद्वयेन यत्पदाभ्यां परामृष्टम्, तत्पदेन तु पापत्वेनैकेनेति को विरोधः ।

वस्तुतस्तु यद्यदिति न पदद्वयम्, किन्तु 'नित्यवीप्सयोः' इति सूत्रेण वीप्सायां यदो द्वित्वापन्नोऽयमादेशः । तथा चादेशिनैकेन यत्पदेन तत्पदेन च द्वाभ्यामप्येकेनैव रूपेण पापपरामर्शः । आदेशस्तु साकल्येन सम्बन्धपरताग्राहक इति यत्पदीयेनैव तेन तदुपपत्तौ न तत्पदेऽपि, यत्पदप्राथम्यादिति भावः । तत्पदप्राथम्ये तु तत्रैवादेशः । यथा—'तत्तत्कर्म कृतं यदेव मुनिभिः' इत्यादौ । इत्थं च यद्यदित्येकरूपावच्छिन्नं यावदुपस्थापयति तत्पदमपि तथैव तावदिति न वाक्यभेदोऽपि । उक्तञ्च श्रीवृत्तिकरैः—सर्वात्मकं वस्त्विति । यत्र तु तत्पदेऽपि वीप्सा तत्र न यत्पदेऽप्यादेशः किन्तूभाभ्यां रूपद्वयेन सर्वोपस्थापनमिति सारम् । यथा—

सञ्चारिणी दीपशिखेव रात्रौ यं यं व्यतीयाय पतिंवरा सा ।
नरेन्द्रमार्गाट्ट इव प्रपेदे विवर्णभावं स स भूमिपालः ॥

'यां यां प्रियः प्रैक्षत कातराक्षी सा सा ह्रिया नम्रमुखी बभूव' इत्यादाविति दिक् ।

[१] एकेनैवेति यावत् ।

यथा वा—

> किं लोभेन विलङ्घितः स भरतो येनैतदेवं कृतं
> मात्रा, स्त्रीलघुतां गता किमथवा मातैव मे मध्यमा ।
> मिथ्यैतन्मम चिन्तितं द्वितयमप्यार्यानुजोऽसौ गुरु-
> र्माता तातकलत्रमित्यनुचितं मन्ये विधात्रा कृतम् ॥

---

## साहित्यचूडामणिः

प्रकारान्तरेण विधेयाविमर्शमेवोदाहरति–किमिति । स भरतः प्रख्यातसौशील्यः लोभेन राजश्रद्धया किमाक्रान्तः, येन पुत्रलोभरूपेण हेतुना मात्रा कैकेय्या एतद् रामाभिषेकप्रत्यूहरूपं कृतम्; यद्वा किमन्यस्य लोभादन्यस्यानौचित्यप्रवृत्त्या, माता कैकेय्येव किमेवं कृतवतीति वितर्कः । या स्त्रीणां प्रसिद्धा लघुता ,किं क्रूरं 'स्त्रीहृदयमि'ति नीत्या तां गतेति । अनयोश्चिन्तितयोरर्थयोर्द्वितयमपि मिथ्या बाधयोग्यम् । असौ यो लोभादाक्रान्त इत्यशङ्कि आर्यस्य सुगृहीतनाम्नो रामस्यानुजः । एवं माता तातस्य दशरथस्य कलत्रम् ।

वाच्यमिति व्यासेन भाव्यम् । नन्वयमपि पददोषः पादद्वये वर्त्तत इत्येतावान् विशेषः इति चेत् , न, किंप्रयुक्तमेतदिति 'चिन्तायामिदमिदं वेति द्वयोरन्वयानुप्रविष्टत्वम् । तद्द्वारा च तयोराचरितयोरेकार्थीभावात् । अतएव युगपदनयोरुपादानम् । नत्विति । यदि समासः, अवश्यमनयोर्गुणीभावः । विग्रहवाक्यवासनावशादविदग्धानां केषाञ्चिद्वैषम्यभ्रान्तिः ।

ननु विशेष्यं प्रधानं विशेषणमप्रधानमिति हि प्रसिद्धिः । तामवधूय विशेषणस्य प्राधान्येन भवितव्यमिति कोऽयं न्याय इति चेत्, उच्यते, द्विविधं प्राधान्यं शाब्दमार्थं च । तत्र विशेषणस्य शाब्दे गुणभावेऽप्यार्थे प्राधान्यं तथा विशेष्यस्य शाब्दे प्राधान्येऽप्यार्थो गुणभाव उत्कर्षापकर्षफलतया विधीयमानत्वादनूद्यमानत्वाच्च । तदुक्तं—[महिम्ना]—'यत् कथञ्चिदपि प्रधानतया विवक्षितं न तन्नियमेनेतरेण सह समासमर्हति ।

तथा—

> विनोत्कर्षापकर्षाभ्यां स्वदन्तेऽर्था न जातुचित् ।
> तदर्थमेव कवयोऽलङ्कारान् पर्युपासते ॥
> तौ विधेयानुवाद्यत्वविवक्षैकनिबन्धनौ ।
> सा समासेऽस्तमायातीत्यसकृत् प्रतिपादितम् ॥→

## सुधासागरः

समासेऽप्यनेकपदगतत्वेनास्य वाक्यदोषत्वमुदाहरति 'यथा वा—किं लोभेन'-ति । 'शार्दूलविक्रीडितं छन्दः । लक्ष्मणस्योक्तिरियम् । मात्रा मातृद्वारा माता कैकेयी । आर्यः श्रीरामः । गुरुः ज्येष्ठभ्रातेत्यर्थः । स्पष्टमन्यत् ।

**—अत्रार्यस्येति तातस्येति च वाच्यम्, न त्वनयोः समासे गुणीभावः कार्यः।**

**एवं समासान्तरेऽप्युदाहार्यम्।**

---

## साहित्यचूडामणिः

अत एव हि वैदर्भी रीतिरेकैव शस्यते।
यतः समाससंस्पर्शस्तत्र नैवोपपद्यते॥
सम्बन्धमात्रमर्थानां समासोऽप्यवबोधयेत्।
नोत्कर्षमपकर्षं वा वाक्यात् तूभयमप्यदः॥
—[व्यक्तिवि० पृ० २६४]

इति। विध्यनुवादभावोऽपि विशेषणविशेष्यभावसमानयोगक्षेम इति तत्रापि न समासार्हता। यथा 'चापाचार्यस्त्रिपुरविजयी कार्त्तिकेयो विजेय' इति।
प्रत्युदाहरणं तु—

हिमकरसितच्छत्रं······
कृशतनुधनुर्वल्ली लीलाकटाक्षशरावलिः॥" इति।

तदुक्तं [व्यक्तिविवेकस्य द्वितीये विमर्शे]—

लोहितस्तक्षक इति समासो नोपपद्यते।
लोहितस्य विधावुक्तन्यायात् तस्याप्रवृत्तितः॥
स्वरूपमात्रस्योक्तौ च लौहित्याव्यभिचारतः।
उष्णोऽग्निरितिवत् पक्षो न चान्यस्तत्समन्वये॥
—[व्यक्तिवि०—पृ० २३७] इति।

एवमिति। विशेषणविशेष्यभावोपचितशरीरत्वं समासानां सामान्यलक्षणम्, अन्यथा सामर्थ्यानुपपत्तेः। तत्र तत्पुरुषे कर्तुर्यथा—

यस्यावमत्य गुरुदत्तमिमं कुठारं
डिम्भोऽपि राम इति नाम पदस्य हर्ता॥ इति।

प्रदक्षिणक्रियामतीत इति वाच्यम्। एवं 'यथाकामार्चितार्थिनामि'-त्यादि।
करणस्य यथा—

धात्रा स्वहस्तलिखितानि ललाटपट्टे
को वाक्षराणि परिमार्जयितुं समर्थः॥ इति।

स्वहस्तेनेति वाच्यम्। अपादानस्य यथा—'क्रौर्यं कृतान्ताधिकमि'-ति। कृतान्तादिति वाच्यम्। एवम् 'आसमुद्रक्षितीशानामित्यादि। अधिकरणस्य यथा 'अन्यसङ्क्रान्त-सौभाग्ये'ति। अन्यस्मिन् सङ्क्रान्तेति वाच्यम्। बहुव्रीहौ यथा—

यः स्थलीकृतविन्ध्याद्रिराचान्तापारवारिधिः।
यश्च तापितवातापिः स मुनिः श्रेयसेऽस्तु वः॥ इति।

१३. विरुद्धमतिकृद् यथा—

श्रितक्षमा रक्तभुवः शिवालिङ्गितमूर्त्तयः ।
विग्रहक्षपणेनाद्य शेरते ते गतासुखाः ॥

—अत्र क्षमादिगुणयुक्ताः सुखमासते इति विवक्षिते हता इति विरुद्धा प्रतीतिः ।

---

## साहित्यचूडामणिः

'येन स्थलीकृतो विन्ध्यो येनाचान्तः पयोनिधिः । वातापिस्तापितो येन'—इति वाच्यम् । न खल्वत्र किञ्चिदन्तरं प्रतिपत्स्यामह इति चेत् । सत्यम् । कवीनामेवैष विषयो न खण्डिकोपाध्यायानामिति । अव्ययीभावे यथा—'निष्प्रत्यूहमुपास्महे' इति । प्रत्यूहाभावायेति वाच्यम् । द्वन्द्वे यथा—

'सीताया ऊर्मिलायाश्च सदृशौ रामलक्ष्मणौ ॥' इति ।

रामश्च लक्ष्मणश्चेति वाच्यम् । द्विगौ यथा—

"ब्रह्मा विष्णुश्च रुद्रश्च त्रिलोकीमधिकुर्वते ।" इति ।

त्रीन् लोकानिति वाच्यम् । अन्यथा सङ्ख्यायाः सङ्ख्येयेषु निरवकाशता न प्रकाशेत । अमुक्तेति नञ्समासो व्याख्यातः । तद्यथा प्रसज्यप्रतिषेधे पर्युदासस्यानौचित्यम् , एवं विपर्ययेऽपि । यथा 'गृहीतं येनासीः परिभवभयान्नोचितमपी'-ति । अनुचितमपीति वाच्यम् । इत्यलमेकप्रघट्टनोद्घाटनाटोपेन ।

श्रितेति । प्राप्तसहिष्णुभावा अनुरक्तभूमयो मङ्गलाश्लिष्टमूर्तयो विरोधविगलनेन क्षीणदुःखाः शेरत इति विवक्षिते शरीरपातात् प्राप्तभूमयः क्षतजार्द्रतया रक्तभूमयो गोमायुपरिगृहीतशरीरा विग्रहस्य शरीरस्य विनाशेन गतासुखाः गता असवः प्राणाः खानीन्द्रियाणीति विरुद्धोऽर्थः प्रतीयत इति । एतावता वाक्येऽपि दोषाः सन्त्येवेति समर्थितम् ।

## सुधासागरः

अत्र कलत्रे तातसम्बन्धस्यानुजे चार्यसम्बन्धस्योत्कर्षाधायकत्वेन विधित्सितयोः समासाद् गुणीभावः । वाक्यदोषत्वं तु यथा तदुक्तम् । सोऽयं षष्ठीतत्पुरुषसमासः । एवं समासान्तरेऽप्यूह्यम् ।

विरुद्धमतिकृदुदाहरति— विरुद्धमतिकृद् यथा—'श्रितक्षमे'-ति ।

अत्रेत्यादि । अयमाशयः—अत्र क्षान्तिमन्तोऽनुरक्तभुवः कल्याणालिङ्गिताः युद्धक्षपणेन दुःखाभाववन्तः शेरत इति विवक्षिते भूमिपतिता रुधिरस्थानानि शिवाभिरालिङ्गिताः शरीरक्षपणेन गतप्राणेन्द्रियाः शेरत इति विरुद्धं प्रतीयते । अमतपरार्थे विरुद्धोऽप्यर्थो विवक्षित इति ततो भेदः । न च प्रकाशितविरुद्धसङ्करः, तत्रार्थस्यात्र तु शब्दस्य व्यञ्जकतया विशेषात् ।

[ पदैकदेशदोषाः ]

१. अलमतिचपलत्वात् स्वप्नमायोपमत्वात्
परिणतिविरसत्वात् सङ्गमेनाङ्गनायाः ।
इति यदि शतकृत्वस्तत्त्वमालोचयाम-
स्तदपि न हरिणाक्षीं विस्मरत्यन्तरात्मा ॥

—अत्र 'त्वात् त्वादिति' । यथा वा—

तद् गच्छ सिद्ध्यै कुरु देवकार्यमर्थोऽयमर्थान्तरलभ्य एव ।
अपेक्षते प्रत्ययमङ्गलब्ध्यै बीजाङ्कुरः प्रागुदयादिवाम्भः ॥

—अत्र 'द्ध्यै ब्ध्यै' इति च कटुः ।

---

## साहित्यचूडामणिः

अथ 'पदस्यांशेऽपि केचन'-त्येतद् व्याचष्टे पदेति । केचन न सर्वे । अत आह—यथासम्भवमिति ।

अलमिति । स्वप्नश्चित्तवृत्तिमात्रपरिकल्पिता सृष्टिः । मन्त्रादेरविद्यमानार्थ-प्रकाशनं माया । त्वच्छिद्रस्कः प्रयोगः श्रुतिकटुः । असकृदावृत्त्या दोषौल्बण्यम् ।

अर्थोऽयं देवकार्यकरणलक्षणः अर्थान्तरेण पार्वतीपरमेश्वरसङ्घटनारूपेण भाव्यः लब्धसत्ताकः कार्यः । एवकारः कार्यनिष्कर्षमभिव्यनक्ति । आत्मलब्ध्यै स्वरूप-लाभाय । [१]प्रत्ययं कारणम् । उदयादुच्छूनतारूपात् द्ध्यै ब्ध्यै इत्यर्धद्वयेऽपि भावात् दोषौल्बण्यम् ।

## सुधासागरः

पदैकदेशे यथासम्भवमुदाहरति—पदैकदेशे यथासम्भवं क्रमेणोदाहरणम् । तत्र श्रुतिकटु यथा—'अलमती'-ति ।

अङ्गनायाः सङ्गमेनालमिति सम्बन्धः । स्पष्टम् ।

एकत्र पदे वर्णद्वयकटुत्वे पददोषत्वम्, पदस्यैव कटुत्वप्रतीतेः । एकस्यैव तथात्वे पदैकदेशदोषत्वम् । न चैवं 'सोऽध्यैष्ट' इत्यादौ प्रत्येकं पददोषाभावात् कथं वाक्यदोषतेति वाच्यम्, न हि नानापददुष्टत्वे वाक्यदोषता, किन्तु नानापदवृत्तिता-मात्रेण, सा च पदावच्छेदेन तदेकदेशावच्छेदेन वेति को विशेषः । अत्र विरोधिनं शान्तमुपमर्द्य स्वविश्रान्तस्य शृङ्गारस्यात्यन्तमधुरत्वेन क्षुद्रापचारस्याप्यसहतया पदैकदेशगतश्रुतिकटुत्वस्याप्यपकर्ष इति भावः ।

त्वादित्यस्य कटुत्वासम्मतौ लक्ष्यान्तरं दर्शयति—

'यथा वे'ति, 'तद्गच्छे'-ति ।

---

[१] प्रत्ययं कारणमिति मल्लिनाथोऽपि ।

२. यश्चाप्सरोविभ्रममण्डनानां सम्पादयित्रीं शिखरैर्बिभर्त्ति ।
बलाहकच्छेदविभक्तरागामकालसन्ध्यामिव धातुमत्ताम् ॥

—अत्र मत्ताशब्दः क्षीबार्थे निहतार्थः ।

३. आदावञ्जनपुञ्जलिप्तवपुषां श्वासानिलोल्लासित—
प्रोत्सर्पद्विरहानलेन च ततः सन्तापितानां दृशाम् ।
सम्प्रत्येव निषेकमश्रुपयसा देवस्य चेतोभुवो
भल्लीनामिव पानकर्म कुरुते कामं कुरङ्गेक्षणा ॥

—अत्र दृशामिति बहुवचनं निरर्थकम्, कुरङ्गेक्षणाया एकस्या एवो-
पादानात् । न चालसवलितैरित्यादिवद् व्यापारभेदाद् बहुत्वम्,
व्यापाराणामनुपात्तत्वात् । न च व्यापारेऽत्र दृक्शब्दो वर्त्तते ।

---

## साहित्यचूडामणिः

मत्ताशब्द इति । धातुमतो भाव इति । विवक्षायां क्षीबशब्दार्थेन निहतार्थः ।

आदाविति लोहकारसमाधिनोक्तिः । बहुवचनमिति । दृशोरिति द्विवचनस्यौचित्यम् । यथाह—'हस्तादीनां द्वित्वाविष्टा जातिरि'-ति । ननु 'अलसवलितैरि'-त्यादावीक्षणैरिति यथा बहुवचनम्, एवमत्रापीति चेत् तत्राह—न चेति । हृदयेऽन्तःकरणे निहितं निगूहितं भावरूपमौत्सुक्यलक्षणमाकूतमवहित्थानुभावं वमद्भिरिवेति योजना । व्यापारेति । न खल्वलसा वा वलिता वा मुकुला वेति युक्तं वक्तुं भिन्नलक्षणत्वाद् दृष्टीनाम् । अत्रापि व्यापारबहुत्वमिति चेत् तत्राह—व्यापाराणामिति । नन्वञ्जनपुञ्जलेपादिर्व्यापार इत्यत्राह—न चेति । ईक्षणशब्दो यथा व्यापारे वर्तते न तथा दृक्शब्दः, प्रयोगाभावात् कुरुत इत्यात्मनेपदमपीति । दृङ्निषेकलक्षणायाः

## सुधासागरः

'इन्द्रवज्रा' छन्दः । अत्र देवकार्ये शिवे पार्वतीवशतापादनम् । तथा चात्रापि नायकनायिकावृत्तान्तरूपरसस्य सम्भवेन तद्व्यञ्जकवर्णवैधुर्येणास्य दूषकतेति ध्येयम् ।

अत्रेत्यादि । सिद्ध्यै लब्ध्यै इत्युभयोरेकदेशौ दुष्टावित्यर्थः ।

निहतार्थं यथा—'यश्चाप्सर' इति । उपजातिश्छन्दः । अत्रेत्यादि । मत्ताशब्दः पदैकदेशः क्षीबायां सुप्रसिद्ध इति भावः ।

निरर्थकं यथा—'आदावञ्जने'-ति ।

'शस्त्रं पङ्केन लिप्त्वाऽग्नौ सन्ताप्य पयसि निक्षिप्यत' इति पानकर्मस्वरूपम् । दृशः कामशस्त्रत्वेनाध्यवसायादुत्प्रेक्षते । अयमर्थः—कुरङ्गेक्षणा मृगनयना काममति-

अत्रैव 'कुरुते' इत्यात्मनेपदमप्यनर्थकम्[1], प्रधानक्रियाफलस्य कर्त्रसम्बन्धे कर्त्रभिप्रायक्रियाफलाभावात् ।

४. चापाचार्यस्त्रिपुरविजयो कार्त्तिकेयो विजेयः
शस्त्रव्यस्तः सदनमुदधिर्भूरियं हन्तकारः ।

## साहित्यचूडामणिः

क्रियायाः दृक्सम्बन्धमात्रसारत्वात् कुरङ्गेक्षणायाः सम्बन्धाभावे कर्त्रभिप्रायक्रियाफलाभावात् । 'स्वरितञितः' इत्यात्मनेपदनिमित्ताऽभावान्निरर्थकमात्मनेपदमिति ।

चापेति । हन्तकारः पूर्णभिक्षा ।

## सुधासागरः

शयेन आदावञ्जनपुञ्जलिप्तवपुषां पूर्वं दत्तकज्जलानां ततोऽनन्तरं श्वासानिलैर्निःश्वासवातैरुल्लासितः सन्धुक्षितः अत एव प्रोत्सर्पन् प्रसरणशीलो यो विरहानलस्तेन सन्तापितानां च दृशां नेत्राणां सम्प्रतीदानीमेवाश्रुपयसां निषेकं रोदनजलानां निक्षेपं चेतोभुवो देवस्य कामस्य भल्लीनां बाणविशेषाणामिव पानकर्म कुरुते इति ।

अत्र दृशामित्यादि । अयमाशयः—अत्र दृशामिति बहुवचनमविवक्षितार्थकमेव वृत्तपूरणायोपात्तम्, एकस्याः कुरङ्गेक्षणायाः दृग्बहुत्वाभावात् । अलसवलितैरित्यादिवद् व्यापारभेदाद् बहुत्वमिति चेत्, तत्वेक्षणैरितिवदत्र तदनुपादानात् । न च भावसाधनतया दृक्शब्द एव व्यापारे वर्त्तते, विशेषणानन्वयप्रसङ्गात् । एवं 'कुरुते' इत्यात्मनेपदमपि निरर्थकम्, प्रधानक्रियाफलसम्बन्धस्य कर्त्तर्यविवक्षणात् ।

नन्वाशिषि नाथ इतिवत्कर्त्रभिप्रेतक्रियाफलत्वाभावे आत्मनेपदमसाध्वेव, नतु निरर्थकं, 'नाथत' इत्यपि वा निरर्थकमेव, अविशेषात् । एवं द्वयोरर्थयोर्बहुवचनमसाध्वेवेति । उच्यते । 'आशिषि नाथ' इत्यनेनाशिष्यात्मनेपदं नियमयताऽनाशिषि तदभावो बोध्यते । तस्माद् याचने युक्तमसाधुत्वम् । 'स्वरितञितः कर्त्रभिप्राये क्रियाफले' इत्यनेन तु कर्त्रभिप्रेतक्रियाफलविवक्षायां तन्नियमयता पराभिमतसम्बन्धविवक्षायां तन्निषेधः प्रतिपाद्यते इति तत्रैवासाधुत्वं न तु कर्त्रभिप्रेतत्वाभावमात्रे । अत एव कर्त्रभिप्राय इति किम्, पराभिप्रेते क्रियाफले माभूदित्यवोचत्, न तु कर्त्रभिप्रेतक्रियाफलत्वाभाव इत्यवोचत् । न चात्राभिप्रेतक्रियाफलत्वं द्योत्यं किन्तु कर्त्रभिप्रेतक्रियाफलत्वाद्योतनमात्रमिति नासाधुत्वम् । एवं 'बहुषु बहुवचनम्' इत्येतत् सूत्रं बहुवचनं नियमयद् द्व्येकयोः स्थितिं निषेधति न तु बहुत्वविवक्षामात्रम् । दृशामित्यत्र न द्वित्वैकत्वे विवक्षिते येनासाधुत्वं स्यात्, किन्तु बहुत्वाविवक्षामात्रमिति युक्तमुत्पश्यामः । एतेन 'अवयवाभिप्रायेण निरर्थकत्वं समुदायाभिप्रायेण तु तदसाधुत्वमेव' इति चण्डीदासमतमनादेयम् ।

अवाचकं यथा—'चापाचार्ये'ति ।

---

[1] निरर्थकम्

अस्त्येवैतत् किमु कृतवता रेणुकाकण्ठबाधां
बद्धस्पर्धस्तव परशुना लज्जते चन्द्रहासः ॥

—अत्र विजेय इति कृत्यप्रत्ययः क्तप्रत्ययार्थेऽवाचकः ।

५. अतिपेलवमतिपरिमितवर्णं लघुतरमुदाहरति शठः ।
परमार्थतः स हृदयं वहति पुनः कालकूटघटितमिव ॥

—अत्र पेलवशब्दः ।

यः पूयते सुरसरिन्मुखतीर्थसार्थ-
स्नानेन शास्त्रपरिशीलनकीलनेन ।
सौजन्यमान्यजनिरूर्जितमूर्जितानां
सोऽयं दृशोः पतति कस्यचिदेव पुंसः ॥ —अत्र पूयशब्दः ।

---

## साहित्यचूडामणिः

किमु किन्तु । विजेय इत्यस्य विजित इत्यत्र सङ्केतो नास्ति भूतत्रैकाल्यार्थयोर्निष्ठाकृत्यप्रत्यययोर्भिन्नार्थकत्वात् ।

अतिपेलवमिति । खलः खलु धीरोदात्तवदतिकोमलमतिपरिमेयाक्षरं च व्यवहरति, अन्तवृत्तचिन्तायां कालकूटेन कल्पितमिव हृदयं वहति । पेलवशब्दो वर्चःस्मारकतया व्रीडादायी ।

'य' इति । पूयशब्दो व्रणनिःष्यन्दप्रत्यायकतया जुगुप्साव्यञ्जकः ।

## सुधासागरः

'मन्दाक्रान्ता' छन्दः । रावणस्य परशुरामं प्रतीयमुक्तिः । चापाचार्यो धनुर्विद्यागुरुस्त्रिपुरविजयी महेश्वरः, कार्त्तवीर्यः सहस्रबाहुर्विजेयः । शस्त्रन्यस्तो बाणक्षिप्तः उदधिः सदनम् । भूरियं हन्तकारोऽतिथिबलिः । अस्त्येवैतत् सर्वं श्लाघ्यमेतदिति सत्यम् । किमु किन्तु रेणुकायास्त्वन्मातुः कण्ठबाधां गलकर्त्तनं कृतवता तव परशुना बद्धस्पर्द्धः सन् चन्द्रहासो मत्खड्गो लज्जते इत्यर्थः ।

अत्रेत्यादि । अत्र यत् प्रत्ययः क्तप्रत्ययार्थे प्रयुक्तस्तत्र चावाचकः ।

अश्लीलेषु व्रीडादायि यथा—'अतिपेलवे'-ति । स्पष्टम् ।

अत्रेत्यादि । अत्र पेलेति पेलवशब्दैकदेशो गुह्याङ्गस्मारकतया व्रीडादायीत्यर्थः ।

जुगुप्सादायि यथा—'यः पूयत' इति । वसन्ततिलका छन्दः ।

यः सुरसरिन्मुखतीर्थसार्थस्य स्नानेन गङ्गातीर्थसमूहाभिषेकेण पूयते पवित्रीभवति । तथा शास्त्राणां परिशीलनमभ्यासस्ततः कीलनं संस्कारदाढर्य तेन सौजन्यमान्ययोर्जनिरुत्पत्तिस्थानम् । ऊर्जितानां बलवतामूर्जितं बलम्, तथाभूतः सोऽयं महापुरुषः कस्यचिदेव पुंसो दृशोः पतति दृग्गोचरो भवतीत्यर्थः । अत्र पूयशब्द इति । पूयेति पदैकदेशो व्रणक्लेदव्यञ्जकतया जुगुप्सादायीत्यर्थः ।

विनयप्रणयैककेतनं सततं योऽभवदङ्ग [1]तादृशः ।
कथमद्य स तद्वदीक्ष्यतां [2]तदभिप्रेतपदं समागतः ॥

—अत्र प्रेतशब्दः ।

६. कस्मिन् कर्मणि सामर्थ्यमस्य नोत्पतेतराम् ।
अयं साधुचरस्तस्मादञ्जलिर्बध्यतामिह ॥

—अत्र किं पूर्वं साधुः उत साधुषु चरतीति सन्देहः ।

७. किमुच्यतेऽस्य भूपालमौलिमालामहामणेः ।
सुदुर्लभं वचोबाणैस्तेजो यस्य विभाव्यते ॥

## साहित्यचूडामणिः

प्रेतशब्दो मरणप्रतिभासादमङ्गलार्थः ।

किं पूर्वं साधुरिति 'भूतपूर्वे चरट्', उत साधुषु चरतीति 'चरेष्टः' इति सन्देहः ।

वचोबाणैर्देवैरपि सुदुष्प्रापम्, वचसा गीर्लक्ष्यते । अतो वचोबाणशब्दो गीर्वाणार्थे नेयार्थः ।

प्रसङ्गात् प्रमेयान्तरं शिक्षयति अत्रेति । गीर्वाणशब्दे न केवलं पूर्वपदमेव वचोरूपं पर्यायपरिवर्तनं सहते । यावदिति बाणरूपमुत्तरपदमपि न सहते । तेन वचोबाण इव गीःसायकोऽपि नेयार्थः । कीदृगेकैकपदं परिवृत्त्यक्षममित्यपेक्षायामाह—

## सुधासागरः

अमङ्गल्यं यथा—'विनये'-ति । 'अपरवक्त्रं' छन्दः । 'विषमे यदि सौ जगौ समे स्भरला गोऽपरवक्त्रमीरितम्' इति लक्षणात् ।

हे अङ्ग यस्तादृशो लोकोत्तरशिष्टः सततमनवरतं विनयप्रणययोः नीतिप्रीत्योरेककेतनं मुख्यस्थानमभवत्, स एषः तदभिप्रेतपदं समागतस्तस्य दुष्टस्याभिप्रेतं यत्पदं नीचपदं तदुपगतः कथं तद्वत्पूर्ववदीक्ष्यतामित्यर्थः । अत्रेति । प्रेतेति भागोऽमङ्गल्यस्मारकः ।

सन्दिग्धं यथा—'कस्मिन्नि'-ति । स्पष्टम् ।

अत्रेत्यादि । चरभागे 'भूतपूर्वे चरट्' इति चरट् प्रत्ययो वा 'चरेष्टः' इति टान्तश्चरधातुर्वेति सन्देहात् पूर्वं साधुरिति वा साधुषु चरतीति वाऽर्थ इति सन्देह इति भावः ।

नेयार्थं यथा—'किमुच्ये'-ति । स्पष्टम् ।

अत्र च वचःशब्देनेत्यादि । अयमाशयः—अत्र वचोबाणशब्दो गीर्वाणे विवक्षितः, न च तत्र समर्थः, गीर्वाणशब्दयोरेव समस्तयोस्तदर्थरूढिः, न तु

[1] मादृश इति पाठे [2] त्वदभि. इति पाठे

—अत्र वचःशब्देन गीःशब्दो लक्ष्यते। अत्र खलु न केवलं पूर्वपदं यावदुत्तरपदमपि पर्यायपरिवर्तनं न क्षमते। जलध्यादावुत्तरपदमेव वडवानलादौ पूर्वपदमेव।

यद्यप्यसमर्थस्यैवाप्रयुक्तादयः केचन भेदाः तथाप्यन्यैरालङ्कारिकै[१]-र्विभागेन प्रदर्शिता इति भेदप्रदर्शनेनोदाहर्त्तव्या इति च विभज्योक्ताः ॥५॥

[ वाक्यदोषाः ]

**प्रतिकूलवर्णमुपहतलुप्तविसर्गं विसन्धि हतवृत्तम्।**
**न्यूनाधिककथितपदं पतत्प्रकर्षं समाप्तपुनरात्तम्॥ ७॥**
**अर्धान्तरैकवाचकमभवन्मतयोगमनभिहितवाच्यम्।**
**अपदस्थपदसमासं सङ्कीर्णं गर्भितं प्रसिद्धिहतम्॥ ६॥**
**भग्नप्रक्रममक्रममततपरार्थं च वाक्यमेव तथा।**

## साहित्यचूडामणिः

जलध्यादाविति। जलनिधिदिनकरादावुत्तरपदमेव, सलिलनिधिदिवसकरादेरदोषत्वात्। न पुनर्जलधरदिनजनका[२]दावदुष्टत्वं समुद्रादित्ययोरवाचकत्वात्। बडवानलमलयोद्भवादौ पूर्वपदमेव पर्यायपरिवर्तनं न क्षमते। उत्तरपदं तु क्षमत एव।

नन्वसमर्थस्यैवायं प्रपञ्चः किमर्थमप्रयुक्तावाचकत्वादेः पृथक् परीक्षेत्यत्राह—यद्यपीति। आदिपदान्निहतार्थादि। असमर्थस्य बहुविधं लक्षयितुं शक्यत्वात्।

अथार्थविषयानेव दोषानुदिशति—प्रतिकूलेति। वाक्यमेव, न तु पदं तदेकदेशो वा। तथेति दुष्टमित्येव।

## सुधासागरः

तत्पर्यायान्तराणाम्। अत एव गीःशरादिशब्दोऽपि तत्रासमर्थः, पर्यायपरिवृत्त्यसहत्वात्। तस्माद् वचःशब्देन गीःशब्दो लक्ष्यते। न च तत्र रूढिः प्रयोजनं वेति नेयार्थता। एवं जलध्यादिशब्देऽपि पदपरिवर्त्तनं द्रष्टव्यम्। परन्तु तत्रोत्तरपदमेव परिवृत्त्यसहम्, वडवानलादौ तु पूर्वपदमेवेति तदन्यपरिवर्त्तनेऽप्यदोषः।

नन्वसमर्थत्वं विवक्षितार्थप्रतीतिसामर्थ्यविरह एवोच्यताम्, स च प्रसिद्ध्यभावात्समयाद्यभावाद्वेत्यप्रयुक्तावाचकनिहतार्थादयोऽप्यसमर्थभेदा एव भवितुमर्हन्तीति किमिति पृथङ्निर्दिष्टा इति चेत्, तथ्यमात्थ, परन्त्वन्यैरालङ्कारिकैर्भेदेन दर्शिता इति तथैव निर्दिष्टः। किञ्च वैजात्याभावेऽपि शिष्यबुद्धिवैशद्याय प्रभेदा वक्तव्या एवेत्यतोऽपि विभज्योक्ता इति।

अथ वाक्यमात्रदोषलक्षणमाह—'प्रतिकूले'-ति।

---

१ अलङ्कारकारैरिति पाठे    २ '०धरादिनामनाद०' इति मूले।

१. रसानुगुणत्वं वर्णानां वक्ष्यते, तद्विपरीतं प्रतिकूलवर्णम् । यथा शृङ्गारे—

अकुण्ठोत्कण्ठया पूर्णमाकण्ठं कलकण्ठि, माम् ।
कम्बुकण्ठ्याः क्षणं कण्ठे कुरु कण्ठार्त्तिमुद्धर ॥

रौद्रे यथा—

देशः सोऽयमरातिशोणितजलैर्यस्मिन् ह्रदाः पूरिताः
क्षत्रादेव तथाविधः परिभवस्तातस्य केशग्रहः ।
तान्येवाहितहेतिघस्मरगुरूण्यस्त्राणि भास्वन्ति मे
यद् रामेण कृतं तदेव कुरुते द्रोणात्मजः क्रोधनः ॥

—अत्र हि विकटवर्णत्वं दीर्घसमासत्वं चोचितम् । यथा—

---

## साहित्यचूडामणिः

रसापेक्षया विरुद्धाक्षरं यद् दुष्टम् । किं वर्णानामानुकूल्यं यद्विपर्ययो दोष इत्यत्राह—रसेति । वक्ष्यते उत्तरोल्लासे । तद्विपरीतमानुकूल्यापेक्षया हि प्रातिकूल्यम् । शृङ्गार इति । यत्र माधुर्यगुणः । माधुर्यगुणशिक्षायाम् 'अटवर्गा' इति वक्ष्यते । व्यतिरेकव्युत्पत्तये रौद्र उदाहरति—'देशः सोऽयमि'ति । अयमेव स देश इति यावत्, उत्तरत्रावधारणनिर्वाहात् । शस्त्राणि शरासनादीनि । अस्त्राणि मन्त्रदेवतारूपाणि ।

विकटवर्णत्वमोजोनुगुणाक्षरत्वम् । दीर्घेति । वर्णपदेन वृत्तिरचने उपलक्ष्येते । तेन प्रतिकूलवृत्ति प्रतिकूलरचनं च वाक्यं दुष्टम् । रौद्रे खल्वोजो गुणः, यत्र 'टादिः शषौ वृत्तिदैर्घ्यमि'-ति वक्ष्यते ।

## सुधासागरः

अत्रापि रूढियोगाभ्यामर्थद्वयोपस्थितौ लक्षणवाक्यत्वोपस्थितिः । वाक्यमेव तथा प्रतिकूलवर्णं विवक्षितरसादेः प्रतिकूला अननुगुणा वर्णा यत्र तत् । अनुगुणत्वं वर्णानां गुणविवेचनावसरे वक्ष्यते । तदुक्तं रसानुगुणत्वमित्यादि । शृङ्गारे प्रतिकूलवर्णमुदाहरति अकुण्ठोत्कण्ठयेत्यादि । हे कलकण्ठि कोकिले, अकुण्ठा सातिशया योत्कण्ठा तया आकण्ठं पूर्णं मां, कम्बुकण्ठ्याः प्रेयस्याः कण्ठे क्षणं कुरु कण्ठार्त्तिमुद्धरेत्यर्थः । अत्र टवर्गः शृङ्गारप्रतिकूलः, 'अटवर्गा' इत्यादिना प्रतिषेधात् ।

'रौद्रे यथा देश' इति । शार्दूलविक्रीडितं छन्दः । सोऽयं कुरुक्षेत्ररूपः । जलपदं बाहुल्यद्योतकम् । अहिता वैरिणः । घस्मराणि भोक्तॄणि । रामेण भार्गवेण । स्पष्टमन्यत् । ग्त्रेत्यादि अयमाशयः—मृदवो वर्णाः प्रतिकूलाः, ओजस्विनि रसे विकटवर्णत्वस्य र्घसमासत्वस्य चानुगुणत्वादिति ।

प्रागप्राप्तनिशुम्भशाम्भवधनुर्द्वेधाविधाविर्भवत्-
क्रोधप्रेरितभीमभार्गवभुजस्तम्भापविद्धः क्षणात् ।
उज्ज्वालः परशुर्भवत्वशिथिलस्त्वत्कण्ठपीठातिथि-
र्येनानेन जगत्सु खण्डपरशुर्देवो हरः ख्याप्यते ॥

यत्र तु न क्रोधस्तत्र चतुर्थपादाभिधाने तथैव शब्दप्रयोगः ।

---

## साहित्यचूडामणिः

व्यतिरेकोदाहरणमाह-प्रागिति । निशुम्भः परिभवः । द्वेधाविधा द्वेधाकरणम् ।

ननु 'प्रागप्राप्ते'-त्यादिपादत्रय इव 'येनानेन जगत्स्वि'-त्यादौ तुरीयपादेऽपि भवितव्यं वर्णानामौद्धत्येनेत्यत्राह—यत्र त्विति । तथैव विकटवर्णव्यतिरेकेणैव । न खलु कामचारेण कवीनां वर्णगुम्फः, किं तर्हि, रसानुगुण्यात् । तेन यत्र क्रोधो न विद्यते तत्र तथैव शब्दप्रयोगः, यत्र न किञ्चिदौद्धत्यं तत्र खलु गुरुप्रशंसापरायणे कथं क्रोधौचित्यम् ।

## सुधासागरः

यथा—प्रागप्राप्तेत्यादि । शार्दूलविक्रीडितं छन्दः । भग्नमाहेश्वरकार्मुकं दाशरथिं प्रति परशुरामोक्तिरियम् । रे रे क्षत्रियकुमार उज्ज्वालः उद्गतज्वालः प्रागप्राप्तो निशुम्भो नमनं येन तादृशं यच्छाम्भवं धनुस्तस्य द्वेधाविधा द्वैधीकरणं तेनाविर्भवत्प्रकटीभवत् क्रोधेन प्रेरितः अत एव भीमो भयङ्करो भार्गवभुज एव स्तम्भस्तेनापविद्धश्चालितोऽत एवाशिथिलः परशुस्त्वत्कण्ठपीठातिथिर्भवतु, येनानेन परशुना देवो हरो जगत्सु लोकेषु खण्डपरशुः ख्याप्यत इत्यर्थः । अत्र दीर्घसमासादयः । यत्र तु न क्रोधश्चतुर्थपादे तत्र शिथिल एव प्रयोगः ।

अपरुषस्यापि रौद्रादिविरोधितयाऽस्य न श्रुतिकटुभेदत्वम् । न च श्रुतिकटोरेव तद्विशेषत्वम्, तस्य सकृत्प्रयोगेऽप्यात्मलाभात् । अत एव स पददोषः । अस्य तु वाक्यव्यापित्वेन । अत एवास्य न पददोषत्वम्, एकत्र तादृशवर्णप्रयोगस्य रसाविरोधित्वात् । दोषत्वबीजमप्यस्य रसविरोधित्वमेव,अत एव नित्यदोषोऽयम्, नीरसादावात्मलाभाभावात् । श्रुतिकटोस्तु नीरसादावात्मलाभादनित्यत्वमिति महान् भेदः । इदं तु चिन्त्यम्—रौद्रादिरसे श्लोकार्धपर्यन्तं समासेनैकपदे मृदुवर्णप्रायेऽस्य न कथं पददोषत्वमिति । अथान्यसाहित्येन दोषत्वं वाक्यदोषत्वम्, निरपेक्षदोषत्वं तु पददोषत्वमिति चेन्न, एवं क्लिष्टत्वादावपि पददोषत्वं न स्यात् । किं बहुना, यादृशविवक्षया क्लिष्टत्वं पददोषत्वेनोक्तं तथेदमपि तथेति न्यूनः पददोषत्वविभागः इति चेत्, अत्र वक्ष्यामः ।

२, ३. उपहत उत्वं प्राप्तो लुप्तो वा विसर्गो यत्र तत् । यथा—

धीरो विनीतो निपुणो वराकारो नृपोऽत्र सः ।
यस्य भृत्या बलोत्सिक्ता भक्ता बुद्धिप्रभाविताः[१] ॥

४. [विसन्धि] सन्धेर्वैरूप्यम्, विश्लेषोऽश्लीलत्वं कष्टत्वं च । तत्राद्यं यथा—

राजन्, विभान्ति भवतश्चरितानि तानि
इन्दोर्द्युतिं दधति यानि रसातलेऽन्तः ।
धीदोर्बले अतितते उचितानुवृत्ती
आतन्वती विजयसम्पदमेत्य भातः ॥

## साहित्यचूडामणिः

उपहत इति । सन्धिकार्यवशादोत्वं प्राप्तो विसर्गो यत्र । तथा लुप्तो विसर्गो यत्रेति द्वितीयम् । यथाह—

यत्रालुप्तविसर्गान्तैः पदैः प्रोतैः परस्परम् ।
ह्रस्वैः संयोगपूर्वैश्च लावण्यमतिरिच्यते ॥ इति ।

अर्धद्वयेऽपि बन्धशैथिल्यं दोषान्तरम् ।

## सुधासागरः

उपहत इत्यादि । अयमाशयः—उपहतलुप्तविसर्गः उपहतविसर्गं लुप्तविसर्गं चेति द्वयमित्यर्थः । उपहता ओत्वं प्राप्ता लुप्ता वा विसर्गा यत्रेति बहुवचनान्तो विग्रहः, एकविसर्गस्य तथात्वेऽवैरस्यात् । उपघातश्च ओत्वप्राप्तिः, उपघातान्तरस्य दोषान्तरे प्रवेशात् । तेन नैरन्तर्येणौत्वप्राप्तबहुविसर्गत्वं तथा लुप्तबहुविसर्गत्वं च लक्षणे । द्वयोरेकमुदाहरणम् धीर इत्यादि । स्पष्टम् । दूषकताबीजं बन्धपारुष्येण सहृदयोद्वेगः अत एवायं नित्यः । अत्रापीदं चिन्त्यम्—'भूयो महीयोऽतियशोविभूषितः' इत्यादौ कथं न पददोषत्वमस्येति ।

सन्धेर्वैरूप्यमित्यादि । अयमाशयः—विसन्धिः विरूपः सन्धिः सन्निकर्षो यत्र । वैरूप्यं च त्रिधा—विश्लेषोऽश्लीलत्वं कष्टत्वम् । विश्लेषस्तु प्राप्तस्य श्लेषस्य संहिताकार्यस्याभावः । स च 'अन्यत्र तु विभाषया' इति वचनादैच्छिकः आनुशासनिकश्च । उक्तं च 'संहितैकपदे नित्या नित्या धातूपसर्गयोः । सूत्रेष्वपि तथा नित्या सान्यत्र तु विभाषया' इति । 'नित्या समासे वाक्ये तु सा विवक्षामपेक्षते' इत्यादि पाठः । अत्रान्त्यः प्रगृह्यादित्वात्, पूर्वत्रासिद्धमित्यादिना विसर्गादिलोपासिद्धेर्वा । तेष्वाद्यः सकृदपि वर्त्तमानो दोषाय, इच्छानिबन्धनत्वेनाशक्तिमूलकतया प्रथमत एव सहृदयो-

[१] प्रभान्विता इति पाठे ।

यथा वा—

तत उदित उदारहारहारिद्युतिरुच्चैरुदयाचलादिवेन्दुः ।
निजवंश उदात्तकान्तकान्तिर्बत मुक्तामणिवच्चकास्त्यनर्घः ॥

संहितां न करोमीति स्वेच्छया सकृदपि दोषः, प्रगृह्यादिहेतुकत्वे त्वसकृत् ।

वेगादुड्डीय गगने चलण्डामरचेष्टितः ।
अयमुत्पतते पत्त्री ततोऽत्रैव रुचिङ्कुरु ॥

—अत्र सन्धावश्लीलता ।

---

## साहित्यचूडामणिः

विसन्धि त्रिधा व्याचष्टे—सन्धेरिति । व्युपसर्गार्थो वैरूप्यं । तस्य त्रैविध्यं—विश्लेषो विकर्षः संहिताकरणम्, अश्लीलत्वमसभ्यत्वं, कष्टत्वं श्रुतिकटुत्वं च ।

संहितां न करोमीति कामचारः सकृदपि दोषः । यथा—'तानि इन्द्रोरि'-ति । विसन्धिवशादसाधुत्वप्रसङ्गश्च । प्रगृह्यादिनिबन्धनत्वे पुनरसकृत् यथा—धीदोर्बले इत्यादि । सकृत्तु न दोषः । यथा—'समुद्रगारूपविपर्ययेऽपि सहंसपाते इव लक्ष्यमाणे' इति ।

सन्धावश्लीलतेति । सन्धिरत्र पदयोर्मिथः संश्लेषमात्रम्, न तु शास्त्रीया संहिता ।

## सुधासागरः

द्वेजकत्वात् । अन्त्यौ तु असकृदेव वर्तमानौ दोषाय, आनुशासनिकत्वेनाशक्त्यनुज्ञायकतया बन्धपारुष्येणैव हि तस्य दोषत्वम्, तच्चासकृत्प्रयोग एव । तत्रैरूप्यवतामनुगमश्चान्यतमत्वेन, अश्लीलवन्नानार्थत्वमेव वा ।

एवं त्रिप्रकारके विश्लेषे आद्यप्रकारद्वयं राजन्नित्यादि । हे राजन् ! तानि भवतश्चरितानि विभान्ति यानि रसातलेऽन्तः इन्दोर्द्युतिं दधति । अतितते अत्यन्तविपुले धीदोर्बले नीतिपराक्रमरूपे विजयसम्पदमेत्य भातः शोभेते । कथम्भूते उचितार्थवृत्ती आतन्वती उचितयोः कर्मणोरनुवृत्ती कुरुत इत्यर्थः । उचितार्थवृत्तीत्यस्य धीदोर्बलयोर्विशेषणत्वे नुगागमः स्यादिति ध्येयम् ।

अन्त्यो यथा तत उदित इत्यादि । उच्चैरुदयाचलादुदित उदयं प्राप्तः इन्दुरिव उच्चैरुत्कृष्टात्ततो वंशादुदितः उत्पन्नः, उदारो हारो मुक्तादाम तद्वत् द्युतिर्यस्येत्युभयसाधारणं विशेषणम् । बत हर्षे निजवंशे स्वजनकवेणावन्वये च उदात्तोदारा कान्ता मनोहरा कान्तिः शोभा यस्य तथाभूतोऽनर्घ्यः श्लाघ्यो जनो मुक्तामणिवच्चकास्तीत्यर्थः । दूषताबीजमस्योक्तम् ।

डामरचेष्टितः उद्भटचेष्टितः । स्पष्टमन्यत् । अत्रेत्यादि । लण्डा-चिङ्कुशब्दौ पुंव्यञ्जनवराङ्गबोधकौ । तयोः सन्धानेनैव निष्पत्तेरिति भावः । चलन्निति डामरेति रुचिमिति कुर्विति बहुपदावलम्बनाद् वाक्यदोषतेति बोध्यम् ।

उर्व्यसावत्र तर्वाली मर्वन्ते चार्ववस्थितिः ।
नात्रर्जु युज्यते गन्तुं शिरो नमय तन्मनाक् ॥

५. हतं लक्षणाऽनुसरणेऽप्यश्रव्यम्, अप्राप्तगुरुभावान्तलघु, रसाननुगुणं च वृत्तं यत्र तद् हतवृत्तम् । क्रमेणोदाहरणम्—

## साहित्यचूडामणिः

उर्वीति । अत्र देशे ऋजु सरलं कृत्वा गन्तुं न युज्यते ।

हतवृत्तेऽपि त्रैविध्यमाह—हतमिति । सर्वत्र हतिरपकर्षः । शास्त्रानुधावनेऽप्यश्रव्यं वृत्तं यत्र तदेकम् । अन्तश्चायं लघुश्च अन्तर्लघुः । अप्राप्तं गुरुत्वं येन स तथोक्तः । तादृगन्तर्लघुपर्यन्तं द्वितीयम् । पदान्तवृत्तीनां 'वा पादान्त' इति नीत्या गुरुत्वं विभाषितम् । तथापि यत्र तेषां गुरुत्वं नास्ति तद् दुष्टम् । रसाननुगुणं वृत्तं यत्र तत् तृतीयम् ।

## सुधासागरः

कष्टत्वं यथा—'उर्व्ये'-ति ।

अत्र मर्वन्ते मरुदेशसमीपे चारुः सुन्दराऽवस्थितिर्यस्यास्तादृशी, मरौ वृक्षदौर्लभ्याच्चारुत्वम् । असौ तर्वाली तरूणां पङ्क्तिः उर्वी महती । अत्र वने ऋजु यथा स्यात्तथा गन्तुं न युज्यते । तत्कारणान्मनाक् किञ्चिच्छिरो मस्तकं नमयेत्यर्थः । अत्र दूषकताबीजं पददोषप्रस्तावे उक्तम् ।

अत्रापीदं चिन्त्यम्—समासेनैकपद्येऽश्लीलकष्टेच्छानिबन्धनविश्लेषाणामश्लीलकष्टासाधुमध्यप्रवेशेऽपि लोपासिद्धिनिबन्धनविश्लेषस्य पदेऽपि सद्भावात् कथमस्य न पददोषत्वम् । यथा—'भूय उच्चैर्मह उदात्तयश उदारः' इति । वयन्तु तर्कयामः—सकलप्रभेदभिन्ना एते दोषा दूषणान्तरासङ्कीर्णा वाक्ये एवेति 'वाक्यमेव तथा' इति नियमार्थः । अत एव न पददोषविभागन्यूनताऽपि, तादृशस्यैव पदवृत्तेस्तत्र विभागादिति ।

हतमित्यादि । अयमाशयः—हतवृत्तम् हतं वृत्तं यत्र तत् । हतत्वं चाश्रव्यत्वं गुरुकार्याक्षमपादान्त्यलघुवर्णत्वं प्रकृतरसाननुगुणत्वं वा । अन्यतमत्वेनैषामनुगमः । अश्रव्यत्वं च लक्षणाननुगमात्, यतिभङ्गात्, स्थानविशेषे गणविशेषयोगात्, शिखरिण्यादावन्त्यस्य लघोः गुरुकार्याक्षमत्वात्, प्रकृतरसाननुगुणत्वाच्च । शिखरिणीलक्षणन्तु—'रसै रुद्रैश्छिन्ना यमनसभलागः शिखरिणी' इति । तत्राद्यं यथा—

यस्मिन् पञ्च पञ्चजनाः आकाशश्च प्रतिष्ठितः ।
तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः ॥

अत्र श्लोके पञ्चमस्य गुरुत्वाच्छन्दोभङ्गः । लक्षणन्तु—

श्लोके षष्ठं गुरु ज्ञेयं सर्वत्र लघु पञ्चमम् ।
द्विचतुःपादयोर्ह्रस्वं सप्तमं दीर्घमन्ययोः ॥ इति ॥

अमृतममृतं कः सन्देहो मधून्यपि नान्यथा
मधुरमधिकं चूतस्यापि प्रसन्नरसं फलम्।
सकृदपि पुनर्मध्यस्थः सन् रसान्तरविज्जनो
वदतु यदिहान्यत् स्वादु स्यात् प्रियादशनच्छदात् ॥
—अत्र 'यदिहान्यत्स्वादु स्यात्' इत्यश्रव्यम्।

यथा वा—
जं परिहरिउं तीरइ मणअं पि ण सुन्दरत्तणगुणेण।
अह णवरं जस्स दोसो पडिपक्खेहिं पडिवण्णो ॥

---

## साहित्यचूडामणिः

अमृतमिति। नान्यथा मधून्येव। रसान्तरविद् रसतारतम्यवेदी। यदिहान्यदित्येतद्यतिभङ्गे स्वरसन्धौ कृते सवर्णदीर्घलक्षणानुसरणेऽपि न श्रव्यत्वम्।

प्रकारान्तरादुदाहरति—'जं परी'-ति। यः सौन्दर्यगुणेन हेतुना परिहर्तुं न शक्यते न पार्यते। यमिति द्वितीयया निर्देशः प्राकृतत्वात्। किञ्च यत्सम्बन्ध्यपि दोष एवं स च शत्रुभिरपि प्रतिपन्नः, दोषान्वेषिणो हि शत्रवः। अत्र हरिउं इति सकारः अन्तगुरुत्वात्। तीरइ इति भकार आदिगुरुत्वाद्। एवमार्यार्णि। गणद्वययोगः शास्त्रसिद्धः अप्रतिषेधात्। अश्रव्यत्वं पुनर्दोषः। सकारभकारयोरेकतरस्य द्विगुणत्वापत्तौ श्रव्यत्वसंभवो वृत्तस्य। यत्र न संरम्भः कवेः।

## सुधासागरः

वर्णवृत्ते यतिभङ्गमुदाहरति—'अमृते'ति।

द्वितीयममृतपदमास्वादातिशयपरम्। मध्यस्थः सर्वत्र समः। रसानामन्तरं तारतम्यम्। स्पष्टमन्यत्। अत्र हरिणीछन्दसि प्रतिपादं षष्ठे चतुर्थे सप्तमे च यतिरुचिता, चतुर्थे तु पादे 'हा' इत्यत्र परपदानुसन्धानेन यतिभङ्गादश्रव्यत्वम्। वृत्तरत्नाकरे—

सर्वगुर्मो मुखान्तलौ यरावन्तगलौ सतौ।
ग्मध्याद्यौ ज्भौ त्रिलो नोऽष्टौ भवन्त्यत्र गणास्त्रिकाः ॥

'रसयुगहयैर्न्सौ म्रौ स्लौ गो यदा हरिणी तदा' इति। एतेन यन्मधुमतीकारैर्व्याख्यातम्—षष्ठे सप्तमे यतिः कर्त्तव्येति, यच्च प्रदीपकारैर्व्याख्यातम्—षष्ठे दशमे च यतिरुचितेति, तत् प्रामादिकम्।

मात्रावृत्ते स्थानविशेषगणविशेषयोगादश्रव्यत्वमुदाहरति—'यथा वा जं' इति। प्राकृते लिङ्गानियमः। क्वचित् जो परित्यपि पाठः।

यः परिहर्त्तुं तीर्यते मनागपि न सुन्दरत्वगुणेन।
अथ केवलं तस्य दोषः प्रतिपक्षैरपि प्रतिपन्नः ॥

[ यत् परिहर्तुं तीर्यते मनागपि न सुन्दरत्वगुणेन ।
अथ केवलं यस्य दोषः प्रतिपक्षैरपि प्रतिपन्नः ] ॥
—अत्र द्वितीयतृतीयगणौ सकारभकारौ ।

विकसितसहकारतारहारिपरिमलगुञ्जितपुञ्जितद्विरेफः ।
नवकिसलयचारुचामरश्रीर्हरति मुनेरपि मानसं वसन्तः ॥
—अत्र हारिशब्दः । हारिप्रमुदितसौरभेति पाठो युक्तः ।

---

## साहित्यचूडामणिः

हारीति । पादान्तलघोरिकारस्य गौरवेण भाव्यं तथा च कवेर्न संरम्भ इति वृत्तहृतिः । 'हारि प्रमुदितेति पाठे 'संयोगे गुरु' इति गुरुत्वलाभः । अन्या इति । मृदुपादानकारणम् । अत्र चतुर्थपादस्याप्राप्तगुरुभावान्तलघुत्वं दोषः । 'वस्त्राण्यपी-'

## सुधासागरः

इति संस्कृतम् । यो नायकः सुन्दरत्वगुणेन मनागपि किञ्चिदपि परिहर्त्तुं त्यक्तुं न तीर्यते न पार्यते न शक्यत इति यावत् । पार तीर कर्मसमाप्ताविति धातुः । अथ तस्य नायकशिरोमणेः केवलमेको दोषः यत्प्रतिपक्षैरपि प्रतिपन्नः सपत्नीजनैरपि समाहित इत्यर्थः । अत्र गाथायां द्वितीयतृतीयौ सगणभगणौ । तौ च तथाविधौ छन्दःशास्त्रेण दुःश्रवत्वेन प्रतिपादितौ । अयम्भावः—सगणभगणावन्तगुर्वादिगुरू द्विमात्रौ प्रथमगणान्ते यत्यकरणाद्श्रव्यौ । सगणस्य प्रागुपादानं तूचितम् । यथा गाथालक्षणे—'पढमं बारह मत्ता वीए अठ्ठारहेहिं संजुत्ता । जह पढमं तह तीअं पंचदहविहूसिआ गाहा' इत्यत्र ।

पादान्त्यलघोर्गुरुकार्याक्षमत्वमुदाहरति—'विकसिते'ति ।

पुष्पिताग्रा छन्दः । लक्षणमुक्तं प्राक् । विकसितः पुष्पितो यः सहकारोऽतिसौरभश्चूतविशेषः तस्य सारहारी यः परिमलस्तेन गुञ्जिताः उन्मत्ततया शब्दं कुर्वाणाः पुञ्जिताः एकत्र समवेताश्च द्विरेफा भ्रमरा यत्र तादृशः । नवकिसलयान्येव चारुचामराणि तेषां श्रीर्यत्र तथाभूतो वसन्तो मुनेरपि मानसं हरति वशीकरोत्यर्थः । अत्र पुष्पिताग्रायां 'वा पादान्ते' इति पादान्तस्य गुरुत्वाच्छन्दोभङ्गाभावेऽपि प्रथमपादान्तवर्त्तिन इकारस्य लघोर्गुरुकार्यकरणाक्षमत्वम् । 'वा पादान्ते' इत्यस्य वसन्ततिलकेन्द्रवज्राविषयत्वादिति भावः । तस्मात् 'हारिप्रमुदितसौरभ'इति पठनीयम् । लक्षणानि तु 'अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा', 'उक्ता वसन्ततिलका तभजा जगौ गः', 'स्यादिन्द्रवज्रा यदि तौ जगौ गः' इति ।

यथा वा—

अन्यास्ता गुणरत्नरोहणभुवो धन्या मृदन्यैव सा
सम्भाराः खलु तेऽन्य एव विधिना यैरेष सृष्टो युवा ।
श्रीमत्कान्तिजुषां द्विषां करतलात् स्त्रीणां नितम्बस्थलाद्
दृष्टे यत्र पतन्ति मूढमनसामस्त्राणि वस्त्राणि च ॥

--अत्र 'वस्त्राण्यपि' इति पाठे लघुरपि गुरुतां भजते ।

हा नृप, हा बुध, हा कविबन्धो, विप्रसहस्रसमाश्रय, देव ।
मुग्ध विदग्ध, सभान्तररत्न, क्वासि गतः क्व वयं च तवैते ॥

हास्यरसव्यञ्जकमेतद् वृत्तम् ।

---

## साहित्यचूडामणिः

ति पाठे लघुरपि पूर्वाक्षरस्य संयुक्तत्वादुपस्नेहन्यायेन गुरुत्वमसदपि प्रतीतिसंवादादवलम्बते ।

हास्येति । न तु करुणोचितम् । पदशब्दस्य द्वन्द्वान्ते श्रूयमाणत्वाद् न्यूनपदादीनि त्रीणि दुष्टानि ।

## सुधासागरः

न केवलं प्रथमतृतीयपादयोरेवायं दोषः किन्त्वन्ययोरपि । तत्र चतुर्थे यथा—'अन्यास्ता'इति ।

मृदिति समवायिकारणरूपः पार्थिवो भागः । रोहणो रत्नोत्पत्तिहेतुः पर्वतः । सम्भारा उपकरणानि । मूढेति मोहः प्रतिपत्तिलोपः, स च भयात् कामाच्च । अन्यत् स्पष्टम् ।

अत्रेत्यादि । अत्र वस्त्राण्यपीति पाठेऽगुरोरेव संयोगपरतया स्वरवृद्धौ लघुरपि गुरुकार्यकारी सम्पद्यते । एवं द्वितीयपादेऽप्यूह्यम् । एषु चाश्रव्यता सहृदयोद्वेजिनी दुष्टताबीजमतो नित्यदोषोऽयम् ।

प्रकृतरसाननुगुणत्वमुदाहरति—'हा नृपे'-ति । स्पष्टम् ।

हास्येत्यादि । इदं दोधकवृत्तं शोकाननुगुणम्, तद्विरोधिहास्यव्यञ्जकत्वादित्यर्थः । अत्रेदं बोध्यम्—करुणरसे मन्दाक्रान्ता पुष्पिताग्रादीनामेवानुगुणत्वम् । अस्य तु दोधकवृत्तस्य प्रतिपदविच्छेदिनो हास्यानुगुणत्वम्, पृथ्वीस्रग्धरादीनां शृङ्गारादौ, शिखरिणीशार्दूलविक्रीडितादीनां वीरादावानुगुण्यमिति । अत एव सप्तदशेऽध्याये तत्तद्रसे तत्तच्छन्दो नियम्य 'शेषाणामनुयोगेन छन्दः कार्यं प्रयोक्तृभिः' इति भरतोऽप्याह । अनुयोगः पारुष्यादिवाच्यस्य योग्यतासामञ्जस्यम् ।

६. न्यूनपदं यथा—

तथाभूतां दृष्ट्वा नृपसदसि पाञ्चालतनयां
वने व्याधैः सार्धं सुचिरमुषितं वल्कलधरैः।
विराटस्यावासे स्थितमनुचितारम्भनिभृतं
गुरुः खेदं खिन्ने मयि भजति नाद्यापि कुरुषु॥

—अत्रास्माभिरिति खिन्ने इत्यस्मात् पूर्वम्, इत्थमिति च।

## साहित्यचूडामणिः

तथाभूतेति। अत्रास्माभिरिति पदं न्यूनं, वल्कलधरैरिति विशेषणस्य वैयर्थ्यप्रसङ्गात्। इत्थमिति च न्यूनं, वाक्यावयवभूतत्वात्।

तस्य स्थानं निश्चिनोति—खिन्न इति। न चैतदनभिहितवाच्यं तस्य पदोपस्कारगोचरतया समर्थयिष्यमाणत्वाद् अधिकपदस्य च निर्दोषत्वप्रसंगात्।

## सुधासागरः

शृङ्गारप्रकाशे महाराजोऽप्याह—

येषु श्रुतेषु चित्तस्य वैराग्यं न च हृद्यता।
तानि वर्ज्यानि वृत्तानि प्रसिद्धिप्रच्युतानि च॥ इति।

तदिह दोधकवृत्तं हास्योचितं करुणे निबद्धमतो दोष इति दिक्। लक्षणानि तु 'मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ ताद् गुरू चेत्'। 'दोधकवृत्तमिदं भभभाद् गौ'। 'जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः'। 'म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्त्तितेयम्'। 'सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम्' इति छन्दः। अस्य च प्रतिकूलवर्णत्वं दुष्टताबीजम्। नीरसे च नास्यात्मलाभ इति नित्यदोषता।

न्यूनाधिकेत्यादि। न्यूनपदमधिकपदं कथितपदञ्चेत्यर्थः। तत्र न्यूनपदं न्यूनं पदं वाचकशब्दो यत्र तत्त्वम्। द्योतकन्यूनतायान्तु अनभिहितवाच्यत्वमिति विशेषः। तत्र न्यूनपदमुदाहरति—'तथाभूतामि'-ति।

शिखरिणी छन्दः। प्राग्व्याख्यातमिदम्। अत्रास्माभिरित्यादि। अयम्भावः—अत्र पादत्रयमध्ये 'अस्माभिः' इति 'खिन्ने' इत्यस्य पूर्वम् 'इत्थम्' इति च पदं नास्ति। आवश्यके च ते। अन्यथा कर्त्तृलाभादेकवाक्यत्वासम्भवाच्च तदर्थस्य विवक्षितत्वात्। अर्थश्चैतादृश एव विवक्षित इति शब्दस्यैवायमपराधः। यत्र त्वर्थ एव न तावद् दूरं विवक्ष्यते तत्रार्थ एव दुष्ट इति। साकाङ्क्षत्वन्तु दोषान्तरमिति द्रष्टव्यम्। विवक्षिताप्रतिपत्तिश्च दूषकताबीजम्। अतो झटित्याक्षेपतस्तल्लाभेऽदोषत्वम्।

७. अधिकपदं यथा—

स्फटिकाकृतिनिर्मलः प्रकामं प्रतिसंक्रान्तनिशातशास्त्रतत्त्वः ।
अविरुद्धसमन्वितोक्तियुक्तिः प्रतिमल्लास्तमयोदयः स कोऽपि ।।
--अत्राकृतिशब्दः ।

यथा वा—

इदमनुचितमक्रमश्च पुंसां यदिह जरास्वपि मान्मथा विकाराः ।
यदपि च न कृतं नितम्बिनीनां स्तनपतनावधि जीवितं रतं वा ।।

--अत्र कृतमिति । कृतं प्रत्युत प्रक्रमभङ्गमावहति । तथा च 'यदपि च न कुरङ्गलोचनानाम्' इति पाठे निराकाङ्क्षैव प्रतीतिः ।

---

## साहित्यचूडामणिः

स्फटिकेति । निर्मल इत्येतावतैव वाक्यं पूर्णम् । आकृतिशब्द उपलक्षणं, तेन प्रकाममिति प्रतीति तत्त्व इति युक्तिरिति उदय इति च पदानामवकरतैव शरणम् ।

इदमिति । अनौचित्यं जरत्सु स्त्रीणां भावबन्धानुपपत्तेः । अक्रमत्वं लोकगर्हितत्वात् । एवमुत्तरत्रापि । कृतमिति यत् प्रयुक्तं तदधिकं, पूर्वार्धे तथानुक्तेः ।

प्रसङ्गात् वक्ष्यमाणदोषान्तरमाह—प्रत्युतेति । तथाचेति । वाक्ये न्यूनत्वमिव पदस्याधिक्यमपि वैयाकुल्यं प्रयोजयति । पूर्वत्र प्रतीतिः साकाङ्क्षा, अत्र तु पाठे न तथा । अपि चेति निपातद्वयं क्लिष्टम् । तस्माद् 'यदपि न मृगशावकलोचनानामि'ति पाठः श्रेयान् ।

## सुधासागरः

अधिकपदम्—अन्वयाप्रतियोगिन उपस्थापकम् । तदुदाहरति—'स्फटिके'ति ।

'मालभारिणी' छन्दः । स्फटिकाकृतिनिर्मलः स्वच्छान्तःकरणः । प्रकाममत्यन्तं प्रतिसङ्क्रान्तमभिव्याप्तं निशातानां तीक्ष्णानां दुरूहाणामिति यावत्, शास्त्राणां तत्त्वं यस्मिन् तादृशः । अविरुद्धा वेदशास्त्रासिद्धा समर्थिता लोकप्रसिद्धा च या उक्तिस्तद्युक्ताः । प्रतिमल्लानां प्रतिस्पर्द्धिनामस्तमयस्योदयो यत्र तथाभूतः स कोऽपि महापुरुष इत्यर्थः ।

अत्राऽऽकृतिशब्द इति । अत्र स्फटिकमेव निर्मलतायामुपमानं विवक्षितम् । उपात्तेऽप्याकृतिपदे यथाकथञ्चित्तेनैवोपमितिपर्यवसानादित्याकृतिपदमधिकं न तु व्यर्थत्वादपुष्टार्थन सङ्कर इति वक्ष्यते ।

न केवलं समास एव पदाधिक्यम्, किन्त्वसमासेऽपीत्युदाहरति—'इदमे'ति । 'पुष्पिताग्रा छन्दः । अनुचितमसामर्थ्येऽपि प्रवृत्तत्वात् । अक्रमोऽसम्प्रदायः, शास्त्र-

८. कथितपदं यथा—

अधिकरतलतल्पं कल्पितस्वापलीला-
परिमिलननिमीलत्पाण्डिमा गण्डपाली ।
सुतनु, कथय कस्य व्यञ्जयत्यञ्जसैव
स्मरनरपतिलीलायौवराज्याभिषेकम् ॥

--अत्र लीलेति ।

## साहित्यचूडामणिः

कथितं प्राक् प्रयुक्तं पदं यत्र। अधीति। अत्र लीलेति पदं कथितं द्विः—प्रयुक्तम्। उक्तञ्च—'नैकं पदं द्विः प्रयोज्यं प्रायेणे'ति। 'स्मरनरपतिलक्ष्मी'ति पाठः श्रेयान्।

## सुधासागरः

विरोधात्। शैशव-यौवन-जरासु विद्यासेवन-विषयोपभोग-धर्मा इति हि शास्त्रम्। स्पष्टमन्यत्।

अत्र कृतमित्यादि। अत्र कृतमधिकम् पूर्वार्द्धवृत्तेन विनैव प्रतीतिपर्यवसानात्। कृतं प्रत्युत प्रक्रमभङ्गमावहति, पूर्वार्द्धेऽकरणात्। तथा च 'यदपि च न कुरङ्ग-लोचनानाम्' इति पठनीयम्। निष्प्रयोजनशब्दश्रवणेन श्रोतुर्वैमुख्यं दूषकता-बीजमतो हर्षादावभिव्यङ्ग्ये न दोषत्वम्।

कथितपदमुदाहरति—'अधिके'-ति। मालिनी छन्दः।

हे सुतनु अञ्जसैव तत्त्वेनैव कथय, करतले इत्यधिकरतलं तदेव तल्पं शय्या तत्र कल्पिता या स्वापलीला तया परिमिलनं करतलकपोलयोः दृढ-सम्बन्धस्तेन निमीलन् तिरोभवन् पाण्डिमा विरहधावल्यं यस्यास्तथाभूता गण्डपाली कपोलस्थली कस्य नायकशिरोमणेः स्मरनरपतिलीला कामनृपतिचातुर्यमवश्यवश्यता-पादनं तत्र यौवराज्यं युवराजत्वं तदर्थमभिषेकं व्यञ्जयति। वृद्धस्मरस्य तत्र कर्मण्य-क्षमतया यूना तन्निर्वाहणमिति नृपतिचातुर्ये स्मरकर्त्तृके कस्य तरुणस्य यौवराज्या-भिषेकं सूचयतीति भावः। एतेन तन्नायकस्य स्मरादप्यधिकवशीकरणकर्त्तृता ध्वन्यते। सूक्ष्माऽलङ्कारः।

अत्रेति। लीलापदं वारद्वयमुपात्तमित्यर्थः। दूषकताबीजं च कवेरशक्त्युन्नय-नेन श्रोतुर्वैमुख्यम्। अतो लाटानुप्रासादावदोषत्वम्, अशक्त्यनुन्नयात्।

अत्र काव्यप्रदीपकाराः प्राहुः—इदन्तु चिन्त्यम्-'समासे सत्येकस्मिन्नपि पदे व्यवधानाल्लाटानुप्रासविरहेऽप्यस्य सम्भवात् कथं न पददोषत्वमिति। अत्र वदामः—न खल्वेकस्मिन्पदे कथितपदत्वं स्वप्नेऽपि सम्भवति, पदावयवयोः पदत्वाभावात्। किन्तूपात्तपदस्य प्रयोजनं विना पुनरुपादाने सजातीयपदव्यवहारयोग्यपदयोरेव

९. पतत्प्रकर्षं यथा—

कः कः कुत्र न घुर्घुरायितघुरीघोरो घुरेत् सूकरः
कः कः कं कमलाकरं विकमलं कर्तुं करी नोद्यतः ।
के के कानि वनान्यरण्यमहिषा नोन्मूलयेयुर्यतः
सिंहीस्नेहविलासबद्धवसतिः पञ्चाननो वर्त्तते ॥

१०. समाप्तपुनरात्तं यथा—

क्रेङ्कारः स्मरकार्मुकस्य सुरतक्रीडापिकीनां रवो
झङ्कारो रतिमञ्जरीमधुलिहां लीलाचकोरीध्वनिः ।

---

## साहित्यचूडामणिः

पतन् पदात् पदमवरोहन् प्रकर्षो बन्धच्छाया यस्य । घुर्घुरायितं शब्दानुकारः । घुरी वाद्यविशेषः । सर्वोऽपि सूकरः करी महिषो वा सर्वत्र संक्षोभं कर्तुं क्षमः । अत्र विकटाक्षरत्वरूपः प्रकर्षश्चरणाच्चरणमवरोहति । एवमर्थौज्ज्वल्यलक्षणस्यापि प्रकर्षस्य पातोऽनुसन्धेयः यथा 'लीनेव प्रतिबिम्बितेव लिखितेवे'-त्यादि । अत्रोपर्युपरि निश्चमत्कारत्वमौपम्यस्य सचेतोभिरनुचिन्त्यम् ।

समाप्तेति । सम्पूर्णमपि भूयः स्वीकृतम् । क्रेङ्कार इति । तन्व्याः कञ्चुलिकापसारणे यद् दोर्लतावेल्लनं तेन स्खलतः कङ्कणस्य क्वाण इति विशेष्यं पदम् ।

## सुधासागरः

तथात्वम् । तादृशपादान्तर्गताखण्डपदाभिप्रायेण तथात्वमिति चेत्तर्हि तादृग्विवक्षया नानापदवृत्तिताऽप्यक्षतेति वाक्यदोषत्वमेवेति ।

श्रीवत्सलाञ्छनभट्टाचार्यास्तु द्विःप्रयुक्तमेकं पदमुद्देश्यप्रतिनिर्देश्यविधयाऽर्थयोरभेदप्रत्यभिज्ञाजननैयत्येन या स्वापलीला तत्रैव यौवराज्यमिति प्रत्ययमुत्पादयति प्रकृते तु न तद्विवक्षितमिति । दूषकताबीजन्तु सत्यप्यर्थभेदतात्पर्ये पदैकत्वदोषादर्थैक्यप्रतिभास इति । तन्न रमणीयम् । लीलामात्रार्थे भेदाभावात् । अभेदे तात्पर्यविषयीभूतेऽपि दोषतादवस्थ्याच्च ।

पतत्प्रकर्षमिति । अलङ्कारकृतस्य बन्धकृतस्य च प्रकर्षस्य यत्रोत्तरोत्तरं पातो निकर्ष इत्यर्थः । यथेत्युदाहरति—'कः क'-इति । 'शार्दूलविक्रीडितं' छन्दः । कः कः कुत्र न, अपि तु सर्व एव सर्वत्र घुर्घुरः शब्दभेदः । घुरी घोणा । स्पष्टमन्यत् । अत्र सूकराद्यभिधानेऽपि विकटबन्धकृतोऽनुप्रासकृतश्च प्रकर्षः सिंहाभिधाने पतितः । दूषकताबीजं चाशक्त्युन्नयनेन श्रोतुर्वैमुख्यम् । क्वचिद् रसानुगुणतया तत्पातेऽपि न दोषः ।

समाप्तपुनरात्तमिति । समाप्तं सत्पुनरुपात्तम् । वाक्ये समाप्ते पुनरन्वयिशब्दोपादानं यत्रेत्यर्थः । यत्तु समाप्ते वाक्येऽविशेषविधायिविशेषणान्तरोपादानवत्त्वं

तन्व्याः कञ्चुलिकापसारणभुजाक्षेपस्खलत्कङ्कण-
क्वाणः प्रेम तनोतु वो नववयोलास्याय वेणुस्वनः ॥

११. द्वितीयार्धगतैकवाचकशेषप्रथमार्धं यथा—

मसृणचरणपातं गम्यतां भूः सदर्भा
विरचय सिचयान्तं मूर्ध्नि घर्मः कठोरः ।
तदिति जनकपुत्री लोचनैरश्रुपूर्णैः
पथि पथिकवधूभिर्वीक्षिता शिक्षिता च ॥

---

## साहित्यचूडामणिः

अत्र प्रेम तनोतु व इत्येतावति श्रोतॄणां चित्तं विश्राम्यति। तथापि नववय इत्यादि यद् भूयो विशेषणं तत्र चमत्काराय। अर्धान्तरैकवाचकं द्विधा विभज्योदाहरति—द्वितीयेति। अर्धान्तरमन्यदर्धं तत्रासहायं पदं यस्य। यथाह—'नार्धे किञ्चिद्वाक्यं समाप्तमि'ति। तद् द्विधा द्वितीयार्धगतैकवाचकं प्रथमार्धं, विपरीतं च। तत्र प्रथमं यथेति यावत् तदिति। यतो भूः सदर्भा तस्मान्मसृणचरणपातं गम्यतामिति। अत्र तदिति पदं पूर्वार्धैकशेषम् उत्तरार्धारम्भे सार्थभ्रष्टस्तन्धयन्यायेनास्ते। विपरीतं यथा ममैव—

वक्षःस्थलं मुकुन्दस्य कौस्तुभाङ्कं कपर्दिनः।
चूडालो बालचन्द्रेण जटाजूटश्च पातु वः॥ इति।

अत्र पूर्वार्धगतैकवाचकमुत्तरार्धम्।

## सुधासागरः

तल्लक्षणमिति। तत्र। प्रागप्राप्तेत्यादौ वाक्यान्तरारम्भे विशेषणान्तरानुपादाने तल्लक्षणविरहेण तत्रानित्यदोषत्वव्युत्पादनविरोधात्। उदाहरणम्—क्रेङ्कार इत्यादि-मालारूपकं स्पष्टम्। अत्र तनोतु व इति समाप्तमेव वाक्यं नववय इत्यादिविशेषणे-नोपात्तम्। निराकाङ्क्षत्वं च दूषकताबीजम्, तच्चानित्यदोषोऽयम्, वाक्यान्तरा-रम्भे तदभावात्।

द्वितीयार्द्धेत्यादि। द्वितीयार्द्धगतमप्रधानहेत्वाद्यर्थकमेकं वाचकं यत्र तद-र्धान्तरैकवाचकमित्यर्थः। यथेत्युदाहरति। मालिनी छन्दः। 'ननमयययुतेयं मालिनी भोगिलोकैः' इति लक्षणात्। पथिकवधूभिः भूः सदर्भा मसृणचरणपातं गम्यताम्। घर्मः कठोरः तत्सिचयान्तं मूर्ध्नि विरचयेति जनकपुत्री पथि शिक्षिता अश्रुपूर्णैर्लोचनैर्वीक्षिता चेत्यन्वयः।

अत्र भूः सदर्भा तत् मसृणचरणपातं गम्यतामिति वाक्यं तत्र तदित्यर्धान्तर-गतम्। अत्र निराकाङ्क्षता दुष्टिबीजम्, श्रुतमात्रस्यैव भूसदर्भत्वस्याक्षेपादिना

१२. अभवन्मत इष्टो योगः सम्बन्धो यत्र तत्। यथा—

येषां तास्त्रिदशेभदानसरितः पीताः प्रतापोष्मभि-
र्लीलापानभुवश्च नन्दनवनच्छायासु यैः कल्पिताः।
येषां हुंकृतयः कृतामरपतिक्षोभाः क्षपाचारिणां
किन्तैस्त्वत्परितोषकारि विहितं किञ्चित् प्रवादोचितम् ॥

---

## साहित्यचूडामणिः

अभवन्निति। अभवन् अविद्यमानः इष्टः सम्बन्धो यत्र।

येषां क्षपाचारिणामिति सर्वत्रान्वयः कार्यः। यदेतन्मध्ये यैरित्युक्तं तद्वाक्यशेषः। विशेषस्याप्रतीतेः षष्ठीतृतीययोः सम्बन्धः समान इति कवेरिच्छा तयोर्वाक्यार्थं घटयति।

## सुधासागरः

हेतुत्वप्रतीतेः। यस्य तु कर्त्रादेर्न तथा प्रतीतिः तत्र तस्यार्थान्तरोपादानेऽप्यात्मलाभ एव नास्ति। तल्लाभेऽपि वा न दोषत्वमिति।

एवं श्रीवत्सलाञ्छनभट्टाचार्यैर्यदुक्तम्—'अत्र परार्धपतितस्य तत्पदस्य विलम्बेनोपस्थित्याऽन्वयबोधविलम्ब इति दूषकताबीजमिति', तन्नातिरमणीयम्।

अत्र प्राञ्चः—भूसदर्भत्वमसृणचरणपातयोः कठोरघर्मत्वमूर्धावगुण्ठनयोश्च हेतुहेतुमद्भावेनान्वयोपपत्तौ किं तच्छब्दापेक्षणेन। तदिति पुनरखण्ड एव निपातः प्रागुक्तपरामर्शकः। तथा च 'भूः सदर्भा'—इत्यत्राऽऽर्थहेतुत्वम्, तथोत्तरत्रापीति नात्र दोष इति वदन्ति, तन्न, 'शाब्दो ह्याकाङ्क्षा शब्देनैव पूर्यते' इति न्यायाच्छाब्दे हेतुत्वे सम्भवत्यार्थत्वस्यान्याय्यत्वात्, तदित्यखण्डनिपाते प्रमाणाभावाच्च।

अभवन्नित्यादि। अभवन्नभिमतो योगो यत्र तदभवन्मतयोगमित्यर्थः। न चाविमृष्टावधेयमध्येऽन्तर्भावः, उपजीव्यत्वेन भेदादिति केचित्। वस्तुतस्तु तत्र पदार्थयोरुपस्थितयोरन्वयो भवत्येव, परन्त्वनभिमतेनाप्राधान्यादिना रूपेण। अत्र तु सम्बन्धस्तयोर्न प्रतीयते इति महान् भेदः। नन्वेवम् अभवन्मतयोगे मतत्वविशेषणानर्थक्यमिति चेत्, न। एकवाक्यस्थपदोपस्थापितत्वादिरूपस्य योगस्यापि सत्त्वात्। मतत्वं चान्वयबोधविषयत्वमित्यप्रसङ्गः। एतच्च क्वचिद्विभक्तिभेदाद्यथा—येषामित्यादि। शार्दूलविक्रीडितं छन्दः। येषां प्रतापोष्मभिस्ताः लोकोत्तराः त्रिदशेभानामैरावणादीनां दानसरिता मदजलनिर्झराः पीताः शोषिताः यैर्नन्दनवनच्छायासु लीलापानभुवश्च कल्पिताः। येषां क्षपाचारिणां राक्षसानां हुङ्कृतयो हुङ्काराः कृतोऽमरपतेरिन्द्रस्य क्षोभो भयविक्लवो याभिस्तथाभूतास्तैः क्षपाचारिभिस्त्वत्परितोषकारि तव रावणस्य सन्तोषदायि प्रवादोचितं सदसि कथनयोग्यं किञ्चिद्विहितम्, अपि तु न किञ्चित्कृतमित्यर्थः।

—अत्र 'गुणानां च परार्थत्वादसम्बन्धः समत्वात् स्याद्' इत्युक्तनयेन यच्छब्दनिर्देश्यानामर्थानां परस्परमसमन्वयेन यैरित्यत्र विशेष्यस्याप्रतीतिरिति 'क्षपाचारिभिः' इति पाठे युज्यते समन्वयः। यथा वा—

---

## साहित्यचूडामणिः

संवादपूर्वकं व्याचष्टे—अत्रेति। 'अरुणया पिङ्गाक्ष्या एकहायन्या गवा सोमं क्रीणाति' इत्यत्र गुणानामारुण्यादीनां क्रयणार्थतया सम्बन्धादन्योन्यमन्वयो नास्तीति न्यायेन विशेष्यद्वारा वाक्यार्थपर्यवसायिनां यच्छब्दनिर्देश्यानां विशेषणार्थानामन्वयस्याभावे क्षपाचारिणामित्येतद् येषामित्यनेन सम्बध्यते, नतु यैरित्यनेनापि। अत्र विशेषस्याप्रतिपत्तिः। 'क्षपाचारिभिरि'ति पाठे क्षपाचारिशब्दो गुणकक्ष्यामतिक्रम्य वाक्यार्थकोटिमध्यारोहति। तत्रास्य शाब्दः समन्वयः गुण वाक्येषु पुनरार्थः, यथा पूर्वपाठे गुणवाक्येषु शाब्दः, प्रधानवाक्ये त्वार्थः।

## सुधासागरः

यत्तु प्रदीपकारैर्नन्दनवनच्छायास्वित्यत्र नन्दनतरुच्छायास्विति पठितम्, तत् 'छाया बाहुल्ये' इति सूत्रविस्मरणमूलकम्।

अत्र यैरित्यस्य अभेदसंसर्गेण विशेष्यतया क्षपाचारिशब्दार्थो विवक्षितः, न च तेन ततस्तथा योगः प्रतीयते, विभक्तिभेदात्। यैरिति क्षपाचारिणामिति पदयोर्भिन्नविभक्तिकयोरभेदान्वये स्वरूपायोग्यत्वादिति भावः। यैर्लीलापानभुवः कल्पिताः, येषां प्रतापोष्मभिरित्यादिप्रकारेण यच्छब्दाभिधेययोरेव तथाऽन्वयोऽस्तु किं विशेष्यान्तरविवक्षयेति चेन्न। अनुवाद्यानां हि विधेयेनैव साक्षादन्वयो न तु तदनन्तर्भाव्यनुवाद्यान्तरेण गुणत्वस्योभयत्र तुल्यतया विशेष्यत्वविनिगमनाया अशक्यत्वात्। तदेतदुक्तम्—'गुणानां च परार्थत्वादसम्बन्धः समत्वात्स्यात्' इति। अतएव 'अरुणयैकहायन्या पिङ्गाक्ष्या गवा सोमं क्रीणाति'—इत्यारुण्यादीनां पिङ्गाक्ष्यादिभिर्नान्वयो नापि गवा, तस्या अपि क्रयणसाधनत्वेन गुणत्वात् किन्तु क्रयेणैव। कथं तर्हि धर्म्यन्तरस्थैरप्यारुण्यादिभिर्न क्रय इति चेत्, आरुण्यादीनां गोत्वान्तानामार्थसमाजात्। तर्हि तद्वदेवात्राप्यार्थ एव समाजोऽस्त्विति चेत्, भवेदेवं यदि तद्वत्समानविभक्तिकत्वं भवेत्। विभक्तिविपरिणामस्तु न भवत्येव, चरितार्था हि विभक्तयो विपरिणम्यन्ते, चारितार्थ्यन्तु प्रधानसामानाधिकरण्येनैव, न चात्र तथा। कथं तर्हि भवत्यभिमतो योग इति चेत्, क्षपाचारिभिरिति पाठे। कथम्? विशेष्यान्वये चरितार्थायास्तृतीयाया विभक्तिविपरिणामेन सकलयत्पदनिर्दिष्टानां तत्पदेन परामर्शे तेषां सर्वेषां क्षपाचारित्वावगतेः। तदेतत्सर्वमभिप्रेत्य सर्वज्ञः श्रीवाग्देवतावतार आह—अत्रगुणानामित्यादि।

त्वमेवंसौन्दर्या स च रुचिरतायाः परिचितः
कलानां सीमानं परमिह युवामेव भजथः ।
अपि द्वन्द्वं दिष्ट्या तदिति सुभगे संवदति वा-
मतः शेषं यत् स्याज्जितमिह तदानीं गुणितया ।।

--अत्र यदित्यत्र तदिति, तदानीमित्यत्र यदेति वचनं नास्ति । 'चेत् स्याद्' इति युक्तः पाठः । यथा वा—

संग्रामाङ्गणमागतेन भवता चापे समारोपिते
देवाकर्णय येन येन सहसा यद् यत् समासादितम् ।

---

## साहित्यचूडामणिः

त्वामिति । एवंसौन्दर्या अनपह्नवनीयाभिरूप्या । अतश्शेषं यदित्यत्र यद्वृत्तस्य तद्वृत्तं नास्ति । तदानीं पदस्य वा यद्वृत्तं नास्ति इत्युभयतःपाशा रज्जुः ।

चेत् स्यादिति । यद्वृत्तस्थाने चेच्छब्दो निवेशनीयः । येन तदानींशब्दस्य नैराकाङ्क्ष्यम् ।

सङ्ग्रामेति ।

## सुधासागरः

क्वचिन्न्यूनतादिनिबन्धनमपीति दर्शयति—'त्वमेवमि'ति । शिखरिणी छन्दः । हे सुभगे त्वमेवनुभवमात्रगोचरं विशिष्य वक्तुमशक्यं सौन्दर्यं यस्यास्तथाभूता । स वरश्च रुचिरतायाः मनोहरतायाः परिचितः एवंविधसौन्दर्यवानित्यर्थः । चतुःषष्टि-कलानां सीमानं परमिह कामिलोके युवामेव भजथः । अपि सम्भावनायाम् । तद्दिष्ट्या भाग्येन वां युवयोरिति द्वन्द्वं संवदति योग्यं भवति, अतः शेषं सङ्गमरूपं वा यत् यदि स्यात्तदानीं गुणितया गुणवत्तया इह संसारे जितं सर्वमित्यर्थः ।

अत्र प्रदीपकाराः—अत्र शेषसम्पत्तेर्गुणिताजयप्रयोजकत्वान्वयो विवक्षितः । स च द्विधा सम्भवति-यदित्यस्य चेदित्यर्थकतया, तद्यदिपदार्थयोर्विवक्षया वा । तयोर्यदि प्रथमे तात्पर्यं तदाऽवाचकता, द्वितीये तु न्यूनपदत्वमिति प्राहुः । तन्न रमणीयम् । यदित्यस्य यदेत्यर्थकाव्ययत्वात् । यथा—'विभावा अनुभावास्तत्कथ्यन्ते' इत्यत्र तदित्यस्य तदानीमित्यर्थकत्वम् (?) ।

वयन्तु पश्यामः—अव्ययानामनेकार्थत्वाद्यदित्यस्य तदानींशब्दसमभिव्याहार-विलम्बेन विलम्बोपस्थितिकत्वाच्चमत्कारविघातकत्वम्, चमत्कारानुकूलस्य च योगस्य सत्त्वात् । विभावा इत्यादेः कारिकात्वेन सम्भवतोऽप्यस्यातन्त्रत्वादिति (?) । तस्माद्-विवक्षाभेदेन न्यूनतादिनिबन्धनोऽयं दोषः । न च न्यूनपदस्याप्यत्रैवान्तर्भावः, क्वचिन्न्यूनपदेऽप्यध्याहारादिना मतयोगसम्भवे विलम्बादेरदुष्टत्वसम्भवात् ।

कोदण्डेन शराः शरैररिशिरस्तेनापि भूमण्डलं
तेन त्वं भवता च कीर्तिरतुला कीर्त्या च लोकत्रयम् ॥

--अत्राकर्णनक्रियाकर्मत्वे 'कोदण्डं शरानि'त्यादि, वाक्यार्थस्य [च] कर्मत्वे 'कोदण्डः शरा' इति प्राप्तम्। न च यच्छब्दार्थस्तद्विशेषणं वा कोदण्डादि। न च केन केनेत्यादि प्रश्नः।

---

## साहित्यचूडामणिः

आकर्णनक्रियायाः किं कोदण्डादिपदार्थः कर्म, उत वाक्यार्थः।

आद्ये दोषमाह—कोदण्डमित्यादि। कोदण्डं शरानित्यादिक्रमेण द्वितीया युक्ता न तु युक्ता कोदण्डेन शरैरिति तृतीयापि। द्वितीये दोषमाह—वाक्यार्थस्येति। कोदण्डः शरा इत्यादिक्रमेण सर्वत्र प्रथमाया एवौचित्यम्। अविभक्तिकत्वपरित्यागे सौशब्द्यमात्रस्य साध्यत्वात्। एवमभिहितः सम्बन्धो न संभवति। किञ्च पूर्वार्धवर्तिभ्यां यद्वृत्ताभ्यामुत्तरार्धस्थानां कोदण्डादीनां विशेष्यतया विशेषणतया चान्वयो न घटत इत्याह—न चेति। ननु केन केनेत्यादिप्रश्नद्वारा उत्तरार्धस्यान्वय इति चेन्नेत्याह—न चेति।

## सुधासागरः

क्वचिदाकाङ्क्षाविरहाद् यथा—'सङ्ग्रामे'-ति।

वीराणां सुखसञ्चारेण सङ्ग्रामस्याङ्गणत्वेन रूपणम्। स्पष्टमन्यत्। अत्र पूर्वार्धार्थेन उत्तरार्धस्य योगो विवक्षितः, न च कथञ्चित्सम्पद्यते। तथा हि—अर्थानां वाक्यार्थे योगः क्रियात्वेन वा, कारकत्वेन वा, सम्बन्धित्वेन वा, एषां विशेषणतया वा, हेतुत्वलक्षणत्वादिना वा, तदादिना पूर्ववाक्यार्थमनूद्य वाक्यान्तरावष्टम्भाद्वाक्यैकवाक्यतया वा भवेत्। तत्र कोदण्डादेः प्रथमतृतीयपञ्चमषष्ठाः पक्षास्तद्विशेषणता चासम्भाविता एव। कारकत्वमपि कर्मकर्तृभावाभ्यामन्यन्न घटते। तत्राकर्णनक्रियायां पदार्थमात्रस्य कर्मत्वे विवक्षिते 'कोदण्डं शरान्' इत्यादि स्यात्। अथ परस्परानन्विता मिलिताः पदार्थाः कर्म, न प्रत्येकमतो न प्रत्येकवाचकात्कोदण्डादिशब्दाद्द्वितीयेति चेत्, तर्हि शुद्धप्रातिपदिकार्थमात्रार्थत्वात् 'कोदण्डः शरा' इत्यादिप्रथमा स्यात्, 'माहिषं दधि सशर्करं पयः' इत्यादिवत्। अथ समासादनक्रियायां कोदण्डादीनां कर्तृतया, शरादीनां तु कर्मभावेनान्वय इति चेन्न। शराः समासादितमित्यनन्वयात्।

किञ्च येन यत्समासादितं कोदण्डेन शराः समासादितास्तदाकर्णयेति पर्यवसाने कर्त्रोः कर्मणोश्च भेदः प्रतीयेत। न चाकाङ्क्षानिवृत्तिः स्यात्। यच्छब्दस्य बुद्धिस्थवाचकतया कोदण्डादिपदार्थ एव यच्छब्दार्थः, तथा च यच्छब्दार्थस्य क्रियान्वये कोदण्डादीनामन्वयो जात एवेति चेन्न, एवं हि कोदण्डादीनां पुनरुपादानं व्यर्थमेव स्यात्, तस्मादस्ति कश्चित्प्रकारकृतस्तयोर्भेद इति तदवच्छिन्नतया योगः कथञ्चिदुपपादनीयः। एतेनाक्षिप्ततच्छब्दार्थत्वमपि निरस्तम्।

यथा वा—

चापाचार्यस्त्रिपुरविजयी ॥[१]

--इत्यादौ भार्गवस्य निन्दायां तात्पर्यम्, कृतवतेति परशौ सा प्रतीयते। 'कृतवत' इति तु पाठे मतयोगो भवति। यथा वा—

## साहित्यचूडामणिः

भार्गवस्येति। प्रहरणवतो निन्दायां चेत् तात्पर्यम्। उक्तऽत्रैव तदवश्यमन्वयः, न प्रहरणे, वैयधिकरण्येन वैरस्यप्रसङ्गात्। अतः कृतवत इति षष्ठ्यन्तः पाठः यत्र मतयोगः स्यात्।

## सुधासागरः

अथ कर्तृकर्मणोर्विशेषणानि कोदण्डादीनीति चेत्। न। कोदण्डेन येन शरः यत्समासादितं तदाकर्णयेति वाक्यार्थपर्यवसाने पुनर्विशेषानुक्तावाकाङ्क्षया अनिवृत्तिप्रसङ्गात्। शरा यत् इत्याद्यन्वयबाहुल्यप्रसङ्गाच्च। अत एव कोदण्डादिशरादिकर्तृकर्मणी तद्विशेषणन्तु यच्छब्दार्थ इत्यपि व्युदस्तम्। अथ येन यदिति सामान्यतोऽवगमात्केन किमिति विशेषप्रश्ने कोदण्डेन शरा इत्याद्युत्तररूपाणि चेत्, न तादृशप्रश्नाश्रवणात्। अथासावुन्नीयते, एवमुत्तरालङ्कारोऽपि लभ्यते इति चेन्न, येन यदासादितं तदाकर्णयेति प्रतिज्ञाय प्रश्नं विनाऽपि कोदण्डादिनिर्देशसम्भवेन तदुन्नयनासिद्धेः। ननु चासादितमित्यस्य क्रियापदस्य वचनादिविपरिणामेनानुषङ्गे 'कोदण्डेन शराः समासादिताः' इत्यादिवाक्यान्तरारम्भे को दोष इति चेत्, वाक्यभेदः, पूर्वापरार्धयोरनन्वयतादवस्थ्यात्। लोके तादृशवाक्यभेदेऽपि दोषाभावात्तथा प्रयोग इति। तदेतदभिप्रेत्य श्रीवृत्तिकृदाह—अत्राकर्णनक्रियेत्यादि।

व्यङ्ग्यस्यापि विवक्षितयोगाभावेऽस्यावतारो यथा—चापे'-ति।

'प्राग्व्याख्यातमिदम्। भार्गवस्य निन्दायां तात्पर्यमित्यादि। इयं युयुत्सुं भार्गवं प्रति रावणस्योक्तिः। अत्र हि रावणस्य भार्गवेण सह युद्धमनभिलषितमिति तदुपेक्षा वाक्यार्थः, सा च न प्रतीयते, परशुनिन्दायां भार्गवस्यानुपेक्षणीयत्वात्, निन्दितशस्त्रं विना शस्त्रान्तरेणापि भार्गवेण सह युद्धसम्भवात्। कृतवतेत्यस्य परशुविशेषणत्वेन परशुनैव तदर्थाभिसम्बन्धात्तत्रैव निन्दा प्रतीयते, न च तथा सति सङ्गतिरित्यभवन्मतयोगत्वमिति भावः। मतयोग इति। भार्गवनिन्दायोगरूप इत्यर्थः, अत एव प्रदीपकारैर्व्याख्यातम्—अत्र रेणुकाकण्ठबाधाजन्यात्मनिन्दया भार्गवस्य योगो विवक्षितः, तन्निन्दाप्रकरणात्, परशोः स्वक्रियापाटवेनानिन्दनीयत्वाच्च, न च तथा प्रतीयते, कृतवतेति तृतीयया परशुनैव सम्बन्धावगमात्। कृतवत इति पाठे तु भार्गवे निन्दायोगः प्रतीयते। यदि तु परशुनिन्दानन्तरं विदग्धोक्त्याऽपि

[१] पृ० ७०।

चत्वारो वयमृत्विजः स भगवान् कर्मोपदेष्टा हरिः
संग्रामाध्वरदीक्षितो नरपतिः पत्नी गृहीतव्रता।
कौरव्याः पशवः प्रियापरिभवक्लेशोपशान्तिः फलं
राजन्योपनिमन्त्रणाय रसति स्फीतं हतो दुन्दुभिः ॥

--अत्राध्वरशब्दः समासे गुणीभूत इति न तदर्थः सर्वैः संयुज्यते।

यथा वा—

जङ्घाकाण्डोरुनालो नखकिरणलसत्केसरालीकरालः
प्रत्यग्रालक्तकाभाप्रसरकिसलयो मञ्जुमञ्जीरभृङ्गः।
भर्तुर्नृत्तानुकारे जयति निजतनुस्वच्छलावण्यवापी-
सम्भूताम्भोजशोभां विदधदभिनवो दण्डपादो भवान्याः ॥

---

## साहित्यचूडामणिः

सङ्ग्रामाध्वरेत्यादिसमासकर्दमनिमग्नस्याध्वरपदस्य योऽर्थस्तस्य सर्वैः ऋत्विगादिभिः सम्बन्धो न घटत इति विधेयाविमर्शव्यतिरिक्तोऽयं दोषः। शुद्धे तत्र सङ्ग्रामाध्वरशब्दस्यैव दुष्टत्वम्, अत्र पुनः ऋत्विगादेरपीति विवेकः।

भवानीसम्बन्धिनीति। निजतन्वित्यादौ भवान्याः पाद इत्यनयोः प्रधानेन

## सुधासागरः

भार्गवेऽपि निन्दावगमस्तदा कृतत्वस्यानेन योगाद्वाच्यायोगोदाहरणमेवैतत्। तथा हि—यथा स्पर्द्धायोग्यत्वोपपत्त्यै परशुस्वामिनो महादेवशिष्यत्वादीनि विशेषणान्युपात्तानि, तथा तदयोग्यत्वोपपादनाय तस्यैव कश्चिद्धर्मो वक्तुमुचित इति भार्गवेण कृतत्वस्यान्वयो विवक्षितो न प्रतीयत इति दुष्टत्वम्। एवं च चण्डीदासादिव्याख्यानमनादेयम्।

क्वचित्समासाच्छन्नतया मतयोगाभावो यथा—'चत्वार' इति।

शार्दूलविक्रीडितं छन्दः। भीमार्जुननकुलसहदेवाश्चत्वारो वयमृत्विजः, स भगवान्हरिः श्रीकृष्णः, कर्मोपदेष्टा आचार्यः, नरपतिर्युधिष्ठिरः सङ्ग्राम एवाध्वरो यज्ञस्तत्र दीक्षितो यजमानः पत्नी द्रौपदी गृहीतं व्रतं यथा तथाभूता, कौरव्या दुर्योधनादयः पशवः, प्रियाया द्रौपद्याः परिभवः केशाकर्षणादिरूपस्तत्क्लेशोपशान्तिः फलम्। राजन्यः राजसमूहः तत्योपनिमन्त्रणाय यश एव दुन्दुभिः स्फीतं रसति ताडने स्निग्धशब्दोदयाज्जयरूपं निर्विघ्नकर्मसमाप्तिं सूचयतीत्यर्थः।

अत्रेत्यादि। अत्र सङ्ग्रामाध्वरस्य ऋत्विगादिषु सर्वत्रान्वयो विवक्षितो न तु प्रतीयते, समासाच्छन्नत्वात्।

क्वचिद्व्युत्पत्तिविरोधाद्यथा—'जङ्घे'-ति।

—अत्र दण्डपादगता निजतनुः प्रतीयते, भवान्याः सम्बन्धिनी तु विवक्षिता।

१३. अवश्यवक्तव्यमनुक्तं यत्र। यथा—

अप्राकृतस्य चरितातिशयैश्च दृष्टै-
रत्यद्भुतैरपहृतस्य तथापि नास्था।
कोऽप्येष वीरशिशुकाकृतिरप्रमेय-
सौन्दर्यसारसमुदायमयः पदार्थः॥

## साहित्यचूडामणिः

पादेनैव निजशब्दस्यान्वयो न्याय्यः। गुणीभूतयापि भवान्या समन्वय इति कविविवक्षा। एवञ्च मतयोगो न स्यात्।

अवश्येत्यनभिहितवाच्यमित्यस्य व्याख्या। अप्राकृतेति। लोकोत्तरस्य पौलस्त्यस्य चरितातिशयैः कैलासचालनादिभिः। कोऽप्येष इति रामं प्रत्युक्तिः। अप्रमेयानामचिन्तनीयानां माहात्म्यसाराणां महानुभावतासम्बन्धिनाम् उत्कृष्टांशानां यः समुदायः तत्प्रकृत इति।

## सुधासागरः

व्याख्यातम्। अत्रेत्यादि। अत्र तनुपदार्थस्य पार्वत्या योगोऽभिमतः दण्डपादेन प्रतीयते, वाक्ये यत्प्रधानं तत्रैव निजादिपदव्युत्पत्तेः। अत एवोक्तं मिश्रप्रमुखैः—'निजस्वात्मादिशब्दानां प्रधानक्रियाकर्त्रन्वयित्वव्युत्पत्तिरिति'। दूषकताबीजमिष्टप्रतीतिविरह इति नित्यदोषोऽयम्।

अवश्येत्यादि। अनभिहितवाच्यमित्यावश्यके यः तेनानभिहितं वाचकपदातिरिक्तमवश्यवाच्यं यत्र तदित्यर्थः। वाचकपदानभिधाने न्यूनपदत्वव्यवस्थापनात्। यत्तु 'न्यूनपदेऽप्रतीतिमात्रम्, अत्र तु विरुद्धा प्रतीतिरित्यनयोर्भेदः, अप्राकृतस्य' इति वक्ष्यमाणोदाहरणे च मत्सम्बन्धित्वेन वीरशिशुप्रतीतिरेव विरुद्धा प्रतीतिः' इति कस्यचिद्व्याख्यानम्, तदनुभवविरुद्धम्, तथाऽनुभवस्याप्रतीतेः। इदं चान्यथावाच्यस्यान्यथाऽभिधानाद्वा, अवाचकस्य द्योतकादेरनभिधानाद्वा। आद्यं यथा—अप्राकृतस्येत्यादि। सीतास्वयंवरे रावणगुणैर्वशीकृतस्य जनकस्य रामदर्शनानन्तरमियमुक्तिः। अप्राकृतस्य असाधारणस्य क्रूरत्वेऽपि सकललोकक्षोभकत्वेनातिप्रसिद्धस्य रावणस्येति यावत्। दृष्टैश्चकारोऽनुक्तसमुच्चयार्थस्तेन श्रुतैरिति समुच्चीयते दृष्टैः श्रुतैश्च चरितातिशयैश्चरित्रोत्कर्षैः स्वर्गविलुण्ठनस्वशिरःपङ्क्तिकर्त्तनकैलासचालनादिभिरत्याहृतस्यापहृतस्य वशीकृतस्येति यावत्। मम तथाऽपि तत्र रावणे नास्था नादरः। एष उपस्थितः कोऽपि लोकोत्तरो विशिष्य वक्तुमशक्यो वीरशिशुकाकृतिः, वीरत्वेन शौर्यप्रतापपराक्रमादिकं कप्रत्ययेनानुकम्पार्थेन सरलत्वसौन्दर्यसौकुमार्यादिकं व्यज्यते।

—अत्रापहृतोऽस्मि इत्यपहृतत्वस्य विधिर्वाच्यः तथापीत्यस्य द्वितीयवाक्यगतत्वेनैवोपपत्तेः ।

यथा वा—

एषोऽहमद्रितनयामुखपद्मजन्मा
प्राप्तः सुरासुरमनोरथदूरवर्त्ती ।
स्वप्नेऽनिरुद्धघटनाधिगताभिरूप-
लक्ष्मीफलामसुरराजसुतां विधाय ॥

—अत्र 'मनोरथानामपि दूरवर्त्ती' इत्यप्यर्थो वाच्यः । यथा वा

## साहित्यचूडामणिः

अपहृतोऽस्मीति पृथग्वाक्यं कार्यम्, अन्यथा तस्य विधेरनुक्तत्वात्। एकवाक्यतायामपिशब्दस्यौचित्यं नतु तथापीतिनिपातसमुदायस्य ।

एष इति ।

अप्यर्थोऽपिशब्दस्यार्थो वाच्यः । स च तत्प्रयोगादृते न स्यात् । मनोरथानामपि दूरवर्तीति वक्तव्यत्वात् ।

## सुधासागरः

अप्रमेयः कदाऽप्यन्यत्राहष्टो माहात्म्यसाराणां यावतां प्रभावातिशयोत्कृष्टांशानां समुदायमयः समूहात्मकः पदार्थः रामरूप इत्यर्थः । विशेषनिश्चयाभावात्पदार्थोक्तिः । रावणचरितैरपहृतोऽस्मि तथाऽप्यस्य शिशोर्माहात्म्यदर्शनात्तत्र नास्थेति भावः ।

अत्रेत्यादि । अत्राहमपहृतोऽस्मीति प्रकारेणापहृतत्वस्य विधिर्वाच्यः । तेन वाक्यद्वयसम्पत्तौ तथापीत्युपपद्यते, द्वितीयवाक्यगतत्वेनैव तस्य प्रतीतेः । नन्वयमविमृष्टविधेयांश एवेति चेन्न । नहि विधेयाविमर्शत्वमत्र दूषणम्, किन्तु तथापीत्यस्यासङ्गतिरपि, तदनुरोधेनैवाहृतत्वस्य विधेयस्याभ्युपगमो न तु तत्प्राधान्यात् । एतेन 'अवान्तरवाक्ये नविधेयाविमर्शः' इति समाधानमनादेयम्, बीजाभावात् । 'क्षणमप्यमुक्ता' इत्यवान्तरवाक्ये एव तदुदाहरणाच्च । अस्तु वाऽत्रोदाहरणे विधेयाविमर्शः तथाऽपि द्वितीयभेदे तदसङ्क्रमात्रेणेव दोषभेदव्यवस्थितेः । यथा वेति तदुदाहरति—'एषोऽहे'-ति ।

वसन्ततिलका छन्दः । इयं किल हरिवंशे कथा । पार्वतीशिवयोः समीपे सकलकलाभिज्ञाः सुरासुरयक्षगन्धर्वोरगादीनां दुहितरो गीतवादननृत्यानि कुर्युः, तत्रैकदा बाणासुरकन्योषानाम्नी अहो अद्भुतमिदं दम्पत्योः सुखम्' इत्यभिललाप । अथ तत्प्रार्थण्यतुष्टयाऽद्रिकन्यया वरो दत्तः, 'एतावत्कालोत्तरं रात्रावनुरूपो भर्त्ता त्वामुपयास्यति' इति, ऊषा तु परिहासवचनमिति तद्विस्मृतवती, अथ वरदानबलात्सवि

त्वयि निबद्धरतेः प्रियवादिनः प्रणयभङ्गपराङ्मुखचेतसः।
कमपराधलवं मम पश्यसि त्यजसि मानिनि दासजनं यतः।
—अत्र 'अपराधस्य लवमपि' इति वाच्यम्।

१४. अस्थानस्थपदं यथा—
प्रियेण संग्रथ्य विपक्षसन्निधा-
वुपाहितां वक्षसि पीवरस्तने।

---

## साहित्यचूडामणिः

अपराधस्य लवमपीति। पूर्ववदप्यर्थस्य वाच्यत्वम्, इतरथा स्थूलो ममापराधो नेक्षित इत्यनौचित्यापातात्। नैतन्यूनपदं, प्रधानपदस्य न्यूनत्वाभावात्। यावन्निपातस्यात्राप्रयोगः। अप्राकृतस्येत्यादौ सोऽपि पठ्यते। केवलमेकवाक्यताकरणं दोषः।

अस्थानेति। अपदस्थपदमपदस्थसमासं चेति द्वे। पदशब्दः स्थानवाची।

तत्राद्यं यथा प्रियेणेति। पीवरस्तने अन्यथा सपत्नीनामसूयानौचित्यात्। अत्र ह्यानक्रिया निषेध्या येन तदुपरागेण भाव्यं नकारस्य। द्विविधं विशेषणमिष्टमन्तरङ्गं बहिरङ्गं च। तत्राद्यमव्यवहितम् अर्थक्रियाकारि च लाक्षादिवत् स्फटिकादेः। द्वितीयमुभयरूपम् अयस्कान्तमिव लोहस्या। तद्धि व्यवहितमपि लोहे स्वां शक्तिमुपदधाति। विशेष्यमपि द्विविधं धात्वर्थो नामार्थश्चेति। ततश्च

## सुधासागरः

समये स्वप्नेऽनिरुद्धेन श्रीकृष्णपौत्रेण सङ्गमो जात इति। तन्मूलकनाटकस्थमिदं पद्यम्। व्यभिचारदूषिताऽहमिति प्राणांस्त्यजेदिति शङ्कया वरः स्वरूपवानुषायाः सखीं चित्रलेखामाह—एषोऽहमित्यादि। सुरासुरमनोरथदूरवर्त्ती सर्वेषां दुःप्राप्यः अद्रितनयायाः पार्वत्याः आननपद्मान्मुखकमलाज्जन्मोत्पत्तिर्यस्य तादृशोऽहं वरः असुरराजस्य बाणासुरस्य सुतामुषानाम्नीं स्वप्ने स्वप्नावस्थायामनिरुद्धेन श्रीकृष्णपौत्रेण सह घटनया सङ्गमरूपयाऽधिगतं प्राप्तमभिरूपलक्ष्म्याः परमसौन्दर्यसम्पत्तेः फलं यया तथाभूतां विधाय कृत्वा एषः प्राप्तः परावृत इत्यर्थः। एवं च मदनस्येयमुक्तिरिति वदन्तो भ्रान्ताः। अत्रेत्यादि। अत्र सुरासुराणामपि मनोरथस्य दूरवर्त्तीत्यप्यर्थोऽवश्यं वाच्यः। अन्यथाऽन्यमनोरथविषयत्वं प्रतीयेत।

असमासेऽप्ययेप दोषः। यथा चेति तदुदाहरति—'त्वयी'-ति।

स्पष्टम्। द्रुतविलम्बितं वृत्तम्, 'द्रुतविलम्बितमाह नभौ भरौ' इति लक्षणात्। अत्रेत्यादि। अत्र 'लवमपि' इत्यप्यर्थोऽवश्यं वाच्यः। अन्यथा लवनिषेधे स्थूलप्रतीतिप्रसङ्गात्। दूषकताबीजं प्रथमेऽभिमताप्रतीतिः। अन्त्ययोस्तु विरुद्धप्रतीतिरिति नित्यदोषोऽयम्।

स्रजं न काचिद् विजहौ जलाविलां
वसन्ति हि प्रेम्णि गुणा न वस्तुषु ॥

—अत्र काचिन्न विजहाविति वाच्यम्। यथा वा—

लग्नः केलिकचग्रहश्लथजटालम्बेन निद्रान्तरे
मुद्राङ्कः शितिकन्धरेन्दुशकलेनान्तःकपोलस्थलम्।

---

## साहित्यचूडामणिः

नकारस्य जहावित्येतस्य सन्निकर्षेण भाव्यम्। यदि च क्रमविलङ्घनादन्वयः, तथापि शब्दवृत्तविपर्यासाद् वाच्यावस्थापरिस्खलच्चेतसां सचेतसां रसास्वादप्रत्यूहः तदुक्तं—

विशेषणं हि द्विविधमान्तरं बाह्यमेव च।
तत्राव्यवहितं सद् यदर्थकारि तदान्तरम्॥
स्फटिकस्येव लाक्षादि, द्वितीयमुभयात्मकम्।
आयसस्येव तत्कान्तं, तदपि द्विविधं मतम्॥
असमानसमानाधिकरणत्वविभेदतः।
विशेष्योऽपि द्विधा ज्ञेयो धातुनामार्थभेदतः॥
अतएव व्यवहितैर्बुधा नेच्छन्ति चादिभिः।
सम्बन्धं ते हि शक्तिं स्वामुपदध्युरनन्तरे॥
ततश्चार्थासामञ्जस्यादनौचित्यं प्रसज्यते॥ इति।

॥ व्य० वि० पृ० १५८-१५९॥

इत्थं च न काचिद् विजहौ सर्वा एव विजहुरिति वाक्यर्थस्यासमञ्जसत्वप्रसङ्गः। लग्न इति। पार्वतीकपोले हरशिरश्चन्द्रशकलमुद्राङ्कं प्रति सखीनां नखलक्ष्मशङ्कायां यत् कारणं कुटिलाताम्रच्छवित्वं तन्नखलक्ष्मेत्यतः प्राग् वक्तव्यं कार्योत्पत्तेः

## सुधासागरः

अस्थानस्थपदमिति। 'अपदस्थपदसमासम्' इति सूत्रम्। तत्र अस्थानस्थपदं अस्थानस्थसमासं चेति द्वयमित्यर्थ इति भावः। अस्थानस्थत्वं चायोग्यस्थानस्थत्वं तयोराद्यमुदाहरति—प्रियेणेत्यादि। वंशस्थं वृत्तम्। 'जतौ तु वंशस्थमुदीरितं जरौ' इति लक्षणात्। काचिन्नायिका प्रियेण भर्त्रा विपक्षस्य सपत्नीजनस्य सन्निधौ समीपे सङ्ग्रथ्य सम्यङ्निर्माय पीवरस्तने स्थूलोच्चकुचे वक्षसि निवेशितां स्थापिताम्। 'वक्षस्यर्पणे पीवरस्तनत्वं हेतुः' स्रजं जलाविलामुदकेन गतप्रभामपि न विजहौ न तत्याजेत्यर्थः।

अत्रेत्यादि। अत्र न काचिदिति न योग्यं नञः स्थानम्। 'प्रतियोगिसंनिधिर्हि तथा' इति न युक्तम्, तद्व्यवधानेऽपि 'न खलु न खलु बाणः सन्निपात्योऽयमस्मिन्' इत्यादौ निरवद्यप्रयोगदर्शनात्। परन्तु 'न काचिद्विजहौ, अपि तु सर्वा एव विजहुः' इति विरुद्धप्रतीतिप्रसङ्गादयोग्यस्थानमेतत्।

पार्वत्या नखलक्ष्मशङ्कितसखीमर्मस्मितह्रीतया
प्रोन्मृष्टः करपल्लवेन कुटिलाताम्रच्छविः पातु वः ॥

—अत्र नखलक्ष्मेत्यतः पूर्वं 'कुटिलाताम्र' इति वाच्यम् ।

१५. अस्थानस्थसमासं यथा—

अद्यापि स्तनशैलदुर्गविषमे सीमन्तिनीनां हृदि
स्थातुं वाञ्छति मान एष धिगिति क्रोधादिवालोहितः ।
प्रोद्यद्दूरतरप्रसारितकरः कर्षत्यसौ तत्क्षणात्
फुल्लत्कैरवकोशनिःसरदलिश्रेणीकृपाणं शशी ॥

—अत्र क्रुद्धस्योक्तौ समासो न कृतः । कवेरुक्तौ तु कृतः ।

---

## साहित्यचूडामणिः

परं कारणोपन्यासस्य वैयर्थ्यात् । अस्थानेति । न खलु समासः कवीनां कामचारेण । अद्यापीति शशिनो मानस्य च नायकप्रतिनायकत्वसमाधिः ।

क्रुद्धस्येति । शशिनो बुद्धिरुत्प्रेक्ष्या । तस्य च क्रुद्धस्योक्तौ समासो न कृतः, कवेरुक्तौ तु कृत इति समासस्यास्थानस्थत्वम् ।

## सुधासागरः

विरुद्धप्रतीतिजननादिव विवक्षितो प्रयोगस्य पदस्योपयोगासम्भवादपि स्थानस्यायोग्यत्वमुदाहरति–यथावेति, 'लग्न' इति ।

शार्दूलविक्रीडितं छन्दः । केलिः सुरतक्रीडा तत्र कचग्रहेण केशाकर्षणेन श्लथा या जटा तत्र लम्बायमानेन शितिकन्धरस्य शिवस्येन्दुशकलेन चन्द्रखण्डेनान्तःकपोलस्थलम् । अत एव नखलक्ष्मणा शङ्किता या सखी तस्या नर्मस्मितं रहस्यहास्यं तेन ह्रीतया लज्जितया प्रोन्मृष्टः प्रधर्षितो मुद्राङ्कः अन्यसम्पर्कादन्यत्र समुदितं चिह्नं स वः पातु रक्षत्वित्यर्थः ।

अत्रेत्यादि । अत्र कुटिलाताम्रच्छवित्वं नखलक्ष्मशङ्काबीजमिति तत्पूर्वमेव प्रयुज्यमानमुपयुज्यते, न तु पश्चादिति स्पष्टं दुष्टिबीजम् । नित्यश्चायम् ।

अस्थानस्थसमासमुदाहरति—

अद्याप्यस्मत्सान्निध्येऽपि स्तनावेव शैलौ ताभ्यां दुर्गेण विषमे अनाक्रमणीये सीमन्तिनीनां हृदि एष मानः स्थातुं वाञ्छति धिगिति क्रोधादिवालोहितः आरक्तः शशी चन्द्रः उद्यद्दूरतरप्रसारितः करः किरणहस्तो येन तथाभूतः सन् तत्क्षणात्फुल्लत्कैरवाणां कुमुदानां कोशः कुड्मलमेव कोशः खड्गपिधानम्, कोश इति

१६. सङ्कीर्णं यत्र वाक्यान्तरस्य पदानि वाक्यान्तरमनुप्रविशन्ति ।

यथा —

किमिति न पश्यसि कोपं पादगतं बहुगुणं गृहाणेमम् ।
ननु मुञ्च हृदयनाथं कण्ठे मनसस्तमोरूपम् ॥

—अत्र 'पादगतं बहुगुणं हृदयनाथं किमिति न पश्यसि इमं कण्ठे गृहाण मनसस्तमोरूपं कोपं मुञ्च' इति । एकवाच्यतायां तु क्लिष्टमिति भेदः ।

१७. गर्भितं यत्र वाक्यस्य मध्ये वाक्यान्तरमनुप्रविशति । यथा—

परापकारनिरतैर्दुर्जनैः सह सङ्गतिः ।
वदामि भवतस्तत्त्वं न विधेया कदाचन ॥

—अत्र तृतीयपादो वाक्यान्तरमध्ये प्रविष्टः । यथा वा—

---

## साहित्यचूडामणिः

किमितीति । मानिनीमानव्युदासाय सख्या उक्तिः ।

विवक्षितमन्वयमुपदर्शयति अत्रेति । एतेन यथानिर्दिष्टस्यान्वयस्य संकीर्णतया दुष्टत्वं स्पष्टीकृतम् । क्लिष्टाद् वाक्यादस्य भेदमाह—एकेति ।

तृतीयपाद इति । वदामीत्यादिवाक्यान्तरं स्वतन्त्रं वाक्यं भूत्वानुप्रविष्टं वाक्यार्थप्रतीतिमकाण्डे खण्डयितुं प्रवृत्तम् ।

## सुधासागरः

जात्यभिप्रायकमेकवचनम्, खड्गपिधानस्यैकत्वात् तस्मान्निःसरन्ती अलिश्रेणी भ्रमरपङ्क्तिः सैव कृपाणी करवालिका तां कर्षति निष्कासयतीत्यर्थः ।

अत्रेत्यादि । अत्र पूर्वार्द्धे क्रुद्धस्य शशिन उक्तिरिति तत्समासस्य योग्यं स्थानं न पुनः कवेरुक्तिरुत्तरार्द्धमित्यस्थानस्थसमासता । न च प्रतिकूलवर्णत्वान्तर्भावः, समासस्यावर्णरूपत्वात् । नापि पतत्प्रकर्षता, प्रथमप्रवृत्तस्य प्रकर्षस्याग्रे त्यागे हि तत्सम्भवः, अत्र तु तद्वैपरीत्यम् । किञ्च उभयत्रोचितस्यैव प्रकर्षस्याभावे तत्सम्भवः, अत्र त्वेकतरत्रैव समासौचित्यमिति । दूषकताबीजं सहृदयवैमुख्यम् ।

सङ्कीर्णमिति । वाक्यान्तरपदैर्मिश्रमित्यर्थः । एवं च वाक्यान्तरघटकपदव्यवहितपदघटितत्वं लक्षणं बोध्यम् । उदाहरति—किमितीत्यादि । गाथा छन्दः । अत्रेत्यादि । अत्र पादगतं बहुगुणं हृदयनाथं किमिति न पश्यसि इमं कण्ठे गृहाण मनसस्तमोरूपं कोपं मुञ्चेति वाक्यत्रये अन्योऽन्यवाक्यस्थपदमादायानभिमतं प्रतीयते । इदमेव च दुष्टिबीजम्, प्रतीतिविलम्बो वा । एकवाक्ये क्लिष्टत्वमिति ततो भेदः ।

लग्नं रागावृताङ्ग्या सुदृढमिह ययैवासियष्ट्यारिकण्ठे
मातङ्गानामपीहोपरि परपुरुषैर्या च दृष्टा पतन्ती।
तत्सक्तोऽयं न किञ्चिद् गणयति विदितं तेऽस्तु तेनास्मि दत्ता
भृत्येभ्यः श्रीनियोगाद् गदितुमिव गतेत्यम्बुधिं यस्य कीर्तिः ॥

—अत्र 'विदितं तेऽस्तु' इत्येतत्कृतम्। प्रत्युत लक्ष्मीस्ततोऽपसरतीति विरुद्धमतिकृत्।

---

## साहित्यचूडामणिः

लग्नमिति। रागो रुधिरं स्नेहश्च। मातङ्गाः कुञ्जरा नीचजातयश्च। विदितमित्यादिवाक्यं महावाक्यमध्ये तदर्थप्रतीतिं खण्डयदुक्तम्। प्रसङ्गाद् दोषान्तरमप्याह—प्रत्युतेति। पूत्कुर्वाणाया इव श्रियो वचनेन सा वर्णनीयापसरतीति विरुद्धमतिकृत्।

## सुधासागरः

गर्भितमित्यादि। गर्भितं जातगर्भम् अन्तःस्थितवाक्यान्तरं वाक्यमित्यर्थः। तत्त वाक्यं क्वचित्स्वभावत एवैकम्, क्वचित्तु वाक्यैकवाक्यतया एकीभूतम्। तत्राद्यं यथा—परापकारेत्यादि।

अत्रेत्यादि। अत्र वदामि भवतस्तत्त्वमिति वाक्यान्तरं प्रथमवाक्ये स्थितमित्यर्थः। यथा वेति द्वितीयमुदाहरति—

स्रग्धरा छन्दः। यस्य राज्ञः कीर्तिः श्रीनियोगाल्लक्ष्मीशासनादम्बुधिं समुद्रमिति गदितुमिव गतेत्यन्वयः। इतीति किमित्याकाङ्क्षायामाह—रागेण रुधिरलौहित्येनावृतं लिप्तमङ्गं विशिष्टलोहरेखाविशेषो यस्याः, पक्षे रागोऽनुरागस्तेनावृतानि व्याप्तान्यङ्गान्यवयवाः यस्यास्तथाभूतया, ययैवासियष्ट्या कृपाण्या स्त्रीलिङ्गेन नायिकाध्यवसानम्, इह मातङ्गानां गजानां कण्ठे सुदृढं लग्नम्, खण्डनायेति भावः। पक्षे मातङ्गानां चाण्डालानां कण्ठे रिरंसया सुदृढं लग्नम्। या च परपुरुषैः शत्रुभटैरुपरि मारणाय पतन्ती, पक्षे परपुरुषैः जारैः क्रीडनाय स्वोपरि पतन्ती दृष्टा तत्सक्तस्तस्यामनुरक्तोऽयं त्वज्जामाता न किञ्चिद् भणयति युक्तायुक्तं न विचारयति तेन भृत्येभ्यो दत्ताऽस्मि ते विदितमस्त्वित्यर्थः।

अत्रेत्यादि। अत्र तत्सक्तोऽयं न किञ्चिद् गणयति, तेन भृत्येभ्यो दत्ताऽस्मीति वाक्यैकवाक्यमध्ये विदितं तेऽस्त्विति वाक्यान्तरं स्थितम्। प्रत्युत लक्ष्मीस्ततोऽपसरतीति विरुद्धमतिकारित्वात्प्रकाशितविरुद्धमित्यर्थः। प्रतीतिच्छेदोऽत्र दुष्टिबीजमतो न यत्र प्रतीतिर्विच्छिद्यते तत्र नायं दोषः।

१८. मञ्जीरादिषु रणितप्रायं पक्षिषु च कूजितप्रभृति ।
स्तनितमणितादि सुरते मेघादिषु गर्जितप्रमुखम् ॥

इति प्रसिद्धिमतिक्रान्तम् । यथा—

महाप्रलयमारुतक्षुभितपुष्करावर्त्तक—
प्रचण्डघनगर्जितप्रतिरुतानुकारी मुहुः ।
रवः श्रवणभैरवः स्थगितरोदसीकन्दरः
कुतोऽद्य समरोदधेरयमभूतपूर्वः पुरः ॥

—अत्र रवो मण्डूकादिषु प्रसिद्धो न तूक्तविशेषे सिंहनादे ।

१९. भग्नः प्रक्रमः प्रस्तावो यत्र । यथा—

## साहित्यचूडामणिः

प्रसिद्धिधुतं व्याख्यातुं प्रसिद्धिं प्रस्तौति मञ्जीरादिष्विति ।

महाप्रलयेति । मण्डूकादिक्षुद्रसत्त्वोच्चारणीयस्य रवस्य यथोक्तविशेषणे सिंहनादे प्रयोगानौचित्यात् । एवमन्यदुन्नेयम् । यथा 'त्रिभुवनमुपकारश्रेणिभिः प्रीणयन्त' इत्यत्र मूर्तद्रव्यानुगुणश्रेणिशब्दः ।

भग्न इति । सर्वत्र शब्दार्थव्यवहारे लौकिकसरणिरनुसरणीया । श्लोकश्च मा भूद् रसास्वादपरिम्लानप्रसङ्ग इति यथाक्रममाद्रियते । नान्यथा । स च प्रकृतिप्रत्ययादिभेदादनेकविधः ।

## सुधासागरः

भग्न इत्यादि । भग्नः प्रक्रमः प्रस्तावौचित्यं यत्र तद्भग्नप्रक्रममित्यर्थः । तच्चानेकधा व्यवस्थितम् । अत्र प्रकृतेः क्रमभङ्गो यथा—

प्रसिद्धिहतं प्रसिद्धिमतिक्रान्तमिति व्याचष्टे तत्र किं कुत्र प्रसिद्धमिति दर्शयितुमाह—मञ्जीरेत्यादि । यथेत्युदाहरति—'महाप्रलये'ति ।

पृथ्वी छन्दः । 'जसौ जसयलग्वसुग्रहयतिश्च पृथ्वी गुरुः' इति लक्षणात् । महान् यः प्रलयमारुतः महत्पदस्य प्रलयान्वयस्त्वयुक्तः, सर्वमुक्तेरेव तथात्वात् । तथा च महता प्रलयकालिकमारुतेन क्षुभितौ यौ पुष्करावर्त्तकौ मेघौ तयोः प्रचण्डमुत्कटं घनमविच्छिन्नं यद्गर्जितं तत्प्रतिरवमनुकरोतीति तादृशः । अत एव श्रवणयोर्भैरवो भयङ्करः । स्थगिता पूरिता रोदसी द्यावापृथिव्योरन्तरमेव कन्दरा येन तथाभूतोऽयमभूतपूर्वो रवः सिंहनादः समरोदधेः सङ्ग्रामसमुद्रसकाशात् मुहुः कुतः कस्माद्धेतोरसकृज्जायत इत्यर्थः ।

अत्र रव इत्यादि । रवो मण्डूकादिशब्दे कविप्रसिद्धो न तूक्तविशेषे सिंहनादे । न चावाचकसङ्करः, तुल्येनैव रूपेणोभयत्र शक्तिसत्त्वेऽप्येकत्रैव कविप्रयोगनियमात् । अत एवायं वाक्यदोषः, विशेषणविशेषसन्निधानेन विशेषपरत्वादिति ।

नाथे निशाया नियतेर्नियोगादस्तंगते हन्त निशाऽपि याता।
कुलाङ्गनानां हि दशानुरूपं नातः परं भद्रतरं समस्ति ॥

—अत्र 'गते' ति प्रक्रान्ते यातेति प्रकृतेः। 'गता निशाऽपि' इति तु युक्तम्।

ननु 'नैकं पदं द्विः प्रयोज्यं प्रायेण' इत्यन्यत्र कथितपदं दुष्टमिति चेहैवोक्तम्, तत्कथमेकस्य पदस्य द्विः प्रयोगः। उच्यते—उद्देश्यप्रति-

---

## साहित्यचूडामणिः

नाथ इति। अत्र पतिमरणमनुमरणं च पत्न्या उद्भाव्यते।

प्रकृतेरिति। गत इति गच्छतिरूपा प्रकृतिः प्रस्तुता। तस्या भङ्गः यातेति धात्वन्तरेण निर्देशात् निष्ठादेरविशेषात् प्रकृतिनिष्ठोऽयं प्रक्रमभङ्गः। गच्छतियात्यो- रेकस्या एव प्रकृतेरावृत्त्या भाव्यम्। प्रकृत्यन्तरप्रयोगो दोषः। अत्र पूर्वाचार्यविप्रति- पत्तिं स्वग्रन्थे पौर्वापर्यविरोधं च शङ्कते—नन्विति।

अन्यत्रेति। वामनालंकारे यत्र 'नैकं पदमिति' सूत्रम्, तत्र यत् प्रायेणेत्युक्तं तच्चादिनिपाताभिप्रायेणेति चोद्यम्। इहैवेति। स्वग्रन्थ एव। उक्तेरिति उक्तत्वात्। अनवीकृतस्य दुष्टतया वक्ष्यमाणत्वाच्चेति भावः। तत् कथमेकस्य पदस्य द्विः प्रयोगः। पदावयवोऽपि पदमेव। प्रक्रमभेदपरिहारार्था आवृत्तिः पौनरुक्त्यमुत्था- पयतीति भावः। परिहरति—उच्यत इति। पूर्वमनुवादेन प्रस्तूयमानमुद्देश्यं,

## सुधासागरः

नाथे इत्यादि। उपजातिच्छन्दः। नियतेर्विधेर्नियोगान्निशाया नाथे चन्द्रेऽस्तं गते सति हन्त खेदे निशाऽपि याता गता। हि युक्तोऽयमर्थः। कुलाङ्गनानां पतिव्रतानां दशानुरूपं वैधव्यदशायोग्यमतः परं सहगमनादपरं भद्रतरमुत्कृष्टकल्याणं न समस्ति न सम्भवतीत्यर्थः।

अत्रेत्यादि। अत्र 'अस्तङ्गते' इति गमेः प्रकृतेः प्रस्तावे यातेति यातेः प्रकृतिः क्रमभङ्गः। भिन्नाभ्यामुपस्थापितं भिन्नवद्भवतीति कुलाङ्गनानां स्वामिसदृशावस्था- प्रतीतिर्न सम्भवतीत्यर्थः। तस्माद् गता निशाऽपीति युक्तः पाठः। अयमाशयः— यातेति पदेन गमनस्योपादानेऽपि नानुगमनत्वेन प्रतीतिर्भवति स्वाभाव्यात्। तथा च दशानुरूपमिति भज्येत। गतेति कृते चानुगमनस्य स्फुटैव प्रतीतिरिति।

ननु नैकं पदमित्यादि। ननु 'नैकं पदं द्विःप्रयोज्यं प्रायेणे'-ति वामनसूत्रम्। अत्रापि कथितपदमनुपदमेवोक्तम्। तथा च पुनर्गमेः प्रयोगो दुष्टः स्यादिति चेन्न। उद्देश्यप्रतिनिर्देश्यातिरिक्तो ह्येकपदद्विःप्रयोगनिषेधविषयः, तादृशे तु विषये प्रत्युत तस्यैव सर्वनाम्नो वा प्रयोगं विना दोष इति स्पष्टार्थः। अयम्भावः—उद्देश्यः

निर्देश्यव्यतिरिक्तो विषय एकपदप्रयोगनिषेधस्य। तद्वति विषये प्रत्युत तस्यैव पदस्य सर्वनाम्नो वा प्रयोगं विना दोषः। तथा हि—

उदेति सविता ताम्रस्ताम्र एवास्तमेति च।
सम्पत्तौ च विपत्तौ च महतामेकरूपता॥

—अत्र रक्त एवास्तमेतीति यदि क्रियेत तदा पदान्तरप्रतिपादितः स एवार्थोऽर्थान्तरतयेव प्रतिभासमानः प्रतीतिं स्थगयति।

---

## साहित्यचूडामणिः

पश्चाच्च विधिनोपयुज्यमानं प्रतिनिर्देश्यं, तत्स्वभावव्यपोहो विषय एकपदप्रयोगनिषेधस्य। तद्वतीति। उद्देश्यप्रतिनिर्देश्यभाववति तु विषये तस्य प्रकान्तस्यैव पदस्य, तत्परामर्शिनः सर्वनाम्नो वा प्रयोगमन्तरेण दोषः। उक्तमुदाहरणान्तरेण स्पष्टयति तथाहीति।

ताम्ररक्तयोः पर्यायत्वेन भेदाभावभ्रान्त्या रक्त एवास्तमेतीत्युच्येत चेत् तदा भाविनमनर्थमाह—तदिति आरुण्यलक्षण एवार्थः प्रकान्तात् ताम्रपदादन्येन रक्तरूपेण प्रतिपादितः सन्नन्यार्थतयैव प्रतिभासमानो वाक्यार्थविषयां प्रतीतिं तिरोधत्ते। कुतो हेतोः कविरुदये सवितुः प्रक्रान्तं ताम्रत्वं परित्यज्य रक्तत्वमस्तमय उपादत्ते, नूनमनयोः परिमलसौरभादिवत् किञ्चिद् भिन्नार्थत्वमस्तीति प्रतीयेत। तन्निरासार्थोऽयं प्रयासः। तत्रापि नासत्यर्थभेदे शब्दभेदमाद्रियन्ते वक्तार इति युक्त्या पर्यन्ततः 'सम्पत्तौ च विपत्तौ च महतामेकरूपते'-त्यर्थान्तरन्यासस्य वैयर्थ्यप्रसङ्गः, एकस्याः प्रतीतेः परिस्खलनात्।

## सुधासागरः

प्राक्प्रत्यायितः प्रतिनिर्देश्यः पुनः प्रत्याय्यः। प्रकृतेऽभेदज्ञापनार्थं पुनरुक्तिरेवोत्कर्षिका। एवमर्थान्तरसङ्क्रमितवाच्यलाटानुप्रासयोरपीति।

ननु पर्यायशब्दानां शक्यतावच्छेदकैक्यनियमात्कथमन्यत्वेन प्रतीतिरिति चेत्, उच्यते—यन्मते शाब्दबोधे शब्दोऽपि भासते तन्मतेनेदम्। तथा हि—अस्माच्छब्दादयमर्थो बोद्धव्य इत्याकारकशक्तिग्रहविषयत्वाच्छब्दस्य विशेषणादिपदार्थवत्तस्याप्युपस्थितिः, पदान्तरोपादाने च तदुपस्थित्या प्रतीत्यन्यथात्वं स्फुटमेवेति। उक्तं च 'न सोऽस्ति प्रत्ययो लोके यत्र शब्दो न भासते' इति। 'यः शब्दानुगमादृते' इति पाठान्तरम्। मतान्तरेऽपि पर्यायपदाभ्यामुपस्थापितोऽर्थोऽभिन्नोऽपि शक्ततावच्छेदकमहिम्ना भिन्न इव प्रतीयते इति बोध्यम्।

उद्देश्यप्रतिनिर्देश्यभावे द्विःप्रयोगावश्यकत्वमुदाहरति—उदेतीत्यादि। अत्रेत्यादि। अत्र पद्ये रक्त एवास्तमेति चेति यदि क्रियेत तदा पदान्तरप्रतिपाद्यमानः

यथा वा—

यशोऽधिगन्तुं सुखलिप्सया वा मनुष्यसङ्ख्यामतिवर्तितुं वा ।
निरुत्सुकानामभियोगभाजां समुत्सुकेवाङ्कमुपैति सिद्धिः ॥

—अत्र प्रत्ययस्य । 'सुखमीहितुं वा' इति युक्तः पाठः ।

ते हिमालयमामन्त्र्य पुनः प्रेक्ष्य च शूलिनम् ।
सिद्धं चास्मै निवेद्यार्थं तद्विसृष्टाः खमुद्ययुः ॥

—अत्र सर्वनाम्नः । अनेन विसृष्टा इति वाच्यम् ।

---

## साहित्यचूडामणिः

यश इति । मनुष्यसंख्यातिवृत्तिः प्राकृतपुरुषजातिलङ्घनम् ।

प्रत्ययस्येति । अधिगन्तुमिति तुमुन् प्रक्रान्तः अतिवर्तितुमिति निर्व्यूढश्च, मध्ये तद्वत् सुखं लब्धुमिति वक्तव्ये सुखलिप्सयेति सनः प्रयोगात् ।

त इति । आमन्त्र्य आपृच्छ्य ।

सर्वनाम्न इति अस्मा इति प्रक्रान्तस्येदंशब्दस्य प्रक्रमभङ्गः शूलिनं प्रक्रान्तमिदमास्मै इति परामृश्य पुनस्तेनैव परामर्शः कर्तुमुचितः, न तदा, तयोः स्तम्भकुम्भयोरिव भिन्नार्थत्वात् । नचासौ कृत इति । अनेन विसृष्टा इदंविसृष्टा इति वाच्यमित्यर्थशिक्षामात्रमेतत् ।

## सुधासागरः

स एवार्थो भिन्न इव प्रतीयमानः प्रतीतिं व्यवदधीतेत्यर्थः । प्रत्ययस्य क्रमभङ्गमुदाहरति—'यथा वा यश' इति ।

उपेन्द्रवज्रा छन्दः, 'उपेन्द्रवज्रा जतजास्ततो गौ' इति लक्षणात् । लक्ष्मीः सिद्धिः यशोऽधिगन्तुं कीर्तिं लब्धुं सुखलिप्सया आनन्दलाभेच्छया वा मनुष्यसंख्यामतिवर्त्तितुं मनुष्येषु गणनामतिक्रम्यावस्थातुं वा समुत्सुकेवोत्कण्ठितेव निरुत्सुकानां निरौत्सुक्यानामभियोगभाजां यत्नयुक्तानां पुंसामङ्कमुत्सङ्गमुपैति स्वयमागच्छतीत्यर्थः ।

अत्रेत्यादि । अत्र तुमुनः प्रक्रमे सनोऽभिधानमेकरूपताप्रतीतिं स्थगयति । सुखमीहितुं चेति युक्तः पाठः । अयमाशयः—तुम्सनोरिच्छया समानार्थत्वेऽपि तुमा फलत्वप्रतीतिर्न सनेत्येकरूपत्वहानिरिति ।

सर्वनाम्नः प्रक्रमभङ्गमुदाहरति—'ते हिमे'-ति ।

ते मरीच्यादयः शूलिनं शिवम् । स्पष्टमन्यत् । अत्रेत्यादि । न च तदिदमोरर्थाभेदः, इदमः प्रस्तुतप्रत्यक्षपरामर्शकत्वात् । अन्यथाऽनयोः पर्यायतापत्तेरिति भावः । अत एव श्रीवत्सलाञ्छनभट्टाचार्याः प्राहुः—'तदिदमोः सर्वनामत्वाविशेषेऽपि पूर्वानुभूतपुरोवर्त्तिविषयत्वान्नैकरूपतेति' । एवं चार्थभेदस्य प्रामाणिकत्वादिदमोपक्रम्य

**महीभृतः पुत्रवतोऽपि दृष्टिस्तस्मिन्नपत्ये न जगाम तृप्तिम् ।**
**अनन्तपुष्पस्य मधोर्हि चूते द्विरेफमाला सविशेषसङ्गा ॥**

**—अत्र पर्यायस्य । 'महीभृतोऽपत्यवतोऽपि' इति युक्तम् । अत्र सत्यपि पुत्रे कन्यारूपेऽप्यपत्ये स्नेहोऽभूदिति केचित् समर्थयन्ते ।**

---

## साहित्यचूडामणिः

पर्यायस्येति । पुत्रवतोऽपी'ति प्रक्रान्तस्य पुत्ररूपस्य पर्यायस्य प्रक्रमो भग्नः । 'तस्मिन्नपत्य' इत्युक्तत्वात् । व्यक्तिविवेकरीत्या पाठमन्यथा करोति अपत्यवतोऽपीति । कोट्यन्तरस्यान्यथाकर्तुमशक्यत्वात् ।

प्रकारान्तरेण प्राक् पाठं निर्दोषमाह—पुत्र इति । पुत्रो मैनाकः तद्वतोऽपि तस्मिन्नपत्ये कन्यालक्षणे सस्नेहोऽभूदिति केचिद् वाक्यविद् आहुः । अपत्यशब्दस्य शेषविवक्षया कन्यायां विश्रान्तिरिति भावः ।

## सुधासागरः

तदा स्मरणात् किं हिमालयेन, आहोस्विच्छूलिना विसृष्टा' इत्यनिश्चयात्प्रतीतिस्थगनमिति प्रतीमः ।

पर्यायस्य क्रमभङ्गमुदाहरति—'महीभृत' इति ।

उपजातिश्छन्दः । पुत्रो मेनाकोऽस्यास्तीति पुत्रवान्, तस्य पुत्रवतोऽपि महीभृतो हिमाचलस्य दृष्टिस्तस्मिन्नपत्ये पार्वतीरूपे तृप्तिं न जगाम स्नेहातिशयादिति भावः । दृष्टान्तमाह अनन्तपुष्पस्य बहुतरकुसुमस्य हि मधोर्वसन्तस्य द्विरेफमाला दृष्टिरूपा चूतस्य पुष्पं चूतं तस्मिन्सविशेषसङ्गा सानुरागं पततीत्यर्थः । महीभृतोऽपत्यवत इति युक्तमिति । अत्रापत्येषु बहुषु सत्स्वपि तस्मिन्नपत्ये स्नेहातिशयविवक्षणादपत्यशब्दे प्रयोक्तव्ये पुत्रशब्दप्रयोगात्पर्यायक्रमभङ्ग इति भावः ।

केचिदिति । अयमाशयः—केचित्तु असति पुत्रे सुतायां स्नेहो युक्तस्तस्य तु सत्यपि पुत्रे तस्यां सोऽभूदिति विवक्षणान्नात्र दोषप्रतीतिरिति समादधिरे । तदयुक्तम् । अनन्तपुष्पस्य चूते इति दृष्टान्तवैषम्यप्रसङ्गात् । तत्र च सामान्यविशेषभावेनोपादानाद्दार्ष्टान्तिके तथैवौचित्यात् इति ।

अत्रेदं तत्त्वम्—यत्सामान्यसत्ता तद्विशेषगोचरेच्छेति प्रस्तावः, पुष्पसामान्यसत्तायान्तद्विशेषादरबोधकेन दृष्टान्तेन तथैव बोधनात्, विरोधकार्येऽपिशब्दस्वरसाच्च । ततश्चापत्यसामान्यसत्तायामप्यपत्यविशेषे स्नेह इति प्रस्तावः पुत्रपदस्थानेऽपत्यपदानुपादानाद्विघटितः । नन्वारभ्यमाणस्य वर्त्मनोऽन्येन भङ्ग एव प्रक्रमभङ्गो न त्वारम्भकेण पुत्रपदेनेति चेत् । न । औचित्यावर्जितप्रस्तावान्यथाभाव एवास्य विषयत्वात् । विघटकपौर्वापर्यस्यानियमात् । अत एव प्रक्रमपदस्य प्रस्तावोऽर्थो विवृतः श्रीवाग्देवतावतारैरिति । तस्मादपत्यवतोऽपीति युक्तः पाठः । न चात्रापि बहुत्वालाभाद् दृष्टान्तवैषम्यम् अपत्यान्यस्य सन्तीति बह्वर्थ एव मतुपो विधानात् ।

विपदोऽभिभवन्त्यविक्रमं रहयत्यापदुपेतमायतिः ।
नियता लघुता निरायतेरगरीयान्न पदं नृपश्रियः ॥

—अत्रोपसर्गस्य पर्यायस्य च । 'तदभिभवः कुरुते निरायतिम्, लघुतां भजते निरायतिर्लघुतावान्न पदं नृपश्रियः' इति युक्तम् ।

काचित् कीर्णा रजोभिर्दिवमनुविदधौ मन्दवक्त्रेन्दुलक्ष्मी-
रश्रीकाः काश्चिदन्तर्दिश इव दधिरे दाहमुद्भ्रान्तसत्त्वाः ।

## साहित्यचूडामणिः

उपसर्गपर्यायावेकत्रोदाहरति—विपद इति । विपद इति प्रक्रम्य पश्चादापदुपेतमित्युक्तत्वादापदपेक्षया व्युपसर्गभेदः । लघुतेति प्रक्रमे पुनरगरीयानित्युक्तत्वात् पर्यायस्य ।

तदभिभव इति । अभ्युपगताया विपदः सर्वनाम्ना परामर्शः । अनेनोपसर्गभेदः परिहृतः लघुताभागिति पर्यायभेदश्च ।

वचनस्येति । 'काचिद् दिवमनुविदधावि'त्येकवचनस्य प्रक्रमः । 'काश्चिदन्तर्दाहं दधिर' इति बहुवचनेनास्य भेदः । कप्रत्ययविप्रतिपत्तिपरिहाराय लक्ष्मी-

## सुधासागरः

एतेन साधुरेव 'पुत्रवत' इति पाठ इत्यतः 'केचित्' इत्यनेन साम्प्रदायिका इत्यर्थकेन वृत्तिकृतोऽत्रानुमतिरेवेति' चण्डीदासमतमनादेयम् ।

अथापत्यपुत्रशब्दयोः कथं पर्यायता । अत्र केचित्—अपत्यपर्यायोऽपि पुत्रशब्दः । अन्यथा पुत्रीत्यत्र स्त्रीप्रत्ययस्य कुत्रान्वय इत्याहुः । तन्न युक्तम् । तथा सति दोषस्यैवाप्रसङ्गात् अपत्यार्थकत्वाविशेषात् । तस्मात्पर्यायत्वमेकार्थप्रतिपादकत्वमात्रं न त्वेकप्रकारकप्रतीतिजनकत्वमपीति ।

अत एव लघुतामुपक्रम्यागरीयानित्युक्तावपि पर्यायक्रमभङ्ग उच्यते । यथा—'विपदो' इति ।

विपदो विपत्तयोऽविक्रमं कातरमभिभवन्ति तिरस्कुर्वन्ति । आयतिरुत्तरकालः आपदुपेतं रहयति त्यजति शुभोदर्को न भवतीत्यर्थः । निरायतेर्लघुता नियता अगरीयान् लघुः नृपश्रियो राज्यलक्ष्म्याः पदं न भवतीत्यर्थः ।

अत्रैव विपदापदोरुपसर्गक्रमभङ्गो द्रष्टव्यः 'तदभिभवः कुरुते निरायतिम् लघुतां भजते निरायतिः लघुताभागपदं नृपश्रिय' इति पाठो युक्तो यदि न छन्दोभङ्गः । तदेतदुक्तम्—अत्रोपसर्गस्येत्यादि ।

वचनस्य यथा—'काचिदि'-ति ।

स्रग्धरा छन्दः । मन्दा वक्त्रेन्दोर्मुखचन्द्रस्य लक्ष्मीः शोभा यस्यास्तादृशी। काचिन्नायिका रजोभिः कीर्णा स्त्रीधर्मवती सती दिवमाकाशमनुविदधावनुकृतवती

भ्रेमुर्वात्या इवान्याः प्रतिपदमपरा भूमिवत् कम्पमानाः
प्रस्थाने पार्थिवानामशिवमिति पुरोभावि नार्यः शशंसुः ॥

—अत्र वचनस्य । 'काश्चित् कीर्णा रजोभिर्दिवमनुविदधुर्मन्दवक्त्रेन्दुशोभा निःश्रीकाः' इति, 'कम्पमानाः' इत्यत्र कम्पमापुरिति च पठनीयम् ।

गाहन्तां महिषा निपानसलिलं शृङ्गैर्मुहुस्ताडितं
छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यताम् ।
विस्रब्धैः क्रियतां वराहपतिभिर्मुस्ताक्षतिः पल्वले
विश्रान्तिं लभतामिदं च शिथिलज्याबन्धमस्मद्धनुः ॥

—अत्र कारकस्य । विस्रब्धा रचयन्तु सूकरवरा मुस्ताक्षतिमित्यदुष्टम् ।

---

## साहित्यचूडामणिः

स्थाने शोभाप्रयोगः, तत्रापि बहुवचनेन विग्रहे कवेर्भाव इत्यत्रानादरः । प्रसङ्गाद् भेदान्तरमपि परिहरति—कम्पमापुरिति । क्रियाकारकयुगलकेन व्याख्यानं प्रक्रान्तत्वात् ।

कारकस्येति । महिषा गाहन्तामिति प्रथमाया विस्रब्धैः क्रियतामिति तृतीयया व्यत्यासात् । ननु कर्तृप्रक्रमभेदः किं नोदाहृत इति चेत्, असम्भवादिति ब्रूमः । यस्तु क्वचित् कविभिः प्रयुज्यते, स कर्तृव्यत्ययो नाम चमत्कारकारी गुणः न दोषः । तत्र युष्मदर्थस्य यथा—'यथाह सप्तमो वैकुण्ठावतार' इति । अस्मदर्थस्य यथा—नाभिवादनप्रसाद्यो रेणुकापुत्र इति ।

## सुधासागरः

द्यौरपि पांसुभिः कीर्णा मन्देन्दुलक्ष्मीर्जाता सकलनृपक्षयरूपोत्पातसूचकत्वादिति भावः । उद्भ्रान्तः सत्त्वगुणो यासान्तथाभूताः काश्चिद्दिश इवान्तर्दाहं दधिरे दाहस्तापो हेतुलक्षणया वह्निश्च । सत्त्वम् प्रथमगुणः प्राणी च । तथा च दिशोऽपि तत्काले उद्भ्रान्ता व्याकुला प्राणिनो यासु तथाभूताः सत्योऽन्तर्वह्निं दधुरिति भावः । अन्याः प्रतिपदं वात्या इव भ्रेमुः । अपरा भूमिवत्कम्पमानाः इत्येवं प्रकारेण नार्यः पार्थिवानां राज्ञां प्रस्थाने भावि उत्पत्स्यमानमशिवमकल्याणं शशंसुः प्रकटयामासुरित्यर्थः ।

अत्रेत्यादि । अत्र काचिदित्युपक्रम्य कश्चिदिति वचनप्रक्रमभङ्गः । तस्मात् काश्चित्कीर्णा रजोभिर्दिवमनुविदधुर्मन्दवक्त्रेन्दुशोभा निःश्रीका'इति पठनीयम् । 'कम्पमाना'इति च 'कम्पमापुः'इति पठनीयम् । शतृशानचोर्गुणीभूतक्रियान्तराभिधायकत्वनियमात् । न चात्र क्रियान्तरं प्रधानमस्तीति भावः ।

गाहन्तामिति । स्पष्टम् । शार्दूलविक्रीडितं छन्दः । स्वभावोक्त्यलङ्कारः ।

अकलिततपस्तेजोवीर्यप्रथिम्नि यशोनिधा-
ववितथमदाध्माते रोषान्मुनावभिगच्छति ।
अभिनवधनुर्विद्यादर्पक्षमाय च कर्मणे
स्फुरति रभसात् पाणिः पादोपसङ्ग्रहणाय च ॥

—अत्र क्रमस्य । पादोपसङ्ग्रहणायेति पूर्वं वाच्यम् ।
एवमन्यदप्यनुसर्त्तव्यम् ।

## साहित्यचूडामणिः

क्रमस्येति । तपस्तेजोवीर्यप्रथिम्नो यशोमदयोश्च क्रमादुपन्यासे मुनिं प्रति पूर्वं पादोपसंग्रहः कथनीयः, पश्चादभिनवधनुर्विद्यागर्वोचितं कर्म, न तु विपर्ययादित्यत्र क्रमप्रक्रमभङ्गः । एवमन्यत्रापि । तत्र धर्मिणो यथा—

'इयं गेहे लक्ष्मीरियममृतवर्तिर्नयनयो-
रसावस्याः स्पर्शो वपुषि बहुलश्चन्दनरसः ।' [उ० रा०]

इत्यत्र प्रथमपादे नायिकायाः स्वरूपं वर्णयितुमुपक्रम्य द्वितीयादिपादेषु तदीयाः स्पर्शादयो वर्णिता इति । किञ्च द्विविधः प्रक्रमभेदः शाब्द आर्थश्च । तत्र शाब्द उक्तः आर्थ ऊहनीयः । यथा—

सस्नुः पयः पपुरनेनिजुरम्बराणि
जक्षुर्बिसं धृतविकासिबिसप्रसूनाः ।

इत्यत्र पयः पपुरित्यादिवद् विकासिबिसप्रसूनं धारयामासुरिति वाच्यम् । तदुक्तं 'जक्षुर्बिसं विकचमस्य दधुः प्रसूनमि'-ति पाठः श्रेयान् । एवञ्च आर्थः प्रक्रमभेददोषोऽपि परिहृतो भवती'ति ।

अक्रममाह—अविद्यमान इति । क्रमः पौर्वापर्येणावस्थानं स न विद्यते यत्र ।

## सुधासागरः

अत्रेति । अत्र 'गाहन्ताम्'इति कर्त्तृकारकवाचकस्योपादानात् कारकप्रक्रमभङ्ग इत्यर्थः । 'विश्रब्धा रचयन्तु सूकरवरा' इत्यदुष्टम् ।

अकलितेति । हरिणी छन्दः । श्रीरामोक्तिरियम् । अकलितमपरिमितं यत्तपस्तेजो वीर्यं च ताभ्यां प्रथिमा पृथुता यत्र तथाभूते, यशोनिधौ परमप्रतिष्ठिते अवितथः सत्यः स्वकर्मक्षमो यो मदो गर्वस्तेनाध्माते उद्दीपिते मुनौ परशुरामे रोषात् क्रोधादभिधावति सम्मुखं धावमाने सति पाणिर्मद्धस्तः अभिनवाऽलौकिका उपस्थिता च या धनुर्विद्या तया यो दर्पो गर्वस्तस्य क्षमाय योग्याय कर्मणे बाणवर्षणरूपाय च, पादयोरुपसङ्ग्रहणाय स्पर्शाय च रभसात् स्फुरति चेष्टते इत्यर्थः ।

अत्र क्रमस्येत्यादि । अत्र तपस्तेजोवीर्ये क्रमेणोपक्रम्य तदुभयोचितयोः पादोपसङ्ग्रहधनुर्ग्रहणयोः पौर्वापर्यं योग्यम्, 'यथासङ्ख्यमनुदेशः समानाम्' इति, तदन्यथाकरणेन क्रमप्रक्रमभङ्ग इति भावः ।

२०. अविद्यमानः क्रमो यत्र । यथा—

द्वयं गतं संप्रति शोचनीयतां समागमप्रार्थनया कपालिनः ।
कला च सा कान्तिमती कलावतस्त्वमस्य लोकस्य च नेत्रकौमुदी ॥

—अत्र त्वंशब्दानन्तरं चकारो युक्तः ।

## साहित्यचूडामणिः

त्वंशब्दादिति । 'द्वयं गतं संप्रति शोचनीयतामि'त्यत्र । किञ्च किञ्चेत्यपेक्षायां कलावतः कला च त्वं चेति समुच्चयो वाच्यः । एतद्वैपरीत्याच्च वाक्यम् । अक्रममेतत् । तदुक्तं—कैश्चिदेव हि केषाञ्चिद् दूरस्थैरपि संगतिः ।

न जातु सर्वैः सर्वेषामित्येतदभिधास्यते ॥ [व्यक्तिवि० पृ० ३३१] ॥

## सुधासागरः

यत्तु प्रदीपकारैरुक्तम्—'तेजोवीर्यरोषौ क्रमेणोपक्रम्य'इति, तदयुक्तमिति ध्येयं दक्षैः । एवमिति । 'शशी दिवसधूसर' इत्यादौ शोभनत्वेन प्रतीतस्याशोभनत्वं शल्यमिति क्रमो विवक्षितस्तस्य द्वितीयचतुर्थषष्ठसप्तमवाक्येष्वन्यथात्वेन भङ्ग इत्यादि सुधीभिरूह्यम् ।

अत्र सर्वत्रैकरूपप्रसृतायाः प्रतीतेः स्थगनमुपघातो वा दूषकताबीजम् । यदुक्तम्—प्रक्रमस्यान्यथात्वेन प्रतीतौ प्रस्खलद्गतौ ।

ह्लादः स्फुरन्ननास्वादी यत्र ग्लानत्वमश्नुते ।
दोषः प्रक्रमभेदाख्यः शब्दानौचित्यभूश्च सः ॥ इति ।

अत एव नित्यदोषोऽयम् ।

अविद्यमानः क्रमो यत्रेति । तदक्रममित्यर्थः । यत्पदानन्तरं यत्पदोपादानमुचितं ततोऽन्यत्र तदुपादानं यत्रेत्यर्थः । यथा—द्वयमित्यादि । व्याख्यातमिदं पञ्चमोल्लासे । अत्रेत्यादि । अत्र लोकस्य चेति चकारस्त्वंशब्दादनन्तरं युक्तः, त्वंशब्दार्थस्यैव शोच्यतायां समुच्चयस्य द्योतनीयत्वात्, लोकपदार्थे समुच्चयाभावादिति भावः ।

अथापदस्थपदादस्य को भेदः? तत्र प्रतीत्यन्तरमत्र सैव प्रतीतिः, किन्तु विलम्बितेति केचित्, तन्न, 'कुटिलाताम्रच्छविः' इत्युदाहृतेऽपदस्थपदे प्रतीत्यन्तराभावात् । वयन्तु ब्रूमः—अव्यवधानेनैव यत्राभिमतप्रतीतिजननसामर्थ्यं तदेतस्य विषयः, अन्यः पुनरितरस्य । चादीनां चाव्यवहितपदार्थेष्वेव समुच्चयादिद्योतकता । यदुक्तं महिमभट्टेन—

अत एव व्यवहितैर्बुधा नेच्छन्ति चादिभिः ।
सम्बन्धं ते हि स्वां शक्तिमुपदध्युरनन्तरे ॥ [व्यक्ति वि० १५९] इति ।

न च नञोऽप्यव्यवहितस्यैव तथात्वम् ,अतः 'स्रजं न काचिद् विजहौ' इत्यादिकमप्यक्रमभेदः स्यादिति वाच्यम्, 'न खलु न खलु बाणः सन्निपात्योऽयमस्मिन्नि'-त्यादौ व्यवधानेऽपि प्रतीतिविशेषाभावात् ।

यथा वा—

शक्तिर्निस्त्रिंशजेयं तव भुजयुगले नाथ, दोषाकरश्री-
र्वक्त्रे, पार्श्वे तथैषा प्रतिवसति महाकुट्टनी खड्गयष्टिः ।
आज्ञेयं सर्वगा ते विलसति च पुरः किं मया वृद्धया ते
प्रोच्येवेत्थं प्रकोपाच्छशिकरसितया यस्य कीर्त्या प्रयातम् ।

—अत्रेत्थं प्रोच्येवेति वाच्यम् । तथा—

लग्नं रागावृताङ्ग्या इत्यादौ 'इति श्रीनियोगादि'ति वाच्यम् ।

---

## साहित्यचूडामणिः

शक्तिरिति । निस्त्रिंशः खङ्गः क्रूरश्च कश्चित् । दोषाकरश्चन्द्रः दोषां निशां करोतीति, अवद्यानामाकरश्च । कुट्टयति खण्डयतीति कुट्टनी शम्फली च । सर्वगा विश्वव्यापिनी अशेषपुरुषस्वीकारिणी च । वृद्धया परिपूर्णया वर्षीयस्या च । उभयथापि शशिकरसितया ।

इत्थं प्रोच्येवेति । अनेन प्रकारेण प्रवचनमिति प्राथम्येन भाव्यम्, न्याय्य-मिति । अन्यथा नैरर्थक्यापत्तेः इत्थंशब्दस्य कालातीतत्वात् । एवं 'तुङ्गत्वमितरा नाद्रौ नेदं सिन्धावगाधते'-त्यत्र परामर्शनीयामगाधतामनुक्त्वा योऽयमितरेति स्त्रीलिङ्गतया प्राङ् निर्देशः स क्रमभङ्गः । तस्य हि प्रक्रान्त एवार्थो विषयः न प्रक्रंस्यमानः । तदुक्तं—

परामृश्यमनुक्त्वैव परामर्शोऽस्य यस्तदा ।
स दोषो वक्ष्यमाणार्थसंवित्तावक्षमो हि सः ।। व्य० वि० ३२६ इति ।

तदेति सर्वनाम्नामुपलक्षणम् ।

## सुधासागरः

न चायं चादिपदेष्वेव दोषः किं त्वित्थमादिष्वपीत्याशयेन यथा वेत्युदाहरति— 'शक्तिर्नि-' इति ।

यस्य राज्ञः शशिकरसितया चन्द्रकिरणधवलया कीर्त्या प्रकोपादित्थं प्रोच्येव प्रयातम् । कथमित्यपेक्षायामाह—हे नाथ, तव भुजयुगले निस्त्रिंशजा निस्त्रिंशः खङ्गः खलश्च तदुत्पन्नेयं शक्तिः सामर्थ्यम्, स्त्रीलिङ्गेन नायिकाध्यवसानम् । वक्त्रे दोषाकरस्य चन्द्रस्य दोषाणामाकरस्य महामूर्खस्य च श्रीः शोभा । पार्श्वे पार्श्वप्रदेशे एषा महाकुट्टनी छेदिका असाध्वी च खङ्गयष्टिः, प्रतिवसतीति त्रयेऽप्य-न्वेति । ते इयमाज्ञा च सर्वगा सर्वजनग्राह्या सर्वगामिनी च विलसति । वृद्धया महत्या जरत्या च मया किं न किञ्चित्प्रयोजनमित्यर्थः ।

अत्रेत्थमित्यादि । अत्रेत्थं प्रोच्येवेति वाच्यम् । इत्थंशब्दस्याव्यवहितपूर्व-परामर्शकत्वात् । पादत्रयस्यैव च परामर्शनीयत्वात् । एवं 'लग्नं रागावृताङ्ग्या'

२१. अमतः प्रक्रमविरुद्धः परार्थो यत्र । यथा—

रामन्मथशरेण ताडिता दुःसहेन हृदये निशाचरी ।
गन्धवद्रुधिरचन्दनोक्षिता जीवितेशवसतिं जगाम सा ॥

—अत्र प्रकृते रसे विरुद्धस्य शृङ्गारस्य व्यञ्जकोऽपरोऽर्थः ॥

## साहित्यचूडामणिः

अमत इति । अनिष्टः प्रस्तुतरसापेक्षया विपर्यस्तः पर इतरोऽर्थो यत्र ।

रामेति । गन्धवदिति निन्दायां प्रशंसायां च मतुप् । जीवितेशो यमः प्रियतमश्च । प्रकृते रसे वीररूपेऽपरोऽर्थो रामस्य मन्मथेनौपम्यं, रुधिरस्य चन्दनेन, जीवितेशेन वल्लभस्यार्थप्रत्यायनमित्यादि । न चात्र 'दन्तक्षतानि करजैर्विपाटितानि' इत्यादाविव वक्ष्यमाणक्रमेण साम्यविवक्षया परिहारः । प्रकृतस्यार्थस्यापरिपोषात् । तत्र बोधिसत्त्वस्य परार्थं शरीरवितरणे लौकिकस्त्रीसंभोगसादृश्यादक्लिष्टता प्रकृतं शान्तं परिपुष्णाति । अत्र तु रामस्य मन्मथसादृश्यान्न वीरोत्कर्षः कश्चित्, प्रत्युत स्त्रियं ताटकां हतवानिति वीरस्याभासीकरणलक्षणमनौचित्यमुज्जृम्भते ननु इतिवृत्तप्रसिद्धे स्त्रीवधे कथं दोष इति चेत् 'इतिवृत्तवशायातां त्यक्त्वाननुगुणां स्थितिमि'ति[१] स्थित्या यस्य प्रयत्नेन परिहर्तव्यता तत्र कवेरयं स्वयं संरम्भारम्भोऽनौचित्यायेति ।

## सुधासागरः

इत्यादावपि–इति श्रीनियोगादिति वाच्यम् । इतेरपि तत्तुल्यत्वादित्यर्थः । दूषकताबीजं चोद्देश्यप्रतीतिविरह इति नित्योऽयम् ।

अमत इत्यादि । अमतः परार्थो द्वितीयोऽर्थो यस्य तत् अमतपरार्थम् । अमतत्वं च—

ज्ञेयौ शृङ्गारबीभत्सौ तथा वीरभयानकौ ।
रौद्राद्भुतौ तथा हास्यकरुणौ वैरिणौ मिथः ॥

इत्याद्युक्तदिशा प्रकृतरसविरुद्धरसव्यञ्जकत्वमिति भावः । यथा—रामेत्यादि । रथोद्धता छन्दः, 'रान्नराविह रथोद्धता लगौ' इति लक्षणात् । दुःसहेनासह्येन रामो मन्मथ इव, पक्षे राम एव मन्मथो मदनस्तस्य शरेण हृदये उरसि मनसि च ताडिताऽत एव गन्धवत् दुर्गन्धं रुधिरं कुङ्कुमं चन्दनं च ताभ्यामुक्षिता कृताङ्गरागा सा प्रस्तुता निशाचरी ताडका निशायां चरति निशाचरी अभिसारिका च जीवितेशस्य यमस्य प्राणनाथस्य च वसतिं सुरतस्थानं गृहं च जगामेत्यर्थः ।

अत्रेत्यादि । अत्र प्रकृतस्य बीभत्सस्य विरोधी शृङ्गारः तस्य व्यञ्जको द्वितीयोऽर्थः । तादृशार्थोपस्थित्या प्रकृतबीभत्सरसापकर्षकताऽस्य दोषत्वबीजम्, अतो नित्योऽयं दोषः, नीरसे स्वात्मलाभस्यैवाभावात् ।

[१] ध्वन्यालोके ३.११ ।

[अर्थदोषाः]

अथ दोषानाह—

अर्थोऽपुष्टः कष्टो व्याहतपुनरुक्तदुष्क्रमग्राम्याः ॥७॥
सन्दिग्धो निर्हेतुः प्रसिद्धिविद्याविरुद्धश्च ॥
अनवीकृतः सनियमानियमविशेषाविशेषपरिवृत्ताः ॥८॥
साकाङ्क्षोऽपदयुक्तः सहचरभिन्नः प्रकाशितविरुद्धः ॥
विध्यनुवादायुक्तस्त्यक्तपुनःस्वीकृतोऽश्लीलः ॥९॥

दुष्ट इति सम्बध्यते ।

क्रमेणोदाहरणम्—

१. अतिविततगगनसरणिप्रसरणपरिमुक्तविश्रमानन्दः ।
मरुदुल्लासितसौरभकमलाकरहासकृद् रविर्जयति ॥

## साहित्यचूडामणिः

अर्थदोषानाह—अर्थेति । क्वचित् पदस्यार्थः कुत्रचिद् वाक्यस्येति यथायोगमूहनीयम् ।

संबध्यत इति । दुष्टमित्यधिकारात् । अर्थाल्लिङ्गविपरिणामः ।

अतिविततेति । गगनस्य विभुतया वैतत्यम् । विश्रमस्य दुःखाभावत्वादानन्दत्वम् । कमलाकराणां विकासमात्रकरणं, सौरभ्योल्लासश्च स्वभावसिद्ध इति तत्रार्थदोषः ।

तत्र लाक्षणिकविप्रतिपत्तिमपाकरोति नत्विति । गगनादौ विततत्वादेश्च भिन्नप्रमेयतया न पौनरुक्त्यम् । 'सामर्थ्यसिद्धस्यार्थस्य तथार्थो पुनरुक्तते'त्येतदिदानीमनभिमतमिति यावत् ।

## सुधासागरः

'अर्थदोषानाहे'-ति । अर्थदोषलक्षणान्याहेति भावः ।

दुष्ट इतीति । पददोषलक्षणसूत्रस्थं दुष्टमिति पदं लिङ्गविपरिणामे सम्बध्यते । तत्रापुष्टः पुष्टाद् भिन्नः । पुष्टत्वं च विवक्षितार्थबोधप्रयोजकानुपादानकत्वम् । तद्विरहश्च द्विधा, अप्रयोजकत्वात् प्रयोजकत्वेऽप्यन्यलभ्यत्वाच्च । यमेनं 'व्यर्थमाहुर्गतार्थं यद्यच्च स्यान्निष्प्रयोजनम्' इत्यनेन भोजराजो व्यर्थमाह । क्रमेणोदाहरणानि । तत्रापुष्टो यथा—'अतिविततते'-ति ।

गीतिश्छन्दः । अतिविततमत्यन्तविस्तीर्णं यद् गगनमाकाशस्तत्र या सरणिर्मार्गः तत्र प्रसरणे गमनागमने परिमुक्तः परित्यक्तो विश्रमानन्दो विश्रामसुखं येन तादृशः । तथा मरुद्भिरुल्लासितं दिक्षु सञ्चारितं सौरभं सौगन्ध्यं यस्य तथाभूतस्य कमलाकरस्य पद्माकरस्य हासकृद् विकासकर्ता रविर्जयति सर्वोत्कर्षेण वर्तत इत्यर्थः ।

—अत्रातिविततत्वादयोऽनुपादानेऽपि प्रतिपाद्यमानमर्थं न बाधन्त इत्यपुष्टाः न त्वसङ्गताः पुनरुक्ता वा ।

---

## सुधासागरः

अत्रेत्यादि । अत्रातिवितते निरवलम्बे व्योम्नि अविश्रामं गमनागमनात् इतराप्रकाश्यकमलप्रकाशनाच्च रवेरुत्कर्षो विवक्षितः । तत्रातिविततत्वं गमनस्यार्थादेवावगम्यते, अग्नेरिवौष्ण्यम् । सरणित्वं मरुदुल्लासितसौरभत्वं चाप्रयोजकमेवेत्यपुष्टा एतेऽर्थाः ।

नन्वेतेऽर्थाः अपुष्टा इति सिद्धम्, परन्त्वतिविततेति पुनरुक्तः, गगनपदादेव तदुपस्थितेः, मरुदुल्लासितसौरभेति विरुद्धम्, विकासात्पूर्वं सौरभाभावेन तद्विशिष्टस्य सूर्येणाप्रकाश्यत्वादिति नायं पृथगिति चेत् । न । गगनपदं न विततत्वे शक्तम्, अर्थलभ्यत्वे च न पुनरुक्तता । यदुक्तं—भोजराजेन—'काव्येतिहासादावर्थवृत्त्या लब्धस्य साक्षाद् भणनमपौनरुक्त्याय' इति । नापि विरुद्धम्, सौरभस्योपलक्षणत्वात् । यद्वा चित्रहेतुपुरस्कारेण पूर्वभावाभिधानादिति भावः । अथाधिकपदादस्य को भेदः, अप्रयोजके प्रयोजनाभावकृतोऽपि भेदो न सम्भवति । अत्र कश्चित्—'तत्र पदार्थान्वयसमकालं दुष्टत्वप्रतिभासः, इह तु तदनन्तरमिति विशेषः' इति । तन्नातिसमीचीनम्, तथा नियमे प्रमाणाभावात्, एतावता विशेषेण शब्ददोषत्वमेकस्यापरस्यार्थदोषत्वमिति विभागानुपपत्तेश्च । विरुद्धमतिकृदमतपरार्थादौ शब्ददोषेऽन्वयप्रत्ययोत्तरमेव दुष्टत्वप्रतिभासात् ।

वयन्तु पश्यामः—यत्र विवक्षित एवार्थोऽन्यथाऽभिधानेऽपि दुष्यति सोऽर्थदोषः, अन्यस्तु रसदोषभिन्नः शब्ददोष इति विवेकः । तथा च यत्राविवक्षितोऽप्यर्थः कथञ्चिदन्विततयाऽभिधीयते तत्राधिकपदत्वम्, तत्पदेन विनाऽपि तन्निर्वाहात् । यत्र तु सोऽर्थो विवक्षित एव परन्त्वप्रयोजकत्वान्यलभ्यत्वाभ्यां न शब्देनोपात्तुमर्हस्तत्रापुष्टत्वम् । 'स्फटिकाकृति'इत्यत्र नाकृतिपदार्थ उपमानत्वेन विवक्षितः, तस्य नैर्मल्याभावात् । 'यदपि च न कृतं नितम्बिनीनाम्'इत्यत्रापि च रतस्य स्तनपतनावधित्वव्यतिरेक एवानुचितत्वेनविवक्षितः न तु तत्कृतिव्यतिरेकः, पूर्वार्द्धे तथैव क्रमात्, किन्तु छन्दोऽनुरोधादिना द्वयमपि कथञ्चिदन्वितत्वेनोपात्तमित्यस्याधिकपदत्वम् अतिवितते त्यादौ त्वतिविततत्वादिकं वक्तुर्विवक्षितमेव परन्त्वर्थलभ्यत्वादिना नोपादानार्हमित्यपुष्टम् । व्यक्तं च पूर्वस्य शब्ददोषत्वमुत्तरस्य चार्थदोषत्वमिति । दूषकताबीजं चाशक्त्युन्नयनेन श्रोतुर्वैमुख्यम् । अत एव यमकादावदोषता, तत्रालङ्कारान्तरारम्भेणाशक्त्यनुन्नयनात् । कर्णावतंसादिपदे च विशेषद्योतकतया तदुपादानं नाशक्त्युन्नायकमित्यदुष्टत्वम् । अत एव विशेषणदानार्थं विशेष्यप्रयोगेऽपि दोषाभावः ।

२. सदा मध्ये यासामियममृतनिस्यन्दसुरसा
सरस्वत्युद्दामा वहति बहुमार्गा परिमलम् ।
प्रसादं ता एता घनपरिचिताः केन महतां
महाकाव्यव्योम्नि स्फुरितमधुरा यान्तु रुचयः ॥

—अत्र यासां कविरुचीनां मध्ये सुकुमारविचित्रमध्यमात्मकत्रिमार्गा[१] भारती चमत्कारं वहति ताः गम्भीरकाव्यपरिचिताः कथमितरकाव्यवत् प्रसन्ना भवन्तु । यासामादित्यप्रभाणां मध्ये त्रिपथगा वहति ताः मेघपरिचिताः कथं प्रसन्ना भवन्तीति संक्षेपार्थः ।

## साहित्यचूडामणिः

सदेति। कविरुचीनां भिन्नस्वभावानां कविविवक्षाणां मध्ये वैदर्भ्यादिव्यतिरेकेण सुकुमारचित्रमध्यमलक्षणमार्गत्रययोगितया त्रिमार्गा सरस्वती। परिमलं व्याचष्टे—चमत्कारमिति। घनपरिचया इत्यस्य व्याख्या गम्भीरकाव्यपरिचिता कथमिति कस्य हेतोरित्यर्थः। इतरकाव्यवत् इतरेषु काव्येष्विव, अनितरसाधारणो हि प्रसादः। अत्रैवार्थान्तरच्छायामाह—यासामिति। रुचयो दीप्तयः, एकैकोऽपि वाक्यार्थः स्फुटं न प्रतीयते किमुतोभयार्थघटनापरिक्लेश इति यावत् ।

## सुधासागरः

कष्टमुदाहरति। कष्टः प्रतीतिक्लेशवान् दुरूह इत्यर्थः। यथा—'सदे'-ति।

शिखरिणी छन्दः। महान्तः कवयो द्वादशादित्याश्च, रुचयोऽभिसन्धयः कान्तयश्च, अमृतं सुधा जलं च, रसः शृङ्गारादिर्माधुर्यं च, सरस्वती वाणी नदी च, उद्दामा निरर्गला महती च, बहुमार्गा त्रयः सुकुमारविचित्रमध्यमात्मकमार्गा यस्याः। एत एव वैदर्भीगौडीपाञ्चाल्याख्या रीतय उच्यन्ते। पक्षे बहुमार्गा त्रिपथगा घनो गम्भीरो मेघश्च, परिचिता अभ्यस्ता मिलिताश्च। तथा च यासां कविरुचीनां कवेरभिसन्धीनां मध्ये इयममृतनिष्यन्दा सुधास्राविणी चासौ सुष्ठु रसाः शृङ्गारादयो यत्र तादृशी उद्दामा निरर्गला बहुमार्गा सुकुमारविचित्रमध्यमात्मकमार्गत्रयवती वैदर्भीगौडीपाञ्चालीरीतिमतीति यावत्, सरस्वती भारती परिमलं चमत्कारं वहति दधाति, ता एता घनपरिचिता गम्भीरकाव्याभ्यस्ताः स्फुरिता अनुभवारूढाः सत्यो मधुरा अभीष्टाः महतां कवीनां रुचयोऽभिप्रायाः महाकाव्यव्योम्नि व्योम्नीव वितते महाकाव्ये केन प्रकारेण प्रसादं प्राकट्यं यान्तु कथमितरकाव्यवत्प्रसन्नाः सुव्यक्ताः स्युः।

यथा यासामादित्यप्रभाणां मध्ये इयममृतनिस्यन्दा जलस्राविणी चासौ सरसा सुष्ठुस्वादा उद्दामा महती बहुमार्गा त्रिपथगामिनी सरस्वती नदी परिमलं सुराङ्गनाङ्गसङ्गसम्भवं सौगन्ध्यं वहति प्रवहति ता एताः स्फुरितेन प्रकाशेन मधुरा मनोहराः महतामादित्यानां रुचय प्रभाः घनपरिचिता मेघमिलिताः वर्षाकालीनाः

[१] कुन्तकस्य वक्रोक्तिजीवितादियमापूर्त्तिः

३. जगति जयिनस्ते ते भावा नवेन्दुकलादयः
प्रकृतिमधुराः सन्त्येवान्ये मनो मदयन्ति ये ।
मम तु यदियं याता लोके विलोचनचन्द्रिका
नयनविषयं जन्मन्येकः स एव महोत्सवः ॥

—अत्रेन्दुकलादयो यं प्रति पस्पशप्रायाः स एव चन्द्रिकात्वमुत्कर्षार्थमारोपयतीति व्याहतत्वम् ।

४. 'कृतमनुमतमि'-त्यादि ॥

—अत्रार्जुनेति भवद्भिरिति चोक्ते सभीमकिरीटिनामिति किरीटिपदार्थः पुनरुक्तः ।

---

## साहित्यचूडामणिः

जगतीति । इन्दुकलादयः स्वभावमधुरास्ते ते पदार्था यं माधवं प्रति तुच्छतया निस्सारकल्पाः स्थापिताः, सन्त्येवान्य इति सावज्ञमुक्तत्वात्, स एव चन्द्रिकात्वं मालत्या उत्कर्षार्थमारोपयतीति ।

किरीटिपदार्थः पुनरुक्त इति । अर्जुनार्जुनेति पूर्वमामन्त्रितत्वात् ।

## सुधासागरः

सत्यः महाकाव्यवद् व्योम्नि वियति केन प्रकारेण प्रसादं स्वच्छतां यान्तु कथमितरशरदादिवत्स्वच्छाः स्युरित्यर्थः ।

अत्र पद्येऽयं हि विवक्षितोऽर्थः शब्दान्तरैः कथञ्चिद् योजितोऽपि क्लेशेनैव प्रतीयते इत्यर्थ एवायं दुष्टः । क्लिष्टत्वादिकन्तु शब्ददोषो, घटनान्तरेणार्थस्य सुखेनैव प्रतीतेः । सम्यक्प्रतीतिविरहश्च दूषकताबीजमतो नित्योऽयं दोषः ।

व्याहतः—

उत्कर्षो वाऽपकर्षो वा प्राग् यस्यैव निगद्यते ।
तस्यैवाथ तदन्यैश्चेद् व्याहतोऽर्थस्तदा भवेत् ॥

इत्युपलक्षितविरुद्धत्ववान् । तदुदाहरति—'जगती'-ति ।

हरिणी छन्दः । जगति संसारे ये मनो मदयन्ति हृदयं पुष्णन्ति तादृशाः प्रकृतिमधुराः स्वभावमिष्टाः । अत एव जयिनः उत्कृष्टास्ते नवेन्दुकलादयो भावाः सन्त्येव, मम तु लोके विलोचनयोश्चन्द्रिकेव चन्द्रिकेयं प्रेयसी यन्नयनविषयं याता दृष्टिगोचरं गता स एव जन्मनि महोत्सवः एतावतैव जन्मसाफल्यमित्यर्थः ।

अत्रेत्यादि । अत्र पूर्वार्द्धे साधारणचन्द्रिकाचन्द्रकलादयः स्वं प्रत्यसारतया प्रतिपादिताः, तेनैवोत्तरार्धे चन्द्रिकात्वमुत्कर्षायारोप्यत इति व्याघातः । दूषकताबीजं च वाक्यार्थाप्रतीतिः । अयं नित्यो दोषः ।

पुनरुक्तं दर्शयति—कृतमनुमतमित्यादि । अयमाशयः—यत् पुनरुक्तलक्षणे प्रयोजनं विनेति विशेषणमिति । तदयुक्तम् । एवं सत्यस्यानित्यदोषत्वं न स्यात्,

## साहित्यचूडामणिः

ताते चापद्वितीये इत्यादिचतुर्थपादार्थः पूर्वार्धापेक्षया पुनरुक्तः। ननु शब्द-पौनरुक्त्यं कथं दोष इति चेत्, न, स्थूलत्वादस्य। यदाह भामहः—

न शब्दपौनरुक्त्यं तु स्थौल्यादत्रोपवर्ण्यते।
कथमाक्षिप्तचित्तोऽपि तदेकमभिधास्यते॥ काव्या० ४-१३॥

इति। तस्मात्—

उत्कानुन्मनयन्त्येते गम्भीराः स्तनयित्नवः।
अम्भोधरास्तटित्वन्तो गम्भीराः स्तनयित्नवः॥

इति बालशिक्षामात्रोपक्षीणमित्यवगन्तव्यम्। किञ्च पौनरुक्त्यमशेषं दोष इत्यपि न शक्यं वक्तुं तस्यानुप्रासादिस्वभावतयालङ्कारत्वेनाप्यङ्गीकारात्। एतावदा-लोचनीयम्—

सर्वनामपरामर्शयोग्यस्यार्थस्य यत् पुनः।
स्वशब्देनाभिधानं सा शब्दस्य पुनरुक्तता॥ व्यक्तिवि० ३३५॥

यथा 'जक्षुर्बिसं धृतविकासिबिसप्रसूना' इत्यत्र बिसशब्दस्य पौनरुक्त्यमिति। अतएव हि 'विकचमस्य दधुः प्रसूनमित्यपि पाठे'। एवमलंकारेऽप्यूह्यम्। यथा—

उमावृषाङ्कौ शरजन्मना यथा यथा जयन्तेन शचीपुरन्दरौ।
तथा नृपः सा च सुतेन मागधी ननन्दतुस्तत्सदृशेन तत्समौ॥ इति।

## सुधासागरः

प्रयोजनस्थले पुनरुक्तत्वस्यैवाभावप्रसङ्गात्। स चायं द्विविधः, पदार्थवाक्यार्थ-भेदात्। तयोराद्यो यथा—

'अरे रेऽर्जुनार्जुन! सात्यके! सात्यके! न युक्त ईदृशो मत्तातस्य सुतशोकभ्रान्त्या न्यस्तशस्त्रस्य दित्रमुपगच्छत' केशाकर्षणरूपः पराभवः, अपि च' (इत्युपक्रम्य)

कृतमनुमतं दृष्टं वा यैरिदं गुरु पातकं
मनुजपशुभिर्निर्मर्यादैर्भवद्भिरुदायुधैः।
नरकरिपुणा सार्द्धं तेषां सभीमकिरीटिना-
मयमहमसृङ्मेदोमांसैः करोमि दिशां बलिम्॥

व्याख्यातमिदं चतुर्थोल्लासे। अत्रार्जुनार्जुनेति सम्बोध्य यैर्भवद्भिरित्यनेन परामृश्य तेषामित्यनेन परामर्शादर्जुनस्यापि प्राप्तेः सभीमकिरीटिनामिति किरीटिपदार्थः पुनरुक्तः। न च प्राधान्यप्रतिपत्तये पुनरुपादानमित्यदोषता, सम्बोधनेनैव तल्लाभात्।

यथा वेति वाक्यार्थस्य पुनरुक्तत्वमुदाहरति—'अस्त्रज्वाले'-ति।

स्रग्धरा छन्दः। अश्वत्थामोक्तिरियम्। अस्त्राण्येव ज्वाला वह्निशिखास्ताभिर-वलीढं व्याप्तं प्रतिबलं रिपुसैन्यमेव जलधिस्तस्यान्तर्मध्ये और्वायमाणे वाडवाग्नि-

यथा वा

अस्त्रज्वालावलीढप्रतिबलजलधेरन्तरौर्वायमाणे
सेनानाथे स्थितेऽस्मिन्मम पितरि गुरौ सर्वधन्वीश्वराणाम् ।
कर्णाऽलं सम्भ्रमेण व्रज कृप समरं मुञ्च हार्दिक्य, शङ्कां
ताते चापद्वितीये वहति रणधुरं को भयस्यावकाशः ॥

—अत्र चतुर्थपादवाक्यार्थः पुनरुक्तः ।

५. भूपालरत्न, निर्दैन्यप्रदानप्रथितोत्सव ।
विश्राणय तुरङ्गं मे मातङ्गं वा मदालसम् ॥

—अत्र मातङ्गस्य प्राङ् निर्देशो युक्तः ।

---

## साहित्यचूडामणिः

अत्र चतुर्थपादः पुनरुक्तः। श्रौत्यैवोपमया वाक्यार्थस्य पूर्णत्वेन पुनः किमर्थमार्थ्या उपन्यासप्रयासः।

मातङ्गस्येति। मातङ्गं तुरङ्गं वा विश्राणयेति वक्तव्यम्, अन्यथा कवेः पदार्थतारतम्यानभिज्ञत्वप्रसङ्गात्।

## सुधासागरः

कृपे सर्वधन्वीश्वराणां सकलधनुर्धरश्रेष्ठानां गुरौ सेनानाथे दुर्योधनसेनापतौ अस्मिन्समीपवर्तिनि मम पितरि प्रसिद्धे द्रोणाचार्ये स्थिते विद्यमाने हे कर्ण सम्भ्रमेणालम्, हे कृप! समरं व्रज, हे हार्दिक्य कृतवर्मन्! शङ्कां मुञ्च, न किञ्चिद् भयमस्तीति भावः। चापद्वितीये ताते रणधुरं युद्धभारं वहति सति को भयस्यावकाशः।

अत्र चतुर्थपादवाक्यार्थः पुनरुक्तः। न च वक्तू रौद्ररसाविष्टत्वं समाधानमाशङ्कनीयम्, वीरस्यायुक्तकारित्वावर्णनात्। दूषकताबीजं च निष्प्रयोजनद्वितीयाभिधानेन श्रोतुर्वैमुख्यम्। अत एव प्रयोजनसत्त्वेनादोषत्त्वादनित्योऽयं दोषः।

केचित्तु अर्थप्राप्तस्यापि वचने पुनरुक्तता। तदुदाहरणमस्त्रज्वालेत्यादि। अप्रयोजकद्वितीयाभिधानमात्रस्थले त्वपुष्टार्थत्वमित्याहुः।

दुष्क्रमो दुष्टक्रमः। दुष्टत्वं च क्रमस्य लोकशास्त्रविरुद्धत्वम्। तत्राद्यमुदाहरति—'भूपाले'-ति। विश्राणय देहि। स्पष्टमन्यत्।

अत्रेत्यादि। अत्र तुरङ्गभूयिष्ठं मातङ्गं देहि तुरङ्गं वेति लौकिकः क्रमः, गुरुदानाशक्तौ लघुदानौचित्यात्। वक्तुश्च यथास्थित एव क्रमो विवक्षित इत्यर्थदोष एवायमिति भावः। एवं च यत्र हस्तिनामेव सुलभत्वं तत्र नेदमुदाहरणमिति मन्तव्यम्।

६. स्वपिति यावदयं निकटे जनः स्वपिमि तावदहं किमपैति ते ।
तदयि, साम्प्रतमाहर कूर्परं[1] त्वरितमूरुमुदञ्चय कुञ्चितम् ॥
एषोऽविदग्धः ॥

---

## साहित्यचूडामणिः

रूपकं[1] मदनागारम् । एषोऽविदग्ध इति । अस्य वाक्यस्य वक्ता न विदग्ध इति ग्राम्यत्वम् । अग्राम्यत्वं च समस्ति तत्र कविवैदग्ध्यात् । यथा दण्डी—

कन्ये ! कामयमानं मां न त्वं कामयसे कथम् ।
इति ग्राम्योऽयमर्थात्मा वैरस्यायैव कल्पते ॥
कामं कन्दर्पचण्डालो मयि वामाक्षि निर्दयः ।
त्वयि निर्मत्सरो दिष्ट्येत्यग्राम्योऽर्थो रसावहः ॥ [2]इति ।

## सुधासागरः

उक्तरीत्या शास्त्रविरुद्धत्वमप्यूह्यम् । यथा—

काराविऊण खउरं गामदुजो मज्जिऊण जेमिअ अ ।
णक्खत्तं तिहिवारे जोइसिअं पुच्छिदुं चलिदो ॥
[ कारयित्वा क्षौरं ग्रामद्विजो मज्जयित्वा भुक्त्वा च ।
नक्षत्रं तिथिवारौ ज्यौतिषिकं प्रष्टुं चलितः ॥ ]

इति संस्कृतम् । स्पष्टम् । अत्र नक्षत्रादिज्ञानपूर्वकं क्षौरस्य शास्त्रेण विधानात् तद्विरुद्धमिदम् । दूषकताबीजं विरोधेनाप्रतीतिः सहृदयोद्वेगो वेति नित्य एवायम् ।

ग्राम्यो ग्रामसम्भवोऽविदग्धोक्तिप्रतिपादितो रिरंसादिः । तदुक्तम्—

स ग्राम्योऽर्थो रिरंसादिः पामरैर्यत्र कथ्यते ।
वैदग्ध्यवक्रिमबलं हित्वैव वनितादिषु ॥

इति । यथा—'स्वपिती'ति ।

द्रुतविलम्बितं वृत्तम् । अयं जनः, कश्चिद् यावत् स्वपिति तावदहं निकटे त्वत्समीपे स्वपिमि ते किमपैति किं गच्छति न काचित् क्षतिः । तत् कारणादायतं स्पर्शरोधकं कूर्परं कफोणिं संहर, कुञ्चितमूरुमपि त्वरितं शीघ्रमुदञ्चय प्रसारयेत्यर्थः ।

एषोऽविदग्ध इति । अत्र 'निकटे तावदहं स्वपिमि' इत्यविदग्धस्य रिरंसोक्तिरिति भावः । दूषकताऽश्लीलवत् । किञ्च एतादृशोक्तिकवलितो विभावादिरूपोऽर्थो न रसाय पर्याप्यते, भ्रष्टमिव बीजमङ्कुरायेति द्रष्टव्यम् ।

---

[1] '० माहर रूपकम्' इति सा० चू० पाठः । [2] काव्यादर्श—१-६२, ६३ ।

७. 'मात्सर्यमुत्सार्ये'-त्यादि ॥

—अत्र प्रकरणाद्यभावे सन्देहः शान्तशृङ्गार्यन्तराभिधाने तु निश्चयः ।

८. गृहीतं येनासीः परिभवभयान्नोचितमपि
प्रभावाद् यस्याभून्न खलु तव कश्चिन्न विषयः ।
परित्यक्तं तेन त्वमसि सुतशोकान्न तु भयाद्
विमोक्ष्ये शस्त्र, त्वामहमपि यतः स्वस्ति भवते ॥

—अत्र शस्त्रविमोचने हेतुर्नोपात्तः ।

---

## साहित्यचूडामणिः

मात्सर्यमिति । प्रकरणादीत्यादिपदाद् वक्तृबोद्धव्यादि । वक्त्रोः शान्तशृङ्गारिणोरन्यतरनिश्चये व्यङ्ग्यतया वाक्यार्थनिश्चयः । सर्वथा वाच्यकक्ष्यायां संशय एव ।

हेतुर्नोपात्त इति । अश्वत्थामकर्तृके शस्त्रमोचने हेतुरुपादातव्यः, यथात्रैव द्रोणाचार्यकर्तृके 'सुतशोकान्नतु भयादि'-त्यन्वयव्यतिरेकाभ्यामुपात्तः । तदभावादत्र निर्हेतुत्वम् ।

## सुधासागरः

सन्दिग्धः सन्देहविषयः तत्प्रयोजकरूपवानिति यावत् । तदुदाहरति—'मात्सर्ये'-ति ।

उपजातिश्छन्दः । अत्रेत्यादि । अत्र भूधरनितम्बानां कामिनीनितम्बानां वा सेव्यत्वं व्यञ्जनया प्रतिपिपादयिषितम् । तत् विरुद्धयोपस्थित्या द्वितीयेन सन्दिह्यते, प्रकरणाभावात् ।

वयन्तु यत्तु 'वक्तृविशेषसन्देह' इति व्याख्यानं सर्वमान्यानाम्, तदुत्तानताविलसितम्, वक्तुः पदवाक्यार्थत्वाभावेन तत्सन्देहस्यार्थदोषत्वाभावात् । किमुपपदद्वयानभिधेयत्वाच्च । अत एव वक्तृविशेषनिश्चयः सन्देहाभावप्रयोजकत्वेनोक्तः, तन्निश्चये एकतरनितम्बस्य सेव्यत्वनिर्णयेनासन्देहात् । वन्द्यामित्यादौ द्वितीयासप्तम्यन्तत्वाभ्यां पदे एव सन्देहः, अत्र तु पदानामसन्दिग्धत्वे सत्येव स इति पदसन्दिग्धत्वाद् भेदः । दूषकताबीजं चोद्देश्यनिश्चयविरहः । यत्र तु सन्देह एवोद्देश्यस्तत्रादोषत्वमेवेति भावः ।

निष्क्रान्तो हेतुर्यस्मात् स निर्हेतुः । उदाहरणम्—'गृहीतमि'-ति ।

शिखरिणी छन्दः । इयमश्वत्थामोक्तिः । हे शस्त्र येन पित्रा गृहीतं स्ववृत्तिविरोधेऽपि स्वीकृतम् परिभवः शस्त्रधारिभ्यस्तिरस्कारः, तद्भयान्नोज्झितं न कदाचित् त्यक्तम्, अपि च यस्य प्रभावात् तव खलु कश्चिन्न विषयो लक्ष्य इति न, अपि तु

९. इदं ते केनोक्तं कथय कमलातङ्कवदने
यदेतस्मिन् हेम्नः कटकमिति धत्से खलु धियम् ।
इदं तद्दुःसाधाक्रमणपरमास्त्रं स्मृतिभुवा
तव प्रीत्या चक्रं करकमलमूले विनिहितम् ॥
—अत्र कामस्य चक्रं लोकेऽप्रसिद्धम् ।

---

## साहित्यचूडामणिः

प्रसिद्धिविरुद्धो विद्याविरुद्धश्चेति द्वौ । इदमिति । कमलानां साक्षादातङ्को वदनं यस्याः । विनिहितं निक्षिप्तम् । अत्र चक्रायुधतया प्रसिद्धिर्भगवतो वासुदेवस्य, न तु प्रद्युम्नस्य । यदाह कश्चित्—

त्वदालेख्ये कौतूहलतरलहस्ते विरचिते
विधायैका चक्रं रचयति सुपर्णासुतमपि ।
अथ स्विद्यत्पाणिस्त्वरितमपमृज्यैतदपरा
करे पौष्पं चापं मकरमुपरिष्टाच्च लिखति ॥ इति ।

देशकालविरोधोऽपि स्थूलः प्रसिद्धिविरोध एव । यथा—

आसीद् वाराणसी नाम चोलेषु महती पुरी ।
मधुरुत्फुल्लनिचुलो निदाघो मेघदुर्दिनः ॥ इति ।

स चातिस्थौल्यादुपेक्षितो ग्रन्थकारेण । काव्ये च मध्यदेशनिबन्धनो विभाग आदरणीयः देशान्तरेऽव्यवस्थादर्शनात् । येन सिंहलद्वीपे प्रावृष्यपि सहकारप्रसूनं कश्मीरेषु ग्रीष्मेऽपि कुमुदानि वर्षास्वपि कमलानीति ।

## सुधासागरः

सर्वोऽपि युयुत्सुर्विषयोऽभूत्, तेन गुरुणा त्वं सुतशोकात् परित्यक्तमसि न तु भयात् । अहमपि यतस्त्वां विमोक्ष्येऽतो भवते स्वस्ति विश्रमसुखं भवत्वित्यर्थः । न चोचितमपीति क्वचित्पाठः सुगमः । अत्रेति । स्वशस्त्रत्यागे हेतुर्नोपात्त इत्यर्थः ।

ननु तं विनाऽपि प्रतीतेः पर्यवसानं न वा, आद्ये दोषाभावः अन्त्ये साकाङ्क्ष-सङ्कर इति । अत्र कश्चित्—'उपात्तस्य परेणान्वये साकाङ्क्षत्वमनुपादाने निर्हेतुत्वमिति विशेष' इति, तन्न, साकाङ्क्षोदाहारणे उपेक्षितुमित्याकाङ्क्षतीत्यनेनानुपात्तसाकाङ्क्षताया एव वृत्तौ प्रदर्शनात् । तस्माद्धेतुतद्भिन्नसापेक्षतया द्वयोर्भेद इत्येव न्यायः । यद्वा, अत्राप्रतीतिमात्रम्, तत्र तु विरुद्धा प्रतीतिः, स्त्रीरत्ने एवामर्षप्रतीतेरिति विरुद्धविशेषः । दुष्टिबीजं चोद्देश्यप्रतीतिविरहः । अत एव प्रसिद्धाननुपादानेऽपि न दोषः ।

प्रसिद्धिविरुद्धो लोकस्य कवेर्वा यत्रार्थे न प्रसिद्धिः । प्रसिद्धिविद्यापदाभ्यां विरुद्धपदस्य प्रत्येकमन्वय इति भावः । उदाहरणम्—'इदमि'-ति ।

यथा वा—

उपपरिसरं गोदावर्याः परित्यजताध्वगाः,
सरणिमपरो मार्गस्तावद् भवद्भिरवेक्ष्यताम् ।
इह हि विहितो रक्ताशोकः कयापि हताशया
चरणनलिनन्यासोदञ्चन्नवाङ्कुरकञ्चुकः ॥

—अत्र पादाघातेनाशोकस्य पुष्पोद्गमः कविषु प्रसिद्धो न पुनरङ्कुरोद्गमः ।

---

## साहित्यचूडामणिः

लोक इव कविमर्यादायामपि प्रसिद्धिविरोधमाह—उपपरिसरमिति । हताशयेति प्रशंसागर्भ उपालम्भः ।

पुष्पेति । न पुनरङ्कुरोद्गमः ।

## सुधासागरः

शिखरिणी छन्दः । हे कमलातङ्कवदने चन्द्रानने ते केन भ्रान्तप्रतारकेणेदमुक्तम् यदेतस्मिन् वस्तुनि हेम्नः सुवर्णस्य कटकं करकङ्कणमिति खलु धियं धत्से निश्चयं करोषि तदिदं दुःसाधानां दुराराध्यतरुणानामाक्रमणे परमास्त्रं वशीकरणसमर्थं स्मृतिभुवा कामेन स्वचक्रं प्रीत्या तव करकमलमूले प्रकोष्ठे विनिहितं स्थापितमित्यर्थः । अत्र कामस्य चक्रं लोके न प्रसिद्धमिति लोकप्रसिद्धिविरुद्धोऽर्थः ।

कविप्रसिद्धिविरुद्धमुदाहरति—यथा वा—'उपपरिसरमि'-ति ।

हरिणी छन्दः । 'रसयुगहयैर्न्सौम्नौ स्लौ गो यदा हरिणी तदा' इति लक्षणात् । अशोककलिकादर्शनमूर्च्छानन्तरं कथञ्चिद् गृहमागच्छतः पथिकस्य तेनैव पथा व्रजन्तं पथिकान्तरमालोक्येयमुक्तिः । हे अध्वगा गोदावर्या उपपरिसरं सरणिं गोदावरीतीरसमीपपन्थानं परित्यजत, भवद्भिस्तावदपरो मार्गोऽवेक्ष्यतामन्विष्यताम् । हेतुमाह इह गोदावरीपरिसरे हि कयाऽपि हताशया हता पापजनकत्वेन निन्द्या आशा पथिकमारणेच्छा यस्यास्तथाभूतया कयाचित् मत्ततरुण्या रक्ताशोकश्चरणनलिनन्यासेन पादपद्माघातेनोदञ्चन्तः उदयं गच्छन्तो नवाङ्कुरा एव कञ्चुकाः यस्य तादृशो विहितः कृत इत्यर्थः ।

अत्र हि पादाघातेनाशोकस्य पुष्पोद्गमः कविषु प्रसिद्ध इति । अयमाशयः—लोकप्रसिद्धिभ्रान्त्या प्रयुक्तं लोकाप्रसिद्धं लोकप्रसिद्धिविरुद्धमित्युच्यते । कविसम्प्रदायप्रसिद्धिभ्रान्त्याऽशोकाङ्कुरोद्गमः कविसम्प्रदायाप्रसिद्धो वर्णित इति कविप्रसिद्धिविरुद्धोऽर्थः । लोकस्तु पुष्पाङ्कुरोद्गमयोर्द्वयोरप्यदर्शनात्तत्रोदासीन एवेति । एवं च यत् प्रदीपकारैरुक्तम्, चरणन्यासेनाशोकाङ्कुरस्य कवीनामप्यसंमतेः, पुष्पोद्गम एव तेषां

सुसितवसनालङ्कारायां कदाचन कौमुदी-
महसि सुदृशि स्वैरं यान्त्यां गतोऽस्तमभूद् विधुः ।
तदनु भवतः कीर्तिः केनाप्यगीयत येन सा
प्रियगृहमगान्मुक्ताशङ्का क्व नासि शुभप्रदः ॥
—अत्रामूर्तापिकीर्तिः ज्योत्स्नावत् प्रकाशरूपा कथितेति लोकविरुद्धमपि कविप्रसिद्धेर्न दुष्टम् ।

---

## साहित्यचूडामणिः

लोकयात्राकविमर्यादयोर्विप्रतिषेधे पूर्वदौर्बल्यमित्याह—सुसितेति। अमूर्ताया अपि कीर्त्तेः श्वैत्यविशिष्टत्वं लोकविरुद्धम्। लोकश्च 'लोको वेदस्तथाध्यात्मं प्रमाणं त्रिविधं स्मृतम्' इति व्यक्तिविवेकयुक्त्या मुख्यं प्रमाणम्। तथापि कविप्रसिद्धेः प्रबलाया विद्यमानत्वान्न दुष्टत्वम्।

## सुधासागरः

समयात्' इति तद् रिक्तं वचः, न हि श्रीवृत्तिकारैः कविप्रसिद्धेर्बलवत्त्वदर्शनायोपपरिसरमित्युदाहृतं किन्तु कविप्रसिद्धिविरोधदर्शनायैव। न च पूर्वोदाहरणेन गतार्थता शङ्क्या, उदाहरणयोर्भेदस्य प्रतिपादितत्वात्। कथमन्यथाऽग्रे सुसितवसनेत्युदाहरणं सङ्गच्छेत। तस्मान्महामहोपाध्यायानां प्रदीपकाराणाम् ईर्ष्यामात्रमत्रावशिष्यते। न हि गीर्वाणगुरवोऽपि श्रीवाग्देवतावतारोक्तिमाक्षेप्तुं प्रभवन्ति किं पुनर्मानुषा मशकाः। सुष्ठूक्तं खलु देवनाथतर्कपञ्चाननैः—

य एष कुरुते मनो विपदि गौरवीणां गिरां
स वामन इवाम्बरे हरिणलाञ्छनं वाञ्छति।
लिलङ्घिषति सिंहिकारमणकेसरं फेरुवत्
पतङ्ग इव पावकं नृहरिमावकं धावति ॥ इति।

दूषकताबीजं च विरोधादर्थाप्रतीतिः। उत्पातादिना तत्प्रतीतावदोषः।

लोकविरुद्धस्य कविप्रसिद्धत्वेन न विरुद्धत्वमिति दर्शयति—'सुसिते'-'ति।

हरिणीछन्दः। हे राजन् कदाचन कौमुदी ज्योत्स्ना महस्तेजो यस्य तस्मिन् चन्द्रे सति सुसितानि अत्यन्तधवलानि वसनानि अलङ्काराश्च यस्यास्तथाभूतायां सुदृशि मृगनयनायां स्वैरं यान्त्यामभिसरन्त्यां विधुरस्तङ्गतोऽभूत्। तदनु केनापि भवतः कीर्त्तिरगीयत, येन हेतुना साऽभिसारिका मुक्ताशङ्कं निःशङ्कं यथा स्यात्तथा प्रियगृहमगात्। युक्तोऽयमर्थः। क्व नासि शुभप्रदः त्वं सर्वत्र सुखदोऽसीत्यर्थः।

१०. सदा स्नात्वा निशीथिन्यां सकलं वासरं बुधः ।
नानाविधानि शस्त्राणि व्याचष्टे च शृणोति च ॥

अत्र ग्रहोपरागादिकं विना रात्रौ स्नानं धर्मशास्त्रेण विरुद्धम् ।

अनन्यसदृशं यस्य बलं बाह्वोः समीक्ष्यते ।
षाड्गुण्यानुसृतिस्तस्य सत्यं सा निष्प्रयोजना ॥

—एतद् अर्थशास्त्रेण ।

---

## साहित्यचूडामणिः

सदेति । ग्रहोपरागं विना रात्रौ स्नानं निषिद्धम्, 'रात्रौ स्नानं न कुर्वीत राहोरन्यत्र दर्शनात्' इति स्मृतेरिति धर्मशास्त्रविरुद्धमेतत् ।

अर्थशास्त्रमान्वीक्षिकी दण्डनीतिश्च । यत्र त्रिवर्गस्य परस्परस्य विरोधादुपयोगोपदेशः सा आन्वीक्षिकी । यस्या भगवान् भार्गवः प्रणेता । यत्र पुनरर्थकामौ प्रधानं लोकानुवृत्तिमात्राय धर्मः सा दण्डनीतिः, यस्या भगवान् बृहस्पतिः ।

अनन्येति । वलते संवृणोत्यात्मानमिति बलम् । षड् गुणा एव षाड्गुण्यं सन्धिर्विग्रहो यानमासनं द्वैधीभावः समाश्रयश्च, तस्यानुसृतिरनुसरणं निष्कलेत्येतदर्थशास्त्रविरुद्धम् । यदाह वामनः—'अहङ्कारेण जीयन्तो द्विषन्तः किं तया श्रिया' इत्यादौ यद् द्विषज्जयस्य नयमूलत्वं स्थितं दण्डनीतौ तद्विरोधादर्थशास्त्रविरुद्धमि'ति ।

## सुधासागरः

अत्रामूर्त्तोपीत्यादि । यत्र लोकस्य कवेश्च प्रसिद्ध्योर्विरोधस्तत्र कविप्रसिद्धेर्बलवत्त्वमिति भावः । एवमकीर्त्यादेर्मालिन्यादौ द्रष्टव्यम् ।

विद्याविरुद्धमुदाहरति—'सदा स्नात्वे'-ति । स्पष्टम् ।

ग्रहोपरागादिकं विनेति । धर्मशास्त्रं स्मृतिः । तया प्रतिषेधो यथा शातातपः—

स्नानं दानं तथा श्राद्धमनन्तं राहुदर्शने ।
आसुरी रात्रिरन्यत्र तस्मात्तां परिवर्जयेत् ॥ इति ।

आदिपदाज्जातकर्मान्तेष्ट्यादि ग्राह्यम् ।

अर्थशास्त्रेण विरुद्धमुदाहरति—'अनन्ये'-ति ।

सन्धिविग्रहयानासनद्वैधसंश्रयाः षड् गुणाः, त एव षाड्गुण्यम् । स्वार्थे ष्यञ् । स्पष्टमन्यत् । एतदर्थशास्त्रेणेति । महाबलस्यापि सन्ध्यादिषड्गुणानुसरणमर्थशास्त्रेण विहितमिति तद्विरोध इत्यर्थः ।

विधाय दूरे केयूरमनङ्गाङ्गण[1]मङ्गना।
बभार कान्तेन कृतां करजोल्लेखमालिकाम्॥

—अत्र केयूरपदे नखक्षतं न विहितमित्येतत् कामशास्त्रेण।

अष्टाङ्गयोगपरिशीलनकीलनेन
दुःसाधसिद्धिसविधं विदधद् विदूरे।

## साहित्यचूडामणिः

अनङ्गाङ्कनं[1] मन्मथस्य चिह्नभूतम्, करजोल्लेखो नखक्षतम्। केयूरस्थाने नखक्षतं न विहितम्, यदाहुः—

कक्षाकरोरुजघनस्तनपार्श्वपृष्ठहृत्कन्धरासु नखराः खरवेगयोः स्युः।
अप्यन्ययोर्नृप रते कलहे च शान्ते पुष्पे मदे प्रवसने विरहे च योज्याः॥ इति।

अष्टाङ्गेति। योगेति। 'योगश्चित्तवृत्तिनिरोध' इत्युक्तम्। तस्य चाष्टावङ्गानि। तदनुष्ठानान्मोक्षः उक्तंहि—'योगाङ्गानामनुष्ठानादशुद्धिक्षये ज्ञानदीप्तिराविवेकख्यातेरि'ति। 'यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानी'ति च। एवमष्टाङ्गस्य योगस्य परिशीलनमभ्यासः' तस्य कीलनेन दृढभूमितापादनेन दुस्साधा सिद्धिर्मोक्षः, अणिमादीनां क्षुद्रसिद्धित्वात्, तस्याः सविधः प्रत्यासन्नो योगः यः असम्प्रज्ञात इत्याम्नायते तं विदूरे विदधत् अनपेक्षमाणः। विवेकख्यातिः प्रकृत्यादेः पुरुषेश्वरयोरन्यत्वप्रतिपत्तिः या वैराग्यहेतुः। उक्तं च—विवेकख्यातिरविद्याहानोपाय' इति। एवञ्च कश्चित् समाधिधनानां मौलिमणिर्योगिश्रेष्ठो मुक्तोऽभूदिति।

दोषशेषमुन्मेषयति—विवेकख्यातिरिति।

योगो हि द्विधा संप्रज्ञातोऽसंप्रज्ञातश्च। तत्र 'वितर्कविचारानन्दास्मितााद्यनुगमात् संप्रज्ञातः' 'विरामप्रत्ययाभ्यासपूर्वकः संस्कारविशेषोऽसंप्रज्ञातः'। [यो. सू. १]।

## सुधासागरः

कामशास्त्रविरुद्धमुदाहरति—'विधाये'-ति।

अनङ्गाङ्गणे कन्दर्पविलासस्थानरूपाङ्गना केयूरं दूरे विधाय दूरीकृत्य कान्तेन भर्त्रा कृतां करजानां नखानामुल्लेखः क्षतानि तेषां मालिकां पङ्क्तिं बभार दधावित्यर्थः। केयूरपदे नखक्षतं न विहितमिति। 'स्तने नखक्षतं प्रोक्तं जघनेऽपि क्वचिद् भवेत्' इति कामशास्त्रेण विधानादर्थतः शेषेषु प्रतिषेधादिति भावः।

योगशास्त्रविरुद्धमुदाहरति—'अष्टाङ्गे'-ति।

वसन्ततिलका छन्दः। समाधिश्चित्तवृत्तिनिरोधः, स एव धनं येषां ते समाधिधनाः योगिनस्तेषां मौलिमणिः शिरोमणिः प्रसिद्धो योगी।

[1] अनङ्गाङ्कनम् इति सा० चू०।

आसादयन्नभिमतामधुना विवेक-
ख्यातिं समाधिधनमौलिमणिर्विमुक्तः ॥

–अत्र विवेकख्यातिस्ततः सम्प्रज्ञातः समाधिः, पश्चादसंप्रज्ञातस्ततो मुक्तिर्न तु विवेकख्यातौ । एतद् योगशास्त्रेण ।

एवं विद्यान्तरैरपि विरुद्धमुदाहार्यम् ।

---

## साहित्यचूडामणिः

ऐकाग्र्याद् भूततन्मात्रविश्वमात्रस्वरूपगाः[१] ।
वितर्काद्या[२] धियोऽक्षार्थाः संप्रज्ञाताख्ययोजिताः ।
परवैराग्यजाभ्यासपूर्वः संस्कृतिमात्रकः ।
अस्तवृत्तितया योगस्त्वसंप्रज्ञात इष्यते ॥ इत्यन्तरश्लोकौ ।

तत्र पूर्वं संप्रज्ञातः, ततो विवेकख्यातिः, पदसंप्रज्ञातः, ततो मुक्तिरिति क्रमः । एतद्वैपरीत्यादस्य योगशास्त्रविरुद्धत्वमित्यलमलौकिकार्थसमर्थनेन । एवमिति भरतकलाविरोधो यथा -

रणद्भिराघट्टनया नभस्वतः पृथग्विभिन्नश्रुतिमण्डलैः स्वरैः ।

इत्यादौ । आनुलोम्येन प्रातिलोम्येन वा नभस्वत्संचारे क्रमेण स्वरा उत्पद्यन्ते, न पुनर्वैचित्र्येणेति कुतो रागसम्बन्धिनीनामन्तर्वर्णानां मूर्च्छनानां स्फुटीभावः ।

पत्रकलाविरोधो यथा—'कालिङ्गं लिखितमिदं वयस्य पत्रं पत्राङ्करपतितकोटिकण्टकाग्रि ।'—इति

## सुधासागरः

'यमश्च नियमश्चैवमासनं प्राणसंयमः ।
प्रत्याहारो धारणा च ध्यानं चैव समाधियुक् ।
एतानि कथितान्यष्टौ योगाङ्गानि मनीषिभिः' ॥

इत्यष्टाङ्गयोगस्य परिशीलनं मुहुराचरणं ततः कीलनमभ्यासदार्ढ्यं तेन, दुःसाधाः दुःसाध्याः सिद्धयोऽणिमादयस्तासां सविधं सान्निद्ध्यं, विदूरे विदधत् दूरीकुर्वन् अभिमतामभीष्टां विवेकख्यातिं प्रकृतिपुरुषयोर्भिन्नत्वज्ञानरूपामासादयन् प्राप्नुवन् अधुना साम्प्रतं विमुक्तो मुक्तिं गत इत्यर्थः ।

विवेकख्यातिरित्यादि । अत्र मुक्तिसमीपस्थमसम्प्रज्ञातयोगमनपेक्ष्यैव मोक्षो योगशास्त्रेण विरुद्धः । तथाहि—प्रथमं विवेकख्यातिः प्रकृतिपुरुषो भिन्नत्वज्ञानरूपा, ततो वितर्कविचाराद्यनुसारिरूपः सम्प्रज्ञातयोगः, पश्चात्पुरुषमात्रावलम्बनस्वरूपोऽसम्प्रज्ञातयोगः, ततो मुक्तिः, न तु विवेकख्यातिमात्रत एवेति हि योगशास्त्रम् । तद्विरुद्धोऽर्थ इति भावः ।

---

[१] मूले 'भूततन्मात्रकराणां स्वरूपगा' इत्येतावानेव पाठः ।

[२] 'वितर्काद्यो' इति मुद्रितः पाठः ।

११. प्राप्ताः श्रियः सकलकामदुघास्ततः किं
दत्तं पदं शिरसि विद्विषतां ततः किम् ।
सन्तर्पिताः प्रणयिनो विभवैस्ततः किं
कल्पं स्थितं तनुभृतां तनुभिस्ततः किम् ॥
—अत्र ततः किमिति न नवीकृतम् । तत्तु यथा—
यदि दहत्यनलोऽत्र किमद्भुतं यदि च गौरवमद्रिषु किं ततः ।
लवणमम्बु सदैव महोदधेः प्रकृतिरेव सतामविषादिता ॥
१२. यत्रानुल्लिखितार्थमेव निखिलं निर्माणमेतद् विधे-
रुत्कर्षप्रतियोगिकल्पनमपि न्यक्कारकोटिः परा ।

---

साहित्यचूडामणिः

'कालिङ्गं पतितासिकण्टकमि'ति हि पत्रविदाम्नायः ।

अनवीकृतमिति । 'ततः किमि'त्यस्य पर्युषितप्रतीतिकृत्तया चमत्कारशून्यत्वात् ।

तत्त्विति । दोषस्य प्रत्युदाहरणं नवीकृतं यथा—'किमद्भुतं' 'किं ततः' 'सदैव प्रकृतिरेवे'ति नवीकारः ।

सनियमादनियमाद् विशेषादविशेषाच्च परिवृत्ता विपर्यस्ताश्चत्वारोऽर्था दुष्टाः ।

यत्रेति विषये । अन्यत्र भावो विषयार्थः । विधेर्निर्माणं लोकसर्गः । अनुल्लिखितं विषयावगाहनविमुखम् अक्षि लोचनं यत्र । मध्याह्नमार्तण्डावलोकनन्यायेन तरलित-

सुधासागरः

एवं विद्यान्तरैरिति । गजतुरङ्गखड्गादिलक्षणशास्त्रैरपि विरुद्धमेवंरीत्या स्वयमूहनीयम्, ग्रन्थकृता विस्तरभिया नोदाहृतमिति भावः ।

'अनवीकृतः' भङ्ग्यन्तरेण यन्नवत्वं तन्न प्रापितः, एकभङ्गिनिर्दिष्टोऽनेकार्थ इत्यर्थः । तदुदाहरति—'प्राप्ता' इति ।

वसन्ततिलका छन्दः । तत्त्वज्ञानं विना सर्वमकिञ्चित्करमिति भावः । अत्रेति । सर्वेष्वप्येषु ततः किमित्येकैव भङ्गिः भङ्ग्यन्तराभावान्न नवीकृतमित्यर्थः । अथैष कथितपदे एवान्तर्भविष्यतीति चेन्न, पर्यायान्तरप्रयोगेऽपि भङ्गेरकरूपतायामसाङ्कर्यात् ।

ननु नवीकृतं कीदृक् इत्याह—तत्तु यथेत्यादि । द्रुतविलम्बितवृत्तम् । सतां साधूनामविषादिता प्रकृतिः स्वाभाविक्येवेति नाश्चर्याय । दृष्टान्तत्रयमाह—यदि दहतीत्यादि । अत्र ततः किमित्यादिना किमद्भुतमित्यादि नवीकृतम् । पारुष्येणाशक्तिप्रकाशनेन वा सहृदयोद्वेजकत्वं दूषकताबीजमिति नित्योऽयम् ।

सनियमादिभिश्चतुर्भिः परिवृत्तपदान्वयात्सनियमपरिवृत्तादिचतुष्टयं लभ्यते । परिवृत्तिश्च सनियमानियमयोर्विशेषाविशेषयोश्च । अविशेषः सामान्यम् । तत्र सनियमपरिवृत्तः सनियमत्वेन वक्तुमुचितोऽनियमत्वेनोक्तः । न च न्यूनपदत्वेऽनभिहित-

याताः प्राणभृतां मनोरथगतीरुल्लङ्घ्य यत्संपद-
स्तस्याभासमणीकृताश्मसु मणेरश्मत्वमेवोचितम् ॥

—अत्र 'छायामात्रमणीकृताश्मसु मणेस्तस्याश्मतैवोचिता इति' सनियमत्वं वाच्यम् ।

---

## साहित्यचूडामणिः

बहलमरीचिनिचयखचितचाकचाक्यं माणिक्यमेतदुत्कृष्टमिति निश्चेतुमशक्यं स्वान्यविभावशून्यं दुर्निरीक्ष्यमिति यावत् । यत्र चोत्कर्षस्य त्रासराहित्यादाभिजात्यस्वभावस्य यत् प्रतियोगि प्रतिसम्बन्धि कौस्तुभस्यमन्तकादिमाणिक्यान्तरं तस्य कल्पनमुत्प्रेक्षामात्रेण संभावनमपि परा न्यक्कारकोटिः अवज्ञापात्रत्वतारतम्यविश्रान्तिभूमिः । यस्य मङ्गल्यत्वप्रभाबहुलत्वमूल्यमहत्त्वादयः सर्वेषां जन्तूनां या बहुमुखप्रसाराणां मनोरथानां गतयो निर्यन्त्रणाः प्रवृत्तयः ता उल्लङ्घ्यातिक्रम्य याताः अनुपभोग्यतया अलोकप्रायाः संवृत्ताः, तस्य सर्वाकारेण लोकोत्तरस्य मणेः 'धिक् सामान्यमचेतनं प्रभुमिवानामृष्टतत्त्वान्तरमि'-ति नीत्या मणित्वसामान्यानुप्रवेशपीडितस्येति । आभासमणीकृताश्मस्विति । अमणयो मणयः कर्त्रा विधात्रा कथं मणीकृताः आभासेनास्फुटेन स्फुरणेन वस्तुतश्चमत्कारशून्यत्वात् । अत एवाश्मानः शिलाशकलानि । तेष्विति निर्धारणे सप्तमी । विधेयाविमर्शोऽप्यत्र सम्भवी, अश्मसमशीर्षिकासुखादुत्कर्षालाभेन ।

पाठप्रतिसंस्कारद्वारा नियन्तव्यमंशं विशदयति—छायामात्रेति । वर्णनीयस्य मणेरुत्कर्षो हि तद्व्यतिरिक्तानामाभासान्मणीनामपकर्षाधीनः । अपकर्षश्च छायामात्रेण मणीकृतत्वात् न पुनर्वस्तुत इति नियन्तव्यत्वमर्थस्य । अतएवाह—सनियमार्थत्वं वाच्यमिति । मात्रग्रहणेन भाव्यमिति भावः ।

## सुधासागरः

वाच्यत्वे वाऽनुप्रवेशः, तादृशेऽर्थे विवक्षिते तयोरवकाशात् अविवक्षिते त्वेतत् प्रसरति । अत एवायमर्थदोषः । विवक्षितमात्रस्य पदान्तरेणाप्युपस्थितौ तस्य तादवस्थ्यात् । एवमितरेषामप्यूह्यम् । यत्तु—'अर्थत्वेन विशेषणं समाधानम्' इति, तन्न । न्यूनपदादिषु त्रिषु त्रयाणां सङ्करप्रसङ्गात् ।

चण्डीदासस्तु 'शब्दोच्चारणानन्तरमेव यत्प्रतिभासः स शब्ददोषः यस्य त्वर्थप्रत्ययानन्तरं सोऽर्थदोषः । अत एवानभिहितवाच्याद् भिद्यते' इत्याह । तच्चायुक्तम् । व्यभिचाराच्छब्दार्थविभागस्यासङ्गतत्वात् । एतदुदाहरति—'यत्रे'-ति ।

शार्दूलविक्रीडितं छन्दः । यत्र मणौ सति निखिलमेतद्विधेर्निर्माणं सर्वमपि ब्रह्मणः सृष्टिकौशलम्, अनुल्लिखितोऽनिर्दिष्टोऽर्थः प्रयोजनं यस्य तथाभूतं निरर्थकमेवेत्यर्थः । अनुल्लिखिताख्यमिति पाठेऽनिर्दिष्टनामकं, न खलु तादृशं किञ्चिदस्ति यस्य नाम्ना स मणिर्व्यपदिश्येतेत्यर्थः । किञ्च यत्र मणावुत्कर्षप्रतियोगिकल्पनमपि

१३. वक्त्राम्भोजं सरस्वत्यधिवसति सदा शोण एवाधरस्ते
बाहुः काकुत्स्थवीर्यस्मृतिकरणपटुर्दक्षिणस्ते समुद्रः।
वाहिन्यः पार्श्वमेताः क्षणमपि भवतो नैव मुञ्चन्त्यभीक्ष्णं
स्वच्छेऽन्तर्मानसेऽस्मिन् कथमवनिपते, तेऽम्बुपानाभिलाषः ॥
—अत्र शोण एव इति नियमो न वाच्यः।

---

## साहित्यचूडामणिः

वक्त्रेति। सरस्वती वाक् नदीविशेषश्च। शोणः पाटलः हिरण्यबाहुनामा नद-विशेषश्च। वाहिन्यः सेनाः नद्यश्च। मानसं चित्तं सरोविशेषश्च।

नियमो न वाच्य इति। राजावयववर्णने नदीप्रसङ्गे वा नियन्तव्यस्या-भावात्, पाटल एवाधरः न श्वेतः कृष्णो वा, शोणाख्यो नद एव न पुनर्नदनद्यन्तर-मिति हि नियमः। उभयथाप्यनौचित्याद् ग्राम्यत्वस्य विरुद्धत्वस्य च प्रसङ्गात्। तस्मान्नियमेऽवाच्ये तद्व्यतिरेको दोषः। न चैतदधिकपदमात्रम् आधिक्यादुपरि दोषान्तरस्योल्लिख्यमानत्वात्।

## सुधासागरः

परा न्यक्कारकोटिः,अमुकस्येवेयं शोभेति कथनं तिरस्कारस्य परा काष्ठेत्यर्थः। यत्सम्पदः यस्य मणेर्गुणधनादिसम्पत्तयः प्राणभृतां शरीरिणां मनोरथगतीरभिलाषसञ्चारानु-लङ्घ्यातिक्रम्य याताः, प्राणिनां मनोगोचरा अपि न भवन्तीत्यर्थः। तस्य मणेः आभासेन मणीकृता अमणयोऽपि मणित्वेन कल्पिता येऽश्मानस्तेष्वश्मत्वमेवो-चितम्। मणिसमानपतितस्य पाषाणत्वमेवोचितं न मणित्वम्, चिन्तामणेः प्रकृत-मणिगणनायां गणनमनुचितमिति भावः।

अत्र छायामात्रेत्यादि। अत्रान्यापदेशे आभासमात्रेण मणीकृतेष्विति वाच्यम्, गुणान्तरव्यावर्त्तनेन निन्दातिशयप्रतीतेः। अनियमे न तु निन्दनीयानां गुणान्तर-व्यवच्छेदप्रत्ययः। तस्मात् 'छायामात्रमणीकृताश्मसु मणेस्तस्याश्मतैवोचिता' इति पठनीयमित्यर्थः। अव्युत्पन्नमुन्नयनेन वैमुख्याधायकत्वमेव दुष्टिबीजम्। नित्यदोषोऽयम्।

अनियमपरिवृत्तमुदाहरति—'वक्त्रे'-ति।

स्रग्धरा छन्दः। हे अवनिपते राजन् सरस्वती भारती, पक्षे नदीविशेषः सदा ते वक्त्राम्भोजं 'अधिशीङ्स्थासां कर्म' इत्याधारस्य कर्मत्वम्, अधिवसति। तेऽधरः शोणः रक्त एव पक्षे नदः, ते बाहुः काकुत्स्थवीर्यस्मृतिकरणपटुः, सादृश्यात् सेतु-बन्धनाच्चेति भावः। दक्षिणो दानदक्षः सव्येतरो वा, पक्षे दक्षिणदेशस्थः। समुद्रः मुद्रा अङ्गुलीयकं तत्सहितः पक्षे सागरः। भवतः वाहिन्यो युष्मत्सेना पक्षे नद्यः, अभीक्ष्णं निरन्तरं क्षणमपि नैव मुञ्चन्ति न त्यजन्ति, स्वच्छे पवित्रे निर्मले

१४. श्यामां श्यामलिमानमानयत भोः, सान्द्रैर्मसीकूर्चकैः
मन्त्रं तन्त्रमथ प्रयुज्य हरत श्वेतोत्पलानां श्रियम् ।
चन्द्रं चूर्णयत क्षणाच्च कणशः कृत्वा शिलापट्टके
येन द्रष्टुमहं क्षमे दश दिशस्तद्वक्त्रमुद्राङ्किताः ॥

—अत्र 'ज्यौत्स्नीम्' इति श्यामाविशेषो वाच्यः ।

१५. कल्लोलवेल्लितदृषत्परुषप्रहारै
रत्नान्यमूनि मकरालय, मावमंस्थाः ।

---

## साहित्यचूडामणिः

श्यामामिति । श्यामायाः श्यामलिमा न कश्चिदानेतव्यः, कृतस्य करणायोगात् । ज्यौत्स्नीमिति तूच्यमाने श्यामलीकरणमपेक्षितं स्यात् ।

कल्लोलेति । 'अतिपरिचयादवज्ञे'ति नीत्या प्राचीनपरिजनावमानप्रवृत्तं प्रभुं प्रत्यप्रस्तुतप्रशंसा ।

## सुधासागरः

चास्मिन् मानसे मनसि सरसि अन्तः अभ्यन्तरे कथमम्बुपानाभिलाष इत्यर्थः ।

अत्र शोण एवेति नियमो न वाच्य इति । वैयर्थ्यात् । प्रत्युतान्यजलाशयानात्मकत्वप्रतीतौ पिपासाऽनौचित्यातिशयाप्रतीतेरिति भावः । अधिकपदभेदो दूषकताबीजं च पूर्ववत् ।

विशेषपरिवृत्तमुदाहरति—'श्यामे'-ति ।

शार्दूलविक्रीडितं छन्दः । भोः परिजनाः सान्द्रैः सघनैः मषी अक्षरसाधनं कज्जलप्रधानं द्रवद्रव्यं तस्य कूर्चकैस्तृणविशेषकल्पितैर्लेपसाधनैः श्यामां रात्रिं श्यामलिमानं श्यामतामानयत । अथानन्तरं तन्त्रं शास्त्रं वैद्यकादि मन्त्रं नानाप्रकारकं च प्रयुज्य श्वेतोत्पलानां स्मितं विकसितं हरत, चन्द्रं च शिलापट्टके विपुलपाषाणफलके कणशः कृत्वा क्षणाच्चूर्णयत । येन हेतुनाऽहं तस्याः प्रेयस्या वक्त्रमेव मुद्रा तयाङ्किता दश दिशो द्रष्टुं क्षमे अवलोकयितुं शक्नोमीत्यर्थः ।

अत्र ज्यौत्स्नीमिति श्यामाविशेषो वाच्य इति । श्यामाया निशासामान्यवाचितया कृष्णपक्षनिशाया अपि लाभात् । तत्र च श्यामत्वविधानस्यायुक्तत्वाद्दग्धदहनन्यायप्राप्तेरभावाद् विध्यनुरोधवैषम्यापत्तेरिति भावः । उक्तं च प्रदीपकारैः—'अत्र ज्यौत्स्नीमिति रात्रिविशेषो वाच्यः, अपरविशेषस्य स्वत एव श्यामत्वात्तत्राकाङ्क्षाविरहात् इति । इदमेवात्र दूषकताबीजम् । अन्यत्र विरोधादिकमपि दुष्टिबीजं द्रष्टव्यम् । विशेषनियामकप्रकरणादिसत्त्वे त्वदोषता ।

सामान्यपरिवृत्तमुदाहरति—'कल्लोले'-ति ।

हे मकरालय वारिधे ! कल्लोलैस्तरङ्गैर्वेल्लितानां दृषदां पाषाणानां परुषैः कर्कशैः प्रहारैरमूनि रत्नानि माऽवमंस्थाः मा तिरस्कुरु नाम प्रसिद्धौ कौस्तुभेन पुरुषो-

किं कौस्तुभेन विहितो भवतो न नाम
याच्ञाप्रसारितकरः पुरुषोत्तमोऽपि ॥

—अत्र, 'एकेन किं न विहितो भवतः स नाम' इति सामान्यं वाच्यम् ।

१६. अर्थित्वे प्रकटीकृतेऽपि न फलप्राप्तिः प्रभोः प्रत्युत
द्रुह्यन् दाशरथिर्विरुद्धचरितो युक्तस्तया कन्यया ।

---

## साहित्यचूडामणिः

सामान्यं वाच्यमिति । विशेषो न वाच्यः, योऽयं कौस्तुभो नाम प्रातिस्विकः पुरुषोत्तमस्योपहारः कृतोऽभूत् तद्व्यतिरिक्तानां दृषत्परुषप्रहारैरवमत्यनुज्ञाया अभ्युपगमप्रसङ्गात् । यतो विशेषनिषेधे शेषाभ्यनुज्ञानम् । योहि सामान्यात्मतया वक्तुमुपक्रान्तः तस्य विशेषाभिधायी शब्दः सम्यग्वाचकतां प्रतिपद्यत इति यावत् । 'एकेन किं न विहित' इत्युक्तौ तु व्यक्तिनिर्देशस्तन्निर्धारणानुक्तिश्चेति रत्नसामान्यावमानपरिहारौचित्यम् ।

स्त्रीरत्नमिति । अमर्षणो रावणः स्त्रीरत्नमुपेक्षितुं कथं मन्यत इति विवक्षा । न चैतद् न्यूनपदम्, अध्याहारनिरपेक्षान्विततया वाक्यस्य पूर्णत्वात् । इयत्

## सुधासागरः

त्तमः, श्रीकृष्णोऽपि पुरुषश्रेष्ठश्च, याच्ञाप्रसारितः करो येन तादृशः किं न विहितः अपि तु याचकः कृत एवेत्यर्थः ।

अत्रैकेनेत्यादि । अत्र कौस्तुभेनेति विशेषतो रत्नवचनं नोचितम्, कौस्तुभमात्रस्योपकारकत्वेनान्यावमाननिषेधायोगात् । एकेन किं न भवतो विहितः स नाम' इति पाठे तु भेदानवगमाद्विवक्षितनिर्वाह इति भावः । तदनिर्वाहादिकं च दूषकताबीजमिति नित्य एवायम् । अत एव मधुमतीकारैरुक्तम्—यथाश्रुतकौस्तुभमात्रस्यान्यावमाननीयत्वप्रतीतावपि तदितराणां तथात्वे हेतुर्नोक्तः स्यात् । सामान्येन त्वभिधाने एकेन तथाकरणेऽन्येनापि तज्जातीयेन तादृक्कार्यकरणप्रतीत्याऽनादरणीयत्वाभावहेतुस्तज्जातीयत्वमेवोक्तं स्यादिति ।

श्रीवत्सलाञ्छनभट्टाचार्या अपि व्याचख्युः—वस्तुनि सत्येवोपकारकः स्यादिति वाक्यार्थोपपत्तावनन्तरं विशेषस्योपकारित्वे सामान्येषु कथमादर इति प्रतीतावनुपपत्तिनिरासायैकपदमपेक्षणीयम्, तदुपादानेन येषामेकेनोपकृतन्तदितरेष्वनादरो नोचित इति नो काचिदनुपपत्तिः । प्रतीत्यनुपपत्तिविरहेण कौस्तुभपदस्याधिक्यम्, एकपदस्य विरहेण न्यूनपदत्वं निरस्तमिति ।

'साकाङ्क्षं' सहाकाङ्क्षया वर्त्तते इतरपदार्थान्वयाय विशेषणसाकाङ्क्षम् इत्यर्थः । निर्हेतुभेदस्तु तदवसर एवोक्तः । उदाहरणम्—'अर्थित्व' इति ।

उत्कर्षञ्च परस्य मानयशसोर्विस्रंसनं चात्मनः
स्त्रीरत्नञ्च जगत्पतिर्दशमुखो देवः कथं मृष्यते ॥

—अत्र स्त्रीरत्नम् उपेक्षितुम्, इत्याकाङ्क्षति। नहि परस्येत्यनेन सम्बन्धो योग्यः।

---

## साहित्यचूडामणिः

पुनश्चिन्तनीयम्—मा तावद् दशमुखः परोत्कर्षादिकं मार्षीत्। कथमभिलषितं स्त्रीरत्नं प्रत्यमर्षौचित्यम्। तस्यामर्षणीयतामुचितयितुमुपेक्षितुमित्यर्थं वाक्यार्थ आकाङ्क्षति, न तु शब्दम्।

ननु यथा उत्कर्षः परस्य तथा स्त्रीरत्नमपि परस्येति समन्वये को दोष इत्यत्राह—नहीति। व्यवहितत्वादन्वयस्येति प्रथमो दोषः परस्येति स्त्रीरत्नसंबन्धिनः कस्यचिदनवधारितत्वादिति द्वितीयः।

## सुधासागरः

शार्दूलविक्रीडितं छन्दः। रावणदूतस्येयमुक्तिः। अर्थित्वे याचकत्वे प्रकटीकृतेऽपि प्रभो रावणस्य न फलप्राप्तिः सीतालाभः प्रत्युत द्रुह्यन् मारीचादीनभिभवन् विरुद्धचरितो यज्ञरक्षको दाशरथिस्तया कन्यया सीतया युक्तः। परस्य शत्रो रामस्य मानयशसोरुत्कर्षं च आत्मनो विस्रंसनमवमानं च, यद्वा, परस्योत्कर्षमात्मनो मानयशसोर्विस्रंसनमित्यन्वयः। स्त्रीरत्नं च जगतां पतिः दशमुखो देवो रावणः कथं मृष्यते केन प्रकारेण सहते इत्यर्थः। 'मृष तितिक्षायाम्' इति स्वरितेतो दिवादिः।

अत्र स्त्रीरत्नमुपेक्षितुमित्याकाङ्क्षतीति। अन्यथा स्त्रीरत्नस्य द्वेषायोग्यत्वे कथमित्यादिनाऽन्वयः स्यादिति भावः। अथ परस्येत्यनेन सम्बन्धान्नायोग्यतेत्याशङ्क्य निषेधति-नहीति। परस्येत्यस्य उत्कर्षेण सह जनितान्वयबोधत्वेन निराकाङ्क्षत्वात्, न चानुषङ्गः, विस्रंसनादिना व्यवधानात्। असम्बद्धव्यवाये तु वैषम्यान्नानुषज्यते इत्यभ्युपगमात्।

अत्र न्यूनपदत्वशङ्कायां न्यूनपदत्वं पुनरमर्षणक्रियोपादानान्निरस्तम्। स्त्रीरत्नमित्यत्रामर्षणक्रियायामेव तात्पर्यं न क्रियान्तरे, येन तदनुपादाने न्यूनपदता स्यात्। केवलं स्त्रीरत्नामर्षणक्रियायोग्यताघटकत्वेनोपेक्षायामपेक्षणीयत्वम्, तन्न्यूनतायां न न्यूनपदता, अन्यथा 'घटेन जलमाहर' इत्यत्र छिद्रेतरत्वानुपादाने तथा प्रसङ्गात्। तेन विशेषणविशेष्यभावान्वये क्रियाकारकान्वये वाऽमीषां यत्किञ्चिदनुपादाने एव न्यूनतेति नात्र प्रसङ्ग इति भावः। अत एव प्रदीपकारैर्व्याख्यातम्—अत्र स्त्रीरत्नमि-

१७. आज्ञा शक्रशिखामणिप्रणयिनी शास्त्राणि चक्षुर्नवं
भक्तिर्भूतपतौ पिनाकिनि पदं लङ्केति दिव्या पुरी।
उत्पत्तिर्द्रुहिणान्वये च तदहो नेदृग् वरो लभ्यते
स्याच्चेदेष न रावणः क्व नु पुनः सर्वत्र सर्वे गुणाः॥

—अत्र 'स्याच्चेदेष न रावण' इत्यत एव समाप्यम्।

---

## साहित्यचूडामणिः

अपदमुक्तमस्थानमुक्तमाह—आज्ञेति स्याच्चेदेष न रावण इति। प्रत्युत रावण एवाभूत्। यो लोकरावण इति प्रसिद्धः।

'स्याद् वपुः सुन्दरमपि श्वित्रेणैकेन दुर्भगम्' इति न्यायादशेषगुणदूषणप्रवीणमेतद्रावणत्वम् एतावत्येव समाप्यमिति। न पुनरुपरि 'क्व नु पुनरि' त्यादिरर्थान्तरन्यासः प्रयोज्यः। तथात्वे 'एको हि दोषो गुणसन्निपाते निमज्जतीन्दोः किरणेष्विवाङ्कः' इति नीत्या रावणस्यापि वरणीयतया वरणीयत्वप्रसङ्ग इत्यस्थानमुक्तत्वमार्थो दोषः। न चेदं समाप्तपुनरात्तम्। तत्रहि 'नववयोलास्याय वेणुध्वनि' रित्यस्य नानुपादेयत्वम, अपितु 'प्रेम तनोतु व' इत्यस्य प्रागेवोपादेयत्वम्, येन 'क्रेङ्कारः स्मरकार्मुकस्ये'-त्यादि कारककदम्बकं कविराख्यातेन संगृह्णन् वाक्यस्य समाप्तिशङ्कामुद्भाव्य भूयः प्रस्तुतस्मरणन्यायादेकं विशेषणमुपात्तवान्। एकानेकवाक्यप्रयुक्तश्च भेदः स्पष्टः।

## सुधासागरः

मित्यस्यार्थं उपेक्षितुमित्यस्यार्थमाकाङ्क्षति, अन्यथा 'कथं मृष्यते' इत्यनेनामर्षार्थकेनानन्वयप्रसङ्गः। नहि स्त्रीरत्ने एवामर्षः, किन्तु तदुपेक्षायाम्। न च परस्येत्येतदन्तर्भाव्य तदन्वयोऽस्त्विवति वाच्यम्, तस्य जनितान्वयबोधत्वेन निराकाङ्क्षत्वात् न चाभवन्मतयोगसङ्करः, वक्तृविवक्षितयोगस्यात्र सत्त्वात्। परन्तु विवक्षित एवार्थः साकाङ्क्षतया दुष्टः। अत एव न न्यूनपदत्वान्तर्भावः। दूषकताबीजं चाभिधानापर्यवसानमतो नित्य एवायम्।

केचित्त—स्त्रीरत्नस्य कथं मृष्यते इत्यनेनाकाङ्क्षा, तदन्वयश्च परस्येत्यन्तर्भाव्य सम्भवति, तच्च जनितान्वयबोधत्वेन निराकाङ्क्षमिति दूषणार्थः। अन्वयप्रयोजकरूपवत्त्वेनोपस्थितित्वे सत्यपर्यवसितार्थान्वयत्वं लक्षणमतोऽभवन्मतयोगाद्भेदः, तत्रान्वयप्रयोजकरूपेणानुपस्थितेः। समाप्तपुनरात्ते विशेषणस्यापर्यवसानमिह तु विशेष्यस्येति ततो भेद इत्याहुः—तद्वृत्तिविरोधादिग्रस्तमिति।

'अपदमुक्तः'। पदे स्थाने योऽमुक्तोऽत्यक्तः वाक्यार्थो यत्र समापनीयस्तत्र न समाप्त इत्यर्थः। उदाहरणम्—'आज्ञे'-ति।

शार्दूलविक्रीडितं छन्दः। शिखामणिप्रणयिनी शिरःस्थिता पदं विलासस्थानं द्रुहिणो ब्रह्मा रावणो जगदाक्रन्दनकारी। स्पष्टमन्यत्। अत्र स्याच्चेदेष न रावण

१८. श्रुतेन बुद्धिर्व्यसनेन मूर्खता मदेन नारी सलिलेन निम्नगा।
निशा शशाङ्केन धृतिः समाधिना नयेन चालङ्क्रियते नरेन्द्रता॥

–अत्र श्रुतादिभिरुत्कृष्टैः सहचरितैर्व्यसनमूर्खतयोर्निकृष्टयोर्भिन्नत्वम्।

१९. 'लग्नं रागावृताङ्ग्या' इति॥

–अत्र विदितं तेऽस्त्वित्यनेन श्रीस्तस्मादपसरतीति विरुद्धं प्रकाश्यते।

---

## साहित्यचूडामणिः

श्रुतेनेति। उत्कृष्टैरुपादेयतयोपदेष्टव्यैः श्रुतबुद्ध्यादिभिः सह निकृष्टयोः परिहार्यतया प्रतिपाद्ययोर्व्यसनमूर्खतयोर्भिन्नत्वं विजातीयत्वमिति सहचरभेदः। 'विनयेन वीरते'ति पाठः श्रेयान्। एवम् 'असारं संसारं परिमुषितरत्नं त्रिभुवनमि'त्यादौ 'मरणशरणं बान्धवजनमि'त्यत्राप्ययं दोष उन्नेयः।

## सुधासागरः

इत्यन्त एव समाप्यमिति। अयमाशयः—रामायणकथाश्रिते वीरचरिताख्यनाटके सन्त्येव बहवो गुणास्तथापि बलवानेको दोषस्तानपवदतीत्युपक्रमे रावणपुरोहितं प्रति जनकपुरोहितोक्तिरियम्। तेन चूर्णिकौचित्येन रावणं प्रत्युपेक्षा वाक्यार्थः 'स्याच्चेदेष न रावण' इत्यन्तेनैव प्राप्तः, समर्थनं नाकाङ्क्षतीति स्थानसमाप्यत्वम्। न च नहि निराकाङ्क्षविधाने शब्ददोषतेति वाच्यम्, समर्थनसहकृतेनैतद्वाक्येनान्यत्रोक्तसर्वगुणासम्भवेन रावण एवेदृशो रावणादन्य ईदृग्विधो न लभ्यत इत्यपेक्षाया वाक्यार्थोपपत्तेरनन्तरं चूर्णिकानुसन्धानेन दोषावतारात्प्रतीत्यनुपपत्तिविरहात्। न चाधिकपदत्वं तदर्थस्यान्वयित्वादिति। अत एव चक्रवर्तिप्रभृतयः प्राहुः—'स्याच्चेदेष न रावण' इत्येतावता विच्छेदे काऽपि कान्तिरनुभवसिद्धा, 'जीवत्यहो रावण' इतिवत्। सोऽयमर्थोऽत्र चेन्न त्यज्यते 'क्व नु पुनः' इत्यादिना विस्तार्यते तदा मध्यप्रवेशेनायमर्थोऽलक्षितप्रायश्चमत्कारं नावहतीत्यनुभवसिद्धमिति।

केचित्तु–प्रकृतार्थविरुद्धार्थकपदशालित्वमपदयुक्तत्वं तेनापदयुक्त इत्येव पाठं वदन्ति। अत एव प्रदीपकारैरुक्तम्—अपदयुक्तोऽपदेऽस्थाने युक्तः। यत्र तद्योगे प्रकृतविरुद्धप्रतीतिः। आज्ञा शक्रेत्यादौ जगदाक्रन्दनदायित्वादिना रावणस्य त्याज्यत्वं विवक्षितम्, तथा च 'स्याच्चेदेष न रावण' इत्यत्र 'क्व नु पुनः' इत्यादि योजितं समाधाने पर्यवस्यतीति दुष्टम्। 'उत्पत्तिर्द्विहिणान्वये च' इत्यत्र यदि योज्यते तदा विवक्षितासिद्धिरेवेत्यपदस्थपदवदस्य दोषत्वम्। न च प्रकाशितविरुद्धान्तर्भावः, स्थानविशेषयोगमनपेक्ष्य तस्य प्रवृत्तेरिति। दुष्टिबीजं च विरुद्धप्रतीतिः। अतो नित्य एवायम्।

सहचरभिन्नमुदाहरति—लक्षणन्तु समभिव्याहृतविजातीयार्थकत्वं सहचरभिन्नत्वमिति। वैजात्यं चोत्कृष्टत्वापकृष्टत्वाभ्याम्। यथा—'श्रुतेने'ति।

२०. प्रयत्नपरिबोधितः स्तुतिभिरद्य शेषे निशा-
मकेशवमपाण्डवं भुवनमद्य निःसोमकम् ।
इयं परिसमाप्यते रणकथाऽद्य दोःशालिना-
मपैतु रिपुकाननातिगुरुरद्य भारो भुवः ॥

—अत्र 'शयितः प्रयत्नेन बोध्यसे'–इति विधेयम् ।

---

## साहित्यचूडामणिः

विदितं तेऽस्त्विति यदेतत् फूत्कुर्वाणाया इव लक्ष्म्या वाक्यं, तेन ततः श्रीरपसरतीति विरुद्धं प्रकाश्यते । व्याख्यातं चैतत् । न चात्र 'श्रितक्षमा' इत्यादिवत् शब्दशक्तिमूला विरुद्धा प्रतीतिः' किन्त्वर्थसामर्थ्यनिबन्धनेति ततो भेदः ।

प्रयत्नेति । अत्र प्रबोधनस्यानुवाद्यत्वं शयनस्य विधेयत्वं चोक्तं, तदनुचितं, प्रत्युत शयितत्वमनूद्य परिबोधितत्वस्य विधेयत्वात् । यतः पाण्डवसोमकादिसकलविपक्षप्रतिक्षेपादुपलब्धनिश्चिन्तनिद्रासुखस्य तव सूतमागधादिभिर्यथा कृच्छ्रेण

## सुधासागरः

वंशस्थं वृत्तम् । श्रुतं विद्या, व्यसनं द्यूतादि, समाधिर्धर्मचिन्ता । स्पष्टमन्यत् । अत्रेत्यादि । अत्र श्रुतबुद्ध्यादिभ्य उत्कृष्टेभ्यः समभिव्याहृतेभ्यो व्यसनमूर्खतयोर्विजातीयत्वम् । उभयोरुपादेयत्वमनुपादेयत्वं वा प्रतीयते इति दूषकताबीजम् । नित्यश्चायम् ।

प्रकाशितविरुद्धः । प्रकाशितो विवक्षितार्थस्य विरुद्धोऽर्थो येन वाक्यार्थेन सः । तथा च प्रतिपादितविवक्षितार्थविरोधिव्यञ्जकार्थकत्वं प्रकाशितविरुद्धत्वम् । सहचरभिन्ने पदार्थस्यैव तथात्वमिति ततो भेदः । उदाहरणं 'लग्नं रागे'-ति ।

व्याख्यातम् । अत्र 'विदितं तेऽस्तु' इति वाक्यार्थो 'लक्ष्मीस्ततोऽपसरति' इति विरुद्धं प्रकाशयति । इदमेव च दूषकताबीजमिति नित्यदोषोऽयम् ।

'विध्यनुवादायुक्तः'—इति सूत्रांशे विध्यनुवादपदाभ्यामयुक्तपदं प्रत्येकमन्वेति, तेन विध्ययुक्ताऽनुवादायुक्तश्चेति दोषद्वयम् । तत्र विध्ययुक्ताऽयुक्तविधिरित्यर्थः । अयुक्तत्वं च विधेयविधेयस्यैव विधेयत्वेन वा अयुक्तक्रमतया वा । तत्राद्यो यथा—'प्रयत्ने'-ति ।

अश्वत्थाम्नो दुर्योधनं प्रतीयमुक्तिः । निःसोमकं निःपाञ्चालकम्, दोःशालिनां क्षत्रियाणाम्, स्फुटमन्यत् । अत्र पाण्डवभयेनाद्यावधि तव निद्रा नाभूदेव, अद्य तु मया शमितेषु तेषु निःशङ्कतया निद्राणस्त्वं प्रयत्नेन बोध्यसे इति तात्पर्यम् । तथा च 'शयितस्त्वं प्रयत्नेन बोध्यसे' इति विधियुक्तो न तु 'शेषे' इति शयनस्य । अविमृष्ट-

यथा वा—

वाताहारतया जगद् विषधरैराश्वास्य निःशेषितं
ते ग्रस्ताः पुनरभ्रतोयकणिकातीव्रव्रतैर्बर्हिभिः ।
तेऽपि क्रूरचमूरुचर्मवसनैर्नीताः क्षयं लुब्धकै—
र्दम्भस्य स्फुरितं विदन्नपि जनो जाल्मो गुणानीहते ॥

—अत्र वाताहारादित्रयं व्युत्क्रमेण वाच्यम् ।

---

## साहित्यचूडामणिः

बोधनीयता तथा करिष्यामीति यावत् तात्पर्यम् । 'सुखेन शयितश्चिरादुषसि बोध्यसे मागधैरि'ति युक्तः पाठः । इदं शाब्दं विध्यनुवादानौचित्यम् ।

आर्थमप्याह—वातेति ।

व्युत्क्रमेण वाच्यमिति । कृष्णाजिनधारिणो डाम्भिकादनन्तरमब्भक्षस्य, ततो वायुभक्षस्य विन्यासो न्याय्यः उत्तरोत्तरमुत्कृष्टडम्भत्वात् । तेन वाताहारस्य मेघतोयकणिकातीव्रव्रतस्य चमूरुचर्मवसनस्य च व्युत्क्रमेण वाच्यत्वम् । तच्च न शक्यं,

## सुधासागरः

विधेयांशे तु युक्तस्यैव विधिः, परन्त्वविमर्षमात्रम् , अत्र त्वयुक्तस्यैव विधिरिति ततो भेदः । विवक्षितानिर्वाहोऽत्र दुष्टिबीजम् ।

यत्तु श्रीवत्सलाञ्छनभट्टाचार्यप्रमुखैरुक्तम्—ननु सुखस्वापप्रबोधात् परतोऽपि निद्रासम्भवे शयने एव विधेयतापर्याप्तिः सम्भवति, किञ्च निशां रात्रीणां शेषेऽन्ते इत्यर्थस्यापि सम्भवेन नोक्तदोष इत्यस्वरसादाह—वाताहारेतीति । तत्प्रामादिकम्, ईदृक्कष्टकल्पनायां चमत्काराभावात्, अचमत्कृतं च काव्यमेव न स्यात् । किञ्च प्रयत्नपरिबोधितो निशां शेषे इत्युक्ते निशाप्रारम्भे वैतालिकैर्बोधनं प्रतीयते, तच्चायुक्तमेव । पक्षान्तरे निःसोमकं जायते, कथा परिसमाप्यते, भारोऽपैतु इति समभिव्याहारे प्रयत्नपरिबोधित इति विधिरसङ्गतः स्यात् । द्वितीयोदाहरणे तु विध्ययुक्तत्वमयुक्तक्रमतयेति द्रष्टव्यम् ।

यथा वा—'वाताहारे'-ति ।

शार्दूलविक्रीडितं छन्दः । विषधरैः सर्पैर्वाताहारतया वायुभक्षणव्रतधारितयाऽऽश्वास्य सर्वेषां विश्वासमुत्पाद्य जगन्निःशेषितम्, जगन्निःशेषयितुमेव वाताहारत्वमाचरितमिति भावः । ते सर्पाः पुनः अभ्रतोयकणिकापानरूपं तीव्रं व्रतं येषां तादृशैर्बर्हिभिर्मयूरैर्ग्रस्ताः । सर्पान् ग्रसितुमेव अभ्रतोयकणिकापानव्रतमाचरितमिति भावः । ते बर्हिणोऽपि क्रूरं कर्कशं यच्चमूरोर्मृगस्य चर्म तदेव वसनं येषां तथाभूतैर्लुब्धकैर्व्याधैः क्षयं नीताः । बर्हिमारणायैव चर्मधारित्वताचरणमिति भावः ।

२१. अरे रामाहस्ताभरण, भसलश्रेणिशरण,
स्मरक्रीडाव्रीडाशमन, विरहिप्राणदमन।
सरोहंसोत्तंस, प्रचलदल, नीलोत्पल, सखे,
सखेदोऽहं मोहं श्लथय कथय क्वेन्दुवदना ॥

—अत्र 'विरहिप्राणदमन' इति नानुवाद्यम्।

---

## साहित्यचूडामणिः

वाच्यकद्यायां विषधरैर्जगत्पीडा विषधराणां च बर्हिभिर्निबर्हणं बर्हिणां च लुब्धकैरुपसंहार इति क्रमस्यान्यथाकर्तुमशक्यत्वात्। तस्मादचिकित्स्योऽयं दोषः। तारतम्यचिन्तायां विध्यनुवादभावस्यायुक्तत्वात्।

अथ शब्दार्थोभयाधीनमेतदाह—अरे रामेति। भसला भृङ्गाः। विरहिप्राणदमनेति नानुवाद्यं विरहिणां प्राणान् दमयसीति विधेयस्यार्थस्यौचित्यात्, प्रचलदलत्वादिवत् स्वाभाविकविशेषगुणमात्रेणोपन्यासस्यायोग्यत्वात्।

## सुधासागरः

युक्तोऽयमर्थः। जाल्मो मूर्खो दम्भः शाठ्येन धर्माचरणं तस्य स्फुरितं चेष्टितं विदन्नपि जानन्नपि गुणानीहते, दम्भिनः सकाशादभीष्टं वाञ्छतीत्यर्थः।

अत्रेत्यादि। मृगचर्मवसनं मेघतोयकणिकापानं वायुभक्षणं चेत्युत्तरं तीव्रमिति तत्क्रमेण विधिर्युक्तः। लोकप्रसिद्धक्रमलङ्घनेन श्रोतुरुद्वेगोऽत्र दुष्टिबीजमिति नित्यदोषोऽयम्। एवं चास्वरसादुदाहरणान्तरमाहेति पक्षधर–सुबुद्धिमिश्र–मुरारिमिश्र–नृसिंह–चण्डीदास–भास्करचक्रवर्त्ति–रत्नपाणि–देवनाथ,—श्रीवत्सलाञ्छन—रविभट्टाचार्य–प्रमुखैर्यत्र यत्रोक्तं तत्र तत्र तेषां प्रमाद एव, भेदस्य प्रतिपादितत्वात्। अग्रेऽपि सर्वत्रोपपादयिष्यमाणत्वात्। न खलु वाग्देवतावतारो वृत्तिकारः शिथिलमुदाहरति न वाऽनावश्यकं क्वचित् स्वप्नेऽपि वक्तीति शिष्टैर्मन्तव्यम्।

अनुवादायुक्तोऽयुक्तानुवादः। अयुक्तत्वं चात्र विध्यननुगुणत्वम्। तदुदाहरति—'अरे रामे'-ति।

शिखरिणी छन्दः। विरहिणः पुरूरवस इयमुक्तिः। भसला भ्रमराः। स्पष्टमन्यत्। अत्र 'विरहिप्राणदमन' इत्यनुवादः 'कथय क्वेन्दुवदना' इति विधिविरुद्धः। तदेव च दूषकताबीजमिति नित्यदोषोऽयम्। तदेतदाह—अत्र विरहीत्यादि।

२२. 'लग्नं रागावृताङ्ग्ये'त्यादि ॥

—अत्र 'विदितं तेऽस्तु' इत्युपसंहृतोऽपि तेनेत्यादिना पुनरुपात्तः ।

२३. हन्तुमेव प्रवृत्तस्य स्तब्धस्य विवरैषिणः ।
यथास्य जायते पातो न तथा पुनरुन्नतिः ।

—अत्र पुंव्यञ्जनस्यापि प्रतीतिः ।

---

## साहित्यचूडामणिः

त्यक्तपुनःस्वीकृतमाह—लग्नमिति । तेनेत्यादिनेति । विदितं तेऽस्त्वित्यनेन सर्ववाक्यपर्यन्तप्रयोज्येनापि मध्ये गर्भीकृतेन वाक्यार्थ उपसंहृतोऽभूत् । पुनस्तेनास्मि दत्तेत्युपात्तश्च । तेनायमर्थदोषः । एकवाक्यतायां समाप्तपुनरात्तः । भिन्नवाक्यान्तरस्य व्यक्तमयोग्यतायामपदमुक्तः । विपर्यये वाक्योपसंहारशङ्कामुत्थाप्य पुनरर्थोपन्यासे त्यक्तपुनःस्वीकृत इति विवेकः ।

पुंव्यञ्जनस्यापीति । हन्तुमेव प्रवृत्तस्येति प्रसभप्रयोगारम्भस्य, स्तब्धस्य विवरैषिण इति यन्त्रघटनस्य, यथा जायते पात इति रेतोविसर्गस्य न तथा पुनरुन्नतिरिति नष्टरागतायाश्च प्रकाशमानत्वात् । शूरस्य पुंसः श्वापदचेष्टितमनुचितमिति विवक्षितोऽर्थः । अत्र पुंव्यञ्जनस्य प्रतीतिरश्लीलत्वप्रतीतये भवतीति वाक्यार्थविषयोऽयं दोषः ।

## सुधासागरः

'त्यक्तपुनःस्वीकृतः' पूर्वं त्यक्तोऽनन्तरं पुनः स्वीकृत उपात्तः । तस्मिन्नेव वाक्यार्थे विशेषणान्तरोपादाने समाप्तपुनरात्तम् । अत्र त्वन्य एव वाक्यार्थ इति ततो भेदः । उदाहरणम्—लग्नं रागावृताङ्ग्येत्यादि । व्याख्यातमिदम् । अत्र विदितं तेऽस्त्वित्युपसंहृतो राजदोषः 'तेनास्मि दत्ता भृत्येभ्य' इत्येतावता पुनरुपात्तः । स चाप्रयोजकः, उत्प्रेक्षाया उपसंहृतेनैव निर्वाहात् । श्रीनियोगादित्यादिकं त्वदुष्टमेव, अन्यथा वाक्यैकवाक्यतोच्छेदापत्तेः । दूषकताबीजं त्वप्रयोजकत्वं सहृदयवैरस्याधानं वा । लोकेऽपि हि त्यक्तस्य भक्ष्यादेः पुनरुपादानं वैरस्यमावहति ।

हन्तुं हिंसां जघनताडनरूपप्रहारविशेषं च, कर्तुमेव प्रवृत्तस्य स्तब्धस्य निःक्रियस्य उन्नतस्य च, विवरैषिणः परदोषान्वेषिणः स्त्रीवराङ्गमध्यान्वेषिणश्च अस्य दुष्टस्य लिङ्गस्य च यथा पातोऽपचयः वीर्यपातजनितः संङ्कोचश्च जायते तथोन्नतिरुपचयो धातुप्रत्यानयनाद् दृढता च पुनर्न जायते इत्यर्थः ।

शब्दान्तरेणाप्युपादीयमानोऽयमर्थः पुंव्यञ्जनादिसाधारण्येन प्रतीतेर्व्रीडादायी । तदेतदाह—अत्रेत्यादि ।

यत्रैको दोषः प्रदर्शितस्तत्र दोषान्तराण्यपि सन्ति तथापि तेषां तत्राप्रकृतत्वात् प्रकाशनं न कृतम् ।

कर्णावतंसादिपदे कर्णादिध्वनिनिर्मितिः ।
सन्निधानादिबोधार्थम् ॥

## साहित्यचूडामणिः

एतानि दोषोदाहरणानि चायोगव्यवच्छेदमात्रेण, न पुनरन्ययोगव्यवच्छेदेनापीत्याह—यत्रैक इति । तथाहि—'अनङ्गमङ्गलगृहे'त्यादौ कार्तार्थ्यमिति श्रुतिकटु प्रथमं ग्रन्थकारेणैवोक्तम् । तद्वदस्य धातुविसृष्टिलक्षणत्वादश्लीलत्वमपि । अनङ्गस्य मङ्गलगृहमिति प्रशस्तस्मरमन्दिरप्रतीतेरप्यश्लीलत्वम् । भङ्गितरङ्गितैरिति यथा तन्वङ्गीकटाक्षाणां तारल्यम् । एवमनङ्गस्यास्थिरास्पदत्वमिति मतिविरोधकृत् । गृहापाङ्गेति पादसन्धौ श्रव्यताऽभावेन हतवृत्तत्वम् । यथा वा 'लग्नं रागावृताङ्ग्य'-त्यादि । अत्रापि तावत् कष्टो वाक्यार्थः । तत्रापि कोऽयं रागो नाम । आरुण्यं स्नेह-विशेषश्चेति चेद् उभयथाप्यावृत्तत्वं नेयार्थम्, अङ्गपदमधिकम् । आरुण्येन रुधिर-प्रतीतिश्च सुदुर्लभा । सुदृढमिहेति च पदद्वयं पादपूरणमात्रफलम्, यथैवेत्येवकारो व्यर्थः । अवैयर्थ्ये तद्वृत्तेऽपि यद्वृत्तवत् प्रयोगप्रसङ्गात् । अरिकण्ठ इत्यत्र विधेया-विमर्शोऽपि स्यात् । तत्सक्त इति विरुद्धमतिकृत् दुष्परिहरः यस्मिन् न किञ्चिद् गणकत्वं शून्यहृदयताद्योतनादुपयुज्येत । अपीहेति पुनरिह पदं व्यर्थं कथितं च । पर-पुरुषैरित्युभयथापि पुरुषपदं व्यर्थम् अवकरप्रायमिति । यथा वा 'वक्त्राम्भोज-मि'त्यादि । अत्र सदा क्षणमपि एव अभीक्ष्णमन्तरित्येतेषां नैरर्थक्यम् । स्मरण-कारितया च नतत्वलाभे दक्षिण इति पक्षे व्यर्थः । समुद्रो भुज इति लाञ्छितत्व-प्रतीतिश्च । तेऽम्बु इत्यत्र विसन्धित्वम् वाहिन्य इत्यत्र पक्षे अन्या इति नोक्तं सरस्वत्या नदीत्वात् । स्वच्छेऽन्तरित्यादौ प्रक्रमो भग्नः । अधरस्त इति दक्षिणस्त इति क्षणमपि भवतः (इति) अवनिपते ते इति युष्मद्वृत्तस्य पौनरुक्त्यं प्रक्रम-भेदश्च । अस्मिन्निति मानसस्य प्रत्यक्षतया निर्देशश्चानुचितः । वक्त्रमानसाद्य-वयवप्रसङ्गे सेनानिर्देशस्य सहचरभेदश्चेत्यलमाग्रहोन्मुख्येन । इत्थं च सर्वत्र सौलभ्येन दोषाणां प्रस्तुतमात्रोपक्षेप इति तात्पर्यम् ।

अथ दोषेषु यथासम्भवं गुणीकारोपाधिमभिधातुकामः प्रथममपुष्टार्थतया शङ्कितमदुष्टं समर्थयति—कर्णेति । कर्णादिध्वनिनिर्मितिः कर्णादिशब्दोपादानम् ।

## सुधासागरः

ननूदाहरणेषूक्तेषु किमुदाहृता एव दोषाः, तथा सत्यन्यलक्षणानां तेषु दर्शनादतिव्याप्तिः, अथ तत्र दोषान्तराण्यपि, तर्हि किमिति न प्रकाशितानीति चेत्, अप्रकृतत्वादिति । तदेतदाह—यत्रेत्यादि ।

अवतंसादीनि कर्णाद्याभरणान्येवोच्यन्ते । तत्र कर्णादिशब्दाः कर्णादिस्थितिप्रतिपत्तये । यथा—

अस्याः कर्णावतंसेन जितं सर्वं विभूषणम् ।
तथैव शोभतेऽत्यर्थमस्याः श्रवणकुण्डलम् ॥
अपूर्वमधुरामोदप्रमोदितदिशस्ततः ।
आययुर्भृङ्गमुखराः शिरःशेखरशालिनः ॥

—अत्र कर्ण–श्रवण–शिरःशब्दाः सन्निधानप्रतीत्यर्थाः ।

विदीर्णाभिमुखारातिकराले सङ्गरान्तरे ।
धनुर्ज्याकिणचिह्नेन दोष्णा विस्फुरितं तव ॥

—अत्र धनुःशब्द आरूढत्वावगतये । गतार्थमदुष्ट

---

## साहित्यचूडामणिः

अस्या इति । अत्र विशेषणत्रयं गतार्थमदुष्टमिति भावः ।

युक्तिं दर्शयति—कर्णश्रवणशिरःशब्दा इति । यथाह—कर्णावतंसश्रवण कुण्डलशिरःशेखरेषु कर्णादिनिर्देशः 'सन्निधेरि'ति । प्रतिपत्तय इति सम्बन्धः । नहि तन्निर्देशमन्तरेण तत्सन्निहितानामवतंसादीनां युक्ता प्रतिपत्तिः ।

धनुर्ज्येत्यत्र धनुष्पदं तस्या आरूढत्वप्रतिपत्तये । धनुर्ज्याध्वनौ धनुःश्रुति-

## सुधासागरः

अथैषां यथासम्भवमदोषत्वे प्रतिपादयितव्येऽर्थदोषाणां सन्निधानात् प्रथममर्थदोषस्यैव तत् प्रतिपादयति—'कर्णावतंसे'-ति ।

अवतंसादिपदैर्जात्यादिपुरस्कारेण कर्णाभरणादीन्येवोच्यन्ते इत्यर्थतः प्राप्तौ कर्णपदादीनां यद्यप्यपुष्टार्थत्वं पुनरुक्तत्वं वा युज्यते, तथापि क्वचित् कर्णेऽवतंस इत्यादिव्युत्पत्त्या क्वचिल्लक्षणादिना च कर्णस्थित्यादिरूपस्याधिकस्य विवक्षितार्थस्य प्रतिपत्तेरदोषत्वम् । उदाहरति 'यथा तस्या' इति । स्पष्टम् ।

अत्रावतंसस्य कर्णस्थित्यवस्था कर्णपदोपादानेनावगम्यते । तदवगत्या किं प्रयोजनमिति, चेत्, वर्णनीयोत्कर्षः । कथमिति चेत्, न स्वरूपतोऽस्य विभूषणजेतृत्वम्, किन्तु तत्कर्णावस्थित्येति पर्यवसानात् । एवं श्रवणकुण्डलपदेऽप्यूह्यम् ।

न केवलं कर्णश्रवणपदयोरेवायं महिमा, किं त्वन्येषामपि । यथा–अपूर्वेत्यादि । स्पष्टम् । अत्र शिरःपदोपादाने शेखरस्वाम्यमात्रं लभ्यते न तु तदलङ्कृतत्वम् । तथा च तत्प्रतीतेरदोषत्वम् । तदाह–अत्रेति । क्रमेणोदाहरणेष्वित्यर्थः । 'विदीर्णे'-ति ।

अन्यत्र तु—

ज्याबन्धनिष्पन्दभुजेन यस्य विनिःश्वसद्वक्त्रपरम्परेण ।
कारागृहे निर्जितवासवेन लङ्केश्वरेणोषितमाप्रसादात् ॥

—इत्यत्र केवलो ज्याशब्दः ।

प्राणेश्वरपरिष्वङ्गविभ्रमप्रतिपत्तिभिः ।
मुक्ताहारेण लसता हसतीव स्तनद्वयम् ॥

—अत्र मुक्तानामन्यरत्नामिश्रितत्वबोधनाय मुक्ताशब्दः ।

सौन्दर्यसम्पत् तारुण्यं यस्यास्ते ते च विभ्रमाः ।
षट्पदान् पुष्पमालेव कान् नाकर्षति सा सखे ॥

## साहित्यचूडामणिः

रारूढेः 'प्रतिपत्त्यै' इत्युक्तत्वात् । अन्यत्र त्विति । आरूढत्वाभावे । केवलो ज्याशब्द इति । बन्धनं प्रति मौर्व्या एवोपयोगः न धनुष्काण्डस्यापि ।

अन्यरत्नेति । अन्यैः पद्मरागादिभिर्मणिभिर्यदिदमभिश्रणमसङ्कीर्णत्वं तद्बोधनाय । यदाह 'मुक्ताहारे मुक्ताशब्दः शुद्धे' इति ।

उत्कृष्टेति । उत्कृष्टानां पुष्पाणां धिये संविदे । यथाह 'पुष्पमालाशब्दे पुष्पपदमुत्कर्षाय' । ननु मालाशब्दोऽन्यत्रापि वर्तते रत्नमाला शब्दमालेति चेत् तत्राह— निरुपपद इति । मालाशब्दः पुष्पविषय एव मुख्यः । अन्यत्र त्वौपचारिक इति भावः । एवं करिकलभशब्दस्ताद्रूप्यप्रतिपत्तय इत्यादि मन्तव्यम् । यथा ममैव—

## सुधासागरः

विदीर्णा येऽभिमुखागता अरातयस्तैः कराले भयङ्करे सङ्गरान्तरे सङ्ग्राममध्ये तव धनुर्ज्यायाः किणचिह्नं प्ररूढव्रणलिङ्गं यस्मिन् तादृशेन दोष्णा बाहुना विस्फूर्जितं सम्यक् चेष्टितमित्यर्थः ।

अत्रेति । अत्र धनुःशब्दो ज्याया आरूढत्वप्रतिपादनाय, तच्च किणस्य प्रहारकृतत्वप्रतिपत्तये इति भावः । यत्र त्वारूढत्वं तत्प्रतीतिप्रयोजनं वा नास्ति तत्र न धनुःशब्दोपादानमपीति दर्शयति अन्यत्रेति । ज्याबन्धेत्यादि उपजातिश्छन्दः । यस्य कार्त्तवीर्यस्य । स्पष्टमन्यत् । अत्र केवलो ज्याशब्दः ।

'प्राणेश्वरे-'ति । स्तनद्वयं प्राणेश्वरपरिष्वङ्गविभ्रमप्रतिपत्तिभिः प्रियालिङ्गनेन विलाससिद्धिभिर्हेतुभिर्लसता मुक्ताहारेण हसतीवेत्युत्प्रेक्षालङ्कारः ।

अत्र मुक्तानामित्यादि । हारशब्दस्य मुक्तासन्दर्भशक्तत्वेऽपि न मुक्ताशब्दवैयर्थ्यम्, अन्यरत्नामिश्रत्वप्रतिपादनेनोत्प्रेक्षायामुपयोगादिति भावः ।

—अत्रोत्कृष्टपुष्पविषये पुष्पशब्दः। निरुपपदो हि मालाशब्दः पुष्पस्रजमेवाभिधत्ते।

**स्थितेष्वेतत्समर्थनम् ॥ १०॥**

न खलु कर्णावतंसादिवज्जघनकाञ्चीत्यादि क्रियते।

जगाद मधुरां वाचं विशदाक्षरशालिनीम् ॥

--इत्यादौ क्रियाविशेषणत्वेऽपि विवक्षितार्थप्रतीतिसिद्धौ 'गतार्थस्यापि विशेष्यस्य विशेषणदानार्थं क्वचित् प्रयोगः कार्यः'—इति न युक्तम्। युक्तत्वे वा

---

## साहित्यचूडामणिः

स्वैराटोपसहिष्णु हन्त विजहौ स्वं सल्लकीनां वनं
लेभे डिण्डिभपट्टबन्धललितां लक्ष्मीं न राजाङ्गणे।
वातव्याकुलिते जरत्प्रवहणे बद्धो विघूर्णन्मुहु-
र्मध्येवारिधि कुञ्जरेन्द्रकलभः कष्टां दशामश्नुते ॥

अत्र कलभस्य कुञ्जरेन्द्रेण तादूरूप्यमत्यन्तश्लाघ्यत्वनिबन्धनं तादात्विकी शोच्यता च प्रतिपद्यते।

स्थितेष्वेतदिति। परिगृहीतचरेषु प्रयोगेषु संविधानमेतत्।

एवं वामनालङ्कारे संप्रतिपन्नमुक्त्वा विप्रतिपन्नमंशमाह—जगदिति। न युक्तमुक्तमिति। मधुरं जगादेति क्रियाविशेषणत्वेऽपि विवक्षितार्थप्रतीतौ सत्यां व्यर्थो विशेष्यप्रयोगः। अभ्युपगम्याप्याह—युक्तत्वे वेति।

## सुधासागरः

'सौन्दर्ये-'ति। स्पष्टम्।

अत्रोत्कृष्टेति। मालाशब्दो यद्यपि पुष्पस्यैव स्रजि शक्तस्तथापि न पुष्पपदमपुष्टार्थम्, लक्षणयोत्कृष्टत्वप्रतिपादकत्वादिति भावः। अयमेव करिबृंहित-न्यायः। ननु मालाशब्दस्य पुष्पस्र-ङ्मात्रशक्तत्वमित्यसम्यक्, रत्नमालेत्यादिप्रयोग-दर्शनादिति चेत्। न। निरुपपदस्य तथात्वात्। तदाह—निरुपपदो हीति।

नन्वेवं जितमपुष्टार्थेन, ईदृशप्रयोजनस्य सर्वत्र वक्तुं शक्यत्वात्। अत्र आह—'स्थितेष्वे'-ति।

न खल्वित्यादि चमत्कारजनकतया स्थितेष्वेव हि पदेष्वेतत्समर्थनं न तु पदमात्रे। तादृशं च कर्णावतंसादिपदं न जघनकाञ्च्यादिपदम्, अप्रयुक्तत्वात्। अत एव पूर्वप्रयोगाद्यवेक्षणार्थे महाकविकाव्यविशेषेऽवेक्षणमुक्तमिति भावः। अत एव प्रदीपकारैर्व्याख्यातम्—महाकविप्रयुक्तेष्वेवं समाधानं न तु स्वेच्छया कर्णावतंसादि-पदवज्जघनकाञ्च्यादि, करिकलभवदुष्ट्रकरभादि वा प्रयोक्तव्यमिति।

'जगादे'-ति।

चरणत्रपरित्राणरहिताभ्यामपि द्रुतम् ।
पादाभ्यां दूरमध्वानं व्रजन्नेष न खिद्यते ॥

—इत्युदाहार्यम् ।

---

## साहित्यचूडामणिः

चरणत्रेति । पादव्यतिरेकेण वाहनादिनापि मार्गगमनस्य सम्भावितत्वाद-ध्वानं व्रजन्नित्युक्तेऽपि भूयः पद्भ्यामिति वक्तव्यम् । तदवतरणिकया चरणत्रेत्यादेरपि विशेषणस्य वक्तव्यत्वमिति ।

उदाहार्यमिति । न पुनर्जगाद मधुरां वाचमिति ।

## सुधासागरः

वामनेन-जगादेत्यत्र प्राप्तस्यापि विशेष्यस्य विशेषणदानार्थमुपादानमुचित-मन्यथाऽनन्वयादित्युक्तम् । तदुदाहरणं निराकरोति जगादेत्यादि न युक्तमित्यन्तेन । तत्र क्रियाविशेषणत्वेनैव विवक्षितार्थप्रतिपत्तेरित्यर्थः । यत्र क्रियाविशेषणत्वं न योग्यं स्वयं तदुदाहरति—चरणत्रेत्यादि । चरणत्रपरित्राणमुपानत्परिधानम् । अन्यत् स्पष्टम् । इत्युदाहार्यमिति । अत्र चरणत्रेत्यादि पादविशेषणं न क्रियविशेषणार्हमिति भावः ।

यत्तु प्रदीपकारैरुक्तम्-वामनस्तु 'अपुष्टस्यापि तत्रोपादानमुचितं यत्र तद्विशे-ष्यते, अन्यथा कुतस्तद्विशेषणान्वयः स्यात् । यथा—'जगाद विशदां वाचं मधुराक्षरशालिनीम्' इत्यादौ । अत्र हि वाचमित्यनुपादाने मधुरत्वादितद्विशेषणयोगः क्व प्रत्येतव्यः' इत्याह । तन्न युक्तमुदाहृतम्, विशदं जगादेत्यादिक्रियाविशेषणत्वेनैव समीहितसिद्धेरिति तन्मतमाक्षिप्य तस्माद् यत्र न क्रियाविशेषणत्वं योग्यं तदुदाहरणी-यमित्याशयेन चरणत्रेत्याद्युदाहृतं प्रकाशकारैः । तदपि न युक्तमुदाहृतमिति वयम् । कर्तृविशेषणत्वेनैवोपपत्तेः । तस्मान्मदीयं पद्यमुदाहरणीयम् । यथा—

निवातपद्मोदरसोदराभ्यां विलोचनाभ्यामवलोकयन्ती ।
न केवलं यूनि मनोभवेऽपि व्यनक्ति कश्चित्तपसः प्रभावम् ॥

अत्र निवातपद्मोदरसोदराक्षीत्येवं कर्तृविशेषणत्वेनोपपत्तिरिति चेत्, सत्यम्, परं त्वक्षिपदोपादानमपेक्ष्यैव । किञ्च सोदरत्वमात्रं नान्यविशेषणीभवितुमर्हति, यथा मधुरत्वचरणत्रपरित्राणरहितत्वे-इति ।

तत्र भ्रमः—न ह्यत्र कर्तृकर्मसम्बन्धविचारः प्रकृतः, यतो न कर्तृविशेषणम्, क्वचित्कर्तरि साक्षादन्वयानर्हम्, येनापुष्टस्योपादानं सम्भाव्येत, किन्तु क्रियाधर्म-सम्बन्धविचार एव । अत एव 'जगाद विशदां वाचम्'-इत्यादौ क्रियाविशेषणत्वेन विवक्षितस्य विशदत्वादेर्वचनक्रियायां विशदं जगादेति साक्षादेवान्वययोग्यतया न कथञ्चिद् रूपान्तरेण सम्बन्धार्थं 'गद-व्यक्तायां वाचि' इति धात्वर्थेन गतार्थत्वात एवापुष्टस्य वाक्यस्योपादानं युक्तम् । चरणत्रादेस्तु साक्षात् क्रियान्वयानर्हतया

[1]ख्यातेऽर्थे निर्हेतोरदुष्टता (८)

यथा—

चन्द्रं गता पद्मगुणान्न भुङ्क्ते
पद्माश्रिता चान्द्रमसीमभिख्याम् ।
उमामुखं तु प्रतिपद्य लोला
द्विसंश्रयां प्रीतिमवाप लक्ष्मीः ॥

## साहित्यचूडामणिः

अथ निर्हेतावुदाहरति—ख्यातेऽर्थ इति । इदमेतन्निमित्तकमिति लोकप्रसिद्धे प्रमेये निर्हेतोरदुष्टता, न पुनर्गुणीभावः । भविष्यत्येतत् । चन्द्रमिति । उमामुखप्रतिपत्तेः पूर्वं लोला । लोकप्रसिद्धमिति । लोकलक्षणात् प्रमाणात् प्रसिद्धं हेतुं नापेक्षत

## सुधासागरः

कथञ्चिदुद्व्रजनक्रियासम्बन्धार्थं पादाभ्यामित्यपुष्टपदोपादानं युक्तमित्युदाहृतं प्रकाशकारैः । चरणत्रादेः कर्तृद्वारा क्रियासम्बन्धाङ्गीकारे तु तस्य पादधर्मतया पादपदाक्षेपावश्यकतया द्वारद्वारान्वेषणगौरवापत्त्याऽप्रयोजकत्वं स्यात् । न स्याच्चाभीष्टसिद्धिः, चरणत्रेत्यादिपद्ये कर्त्तुर्व्रजनसामर्थ्यं प्रतिपाद्यते, न खलु चरणत्रादेः कर्तृविशेषणत्वे तत् सिध्यति, तथा हि—चरणत्रपरित्राणरहितो व्रजन्नपि न खिद्यते इत्युक्ते चरणत्रराहित्यं कर्तरि सार्वदिकमिति सम्भाव्येत । तेन च खेदाभावानुकूलेन न खिद्यते इति व्रजनसामर्थ्यमपकृष्यते । चरणत्रपरित्राणरहिताभ्यां पादाभ्यां व्रजन्नपीत्यत्र चरणत्रराहित्यं वर्त्तमानव्रजनक्रियाकालिकमेव प्रतीयते । तादृशप्रतीतेश्च खेदानुगुणतया न खिद्यत इति व्रजनसामर्थ्यमुत्कृष्यते इति । सन्ति हि केचिद् भिल्लादयो ये न कदाचिदुपानत्परिधानं कुर्वन्ति, न च व्रजन्तः खिद्यन्ते, तेषामेव चरणत्रादेः कर्तृविशेषणत्वे प्रतीतिः स्यात् । तच्च नेष्टमिति ध्येयं बहुज्ञैः । यच्च सोदरत्वमात्रं नान्यविशेषणीभवितुमर्हतीति, तदप्रयोजकमेव, 'निवातपद्मोदरसोदरेण नवप्रकारेण विलोकयन्ती' इति पाठेऽन्यविशेषणत्वस्याभिमतप्रतीतेश्च निर्बाधत्वात् । तथा च कर्तृविशेषणत्वे 'लशुनभक्षणेऽपि न गतो व्याधिः' इति न्यायः आपद्येत । तस्माद् वरं पादपदोपादानम् । एवं च श्रीवाग्देवतावतारोक्तमप्यन्यथा भवतीति न भ्रमितव्यमित्यस्माभिरसकृदावेदितं विद्वद्भिर्न विस्मरणीयम् ।

ख्यातेऽर्थे निर्हेतोरदुष्टते-ति । यथेत्युदाहरति ।

उपजातिश्छन्दः । लोला सतृष्णा लक्ष्मीश्चन्द्रं गता सती पद्मगुणान्न भुङ्क्ते ।

[1] आर्या छन्दः ।

—अत्र रात्रौ पद्मस्य सङ्कोचः, दिवा चन्द्रमसश्च निष्प्रभत्वं लोकप्रसिद्ध-मिति 'न भुङ्क्ते' इति हेतुं नापेक्षते।

(अ)नुकरणे तु सर्वेषाम् ।

सर्वेषां श्रुतिकटुप्रभृतीनां दोषाणाम् । यथा—

मृगचक्षुषमद्राक्षमित्यादि कथयत्ययम् ।
पश्यैष च गवित्याह सुत्रामाणं यजेति च ॥

---

## साहित्यचूडामणिः

इति चन्द्रं गता पद्मगुणान् न भुङ्क्ते पद्माश्रिता चान्द्रमसीमभिख्यां न भुङ्क्ते। कुतः ? रात्रौ पद्मस्य सङ्कोचाद् दिवा शशाङ्कस्य निष्प्रभत्वाद् इत्यास्त्रीबालं प्रसिद्धो हेतुः। तत्र किं शब्दोपादानक्लेशेन।

अथ सामान्येन सर्वेषां दोषाणामदोषत्वनिबन्धनमाह—अनुकरण इति। शब्दस्य ताद्रूप्येणाभिधानमनुकरणम्।

मृगचक्षुषमद्राक्षमिति श्रुतिकटु। गौरिति वक्तव्ये गविति गावीतिवदुक्तत्वाद-साधु। यजेत्यत्रात्मनेपदस्य प्रयोज्यत्वात्। एषामनुकरणतायां न दोषः।

## सुधासागरः

पद्माश्रिता सती चान्द्रमसीमभिख्यां चन्द्रशोभां न भुङ्क्ते। उमायाः पार्वत्या मुखन्तु प्राप्य द्विसंश्रयामिन्दुपद्मोभयगतां प्रीतिमवापेत्यर्थः।

अत्रेत्यादि। रात्रौ चन्द्रगतायाः पद्मगुणानुपभोगे पद्मसङ्कोचो हेतुर्दिवा च पद्माश्रितायाश्चन्द्रगुणानुपभोगे चन्द्रस्य निष्प्रभत्वं कारणम्। ते चातिप्रसिद्धेरेवाव-गम्येते इति न तदुपादानापेक्षेत्यदोष इत्यर्थः।

अथ पदादिदोषाणामप्यदोषत्वं क्वचिदित्याह—'अनुकरण' इति।

सर्वेषामित्यादि। अदुष्टतेति सम्बन्धः प्रतिपादितदूषतकताबीजाभावात्, तत्र वैरस्याभावस्यानुभाविकत्वेन तदतिरिक्तस्थले एव दोषत्वव्यवस्थितेर्वेति भावः। यथेत्युदाहरति—मृगेत्यादि। अत्राद्राक्षं गोसूत्रामपदानि श्रुतिकटुच्युतसंस्कृत्य-प्रयुक्तानीति प्रदीपकाराः। अयमाशयः—प्रथमार्धे शृङ्गारव्यञ्जके श्रुतिकटव-द्राक्षमिति, तृतीयपादे 'न केवला प्रकृतिः प्रयोक्तव्या' इति व्याकरणविरोधाद् गोपदं च्युतसंस्कृति, चतुर्थपादे 'सूत्रमाऽपि च सूत्रामा' इति कोशेन तथाऽऽम्नातमपि सूत्रामपदं काव्यादराविषयत्वादप्रयुक्तमिति। परन्तु परोक्तानुकरणादेतेषामदुष्टता। अनुकरणे चैषामदोषत्वबीजं प्रतिपादितम्, तद्वदन्यत्राप्यूह्यम्। अत एव श्रीवत्स-लाञ्छनभट्टाचार्यैरुक्तम्—ननु श्रुतिकटुप्रभृतीनामनुकार्यवदनुकरणेऽपि स्वरूपानपा-यात्कथमदोषतेति चेत्। अनुकरणे विरोधिगुणव्यञ्जकस्यापि तत्तच्छब्दस्वरूपस्यैव प्रतिपाद्यत्वेन न दोषत्वम्। अन्यथा तस्य वक्तुमशक्यत्वादिति।

**वक्त्राद्यौचित्यवशाद् दोषोऽपि गुणः क्वचित्**
**क्वचिन्नोभौ ॥११॥**

**वक्तृ-प्रतिपाद्य-व्यङ्ग्य-वाच्य-प्रकरणादीनां महिम्ना दोषोऽपि क्वचिद् गुणः क्वचिन्न दोषो न गुणः। तत्र वैयाकरणादौ वक्तरि प्रतिपाद्ये च, रौद्रादौ च रसे व्यङ्ग्ये कष्टत्वं गुणः । क्रमेणोदाहरणम्—**

**दीधीङ्वेवीङ्समः कश्चिद् गुणवृद्ध्योरभाजनम् ।**
**क्विप्प्रत्ययनिभः कश्चिद् यत्र सन्निहिते न ते ॥**

---

## साहित्यचूडामणिः

अथ व्यक्तिनिष्ठतया यथायोगं दोषाणामदोषत्वोपाधिमाह—वक्त्रादीति । दोषोऽपि क्वचिद् गुणः क्वचिन्न दोषो न गुणः, यावत् तात्स्थ्येनावस्थानम् ।

कश्चिन्मन्दभाग्यो दीधीवेव्योर्धात्वोः समः सन् गुणस्यौदार्यादेः सम्पत्तिलक्षणायाश्च वृद्धेरभाजनमपात्रं स्यात्, यथा 'दीधीङ् दीप्तिदेवनयोः वेवीङ् वेतिना तुल्ये' इति पठितौ धातुगुणस्यादेङ्लक्षणस्य वृद्धेरादैज्लक्षणायाश्च पात्रं न स्तः दीधीवेवीटामिति सूत्रात्। अन्यश्च दौर्जन्यशाली क्विप्प्रत्ययसदृशः। यत्र सति परे च तेन सन्निहिते गुणवृद्धी 'क्ङिति चे'ति प्रतिषेधात् तत्प्रत्ययासन्नायाः प्रकृतेर्न स्तः। अत्र कष्टत्वं गुणः न दोषः, येन वैयाकरणो वक्ता ।

## सुधासागरः

वक्तृप्रतिपाद्यव्यङ्ग्यवाच्यप्रकरणादिमहिम्ना दोषस्यापि क्वचिद्दोषत्वाभावमात्रम्, क्वचित्तु भाक्तो गुणव्यवहारोऽपीत्याह—वक्त्रेत्यादि । स्पष्टम् ।

नोभाविति विवृणोति-क्वचिन्न दोषो न गुण इति । उत्कर्षापकर्षविरहादनुभयरूपता। तेन गुणाभावस्य दोषत्वं दोषाभावस्य वा गुणत्वं निरस्तम्, विनिगमकाभावात्, अभावस्य तारतम्यानुपपत्तेश्चेति ध्येयम् । वैयाकरणादावित्यादिपदात् क्रुद्धादिपरिग्रहः। रौद्रादावित्यादिपदाद् वीरबीभत्सपरिग्रहः । कष्टत्वमर्थस्य दुरूहत्वं शब्दस्य श्रुतिकटुत्वं च । व्याख्यातञ्च प्रदीपकारैर्नोभौ न गुणो न दोषश्च । तन्न, स्ववैयाकरणत्वप्रतिपिपादयिषया वक्तरि कष्टत्वं गुणः, प्रतिपाद्यस्य ततोऽतिशयेन प्रतीतेः। दोषत्वाभावश्चोपपादित एवेति। उदाहरणम् दीधीङ्वेवीङित्यादि । अस्मिन् ग्रामे कीदृशा लोका इति प्रश्नस्योत्तरमाह दीधीङ्वेवीङ्समः कश्चित्पुरुषो गुणस्य पाण्डित्यदानशौर्यधैर्यादेः वृद्धेः समृद्धेश्चाभाजनमस्थानम्। दीधीङ्वेवीङ्धातू गुणस्यादेङो वृद्धेरादैचः अभाजनम्। 'दीधीवेवीटाम्' इति तन्निषेधात्। नैतावती परा काष्ठा, किन्तु क्विप्प्रत्ययनिभः कश्चित् यत्र यस्मिन्पुरुषे सन्निहिते समीपस्थे सति न ते अन्यस्यापि गुणवृद्धी न भवतः। क्विप्प्रत्ययेऽपि सन्निहिते परतो वर्त्तिनि गुणवृद्धी न भवतः, 'क्ङिति च' इति

यदा त्वामहमद्राक्षं पदविद्याविशारदम् ।
उपाध्यायं तदाऽस्मार्षं समस्प्राक्षं च सम्मदम् ॥

अन्त्रप्रोतबृहत्कपालनलकक्रूरक्वणत्कङ्कण-
प्रायप्रेङ्खितभूरिभूषणरवैराघोषयन्त्यम्बरम् ।
पीतच्छर्दितरक्तकर्दमघनप्राग्भारघोरोल्लसद्-
व्यालोलस्तनभारभैरववपुर्दर्पोद्धतं धावति ॥

वाच्यवशाद् यथा—

मातङ्गाः, किमु वल्गितैः किमफलैराडम्बरैर्जम्बुकाः,
सारङ्गाः, महिषाः, मदं व्रजथ किं, शून्येषु शूरा न के ।

---

## साहित्यचूडामणिः

यदा त्वामहमित्यादौ स एव प्रतिपाद्यः ।

शून्य इति । शून्ये स्थाने केन शूरा इति प्रश्ने सर्वेऽपि शूराः । सिंहे वाच्य इति सिंहो हि सत्त्वोत्कर्षाद् उत्साहशाली वीररौद्रादिरसोचित इति परुषा अपि शब्दाः प्रयुक्ताः ।

## सुधासागरः

प्रतिषेधादित्यर्थः । वैयाकरणादौ प्रतिपाद्ये च तस्य गुणत्वम् । तद्भावनाभावितस्य तच्छ्रवणेन प्रीत्युपचयात् ।

यदा त्वामित्यादि । सम्मदं हर्षम्, समस्प्राक्षं च संस्पृष्टवानस्मि । स्पष्टमन्यत् ।

ओजस्विनि रौद्रादिरसे, व्यङ्ग्ये च तस्य गुणत्वम्, कठिनशब्दस्य तद्व्यञ्जकत्वात् । तत्र बीभत्से यथा—अन्त्रप्रोतेत्यादि । शार्दूलविक्रीडितं छन्दः । प्रोतानि ग्रथितानि यानि बृहन्ति कपालानि नलकानि जङ्घास्थीनि च तान्येव क्रूरं यथा स्यात्तथा क्वणत्कङ्कणानि तद्बहलप्रेङ्खितभूरिभूषणानां रवैरम्बरमाकाशमाघोषयन्ती समन्ताच्छब्दायमानं कुर्वती, पीतं छर्दितं वान्तं च यद् रक्तं तत्कर्दमस्य पङ्कस्य घनप्राग्भारोऽविरतधारा तथा घोरौ भयानकौ उल्लसन्तौ विपुलतया व्यक्तं दृश्यमानौ व्यालोलौ वेगवशाच्चलन्तौ यौ स्तनौ तयोर्भारस्तेन भैरवं भयङ्करं वपुः शरीरं यस्यास्तथाभूता ताडका दर्पोद्धतं गर्वोद्धटं यथा स्यात्तथा धावतीत्यर्थः । अत्रोद्धटा वर्णा ओजो व्यञ्जयन्तः प्रकृतरौद्रबीभत्सवीरानुगुण्यमाधत्ते ।

ओजस्विनि सिंहादौ वाच्येऽपि तस्य गुणत्वम्, यतो मसृणशब्दप्रयोगेणोर्जितोऽप्यर्थो मृदुवद्भासते, ऊर्जितशब्दप्रयोगे त्वौर्जित्येन । उदाहरणम्—'वाच्यवशादि'-ति, 'मातङ्गा' इति ।

कोपाटोपसमुद्भटोत्कटसटाकोटेरिभारेः पुरः
सिन्धुध्वानिनि हुङ्कृते स्फुरति यत् तद् गर्जितं गर्जितम् ॥

—अत्र सिंहे वाच्ये परुषाः शब्दाः । प्रकरणवशाद् यथा—

रक्ताशोक, कृशोदरी क्व नु गता त्यक्त्वानुरक्तं जनं
नो दृष्टेति मुधैव चालयसि किं वातावधूतं शिरः ।
उत्कण्ठाघटमानषट्पदघटासङ्घट्टदष्टच्छद-
स्तत्पादाहतिमन्तरेण भवतः पुष्पोद्गमोऽयं कुतः ॥

—अत्र शिरोधूननेन कुपितस्य वचसि ।

---

## साहित्यचूडामणिः

शिरोधूननेनेति । प्रकृतेन रक्ताशोककर्तृकेण शिरोधूननेन कुपितस्य कस्यचिद् रागोन्मत्तस्य वचसि उत्कण्ठाघटमानेत्यादौ श्रुतिकटुशब्दप्रयोगो गुणः ।

अन्यानुन्मीलितमर्थमुन्मीलयति—क्वचित्त्विति । उद्धतशब्दप्रयोगोपबृंहणस्य वीरादेरसम्भवान्न गुणः । मसृणपदरचनोचितस्य शृङ्गारादेरसम्भवान्न दोषः ।

## सुधासागरः

अत्रेत्यादि स्पष्टम् ।

प्रकरणविशेषे च गुणत्वम्, वक्तुर्वैयाकरणत्वाद्यभावेऽपि कोपादिप्रस्तावे च तदनुगुणत्वात् । यथा 'रक्ताशोके'—ति ।

हे रक्ताशोक वृक्षविशेष ? सम्बोधनेन अनुरक्तानां मादृशां शोकापनोदकोऽसीति व्यज्यते । कृशोदरी प्रेयसी अनुरक्तं जनं मल्लक्षणं त्यक्त्वा क्व नु गता, नो दृष्टेति मुधैव मिथ्यैव वातेनावधूतं कुतोऽसत्यं वदसीति तिरस्कृतं शिरो मस्तकं किं चालयसि । उत्कण्ठया घटमाना या षट्पदाना भ्रमराणां घटा समूहस्तस्य सङ्घट्टेन निविडसम्बन्धेन दष्टच्छदः खण्डितदलोऽयं भवतः पुष्पोद्गमः कुतः कथं जात इत्यर्थः ।

अत्रेत्यादि । अत्र मिथ्याशिरोऽवधूननेन कोपप्रकरणम् । न चास्य व्यङ्ग्ये एव प्रवेशः, कोपस्य व्यङ्ग्यत्वादिति वाच्यम्, वक्त्राद्यौचित्यव्यतिरिक्तस्थानीयस्य व्यङ्ग्यस्य व्यङ्ग्यपदोपादानाद् गोबलीवर्दन्यायात् । दोषत्वाभावश्चैतेषु स्फुट एव ।

क्वचित्तु नीरसे न गुणो न दोषः। यथा—

शीर्णघ्राणाङ्घ्रिपाणीन् व्रणिभिरपघनैर्घर्घराव्यक्तघोषान्
दीर्घाघ्रातानघौघैः पुनरपि घटयत्येक उल्लाघयन् यः।
घर्मांशोस्तस्य वोऽन्तर्द्विगुणघनघृणानिघ्ननिर्विघ्नवृत्ते-
र्दत्तार्घाः सिद्धसङ्घैर्विदधतु घृणयः शीघ्रमंहोविघातम्॥

अप्रयुक्तनिहतार्थौ श्लेषादावदुष्टौ। यथा—

येन ध्वस्तमनोभवेन बलिजित्कायः पुरा स्त्रीकृतो
यश्चोद्वृत्तभुजङ्गहारवलयो गङ्गां च योऽधारयत्।

---

## साहित्यचूडामणिः

शीर्णेति। अत्र नीरसे शब्दपारुष्यं गुणदोषद्वितयकक्ष्यामतिक्रम्य ताटस्थ्येन वर्तते।

येनेति। त्वामुमाधवः पार्वतीपतिः सर्वकालं पायात् ध्वस्तमनोभवेन निहतमन्मथेन येन बलिजित्कायः वैरोचनिविमाथिनः पुरुषोत्तमस्य शरीरं पुरा बाणीकृतः

## सुधासागरः

क्वचित् पुनर्न दोषत्वं न वा गुणत्वम्, यत्र न रसो न वा प्रतिपाद्यानौचित्यम्। अथ नीरसे यदि विश्रान्त्यभावादस्यादोषत्वं तदाऽन्येषामपि स्यात्। तथा च नीरसदोषोदाहरणं विरुद्धयेतेति चेन्न, तस्योपलक्षणत्वाद्दोषपरिचयमात्रार्थत्वाद् वा।

'शीर्ण'-ति।

स्रग्धरा छन्दः। यः एकः साधननिरपेक्षः, घ्राणं नासिका च अङ्घ्री चरणौ च पाणी हस्तौ च एषां समाहारो घ्राणाङ्घ्रिपाणि, शीर्णं विगलितं घ्राणाङ्घ्रिपाणि येषां तान्, तथा व्रणिभिरपघनैर्व्रणयुक्तैः शेषावयवैः घर्घराः अव्यक्ताश्च घोषाः व्रणवेदनया रूक्षा अस्पष्टाः शब्दा येषां तान्, तथा अघौघैः पातकसमूहैर्दीर्घाघ्रातान् दृढव्याप्तान् एवंविधान् गलत्कुष्ठिनः उल्लाघयन् नीरोगीकुर्वन् पुनरपि घटयति भूयोऽपि नवीकरोति। तस्य घर्मांशोः अन्तर्द्विगुणघना द्विगुणाधिका घृणा दया तन्निघ्ना निरपवादा वृत्तिश्चित्तस्वभावो यस्य तथाविधस्य घर्मांशोः सूर्यस्य सिद्धानां सङ्घैः समुदायैर्दत्तोऽर्घो येषां तादृशा घृणयः किरणा शीघ्रं वो युष्माकमंहोविघातं पापविनाशं विदधतु कुर्वन्त्वित्यर्थः।

नीरसत्वं चात्रानुप्रासमात्रमग्नतया रसे तात्पर्याभावात्। न चानुप्रासास्पदैकतयैव गुणत्वम्, 'सोऽध्यैष्ट वेदान्' इत्यादावपि तदापत्तेरिति। न च परुषवर्णत्वमनुप्रासे प्रयोजकम्, येन तद्घटकतयाऽदोषत्वं स्यात्।

अप्रयुक्तनिहतार्थौ श्लेषादौ न दुष्टाविति। आदिपदग्राह्यं यमकादि। प्रतिपादितं चैतदप्रयुक्तव्याख्यावसरे। उदाहरणम्—'येने'-ति।

यस्याहुः शशिमच्छिरोहर इति स्तुत्यं च नामामराः
पायात् स स्वयमन्धकक्षयकरस्त्वां सर्वदो माधवः ॥
—अत्र माधवपक्षे शशिमदन्धकक्षयशब्दावप्रयुक्तनिहतार्थौ ।

## साहित्यचूडामणिः

उद्वृत्ता भयङ्करा भुजङ्गा एव हाराः कण्ठाभरणं वलयः कटकश्च यस्य, गङ्गां भागीरथीं यः शिरस्यधारयत् यस्य च शिरः शशिमदाहुः, शशी । विद्यतेऽत्र इति शशिमत् । किञ्च यस्य नाम सकलदुरितहारितया हर इत्याहुः । अन्धकाख्यस्यासुरस्य विनाशकरः सः पायादिति । अथ सर्वदः समस्ताभिलषितप्रदायी माधवो मुकुन्दः पायात् । अभवेन येनावतारपरम्परायामपि तत्त्वचिन्तायामजन्मना अनः शकटं ध्वस्तम् अस्तम् अग्रपदेन विक्षिप्तम् । बलिनो दानवान् जितवान् कायः स्वं शरीरं पुरेत्यमृतमथनवेलायां स्त्रीकृतः नारीकृतः । अमृतापहारिणो दानवान् अङ्गनारूपो भगवान् व्यामोहयामासेति पौराणिकाः । उद्वृत्तो लोकातिक्रान्तचरित्रो यो भुजङ्गः कालियः तस्य हारवः फणाफलकताण्डवे श्रमप्रयुक्तः शब्दः स एव लयस्तालावच्छेदो यस्य । अगं पर्वतं गोवर्धनाख्यं पर्वतं मन्दरं वा गां भुवमम्बुधिमग्नां च योऽधारयत् । यस्य नाम शशिमिच्छिरोहर इत्याहुः । शशिनं मथ्नातीति शशिमत् विधन्तुदः तस्य शिरो हृतवानिति अन्धकानां यादवानां क्षयमावासं कृतवानिति ।

माधवपक्ष इति । शशिमदन्धकक्षयकरशब्दौ क्रमादप्रयुक्तनिहतार्थौ शशिमदिति राहावप्रयुक्तः अन्धकक्षयशब्दो निहतार्थः । अन्धकस्य यादवेभ्योऽपि दैत्यविशेषे क्षयस्य निवासादपि विनाशे प्रसिद्धिबाहुल्यात् । श्लेषालङ्कारोपगृहीतत्वादनयोरदुष्टत्वम् अर्थद्वयानुकूला शब्दरचनात्र श्लेषः न पुनर्वाच्यभेदेन भिन्ना इत्यादिना लक्षयित्प्रमाणशब्दार्थनिबन्धनत्वात् श्लेषस्यैव बलवत्त्वमनुक्तमप्यङ्गीकार्यं ध्वनिवैलक्षण्याय ।

## सुधासागरः

शार्दूलविक्रीडितं छन्दः । सर्वदश्चतुर्वर्गदो माधवो विष्णुस्त्वां पायात् । अभवेन न विद्यते भवः संसारः यस्मात्तादृशेन अजेन वा येन विष्णुना अनः शकटं ध्वस्तं पातितम् । तथा यः कायो देहो बलिं जितवान् स पुराऽमृतहरणप्रस्तावे स्त्रीकृतः मोहिनीरूपतां प्रापितः । यः अगं पर्वतं गोवर्द्धनाख्यं गां पृथिवीं च दधे, श्रीकृष्ण—यज्ञवराहरूपतया करेण दंष्ट्राङ्कुरेण चेति भावः । योऽन्धकक्षयकरः अन्धका यादवास्तेषां क्षयं निवासं द्वारकारूपं कृतवान् । यो बर्हिपत्रप्रियः मयूरपिच्छधारकः । अमरा देवाः यस्य शशिनं मथ्नातीति शशिमद् राहुस्तस्य शिरो हरतीति शशिमच्छिरोहर इति स्तुत्यं नामाहुः । इष्टो वाहनतयाऽभीष्टो भुजङ्गहा गरुडो यस्य स तादृशः, रवे शब्दब्रह्मणि वेदे लयो निष्ठा यस्य स्फोटरूपे वा ।

अश्लीलं क्वचिद् गुणः । यथा सुरतारम्भगोष्ठ्याम् । 'द्व्यर्थैः पदैः पिशुनयेच्च रहस्यवस्तु' इति कामशास्त्रस्थितौ—

करिहस्तेन सम्बाधे प्रविश्यान्तर्विलोडिते ।
उपसर्पन् ध्वजः पुंसः साधनान्तर्विराजते ॥

## साहित्यचूडामणिः

करिहस्तेनेति कामतन्त्रोक्तेन हस्तविशेषेण संबाधे मदनमन्दिरे विलोलिते क्लेदिते पुंसो ध्वजो मेहनदण्डः साधनान्तर्विराजते योन्यन्तराले शोभत इति सुरतारम्भोचितं वस्तु । तच्च द्व्यर्थैरुभयार्थैर्गोपनीयमर्थं सूचयेदिति कामशास्त्रस्थितौ सत्यां कस्यचिद् ध्वजः केतुः संबाधे सैन्यसंमर्दे करिहस्तेन गजशुण्डया क्षोभिते सति उपसर्पन् स्वपक्षं प्रत्यावर्तमानः साधनान्तः बलमध्ये विराजत इत्यनेन वाक्येन व्रीडापरिहारार्थं व्यवह्रियते ।

## सुधासागरः

पक्षे उमाधवः शिवः सर्वदा त्वां पायात् । ध्वस्तमनोभवेन दग्धकन्दर्पेण येन पुरा त्रिपुरदाहसमये बलिजितो विष्णोः कायोऽस्त्रीकृतो बाणतां प्रापितः । उक्तं च

रथः क्षोणी यन्ता शतधृतिरगेन्द्रो धनुरथो
रथाङ्गे चन्द्रार्कौ रथचरणपाणिः शर इति । इति ।

यो गङ्गां च दधे गङ्गाधरः । अन्धकासुरस्य क्षयो नाशस्तत्कर्त्ता, यः बर्ही पत्रं वाहनं यस्य बर्हिपत्रः कार्त्तिकेयः प्रियो यस्य तादृशः, यस्य शिरो मस्तकं शशिमत् चन्द्रयुक्तम् । च पुनः यः इष्टानि भुजङ्गानां हारवलयानि यस्य तथाभूतः । अमरा देवाः यस्य शिवस्य हर इति ब्रह्मादिसंहारकत्वेन स्तुत्यं नामाहुरित्यर्थः । क्वचित्पुस्तके 'यश्चोद्धृत्तभुजङ्गहारवलयो गङ्गां च योऽधारयत्' इति द्वितीयचरणपाठः 'पायात्स स्वयमन्धकक्षयकरस्त्वां सर्वदो माधव' इति चतुर्थचरणपाठः । तत्र उद्वृत्तो भुजङ्गः कालियस्तं हतवान् पादैस्ताडितवान् । पक्षे उद्वृत्ता उद्धता भुजङ्गा इति विशेषः ।

अत्रेत्यादि । अत्र माधवपक्षे राहौ शशिमत्पदमप्रयुक्तम् । क्षयपदं गृहे निहतार्थम । तथाऽपि श्लेषालङ्काराय गृहीतत्वादनयोरदुष्टत्वम् न च श्लेषालङ्कार-प्रयोजकतया गुणत्वमपि शङ्कनीयम्, तत्त्वस्य तत्राप्रयोजकत्वात् । एवमन्येषु प्रतीतिविलम्बवत्सु द्रष्टव्यम् ।

अश्लीलत्वं क्वचिद्गुणो यथा सुरतारम्भगोष्ठ्याम् । 'ताम्बूलदानविधिना विसृजेद् वयस्यां द्व्यर्थैः पदैः पिशुनयेच्च रहस्यवस्तु' इति कामशास्त्रस्थितौ ।

'करिहस्ते'-ति । पुंसो वीरस्य कामिनश्च ध्वजः केतुः लिङ्गं च, करिहस्तेन गजशुण्डया कठिनयोनिशैथिल्यापादको बहिष्कृतमध्यमाङ्गुलीकः संयुक्ततर्जन्य-नामिकारूपश्च तेन, तदुक्तम्—'तर्जन्यनामिके युक्ते मध्यमा स्याद्बहिष्कृता । करिहस्तः समुद्दिष्टः कामशास्त्रविशारदैः' इति । सम्बाधे सङ्कटे सङ्कुचिते च अन्तः प्रविश्य

शमकथासु—

उत्तानोच्छूनमण्डूकपाटितोदरसन्निभे ।
क्लेदिनि स्त्रीव्रणे सक्तिरकृमेः कस्य जायते ॥

निर्वाणवैरदहना प्रशमादरीणां
नन्दन्तु पाण्डुतनयाः सह माधवेन ।
रक्तप्रसाधितभुवः क्षतविग्रहाश्च
स्वस्था भवन्तु कुरुराजसुताः सभृत्याः ॥

—अत्र भाव्यमङ्गलसूचकम् ।

---

## साहित्यचूडामणिः

जुगुप्साश्लीलं शमकथासु गुणः उत्तानेति। क्रिमेश्चेज्जायेतापि नाम अक्रिमेर्न कस्यापि जायते।

भाव्यमङ्गलेति। रक्ता अनुरक्ता प्रसाधिता प्रकर्षेण साधिता स्वीकृता भूर्यैः क्षतो विग्रहो विरोधो येषां स्वस्थाः प्रकृतिस्था इति प्रतीतौ यद्रक्तेन रुधिरेण प्रसाधिता भूषिता भूर्येषां क्षताः विग्रहाः शरीराणि येषां स्वर्गस्थाः स्वस्था इत्यमङ्गलवस्तु तस्य शत्रुविषये भविष्यदमङ्गलसूचकतया गुणत्वम्।

## सुधासागरः

विलोडिते चपलायिते प्रकाशिते च साधनस्य सैन्यस्य वराङ्गस्य चान्तर्मध्ये उपसर्पन् प्रविशन् विराजत इत्यर्थः।

अत्र करिहस्तादिपदेष्वश्लीलेष्वपि कामशास्त्रमर्यादयाऽदोषत्वम्। व्युत्पत्तिप्रकटनेन उदासीनवञ्चनया स्वार्थसंपत्त्या रसोत्कर्षकतया च गुणत्वं बोध्यम्।

शमकथास्विति। शमकथास्वप्यश्लीलं गुणस्तत्पोषकत्वादित्यर्थः। यथा—'उत्ताने' ति। स्पष्टम्

सूचनीयविशेषे यथा—'निर्वाणे'-ति।

वसन्ततिलका छन्दः। पाण्डुतनयाः युधिष्ठिरादयो माधवेन श्रीकृष्णेन सह अरीणां शत्रूणां प्रशमो युद्धनिवृत्तिर्मरणं च तस्मात् निर्वाणः शान्तो वैरमेव दहनोऽग्निर्येषां तथाभूताः सन्तो नन्दन्तु समृद्धा भवन्तु। सभृत्याः कुरुराजसुता दुर्योधनादयः रक्ताऽनुरक्ता प्रसाधिता वशीकृता च भूर्येषां,पक्षे रुधिरेण प्रसाधिताऽलङ्कृता-र्यैस्तादृशाः च पुनः स्वस्था प्रकृतिस्थाः पक्षे स्वर्गस्था भवन्त्वित्यर्थः।

अत्रेत्यादि। अत्र 'प्रशमात्' इति 'स्वस्था' इति मरणार्थकत्वादश्लीले अपि भाव्यमङ्गलसूचनाद् गुणः। दुर्योधनामङ्गलस्य नायकमङ्गलत्वेन गुणत्वमिति भावः।

सन्दिग्धमपि वाच्यमहिम्ना क्वचिन्नियतार्थप्रतीतिकृत्त्वेन व्याजस्तुतिपर्यवसायित्वे गुणः । यथा—

पृथुकार्तस्वरपात्रं भूषितनिःशेषपरिजनं देव ।
विलसत्करेणुगहनं सम्प्रति सममावयोः सदनम् ॥

---

## साहित्यचूडामणिः

सन्दिग्धमपीति । वाच्यमहिम्नाभिधेयप्रभावेण नियतस्यैकस्यार्थस्य प्रतिपत्तिं कृत्वैव, न तु कदाचिदकृत्वा, तस्य वक्ष्यमाणव्याजस्तुतिपर्यवसायित्वं गुणत्वम् ।

पृथुकार्तस्वरेति । आवयोः सदनं सममिति यत्साम्यं तत्किमुभयोरैश्वर्याद् आहोस्विद्दारिद्र्यादिति प्रमुखतः सन्देहेऽपि राजवेश्मन्यैश्वर्यं स्वभवने दारिद्र्यमिति निष्कर्षः । ततश्चेयं व्याजरूपा स्तुतिः यत्र निन्दायां तात्पर्यम् । पृथूनि विशालानि कार्तस्वरपात्राणि यत्र भूषितोऽलंकृतः सर्वपरिजनो यत्र विलसन्तः शोभमानाः करेणवः करिणः तैर्गहनमिति राजमन्दिरे । दरिद्रगृहे च पृथुकानां बालानामर्थाद् बुभुक्षितानामार्तस्वरस्य दीनध्वनेः स्थानं भुवि भूमौ उषितः खट्वाद्यभावेन स्थण्डिलशायी निःशेषः[१] मौलिमाल्यरहितः परिजनो यत्र विले रन्ध्रे सीदन्ति विलसदो मूषिकादयः, कुत्सायां कन्, तेषां रेणुभिः पांसुभिः गहनम् ।

## सुधासागरः

'सन्दिग्धमपी'-ति

गाथा छन्दः । हे देव राजन् ! पृथूनि विपुलानि कार्त्तस्वराणां पात्राणि यत्र, पक्षे पृथुकानां शिशूनामार्त्तस्वराणां क्षुत्कातरध्वनीनां पात्रमधिकरणम् । तथा भूषिता अलङ्कृता निःशेषपरिजनाः सकलसेवका यत्र, पक्षे भुवि धरायामुषिता निःशेषपरिजनाः सकलस्त्रीलोका यत्र तादृशम् । विलसन्त्यः शोभमानाः करेणवो हस्तिन्यस्ताभिर्गहनं सङ्कीर्णम् । पक्षे बिले सीदन्तीति बिलसत्का मूषिकास्तासां रेणुभिर्गहनम्, निरन्नत्वादिति भावः । एवं सम्प्रत्यावयोः सदनं तुल्यमित्यर्थः ।

राजकव्योरुभयोरपि प्रस्तुतत्वात् पृथुकार्त्तस्वरादिशब्दा आपाततः सन्दिग्धा अप्यत्र वाच्यमहिम्ना वाच्यो वर्णनीयो राजा न तु कविः, अकिञ्चित्करत्वात्, राजवर्णनस्य दैन्यनाशकत्वाच्चेति तन्महिम्ना नियतो नियमितोऽर्थो राजानुरूपोत्कर्षरूपस्तस्य प्रतीतिं निश्चयं कृत्वैव व्याजस्तुतिपर्यवसायित्वाद् गुणतां प्राप्ता इति ध्येयम् ।

---

[१] शेषा मौलिमाल्यम्, तया रहितो निश्शेषः । द्र०. कुमारसंभवस्य ३.२२ ।

प्रतिपाद्यप्रतिपादकयोर्ज्ञत्वे सत्यप्रतीतत्वं गुणः। यथा—

आत्मारामा विहितरतयो निर्विकल्पे समाधौ
ज्ञानोद्रेकाद् विघटिततमोग्रन्थयः सत्त्वनिष्ठाः।
यं वीक्षन्ते कमपि तमसां ज्योतिषां वा परस्तात्
तं मोहान्धः कथमयममुं वेत्ति देवं पुराणम् ॥

---

## साहित्यचूडामणिः

प्रतिपाद्यप्रतिपादकयोरिति। बोद्धव्यस्य वक्तुश्च ज्ञत्वे व्युत्पन्नत्वे सति अप्रतीतं गुणः।

आत्मेति। आत्मनि स्वस्मिन् आरमन्ति बहिः प्रपञ्चक्षोभव्यपोहेन क्रीडन्त्यात्मारामाः। अत्र विकल्पसमाधितमःसत्त्वादयः शब्दा योगशास्त्रादिप्रसिद्धत्वादप्रतीता अपि वक्तृबोद्धव्ययोर्व्युत्पन्नत्वाद् गुणः।

## सुधासागरः

प्रतिपाद्येत्यादि। अप्रतीतोऽपि यत्र सम्प्रतिपाद्यप्रतिपादकयोर्द्वयोरपि तज्ज्ञता तत्र गुणः। अर्थाप्रतीतिरूपबीजाभावेनादोषतायां व्युत्पत्तिप्रकटकत्वादिति भावः। यथा—'आत्मारामे'-ति।

मन्दाक्रान्ता छन्दः। आत्मनि चिदानन्दे आरमन्तीत्यात्मारामाः यद्वा आत्मैवारामः क्रीडास्थानं येषां तादृशाः। निर्विकल्पसमाधिः आत्ममात्रावलम्बी तत्र विहितरतयः कृतस्नेहाः ज्ञानोद्रेकाद्विघटितास्तमोग्रन्थयः मिथ्याज्ञानजन्यसंस्कारा येषां तादृशाः सत्त्वनिष्ठाः सत्त्वगुणमात्रविश्रान्ताः, यं कमपि वागाद्यगोचरं वीक्षन्ते, कथं त एव पश्यन्तीत्यत्र आह तमसां तामसानां ज्योतिषां राजसानां वा परस्तात् दूरे वर्त्तमानम् रजस्तमोभिभूतैरलभ्यमिति यावत्, तममुं पुराणं देवं श्रीकृष्णं मोहान्धोऽयं दुर्योधनः कथं वेत्ति केन प्रकारेण जानातीत्यर्थः।

इयं भीमसेनस्य सहदेवं प्रत्युक्तिरिति प्रतिपाद्य-प्रतिपादकौ सहदेवभीमसेनौ, तौ च योगशास्त्रविज्ञाविति न प्रतीतिविलम्ब इति। अत्र निर्विकल्पकादिशब्दा आत्ममात्रावलम्बनत्वादावर्थे योगशास्त्रमात्रप्रसिद्धत्वेनाप्रतीता अपि ना दुष्टाः। नन्वेवं दोषाभावत्वमेव कथं गुणत्वमिति चेन्न। इतराज्ञातज्ञातृत्वेन स्वज्ञानोत्कर्षद्वारा भावोत्कर्षकत्वात्।

स्वयं वा परामर्शे यथा—

षडधिकदशनाडीचक्रमध्यस्थितात्मा
हृदि विनिहितरूपः सिद्धिदस्तद्विदां यः।
अविचलितमनोभिः साधकैर्मृग्यमाणः
स जयति परिणद्धः शक्तिभिः शक्तिनाथः॥

## साहित्यचूडामणिः

स्वयं वेति स्वहृदयपरामर्शवेलायामप्यप्रतीतं गुणः। षडधिकेति षोडशनाडीनां यन्मण्डलं पिण्डरूपं तस्य मध्यं हृदयं तत्र स्थितः। तत एवात्मभूतश्च। उक्तं हि—

इडा च पिङ्गला चैव सुषुम्ना च परा मता।
गान्धारी हस्तिजिह्वा च यूषा च सुयशा तथा॥
अलम्बुसा कुहूश्चैव शङ्खिनी दशमी तथा।
तालुजिह्वेभजिह्वे च विजया कामजा परा॥
अमृता बहुला नाम नाड्यो वायुसमीकृताः। इति।

यद्वा नाडीनां यानि षोडश चक्राणि मूलादय आधाराश्च तेषां मध्यं यदनाहतरूपं तत्र स्थितात्मा शक्तीनामिच्छाज्ञानक्रियोपलक्षितपरिस्पन्दस्वभावानां नाथः प्रयोक्ता। परिणद्ध इति विषयव्याप्तिः।

शक्तिश्च शक्तिमांश्चेति पदार्थद्वयमुच्यते।
शक्तयोऽस्य जगत् कृत्स्नं शक्तिमांश्च महेश्वरः॥

इत्युक्तत्वात्। अत्र नाडीसिद्ध्यादिपदानामागममात्रप्रसिद्धानामपि स्वयं विमृष्टव्यतया गुणत्वम्।

## सुधासागरः

स्वयं परामर्शेऽप्येवमेव गुणत्वम्। यथा 'षडधिके-'ति।

नाड्यः षोडश। तदुक्तम्—

इडा च पिङ्गला चैव सुषुम्ना चापराजिता।
गान्धारी हस्तिजिह्वा च पूषा चैव तथाऽपरा॥
अलम्बुसा कुहूश्चैव शङ्खिनी दशमी स्मृता।
तालुजिह्वा च जिह्वा च विजया कामदाऽपरा॥
अमृता चक्रनामा च एता वायुसमाश्रिताः॥

तासां चक्रं मणिपूराख्यं तन्मध्ये स्थित आत्मा स्वरूपं यस्य स षडधिकदशनाडीचक्रमध्यस्थितात्मा, तद्विदां योगव्युत्पन्नानां हृदि विनिहितं तादृशरूपं मणिपूरकान्तस्याद्भुतं ज्योतिर्यस्य स तथोक्तः, सिद्धयोऽणिमादयः ताः ददातीति सिद्धिदः। अविचलितमनोभिः स्थिरचित्तैः साधकैर्योगिभिर्मृग्यमाणः शक्तिभि-

अधमप्रकृत्युक्तिषु ग्राम्यो गुणः । यथा—

फुल्लुक्करं कलमकूरणिहं वहन्ति
जे सिन्धुवारविडवा मह वल्लहा दे ।
जे गालिदस्स महिसीदहिणो सरिच्छा
दे किं च मुद्धविअइल्लपसूणपुञ्जा ॥

[पुष्पोत्करं कलमभक्तनिभं वहन्ति
ये सिन्धुवारविटपा मम वल्लभास्ते ।
ये गालितस्य महिषीदध्नः सदृक्षा-
स्ते किञ्च मुग्धविचकिल्लप्रसूनपुञ्जाः ॥]

—अत्र कलम-भक्त-महिषी-दधिशब्दा ग्राम्या अपि विदूषकोक्तौ ।

---

## साहित्यचूडामणिः

अधमप्रकृतयो नीचपात्राणि तदुक्तिषु ग्राम्यो गुणः ।

फुल्लक्करमिति । कूरमन्नम् । विचकिलो मल्लिका विदूषकोक्ताविति अधमप्रकृतित्वं सूच्यते ।

## सुधासागरः

ज्ञानेच्छाकृतिभिः परिणद्धो वेष्टितः सः मत्परामर्शविषयीभूतः शक्तिनाथः पार्वतीपतिर्जयतीत्यर्थः ।

अधमेत्यादि । अधमप्रकृतीनां चेटविटविदूषकाणां हास्यरसप्रधानानां तथैवौचित्याद्दोषत्वाभावे हास्यपर्यवसायित्वाद्ग्राम्यो गुण इत्यर्थः । यथा—'फुल्लुकरमि'-ति । वसन्ततिलका छन्दः । कर्पूरमञ्जर्यां विदूषकोक्तिरियम्—

पुष्पोत्करं कलमभक्तनिभं वहन्ति
ये सिन्दुवारविटपा मम वल्लभास्ते ।
ये गालितस्य महिषीदध्नः सदृक्षाः
ते किं च मुग्धविचकिलप्रसूनपुञ्जाः ॥

—इति संस्कृतम् । स्पष्टम् । विचकिलं मल्लिका ।

अत्रेति । कलमेत्यादिप्राकृतविवरणम् । 'स पुनर्वेषभाषाभिर्हास्यकारी विदूषकः' तदुक्तौ हास्यपर्यवसायित्वाद् गुणत्वं इति प्राप्ता इत्यर्थः ।

न्यूनपदं क्वचिद् गुणः । यथा—

गाढालिङ्गनवामनीकृतकुचप्रोद्भूतरोमोद्गमा
सान्द्रस्नेहरसातिरेकविगलच्छ्रीमन्नितम्बाम्बरा ।
मा मा मानद माऽति मामलमिति क्षामाक्षरोल्लापिनी
सुप्ता किं नु मृता नु किं मनसि मे लीना विलीना नु किम् ॥

क्वचिन्न गुणो न दोषः । यथा—

तिष्ठेत् कोपवशात् प्रभावपिहिता दीर्घं न सा कुप्यति
स्वर्गायोत्पतिता भवेन्मयि पुनर्भावार्द्रमस्या मनः ।

---

## साहित्यचूडामणिः

क्वचित् किलिकिञ्चितादिवेलायां न्यूनपदं गुणः । प्रत्युत पूर्णपदस्य वैरस्यावहत्वात् । यत् उक्तं—क्षामाक्षरोल्लापिनीति । जहि ताडय पीडय इत्यादिपदमत्र न्यूनम् । सुरतस्य मोहान्तत्वाद् अवस्थातारतम्यमुच्यते—सुप्तेति । शरीरभेदपक्षे शङ्काद्वयमेतत् । स्वापो बाह्येन्द्रियव्यापारव्युपरमः । सर्वेन्द्रियपरिस्पन्दवन्ध्यं मरणम् । एकशरीरता परामर्शे मनसि मे लीना विलीना नु किमिति वितर्कद्वयम् लयः शरीरैक्यम् । आत्मैक्यं तु विलयः ।

न्यूनपदस्यैव क्वचिन्नोभावित्येतद् विवृणुते—क्वचिदिति ।

## सुधासागरः

न्यूनपदमिति । न्यूनपदमपि क्वचिद् गुणो यत्र न्यूनतयैवाभिमतसिद्धिरित्यर्थः । यथा—'गाढालिङ्गने'-ति ।

शार्दूलविक्रीडितं छन्दः । सुरतान्ते कश्चित्प्रेयसीं परामृशति । गाढालिङ्गनेन वामनीकृतौ कठोरत्वात्कथञ्चित्किञ्चिन्नामितौ कुचौ यस्याः सा चासौ अत एव प्रोद्भूतरोमोद्गमा प्रकर्षेण सञ्जातरोमाञ्चा । सान्द्रः सघनो यः स्नेहरसस्तस्यातिरेकेणाधिक्येन विगलत् स्खलत् श्रीमन्नितम्बस्य सुन्दरतमकटिपश्चाद्भागस्याम्बरं वस्त्रं यस्यास्तादृशी, मा मा मानद माऽति मामलमिति क्षामानि कृशान्यक्षराण्युल्लपन्ती आतुरत्वेऽपि सुस्वरं वदन्ती मे मनसि सुप्ता वा निश्चलत्वेन वर्त्तमानत्वात् । सुप्तस्य श्वासाद्यनुभवनियमादाह—किं नु मृतेति । न मृतोऽपि बहिरनुभूयते इत्यत आह नु तर्के किं लीना जतुकाष्ठवदैक्यङ्गता । तर्हि लाक्षावदुपलभ्येतेत्यत आह किं नु विलीना क्षीरोदकवन्मिश्रीभावङ्गतेत्यर्थः ।

अत्र 'मा मा' इत्यत्र 'आयासय' इति, 'माऽति' इत्यत्र 'पीडय' इति न्यूनम् । न च दोषः, प्रतीतेः स्फुटत्वात् । प्रत्युत गुणः, रसातिरेकव्यञ्जकत्वात् ।

क्वचित्तु न दोषो नापि गुणः । यथा—'तिष्ठेदि'-ति ।

तां हर्त्तुं विबुधद्विषोऽपि न च मे शक्ताः पुरोवर्त्तिनीं
सा चात्यन्तमगोचरं नयनयोर्यातेति कोऽयं विधिः ।।

—अत्र पिहितेत्यतोऽनन्तरं 'नैतद् यतः' इत्येतैर्न्यूनैः पदैर्विशेष-बुद्धेरकरणान्न गुणः, उत्तरा प्रतिपत्तिः पूर्वां प्रतिपत्तिं बाधते इति न दोषः। अधिकपदं क्वचिद् गुणः। यथा—

यद् वञ्चनाहितमतिर्बहु चाटुगर्भं
कार्योन्मुखः खलजनः कृतकं ब्रवीति ।
तत् साधवो न न विदन्ति, विदन्ति, किन्तु
कर्तुं वृथा प्रणयमस्य न पारयन्ति ।।

---

## साहित्यचूडामणिः

तिष्ठेदिति। प्रभावेण दिव्यया शक्त्या तिरोहितेति।

अत्र पिहितेति शब्दानन्तरं नैतद्यत इति पदानि न्यूनानि। तैर्न्यूनैरपि सद्भिर्न गुणः। विशेषे विलक्षणे प्रमेयांशे बुद्धिः प्रतिभा तस्या अकरणात्। उत्तरेति। यथोक्ता नायिका तिष्ठेदिति दीर्घं न सा कुप्यतीति वाक्ययोः समुच्चयो न संगच्छते तिष्ठेच्च कुप्यति चेति, नापि विकल्पः तिष्ठेद्वा कुप्यति वेति अर्थस्यानौचित्यप्रसङ्गात्। लकारभेदोऽपि समुच्चयविकल्पयोर्बाधक इति भावः। तेन तयोर्बाध्यबाधकभावेनाव-स्थानमास्थातव्यम्। कोपवशेन तिरोभूयावस्थानात्मनो दीर्घकालकोपनिषेधवपुषश्च फलयोर्विरोधान्नावश्यप्रयोज्यानि नैतदादीनि पदानि। नैतदिति पूर्ववाक्यप्रतिषेधे। यत इत्युत्तरवाक्यसाधने अतश्च न गुणो न दोष इति स्थितमुअ धिकपदमिति।

## सुधासागरः

प्रभावोऽन्तर्धानकरणिका विद्या तया पिहिता-तिरोहिता, विबुधद्विषो राक्षसाः। विधिर्दैवम्। स्पष्टमन्यत्। अत्रेत्यादि। अत्र पिहितेत्यन्तरं 'नैतद्युज्यते यतः इत्ये-तैर्न्यूनम्। एवं द्वितीयपादेऽपि। न चात्र गुणत्वम्, विशेषबुद्धेरनुत्पादात्। नापि दोषत्वम्, तद्व्यतिरेकेणापि 'दीर्घं न सा कुप्यति' इत्यादिप्रतीत्या 'तिष्ठेत् कोपवशात्' इत्यादिप्रतीतीनां बाध्यत्वावगमात्।

अधिकपदं क्वचिद् गुणो यत्र विशेषप्रतिपत्तिः। यथा—'यद्वञ्चने'-ति।

वसन्ततिलका छन्दः। साधवः पण्डिताः अस्य खलस्य प्रणयं कपटस्नेहमपि वृथा कर्तुं न पारयन्तीत्यन्वयः।

—अत्र 'विदन्ति' इति द्वितीयमन्ययोगव्यवच्छेदपरम् ।

यथा वा—

वद वद जितः स शत्रुर्न हतो जल्पंश्च तव तवास्मीति ।
चित्रं चित्रमरोदीद्धा हेति परं मृते पुत्रे ॥

—इत्येवमादौ हर्षभयादियुक्ते वक्तरि ।

**कथितपदं क्वचिद् गुणः (यथा) लाटानुप्रासे, अर्थान्तरसंक्रमितवाच्ये, विहितस्यानुवाद्यत्वे च ।**

---

## साहित्यचूडामणिः

न न विदन्ति खलव्यवहारान् सन्तो न न जानन्ति यावद्दाक्षिण्यपरतन्त्रास्तानज्ञाननाटितकादवधीरयन्ति ।

द्वितीयमिति । यथा न न विदन्तीति प्रथममयोगव्यवच्छेदप्रवणं, तथा विदन्तीति द्वितीयमन्ययोगव्यवच्छेदपरम् । अन्यथा साधूनां खलवाक्यापरिज्ञानाद्वैदग्ध्यप्रसङ्गः ।

वद वदेति । अत्र पादचतुष्टये हर्षभयविस्मयशोकानां प्रत्यायकत्वेनाधिकपदत्वं गुणः ।

कथितपदस्य गुणीभावे उपाधीनाह—लाटेति । 'शाब्दस्तु लाटानुप्रास' इति वक्ष्यमाणे । अर्थान्तरसंक्रमितवाच्यो ध्वनिरुक्तः तत्र च । किञ्च पूर्ववाक्यापेक्षया विहितस्योत्तरवाक्ययोगादनुवाद्यत्वे सति ।

## सुधासागरः

अत्रेत्यादि । अत्र द्वितीयं विदन्तीति पदमन्ययोगव्यवच्छेदं प्रतिपादयन्नधिकपदत्वेऽपि दुष्टम् । यदुक्तम्—

विस्मये च विषादे च दैन्ये चैवावधारणे ।
तथा प्रसादने हर्षे वाक्यमेकं द्विरुच्यते ॥ इति ।

एवं हर्षशोकादियुक्ते वक्तरि गुणत्वम्, त्वरादिव्यक्त्यां हर्षाद्यभिव्यञ्जकत्वात् । यथा—'वद वदे'-ति ।

उपगीतिश्छन्दः । अत्र पादचतुष्टये क्रमेण हर्षभीति-विस्मय-विषादयुक्ता वक्तारः, एवं पुनरुक्तोऽपि ।

कथितपदस्यापि लाटानुप्रासे तन्निर्वाहकतया अर्थान्तरसङ्क्रमितवाच्ये विशेषव्यञ्जनात्, विहितस्य यत्रानुवाद्यत्वं तत्र च तादृशाभिमतनिर्वाहकतया गुणत्वम् ।

क्रमेणोदाहरणम्—

सितकरकररुचिरविभा विभाकराकार, धरणिधर, कीर्तिः ।
पौरुषकमला कमला सापि तवैवास्ति नान्यस्य ॥
ताला जाअंति गुणा जाला दे सहिअएहिं घेप्पन्ति ।
रइकिरणाणुग्गहिआइं होन्ति कमलाइं कमलाइं ॥
[ तदा जायन्ते गुणा यदा ते सहृदयैर्गृह्यन्ते ।
रविकिरणानुगृहीतानि भवन्ति कमलानि कमलानि ॥ ]
जितेन्द्रियत्वं विनयस्य कारणं गुणप्रकर्षो विनयादवाप्यते ।
गुणप्रकर्षेण जनोऽनुरज्यते जनानुरागप्रभवा हि सम्पदः ॥

---

## साहित्यचूडामणिः

सितकरेत्यादि । नवमे निर्णेष्यते ।

तालेति। अत्र द्वितीयःकमलशब्दो विकास—सौरभलक्ष्मीनिवासत्वादिधर्मान्तरपरिणमितवाच्यः ।

जितेन्द्रियतया यो विनयो विहितः पूर्ववाक्ये स एवोत्तरवाक्ये गुणप्रकर्षावाप्तिनिमित्ततयानूद्यते इति विनयादेः कथितस्य पदस्य गुणीकारः । प्रत्युत पर्यायपरिवर्तने प्रक्रमभङ्गदोष इत्युक्तम् ।

## सुधासागरः

क्रमेणोदाहरणम्—'सितकरे'-ति ।

हे विभाकराकार सूर्यसमानाकृते धरणिधर राजन् सितकरकरवच्चन्द्रकिरणवद् रुचिरा विभा प्रभा यस्यास्तादृशी, सा कमलाऽपि तवैवास्ति नान्यस्येत्यर्थः । अत्र लाटानुप्रासः ।

जघनविपुला छन्दः ।

तदा जायन्ते गुणा यदा ते सहृदयैर्गृह्यन्ते ।
रविकिरणानुगृहीतानि भवन्ति कमलानि कमलानि ॥

इति संस्कृतम् । अत्र द्वितीयकमलपदं सौरभादिमदर्थकतयाऽर्थान्तरसङ्क्रमितवाच्यम् । तथात्वे च कथितपदत्वमेव प्रयोजकम् ।

जितेन्द्रियेति स्पष्टम् । वंशस्थं वृत्तम् । अत्र कारणमालायां पूर्वोपात्तपदेनैव विनयादिकमुपादेयम्, पदान्तरेणानूद्यमानं तद्भिन्नतयेव प्रतिभाति, तथा च तादृशालङ्कारसम्पादकतया गुणत्वम् । दोषाभावश्च ततो बीजाभावाच्च ।

पतत्प्रकर्षमपि क्वचिद् गुणः । यथा—उदाहृते 'प्रागप्राप्ते'-त्यादौ ॥

समाप्तपुनरात्तं क्वचिन्न गुणो न दोषः, यत्र न विशेषणमात्रदानार्थं पुनर्ग्रहणम् अपि तु वाक्यान्तरमेव क्रियते । यथा अत्रैव 'प्रागप्राप्तेत्यादौ' ॥

अपदस्थसमासं क्वचिद् गुणः । यथा—उदाहृते 'रक्ताशोकेत्यादौ' ॥

---

## साहित्यचूडामणिः

पतदिति । प्रस्तुतक्रोपादिपरित्यागोचिते स्थाने गुणः । प्रागित्यादि व्याख्यातम् । तत्र तुरीयपादे विकटबन्धत्यागेन मसृणरचनौचित्य—प्रत्ययादिति भावः ।

समाप्तेति । उद्देश्यप्रतिनिर्देश्यभावादिशालिनि स्थाने न गुणः । तत्रापि प्रकृतमेवोदाहरणमित्याह—प्रागिति । ननु यदि वाक्यान्तरं क्रियते तस्यार्थस्य व्याघातशङ्कायामस्थानमुक्तिप्रसङ्गः, अन्यथा त्यक्तपुनःस्वीकारापत्तिरिति चेत्, तन्न, येनानेनेत्यादौ स परशुरतिथिर्भवतु येन हरः खण्डपरशुः ख्याप्यत इति यद्वृत्तवशादुद्देश्यप्रतिनिर्देश्यभावसम्बन्धान्तरसद्भावान्न त्यक्तपुनःस्वीकारः । न च क्व नु पुनरितिवदुक्तार्थव्याघातः ।

रक्ताशोकेति । अस्थानस्थसमासत्वमत्र गुण इत्युक्तम् ।

## सुधासागरः

अत्र हि चतुर्थपादे क्रोधाभावान्मसृणमेव पदं युक्तमिति दोषत्वाभावः, गुणत्वं तु परशूत्कर्षस्य परशुस्वामिविषयकवक्तृनिष्ठविनयप्रकाशकतयेति भावः ।

अत्र 'येनानेन' इत्यादौ न विशेषणदानमात्रार्थं किन्तु वाक्यान्तरमेवावधेयमतो बीजाभावस्तन्न दोषः । न च गुणो विशेषबुद्धेरकरणात् । अयमभिप्रायः—विशेषणस्य विशेष्यसाकाङ्क्षत्वाज्जनितान्वयबोधविशेष्यपदावृत्तिकल्पनात्प्रतीतिविलम्बो निराकाङ्क्षत्वं च विशेषणोपादाने दूषकताबीजम्, वाक्यान्तरारम्भे तु न तथा, पदानामनाकाङ्क्षत्वेऽपि वाक्ययोः सर्वनामादिनाऽकाङ्क्षोत्थापनात् । अत्र प्रत्युत समाप्तिरङ्गम्, यथाऽऽहुः—

गर्भितं तथैव । यथा—

> हुमि अवहत्थिअरेहो णिरङ्कुसो अह विवेअरहिओ वि ।
> सिविणे वि तुमम्मि पुणो पत्तिहि भत्तिं ण पसुमरामि ॥

## साहित्यचूडामणिः

हुमि इति ।

> भवाम्यपहस्तितरेखो निरङ्कुशस्तथा विवेकरहितोऽपि ।
> स्वप्नेऽपि त्वयि पुनः प्रतीहि चिन्तां न प्रस्मरामीति ॥

एष कामं प्रति यौवनस्योक्तिः ।

## सुधासागरः

> स्वार्थबोधसमाप्तानामङ्गाङ्गित्वव्यपेक्षया ।
> वाक्यानामेकवाक्यत्वं पुनः संहत्य जायते ॥ इति ।

अत एव 'यो नववयो लास्याय' इति पाठे तत्रादोष एवेति ।

अपदस्थेत्यादि । अत्र प्रदीपकाराः—'अत्रापदस्थसमासत्वमेव कथमिति चिन्त्यम्, द्वितीयार्धस्यापि अतत्स्थानत्वात्, तस्यापि रुष्टवक्तृकत्वात्, अथवा गुणत्वासम्भवात्' इत्याहुः । तत्रेयं चिन्ता द्वितीयपादवदुत्तरार्धस्यापि समासस्थानत्वं रुष्टवक्तृकत्वं चेति सत्यम्, अत एव पूर्वं शृङ्गारप्रतिकूलस्यापि दीर्घसमासस्य रुष्टवक्तृकत्वेन गुणत्वमुदाहृतम्, प्रकृते तु तारतम्यविचारे 'नो इष्टा' इति क्रोधोत्पत्त्यव्यवहितोच्चारितपदेष्वेव तादृशसमासस्यावश्यकता न तु कतिचित्पदानि परित्यज्येत्यपदस्थसमासत्वम्, न पुनरस्य रुष्टवक्तृकत्वेन गुणत्वमुदाह्रियते, किन्तून्मत्तपुरूरवस उक्तिरियमतः स्थानौचित्याविवेकादुन्मादपरिपुष्ट्यैवेति वाग्देवतावतारोक्तिरनवद्यैवेत्यसकृदस्माभिरावेदितं शिष्टैर्मन्तव्यम् । उक्तानि चोन्मत्तचरितानि—'अस्थानहासस्मितनृत्यगीतक्रोधाङ्गविक्षेपणरोदनानि' इति । एवं च यद्भास्करभट्टाचार्यैरुक्तम्—शृङ्गारे दीर्घसमासस्यानौचित्यादस्थानत्वम्' इति, तद्गर्भस्रावेणेव गतमिति ध्येयम् ।

गर्भितं तथैवेति । गर्भितमपि क्वचिद्गुणो दृढप्रत्ययादिहेतुत्वात् । न च दोषः, प्रतीतेरव्यवधानादित्यर्थः । यथा—'हुमी'-ति । गाथा छन्दः । कामं प्रति यौवनस्योक्तिरियम् ।

> भवाम्यपहस्तितरेखो निरङ्कुशोऽथ विवेकरहितोऽपि ।
> स्वप्नेऽपि त्वयि पुनः प्रतीहि भक्तिं न प्रमोक्ष्यामि ॥

इति संस्कृतम् । हे राजन् अहमपहस्तितरेखस्त्यक्तमर्यादो भवामि । निरङ्कुश उच्छृङ्खलः, अथ विवेकरहितो धर्माधर्मविचारशून्योऽपि भवामि, स्वप्नेऽपि त्वयि पुनः प्रतीहि त्वं सत्यं जानीहि, भक्तिं न प्रमोक्ष्यामि न परित्यजामि, यादृशस्तादृशोऽपि स्वामिभक्तोनुग्राह्य एवेति भावः । प्रतीहीत्यत्र त्वमित्यस्याध्याहारनियमेन वाक्यत्वमक्षतम् । अयमाशयः प्रतीहीति सत्यप्रतीतिपरम्, तेन स्वोक्तेरमिथ्यात्वप्रतिपादकेन

[ भवाम्यपहस्तितरेखो निरङ्कुशोऽथ विवेकरहितोऽपि ।
स्वप्नेऽपि त्वयि पुनः प्रतीहि भक्तिं न प्रस्मरामि ॥ ]

—अत्र प्रतीहीति मध्ये दृढप्रत्ययोत्पादनाय। एवमन्यदपि लक्ष्याल्लक्ष्यम् ।

---

## साहित्यचूडामणिः

प्रतीहीति यत्पदं वाक्यमध्ये प्रयुक्तं तद् वाचं क्रमवर्णितामसहमानस्य वक्तुर्विवक्षितवाक्यार्थप्रतिपत्तिमुद्घाटयतीति गर्भितस्य गुणत्वम् ।

एवमन्यदपीति । तथाह—

यत् पादपूरणाद्यर्थं निरर्थकमुदाहृतम् ।
अदोषत्वं विजानन्ति तस्यापि यमकादिषु ॥

यथा—

योषितामतितरां नखलूनं
गात्रमुज्ज्वलतया नखलूनम् ॥ इति ॥

अत्र खलुशब्दस्यानर्थक्येऽपि यमकानुषङ्गाददोषत्वम् ।

पर्यायेण द्वयोर्यत्राधिक्यं प्रश्नोत्तरादिषु ।
सङ्कीर्णं तन्न दोषाय वाक्यं वाक्यविदो विदुः ॥

यथा—बाले ! नाथ ! विमुञ्च मानिनि रुषमित्यादि । विधेयाविमर्शः क्वचिद् गुणः । यथा—

कुविआओ पसण्णाओ ओरुण्णमुहीओ विहसमाणाओ ।
जह गहिआ तह हिअअ हरंति उच्छिण्णमहिलाओ ॥ इति ।

यत्र सत्युत्सन्ना महिला इति व्यासः । तद्वस्तुवृत्त्या नष्टाः स्त्रिय इति मङ्गलातङ्कशङ्कया शृङ्गारानौचित्यम् । एवं हतविधिलसितानां ही विचित्रो विपाकः' इत्यादि प्रसिद्धिविरोधे । देशविरोधः क्वचिद् गुणः यथा—

मन्दाकिन्याः पयः शेषं दिग्वारणमदाविलम् ।
हेमाम्बुरुहसस्यानां तद्वाप्यो धाम साम्प्रतम् ॥ इति ।

## सुधासागरः

प्रतीहीत्यनेन शपथसमानशीलेन सुहृद्विषयरागदार्ढ्यावगमः । परत उपादानेन तु प्राङ्मिथ्यात्वेन प्रतीतौ तदकिञ्चित्करं स्यादिति । एवं 'धन्यासि' इत्यत्रापि गर्भितस्य गुणत्वम्, अविदग्धगोष्ठ्यां शपथेनैव प्रत्यायनात् । एवमन्यदपीति । 'पंथिअ ण एत्थ सत्थरं'इत्यादौ स्रस्तरव्याजेन स्रस्तरं सम्भोगं वा श्लिष्टशब्देन याचते इति पथिकाभिप्रायसन्देहान्नायिकया तथैवोत्तरितमिति सन्देहस्य विवक्षायां सन्दिग्धस्यादोषत्वमित्याद्यूह्यम् ।

व्यभिचारिरसस्थायिभावानां शब्दवाच्यता ।
कष्टकल्पनया व्यक्तिरनुभावविभावयोः ॥ १२ ॥
प्रतिकूलविभावादिग्रहो दीप्तिः पुनः पुनः ।
अकाण्डे प्रथनच्छेदावङ्गस्याप्यतिविस्तृतिः ॥ १३ ॥
अङ्गिनोऽननुसन्धानं प्रकृतीनां विपर्ययः ।
अनङ्गस्याभिधानं च रसे दोषाः स्युरीदृशाः ॥ १४ ॥

---

## साहित्यचूडामणिः

अत्र तारकप्रभाववर्णनतात्पर्याद् गुणत्वम् । कालविरोधः क्वचिद् गुणो न दोषः । यथा—

राज्ञां विनाशपिशुनश्चचार खरमारुतः ।
धुन्वन् कदम्बरजसा सह सप्रच्छदोद्रुमान् ॥ इति ।

अत्रोत्पातरूपत्वात् ताटस्थ्यम् । एवं विद्याविरोधे । धर्मशास्त्रविरोधे यथा—

पञ्चानां पाण्डुपुत्राणां पत्नी पाञ्चालकन्यका ।
पत्नीनामग्रणीश्चासीद् दैवो हि विधिरीदृशः ॥ इति ।

अत्र देवरहस्याधीनत्वात् ताटस्थ्यम् । इत्थमन्यदालोचनीयम् ।

इयता रसाङ्गभूतवाच्यादिव्यवहितो रसस्पर्शी दोष उन्मेषितः । अधुना रसस्यैव दोषमुन्मेषयितुमुद्दिशति व्यभिचारीति व्यभिचार्यादीनां त्रयाणां सामान्यतो विशेषतो वा स्वशब्दवाच्यत्वं दोषः । कष्टकल्पनया क्लेशोत्तरया बुद्ध्यस्था न पुनः स्वारसिकाक्षेपशालिन्या व्यक्तिः । प्रस्तुते रसे प्रतिकूलानां विभावादीनां ग्रहणं

## सुधासागरः

यत्तु चण्डीदासप्रभृतिभिरुक्तम्—'ताणं गुणग्गहणाणम्' इत्यादौ वचनप्रक्रमभेदस्यादोषता, प्रत्युत क्रमप्रेम्ण एकरूपत्वव्यञ्जनाद् गुणत्वमिति, तन्न रमणीयम्, एकवचनेनैव प्रेमैकरूपत्वव्यञ्जनात्, प्रक्रमभङ्गस्याकिञ्चित्करत्वात् । अन्यथा द्विवचनोपादानेऽपि तत्प्रसङ्गादिति ध्येयम् ।

स्वशब्दोपादानमिति । शब्दवाच्यता सामान्यतो विशेषतो वा स्वशब्दोपादानम्, व्यभिचारिणां दोष इत्यन्वयः यथेत्युदाहरति । व्यभिचारिणां स्वशब्दानुपादानेऽपि स्वैः स्वैरनुभावैरभिव्यक्तौ भावध्वनित्वे स्यादिति भावः । अत एवोक्तं—'व्यभिचारी तथाऽञ्जित'इति । तथा रसपदेन शृङ्गारादिपदेन वा रसस्योपादानेऽपि विभावादिभिरभिव्यक्तिं विना न चर्वणीयता निर्वहति । अत एवोक्तं 'व्यञ्जितश्चर्वणीय' इति । तथा स्थायिनोऽभिव्यक्तौ एव रसतां प्राप्नुवन्ति न स्वपदोपात्ताः । तदुक्तम्—

१. स्वशब्दोपादानं व्यभिचारिणो यथा—

सव्रीडा दयितानने सकरुणा मातङ्गचर्माम्बरे
सत्रासा भुजगे सविस्मयरसा चन्द्रेऽमृतस्यन्दिनि ।
सेर्ष्या जह्नुसुतावलोकनविधौ दीना कपालोदरे
पार्वत्या नवसङ्गमप्रणयिनी दृष्टिः शिवायाऽस्तु वः ॥

—अत्र व्रीडादीनाम् ।

---

## साहित्यचूडामणिः

यथा शृङ्गारादौ शान्तादिसम्बन्धिनाम् । पुनःपुनर्दीप्तिः सहृदयहृदयोद्वेजनपर्यन्तदीपनम् । अकाण्डोऽकालः अनुचितः कालश्च तत्र प्रथमुद्भावनं छेदः खण्डनं च अङ्गस्याप्यतिविस्तृतिः अङ्गिनं प्रत्यङ्गस्य मात्रया विस्तृतिरौचित्याय न त्वतिरेकात् अङ्गिनः प्रधानभूतस्य नायकादेरननुसन्धानमपरामर्शः । अनङ्गस्य रसानुपयोगिनो भावस्योपन्यास इति संक्षेपः ।

क्रमादुदाहरति—स्वशब्देति ।

सव्रीलेति । विस्मयस्य रसत्वं चमत्कारकारित्वादौपचारिकम् । व्रीलात्रासेत्यादीनां स्वशब्दोपादानं दोषः । यद्यपि करुणो रसो विस्मयश्च स्थायी, तथापि प्राचुर्यं व्यभिचारिणामिति तदुदाहरणत्वम् ।

## सुधासागरः

'व्यक्तः स तैः' इत्यादि । एतत्सर्वं व्यञ्जनावृत्तेर्माहात्म्यम्, प्रमाणन्तु सहृदयहृदयमेवेति दिक् । उदाहरणम्—'सव्रीडे'-ति ।

शार्दूलविक्रीडितं छन्दः । पार्वत्या नवसङ्गमप्रणयिनी प्रथमसमागमाभिमुखी दृष्टिर्वः शिवायास्तु, दृष्टिं विशिनष्टि दयितानने सव्रीडा नायकस्य प्रथमदर्शनाद् व्रीडिता, एवं मातङ्गचर्माम्बरदर्शनात् कारुण्यम्, विभवाभावेन शोकोदयात् । भुजगदर्शनाद् भयम् । आकाशवासिनः कुतोऽत्र सम्भव इति चन्द्रदर्शनाद् विस्मयः । पत्युरन्यस्त्रीसम्बन्धदर्शनादीर्ष्या । मणिस्थाने कपालदर्शनाद्दैन्यमित्यर्थः ।

अत्र व्रीडादीनामिति । शब्दवाच्यत्वमिति शेषः । अयमाशयः—अत्र व्रीडादयो व्यभिचारिभावाः स्वशब्देनोपात्ताः । न च स्वशब्देनोपात्तेषु व्यभिचार्यादिष्वास्वादसम्भवोऽनुभूयते, किन्त्वनुभावादिमुखेनैव व्यक्तेषु, तस्मादास्वादानुत्पत्तिर्दोषत्वे बीजमिति सम्प्रदायः । तत्रेदमालोचनीयम् एतावता शब्दवाच्यताया दोषत्वमेव तावद् दुर्लभम्, दूरे पार्थक्येन, दूरतरे साक्षात् । तथाहि—अनुभावादीनामुपस्थितावेव भावादीनां शब्दवाच्यतयाऽऽस्वादोपघातः प्रतीयते इति तस्याः पृथग्दोषत्वम्, अत एवौत्सुक्यादीनां शब्दवाच्यता न दोषः, तत्रास्वादविघाताप्रतीतेः । न च वाच्यमेवमनुभावोपादानेऽपि किमिति नोदाहृतमिति, तदुपादानस्थले भावादिशब्दानां वैयर्थ्यमपीत्यसङ्कराभिप्रायेण तथोदाहरणात्, उदाहृते त्वनुभावाक्षेपकतया वैयर्थ्याभावात् । न

व्यानम्रा दयितानने मुकुलिता मातङ्गचर्माम्बरे
सोत्कम्पा भुजगे निमेषरहिता चन्द्रेऽमृतस्यन्दिनि ।
मीलद्भ्रूः सुरसिन्धुदर्शनविधौ म्लाना कपालोदरे,
—इत्यादि तु युक्तम् ।

२. रसस्य स्वशब्देन शृङ्गारादिशब्देन वा वाच्यत्वम् ।

क्रमेणादाहरणम्—

तामनङ्गजयमङ्गलश्रियं किञ्चिदुच्चभुजमूललोकिताम् ।
नेत्रयोः कृतवतोऽस्य गोचरे कोऽप्यजायत रसो निरन्तरः ॥

आलोक्य कोमलकपोलतलाभिषिक्त-
व्यक्तानुरागसुभगामभिराममूर्तिम् ।
पश्यैष बाल्यमतिवृत्य विवर्तमानः
शृङ्गारसीमनि तरङ्गितमातनोति ॥

---

### साहित्यचूडामणिः

व्यञ्जनानुकूलं पाठं परिवर्तयति व्यानम्रेति ।

निरन्तरो रस इति सामान्येन स्वशब्दप्रयोगः ।

आलोक्येत्यादौ विशेषेण शृङ्गारशब्दस्य । संप्रहार इति । उत्साहस्य वीर-रस-स्थायिनः स्वशब्दोपादानम् ।

### सुधासागरः

चैवमुक्तोदाहरणविरोधस्तत्रानुभावाद्यनुपादानादिति वाच्यम्, 'दैवादहमत्र' इत्यादाविवाक्षेपेण तेषां प्रतीतेः । न हि व्रीडादिशब्दैः प्रतिपादिता व्रीडादय आस्वाद्यतामिव स्वानुभावाद्याक्षेपकतामप्यास्वादयितुमक्षमाः बीजाभावात् । एवमग्रिमोदाहरणेष्वप्यूह्यम् । एवं च स्थिते—

'व्यानम्रा दयितानने मुकुलिता मातङ्गचर्माम्बरे,
सोत्कम्पा भुजगे निमेषरहिता चन्द्रेऽमृतस्यन्दिनि ।
मीलद्भ्रूः सुरसिन्धुदर्शनविधौ म्लाना कपालोदरे

इति पादत्रयपाठो युक्तः ।

एवं भावादिशब्देनाप्युपादाने द्रष्टव्यम् ।

'तामनङ्गे'-ति । रथोद्धता छन्दः । अनङ्गजयमङ्गलश्रियं कामस्य विजयमङ्गललक्ष्मीरूपाम् । किञ्चिदुच्चेन भुजमूलेन लोकितामवलोकितां नायिकां नेत्रयोर्गोचरे कृतवतोऽस्य कोऽपि निरन्तरो रसोऽजायतेत्यर्थः ।

३. स्थायिनो यथा—

संप्रहारे प्रहरणैः प्रहाराणां परस्परम् ।
ठणत्कारैः श्रुतिगतैरुत्साहस्तस्य कोऽप्यभूत् ॥

—अत्रोत्साहस्य ।

४. कर्पूरधूलिधवलद्युतिपूरधौत—

दिङ्मण्डले शिशिररोचिषि तस्य यूनः ।
लीलाशिरोंऽशुकनिवेशविशेषक्लृप्ति-
व्यक्तस्तनोन्नतिरभून्नवयौवना सा ॥

—अत्रोद्दीपनालम्बनरूपाः शृङ्गारयोग्या विभावा अनुभावपर्यव-सायिनः स्थिता इति कष्टकल्पना ।

---

## साहित्यचूडामणिः

अनुभावस्य कष्टकल्पनया व्यक्तिमुदाहरति—कर्पूरेति । उद्दीपनरूपश्चन्द्रोदयः । निर्दिष्टाकारा च कान्ता यून आलम्बनम् ।

अनुभावेति । 'तथाप्येतेषामसाधारणत्वमिति अन्यतमद्वयाक्षेपकत्वे सति नानैकान्तिकत्वमि'ति तुरीयोल्लासोक्तयुक्त्या तस्य यूनो यस्तदा स्वोचितोऽनुभावः तत्रापर्यवसायेन तद्व्यञ्जनव्यापारविमुखाः तदाक्षेपकत्वनैयत्यपराङ्मुखाः स्थिताः ।

## सुधासागरः

विशेषतः शृङ्गारपदेनाभिधानमुदाहरति—'आलोक्ये-ति' ।

वसन्ततिलका छन्दः । एषः कोमलयोः किशोरतया मृदुतरयोः कपोलतलयोर्गण्डफलकयोरभिषिक्तः प्रतिष्ठितः, अत एव व्यक्तः प्रकटीभूतो योऽनुरागो रिरंसारूपस्तेन सुभगां सुरतयोग्यामभिरामरूपां मनोहराकृतिं बालामालोक्य अतिवृत्त्यातिक्रम्य विवर्तमानः पुलककटाक्षादिभिश्चेष्टमानः सन् शृङ्गारसीमनि तरङ्गितमविच्छेदारम्भमातनोतीति पश्येत्यर्थः ।

स्थायिनो विशेषत उत्साहपदेनाभिधानमुदाहरति—'संप्रहारी' इति ।

सम्प्रहारे युद्धे प्रहरणैः शस्त्रैः परस्परं प्रहाराणां श्रुतिगतैः कर्णप्राप्तैः झणत्कारैस्तस्य वीरस्य कोऽप्युत्साहोऽभूदित्यर्थः । अत्रैव स्थायिभावोऽस्य कोऽप्यभूत् इति चतुर्थपादपाठे सामान्यतः शब्दवाच्यतोदाहरणं द्रष्टव्यम् ।

कष्टकल्पनया पृथक्श्लोकाद्यनुसन्धेयप्रकरणादिपर्यालोचनया विलम्बेन व्यक्तिर्न तु 'दैवादहमद्य तया' इत्यादाविव झटित्याक्षेपमहिम्ना सा व्यक्तिः अनुभावस्य यथा—'कर्पूरे'—ति ।

५. परिहरति रतिं मतिं लुनीते
स्खलति भृशं परिवर्तते च भूयः।
इति बत विषमा दशाऽस्य देहं
परिभवति प्रसभं किमत्र कुर्मः॥

—अत्र रतिपरिहारादीनामनुभावानां करुणादावपि सम्भवात् कामिनीरूपो विभावो यत्नतः प्रतिपाद्यः।

## साहित्यचूडामणिः

एवं विभावेनानुभावस्य कष्टकल्पनया व्यक्तिमुदाहृत्य पुनरनुभावेन विभावस्योदाहरति—परिहरतीति। रतिपरिहृतिमतिच्छेदादीनां करुणे भयानके च सद्भावादनैकान्तिकत्वात् कामिनीरूपो विभावो यत्नतः कष्टकल्पनया प्रतिपाद्यः।

## सुधासागरः

वसन्ततिलका छन्दः। शिशिररोचिषि चन्द्रे कर्पूरधूलिवद् धवलो यो द्युतेः पूरः समुदायस्तेन धौतं निर्मलीकृतं दिङ्मण्डलं येन तथाभूते सति, लीलया शिरोंऽशुकनिवेशविशेषस्य क्लृप्त्या रचनया व्यक्ता स्तनोन्नतिर्यस्यास्तादृशी सा नायिका तस्य यूनो नयनावनावभूत् दृष्टिपथमवतीर्णेत्यर्थः।

अत्रेत्यादि। अत्र चन्द्रादय उद्दीपनविभावाः शृङ्गारयोग्या अनुभावाप्रतीत्याऽऽस्वादापर्यवसायिनः स्थिताः। यद्यप्यंशुकनिवेशोऽनुभावत्वयोग्यस्तथाऽपि तस्य स्तनव्यक्तिप्रयोजकत्वेनापत्तेर्नानुभावत्वपर्यवसानमिति प्राञ्चः। वस्तुतः पुंनिष्ठ एव शृङ्गारोऽत्र प्रतिपिपादयिषितः, 'अभून्नयनावनौ सा' इत्यनेन तस्यैवालम्बनत्वप्रतिपादनात्। न च पुंसि कश्चिदनुभाव उपात्तः, न च विभावादिरप्याक्षेपार्ह इति कष्टेन कल्पनीयः।

विभावस्य यथा—'परिहरती,-ति।

पुष्पिताग्रा छन्दः। रतिं वस्तुस्पृहां परिहरति परित्यजति, मतिमर्थावधारणं लुनीते छिनत्ति, स्खलतितरामत्यन्तं विपर्येति, भूयः परिवर्तते विशेषदर्शी च भवति बत खेदे इत्येवं विषमा दशा, भ्रमविशेषदर्शनाभ्यां सुखदुःखदायित्वात् क्षणक्षणविलक्षणाऽवस्थाऽस्य यूनो देहं प्रसभं बलात्कारेण परिभवति तिरस्करोति किमत्र कुर्मः न कश्चिदुपायः स्फुरतीत्यर्थः।

अत्र रतीत्यादि। अत्र कामिनीरूपो शृङ्गारविभावोऽभिमतो न पुनरुपात्तः, न च रतिपरिहारादिभिरनुभावैराक्षेप्तुमपि शक्यते, तेषां करुणादावपि सम्भवेन झटित्यनाक्षेपात्, किन्तु प्रकरणाद्यनुसन्धानेन विलम्बेनेति कष्टेन कल्पनीयः।

६. प्रसादे वर्तस्व प्रकटय मुदं संत्यज रुषं
प्रिये, शुष्यन्त्यङ्गान्यमृतमिव ते सिञ्चतु वचः ।
निधानं सौख्यानां क्षणमभिमुखं स्थापय मुखं
न मुग्धे, प्रत्येतुं प्रभवति गतः कालहरिणः ॥

—अत्र शृङ्गारे प्रतिकूलस्य शान्तस्यानित्यताप्रकाशनरूपो विभावस्तत्प्रकाशितो निर्वेदश्च व्यभिचारी उपात्तः ।

णिहुअरमणम्मि लोअणपहम्मि पडिए गुरुअण मज्झम्मि ।
सअलपरिहारहिअआ वणगमणं एव्व महइ वहू ॥

---

## साहित्यचूडामणिः

प्रतिकूलविभावव्यभिचारिपरिग्रहमाह—प्रसाद इति । अङ्गानीति सेचनकर्म, तद्विशेषणं शुष्यन्तीति । अत्र शृङ्गारे प्रस्तुते तत्प्रतिकूलस्य शान्तस्य योऽयमनित्यताप्रकाशनरूपः कालहरिणस्य हरिणजातिवैलक्षण्यादपुनःप्रतिगमनस्वभाव उद्दीपनविभावः, स च तदभिव्यञ्जितो निर्वेदश्चोपात्तः । परमनिर्वेदस्थायिकस्य शान्तस्य मैत्रीकरुणादिमुखेन चर्वणायामवान्तरो निर्वेदः स्मृतिधृत्यादिवदुपयोगी ।

प्रतिकूलानुभावसङ्ग्रहमाह-णिहु इति ।

निभृतरमणे लोचनपथे पतिते गुरूणां मध्ये ।
सकलपरिहारहृदया वनगमनमेवेच्छति वधूः ॥ इति ।

अत्र सकलपरिहारो वनगमनं च द्वे अपि शान्तस्यानुभावभूते । निर्वेदानुवेधे हि रतिर्विद्यते । ज्ञातविषयस्वभावस्य तत्र जीवितसर्वस्वतयाभिमानाभावात् । न खलु विदितशुक्तिकलधौततत्त्वस्तदुपादानायोद्युङ्क्ते ऋते संवृतिमात्रात् ।

## सुधासागरः

'प्रतिकूलविभावादिग्रहः' प्रकृतरसादेः प्रतिकूलो यो रसादिस्तद्विभावानुभावव्यभिचारिणां ग्रहः । तत्र तादृग्विभावव्यभिचारिणोर्ग्रहो यथा—'प्रसादे वर्त्तस्वे'-इति । स्पष्टम् । शिखरिणी छन्दः । अत्र शृङ्गार इत्यादि । अत्र प्रकृते शृङ्गारे प्रतिकूलस्य शान्तस्य प्रकाश्यमानानित्यातारूपो विभावः, एतत्प्रकाशितो निर्वेदरूपो शान्तस्थाय्याख्यो व्यभिचारी स्फुटमेव गृह्यते । तादृशानुभावग्रहो यथा-'णिहुअरे'-त्ति ।

निभृतरमणे लोचनपथे पतिते गुरुजनमध्ये ।
सकलपरिहारहृदया वनगमनमेवेच्छति वधूः ॥

इति संस्कृतम् । निभृतरमण उपपतिः । स्पष्टमन्यत् । अत्रेत्यादि । अत्र व्याजादिकं विना वनगमनं सकलपरिहारश्च शान्तानुभावः, न च व्याजः प्रतिपादित

[ निभृतरमणे लोचनपथे पतिते गुरुजनमध्ये ।
सकलपरिहारहृदया वनगमनमेवेच्छति वधूः ॥ ]

—अत्र सकलपरिहार-वनगमने शान्तानुभावौ । इन्धनाद्यानयन-व्याजेनोपभोगार्थं वनगमनं चेन्न दोषः ।

७. दीप्तिः पुनः पुनः, यथा कुमारसम्भवे रतिविलापे ।

८. अकाण्डे प्रथनं, यथा वेणीसंहारे द्वितीयेऽङ्केऽनेकवीरक्षये प्रवृत्ते भानुमत्या सह दुर्योधनस्य शृङ्गारवर्णनम् ।

---

## साहित्यचूडामणिः

प्रकारभेदाददोषत्वमाह—पुष्पेति । पुष्पपल्लवाद्यानयनव्याजेन सङ्केतोचितं वनगमनमिति केनचित् समर्थ्यते । तदास्माकं न दोषोद्घाटनाग्रहः । अथ कथं सकलपरिहारस्य शृङ्गारानुकूल्यमिति चेदरतिलक्षणानुभावादित्याशयः ।

दीप्तिरिति । कुमारसम्भवे हि शिवयोः सांमुख्ये मन्मथदाहेन विघटिते झटिति तत्संघटनसंविधानोन्मुखानां सहृदयानां व्यवधानविधायिनि रतिविलापसर्गे नात्यन्तमादरः, किमुत भूयो भूयः प्रदीप्तौ । यथाह ध्वनिकारः—

परिपोषं गतस्यापि पौनःपुन्येन दीपनम् ।
रसस्य स्याद् विरोधाय [ ध्व० ३.१९ ] इति ।

वृत्तिकारोऽप्याह—"उपभुक्तो हि रसः स्व-सामग्रीलब्धपरिपोषः पौनः-पुन्येन परामृश्यमानः परिम्लानकुसुमकल्पः कल्पते" इति ।

अकाण्ड इति । अनेकसंक्षये दुर्योधनस्य संभोगवर्णनानौचित्यादकाण्डत्वम् । यदुक्तं तत्रैव "कञ्चुकी योऽयमुद्यतेषु बलवत्स्वथवा किं बलवत्सु वासुदेवसहायेष्वरिषु अद्याप्यन्तःपुरविहरणमनुभवति । इदमपरमयथायथं स्वामिनश्चेष्टितम् । "आ

## सुधासागरः

इति शृङ्गारस्य प्रकृतस्य विच्छित्तिः । इन्धनाद्यानयनव्याजेन सम्भोगार्थं वनगमनं यद्युच्यते तदा न शान्तानुभावग्रहः ।

दीप्तिरित्यादि । पुनः पुनर्दीप्तिः अन्तरा विच्छिद्य ग्रहणम् । वेद्यान्तर-सम्बन्धेन धाराया विच्छेदात्प्रबन्ध एव तथा सम्भवतीत्याह—रतिविलाप इति । कुमार-सम्भवे रतिविलापप्रस्तावे । 'अथ मोहपरायणा' इत्यादिना दीप्तिमानीतोऽपि करुणः 'अथ सा पुनरेव विह्वला' इत्यादिना पुनर्दीप्तिं नीतः । अथ वसन्तदर्शनेन विच्छेदः । पुनरपि 'तमवेक्ष्य रुरोद सा भृशम्' इत्यादिनोद्दीपितः । उपभुक्तो हि पुनरुपभुज्यमानः परिम्लानस्तवकवद् वैरस्याय कल्पते ।

९. अकाण्डे छेदो यथा वीरचरिते द्वितीयेऽङ्के राघवभार्गवयोर्धाराधिरूढे वीररसे 'कङ्कणमोचनाय गच्छामि' इति राघवस्योक्तौ।

१०. अङ्गस्याप्रधानस्यातिविस्तरेण वर्णनं यथा हयग्रीववधे हयग्रीवस्य।

---

## साहित्यचूडामणिः

शस्त्रग्रहणादकुण्ठपरशोरि"त्यादि। भानुमत्या सहेति। प्रतिमुखसन्ध्यङ्गविशेषस्य विलासस्य निबन्धे कवेर्निर्बन्धः। स चानुचितः। "न तु केवलया शास्त्रस्थितिसम्पादनेच्छया"[ ध्व० ३-१२ ] इत्युक्तत्वात्। अत्र च।

"समीहा रतिभोगार्था विलासः परिकीर्तितः।" इत्यत्र रतिभोगशब्द आधिकारिकरसोचितस्वभावोपबृंहक·विभावाद्युपलक्षणार्थ इत्यर्थापरिज्ञानं हेतुः। नचात्र दैवव्यामोहितत्वं कथापुरुषस्य परिहारः यतो रसबन्ध एव निर्बन्धः कवेः नेतिवृत्ते।

छेदो यथेति। धाराधिरूढे वीररसे तद्विच्छेदस्य नौचित्यं, यथाह—

अकाण्ड एव विच्छित्तिरकाण्डे च प्रकाशनम्।

उद्दीपनप्रशमने यथावसरमन्तरा ॥ [ ध्व० ३-१९ ] इति॥

अङ्गिन इति। प्रधानभूतस्यार्थस्यापरामर्शः—

यदुक्तं तत्रैव—वसुभूतिः—(निरूप्य) देव! कुत इयं कन्या।

राजा—देवी जानाति।

वासवदत्ता—एसा साअरादो पाविदेति भणिअ अमच्चेण जोअन्धरायणेण मह हत्थे णिक्खित्ता अदो एव्व साअरिअत्ति सद्दावीअदि इति।

## सुधासागरः

अकाण्डेऽनवसरे प्रथनं विस्तारो यथा—वेणीसंहारे द्वितीयेऽङ्के इत्यादि। छेदो विच्छेदः यथा वीरचरिते राघवभार्गवयोरविच्छिन्नप्रसरतया प्रवृत्ते वीररसे कङ्कणमोक्षणाय गच्छामीति राघवस्योक्तौ, अकाण्डे हि तथावचनं व्याजेन निर्गमनं प्रतिपादयद् वीरत्वाभावे पर्यवस्यति। अङ्गस्यातिविस्तृतिरप्रधानस्य प्रतिनायकादेरतिविस्तरेण वर्णनम्। यथा—हयग्रीववधाख्यनाटके हयग्रीवस्य जलकेलिवनविहाररतोत्सवादेर्नायकापेक्षयाऽतिविस्तरेण वर्णनं हयग्रीवस्य नायकत्वमेव प्रत्याययति न तु प्रतिनायकत्वम्। यद्यपि 'वंशवीर्यश्रुतादीनि वर्णयित्वा रिपोरपि' इत्याद्युक्तेः प्रतिनायकवर्णनं नायकस्यैवोत्कर्षे पर्यवस्यति, तथाप्यतिशयितं प्रधानतिरोधायकतया दोषपदवीमवतरतीति भावः। अङ्गिनः प्रधानस्याननुसन्धानं यथा—रत्नावल्यां

११. अङ्गिनोऽननुसंधानं यथा रत्नावल्यां चतुर्थेऽङ्के बाभ्रव्यागमने सागरिकाया विस्मृतिः ।

१२. प्रकृतयो दिव्या अदिव्या दिव्यादिव्याश्च, वीररौद्रशृङ्गार-शान्तरसप्रधाना धीरोदात्त-धीरोद्धत-धीरललित-धीरप्रशान्ताः, उत्तमाधममध्यमाश्च ।

## साहित्यचूडामणिः

नन्वङ्गिनो रसस्यानुसन्धानं नायिकया निरुह्यत इति कोऽयं नियम इति चेन्न ।

"रसस्यारब्धविश्रान्तेरनुसन्धानमङ्गिनः ।" [ ध्व० ३-१३ ]

इत्यत्र रसस्येति रसावगमकस्य यस्य कस्यापीति व्याख्यातत्वात् ।

प्रकृतिविपर्ययं व्याख्यातुं बहुप्रकारां प्रकृतिं प्रतिपादयति—प्रकृतय इति । दिव्या देवदानवादयः । अदिव्याश्चारुदत्तादयो मनुष्याः । दिव्यादिव्या दशरथादयः । यथाक्रमं वीरादिप्रधाना धीरोदात्तादयः । तत्र वीरप्रधान उदात्तः रौद्रप्रधान उद्धतः शृङ्गारप्रधानो ललितः शान्तप्रधानः शान्त इति चत्वारो नेतारः क्रमेण सात्वत्यारभटी-कैशिकीभारतीलक्षणवृत्तिप्रधानाः । तत्र धीरोदात्ताः रामादयः इत्याहुः—

महासत्त्वोऽतिगम्भीरः क्षमावानविकत्थनः ।
स्थिरो निरूढाहङ्कारो धीरोदात्तो दृढव्रतः ॥ इति ।

धीरोद्धता भीमसेनादयः । यच्चाहुः—

धीरोद्धतस्त्वहङ्कारी चलश्चण्डो विकत्थनः । इति ।

धीरललिता वत्सराजादयः । यदप्याहुः—

निश्चिन्तो धीरललितः कलासक्तः सुखी मृदुः । इति ।

धीरशान्ता माधवप्रमुखाः । यदपि चाहुः—

सामान्यगुणयुक्तश्च धीरशान्तो द्विजातिकः । इति ।

तत्रेति । अदिव्येषु नायकेषु येषामुत्तमप्रकृतिकता । तद्वद् दिव्येष्वपि

## सुधासागरः

चतुर्थेऽङ्के बाभ्रव्यस्य सिंहलेश्वरकञ्चुकिनः आगमनसमये विजयवर्मवृत्तान्तश्रवणा-सक्तहृदयेन राज्ञा सागरिकाया नाममात्रस्याप्यग्रहणाद् विस्मृतिः । तेन नाटिकाप्रति-पाद्यशृङ्गाररसो विच्छिन्नप्राय इति भावः ।

प्रकृतिविपर्ययं व्याख्यातुं प्रतियोगिभूतास्ता आह—प्रकृतय इत्यादि । अयमर्थः प्रकृतीनां विपर्ययः यत्प्रकृतौ यद्वर्णनमनुचितं तत्र तद्वर्णनम् । प्रकृतयस्तावद्दिव्या अदिव्या दिव्यादिव्याश्च । तत्र दिव्यत्वमसर्त्यैकरूपत्वमतो न पातालीयाद्यसङ्ग्रहः । उदाहरणं श्रीमन्महेश्वरादिः । अदिव्यत्वे मर्त्यैकरूपता, यथा माधवादिः । दिव्या-

तत्र रतिहासशोकाद्भुतानि अदिव्योत्तमप्रकृतिवत् दिव्येष्वपि। किन्तु रतिः सम्भोगशृङ्गाररूपा उत्तमदेवताविषया न वर्णनीया। तद्वर्णनं हि पित्रोः सम्भोगवर्णनमिवात्यन्तमनुचितम्।

क्रोधं प्रभो, संहर संहरेति यावद् गिरः खे मरुतां चरन्ति।
तावत् स वह्निर्भवनेत्रजन्मा भस्मावशेषं मदनं चकार॥

इत्युक्तवद् भ्रुकुट्यादिविकारवर्जितः क्रोधः सद्यःफलदः स्वर्ग-पातालगगनसमुद्रोल्लङ्घनाद्युत्साहश्च दिव्येष्वेव। अदिव्येषु तु

## साहित्यचूडामणिः

रतिहासशोकाद्भुतानि न पुनर्मध्यमप्रकृत्याद्युचितानि। यथा—

सुदुस्थः सन् कृतार्थोऽपि निश्शेषैश्वर्यसम्पदा।
निकामकमनीयेऽपि नरकीयति कानने॥ इति।

न च तान्यवर्णनीयानि, भारतवर्षौचित्येन वर्णनमिति सम्प्रदायः। किन्त्विति। उत्तमदेवताविषया रतिः सम्भोगलक्षणा दिव्यप्रकृतित्वाद् दिव्योत्तमवदतिदिष्टापि न वर्णनीया। यथा कुमारसम्भवे—

दष्टमुक्तमधरोष्ठमम्बिका वेदनाविधुतहस्तपल्लवा।
शीतलेन निरवापयत् क्षणं मौलिचन्द्रशकलेन शूलिनः॥ इत्यादि।

तत्रानौचित्यमाह—तद्वर्णनं हीति। न च सम्भोगशृङ्गारस्य सम्भोगलक्षण एवैकः प्रकारः यावदन्येऽपि जलक्रीडापुष्पोच्चयादयः सम्भवन्तीति। सद्यःफलद इति। यथा—कोपं प्रभो! संहर संहरेति। यथा वा ममैव

अक्ष्णः कोणेन विद्युत्कणकिरणमुचा पश्यति क्रोधवश्ये
यस्मिन्नम्लानपुष्पस्तिमितमधुलिहो देवदारोरधस्तात्।
उन्मीलद्-धूमलेखाविलिखितगगनो लब्धवानिक्षुधन्वा
दावज्वालावलीढस्फुटितफलदशां शाल्मलीगुल्मलीलाम्॥ इति॥

## सुधासागरः

दिव्यत्वन्तूभयरूपता, यथा श्रीकृष्णादिः। त्रिविधा अप्येते चतुर्धा भवन्ति, धीरोदात्तधीरोद्धतधीरललितधीरशान्तभेदात्। क्रमेण वीररौद्रशृङ्गारशान्तप्रधानत्वमेषां लक्षणानि। श्रीराम-भार्गव-कृष्ण-जीमूतवाहना उदाहरणानि। एते च प्रत्येकमुत्तमाधममध्यमभेदाः। अनुकूलादिभेदास्त्वस्थिराः। अनुकूलादिर्हि कदाचिद्दक्षिणादि सम्पद्यते इति प्रकृतिभेदे न गणनीयाः। एवं भिन्नासु प्रकृतिषु रतिहासशोकाद्भुतान्यदिव्योत्तमप्रकृतिवद्दिव्येष्वपि वर्णनीयानि। किन्तु रतिः मन्मथानुगता शृङ्गाररूपा उत्तमदिव्यादिविषया न वर्णनीया, यद्वर्णनं पित्रोः सम्भोगवर्णनमिवात्यन्तमनुचितम्।

यावदवदानं प्रसिद्धमुचितं वा तावदेवोपनिबन्द्धव्यम्। अधिकं तु निबध्यमानमसत्यप्रतिभासेन 'नायकवद् वर्तितव्यम् न प्रतिनायकवद्' इत्युपदेशे न पर्यवस्येत्। दिव्यादिव्येषु उभयथाऽपि। एवमुक्तस्यौचित्यस्य दिव्यादीनामिव धीरोदात्तादीनामप्यन्यथावर्णनं विपर्ययः।

तत्रभवन् भगवन्नित्युत्तमेन न अधमेन मुनिप्रभृतौ न राजादौ, भट्टारकेति नोत्तमेन राजादौ प्रकृतिविपर्ययापत्तेर्वाच्यम्। एवं देशकालवयोजात्यादीनां वेषव्यवहारादिकमुचितमेवोपनिबन्धव्यम्।

---

## साहित्यचूडामणिः

स्वः पातालेति। अतएव हि मुनिना प्रख्यातवस्तुविषयत्वं प्रख्यातोदात्तनायकत्वं च नाटकस्यावश्यकर्तव्यतया पर्यालोचितम्। यदाह—[ध्व० ३-१०]

विभावभावानुभावसञ्चार्यौचित्यचारुणः।
विधिः कथाशरीरस्य वृत्तस्योत्प्रेक्षितस्य वा॥

इति। तस्य भावौचित्यं प्रकृत्यौचित्यात्।

एवं प्रकृतिं विचार्यामन्त्रणविषयं विपर्ययमाह—तत्रेति। भवन् भगवन्नित्यादिकमामन्त्रितम् उत्तममुनिप्रभृतौ न कदाचिदुत्तमेऽपि राजादौ। भट्टारकेत्यादि च राजादौ न कदाचिन्मुनिप्रभृतौ वाच्यम्, प्रकृतिविपर्ययप्रसङ्गात्। एतेन भावा मारिषा इत्यादिनाट्यपरिभाषा व्याख्याताः। एवमिति।

## सुधासागरः

उक्तं च रुद्रभट्टेन।

कुलशैलाम्बुनिधीनां न ब्रूयाल्लङ्घनं मनुष्येण।
आत्मीययैव शक्त्या सप्तद्वीपावनिक्रमणम्॥ इति।

आत्मीययेति वदता हनूमतोऽब्धिलङ्घनमर्जुनस्य देवविमानारोहणं च परमेश्वरशक्त्युपबृंहितत्वाद्देवावतारत्वेन दिव्यादिव्यप्रकृतिकत्वाच्च न दोषः। एवं च यद्रूपनिबन्धनेन विनेयानां बुद्धिखण्डना न जायते तादृग्वर्णनीयम्। अत एवोक्तमधिकन्त्विति। अत एव दशरूपककृताप्युक्तम् 'विरुद्धं तत्परित्याज्यमन्यथा वा प्रकल्पयेत्' इति। तत्रोदात्तराघवे नायकानुचितस्य बालिवधस्य त्यागः वीरचरिते ऽन्यथा प्रकल्पितमिति।

दिव्यादिव्येषु पुनरुभयोरप्युचितं वर्णनीयम्। एवमुक्तस्यौचित्यस्य दिव्यादीनामिवोत्तमादीनामप्यन्यथावर्णनं प्रकृतिविपर्ययः आमन्त्रणौचित्यलङ्घनेऽप्येवम्। तद्यथा तत्रभवन्भगवन्नित्युत्तमेनैव प्रयोक्तव्यं नाधमेन। उत्तमेनापि

१३. अनङ्गस्य रसानुपकारकस्य वर्णनम् । यथा कर्पूरमञ्जर्यां नायिकया स्वात्मना च कृतं वसन्तवर्णनमनादृत्य बन्दिवर्णितस्य राज्ञा प्रशंसनम् ।

'ईदृशा' इति । नायिकापादप्रहारादिना नायककोपादि-वर्णनम् । उक्तं हि ध्वनिकृता—

अनौचित्यादृते नान्यद्
रसभङ्गस्य कारणम् ।
औचित्योपनिबन्धस्तु[१]
रसस्योपनिषत् परा ॥

---

## साहित्यचूडामणिः

अनङ्गस्येत्यादि स्पष्टम् ।

उपलक्षणं चैतदित्याह—ईदृशा इति । आदिपदेन रामस्य नाटिकानायकत्व-करणमभिप्रेयते । यदुक्तं—[ ध्व० ३-१४ वृ० ]

सन्ति सिद्धरसप्रख्या ये च रामायणादयः ।
कथाश्रया न तैर्योज्या स्वेच्छा रसविरोधिनी ॥ इति ।

तदयमत्र परमार्थ इत्याह—उक्तं हीति ।

## सुधासागरः

मुनिप्रभृतावेव न तु राजादौ । भट्टारकेति न राजादावुत्तमेन । किन्तु देवादावेव । अन्यथा प्रकृतिविपर्ययापत्तेः । एवं यत्र देशे काले वयसि जातौ वा यद्वेषव्यवहारादि समुचितं तदेव तत्रोपनिबन्धव्यम् , अन्यथानिबन्धने तु प्रकृतिविपर्ययः यथा स्वर्गाङ्गनासु मानुषीवेषादिः, रसातलादौ मेघादिरिति ।

अनङ्गस्येत्यादि । अनङ्गस्याभिधानं रसानुपकारकस्य वर्णनं यथा—कर्पूरमञ्जर्यां नायिकया स्वात्मना च यद् वसन्तवर्णनं तदनादृत्य बन्दिवर्णितस्य राज्ञा प्रशंसनम् ।

'ईदृशा' इत्यनेनैतदुक्तम्—यदेवंविधा अन्येऽप्यनौचित्यहेतवो भवन्ति । यथा नायिकापादप्रहारादिना नायककोपादिवर्णनमित्यादि । अनौचित्यं तु रस-विच्छेदहेतुः ।

---

१ 'प्रसिद्धौचित्यबन्धस्तु'—इति पाठे । ध्वन्यालोक—३

इदानीं क्वचिददोषा अप्येते इत्युच्यन्ते-

**न दोषः स्वपदेनोक्तावपि सञ्चारिणः क्वचित् ।**

यथा—

औत्सुक्येन कृतत्वरा सहभुवा व्यावर्तमाना ह्रिया
तैस्तैर्बन्धुवधूजनस्य वचनैर्नीताभिमुख्यं पुनः ।
दृष्ट्वाऽग्रे वरमात्तसाध्वसरसा गौरी नवे संगमे
संरोहत्पुलका हरेण हसता श्लिष्टा शिवायास्तु वः ॥

—अत्रौत्सुक्यशब्द इव तदनुभावो न तथा प्रतीतिकृत् । अतएव 'दूरादुत्सुकम्' इत्यादौ व्रीडाप्रेमाद्यनुभावानां विवलितत्वादीनामिवौत्सुक्यानुभावस्य सहसा प्रसरणादिरूपस्य तथा प्रतिपत्तिकारित्वाभावादुत्सुकमिति कृतम् ।

---

## साहित्यचूडामणिः

अथोक्तानां दोषाणामुपाधिवशाददोषत्वं वक्तुमुपक्रमते—इदानीमिति । क्वचिद् तदुपाधिमति प्रयोगे । न दोष इति । अनुभावप्रयोगादपि यत्र स्वशब्दोपादानस्यौचित्यं सचेतोभिश्चिन्त्यते तत्र न दोषः । औत्सुक्यं वाञ्छालौल्याद्यनेकप्रकारम् । तत्प्रकाशनक्षमो नानुभावः सम्भवी । तेन तस्य स्वशब्दरचनौचित्यम् ।

तदनुभाव इति । सपदि प्रसरणादिस्वभावः । तथेति यथा स्वशब्दप्रयोगे उक्तमर्थप्रयोगान्तरेण सम्पादयति । अत एवेति । व्रीडादयो व्यभिचारिणः सर्वे विवलितत्वादिभिरनुभावैः प्रकाश्यन्ते । तद्वदौत्सुक्यस्यापि सहसा प्रसरणादिरूपेणानुभावेन प्रत्यायनं न्याय्यम् । तच्च न शक्यं व्रीलादेर्विवलितत्वादेरिव औत्सुक्यप्रकाशने सद्यःप्रसरणादेः पाटवाभावात् । उत्सुकमिति कृतमिति । उत्सुकमित्येव प्रयुक्तं न पुनर्दूरादुत्थितमित्यनुभावेनाभिव्यञ्जितम् ।

## सुधासागरः

इदानीमेषां केषाञ्चित्क्वचिददोषत्वमपीत्याह—'न दोष' इति । सञ्चारिणो न तु रसस्थायिनोरपि । क्वचिदिति । यत्रेतरविलक्षणो नानुभावः । सहभुवा सहोत्पन्नया । स्पष्टमन्यत् ।

अत्रौत्सुक्यशब्द इवेत्यादि । अत्रौत्सुक्यशब्दवत्सहसाप्रसरणादिरूपानुभावो नौत्सुक्यमसन्दिग्धं प्रतिपादयितुमीष्टे, भयादिसाधारणत्वात् । अत एव—'दूरादुत्सुकमि'-त्यत्र । व्रीडादीनि विवलितत्वादिभिरनुभावैरुपनिबध्नन्नेव रसिकशिरोमणिरमरुकविरौत्सुक्यं स्वशब्देनैवोपात्तवान् । दोषत्वाभावबीजमुक्तं प्राक् । इदन्त्ववधेयम्—

**सञ्चार्यादेर्विरुद्धस्य बाध्यत्वोक्तिर्गुणावहा ॥ १५ ॥**

बाध्यत्वेनोक्तिर्न परमदोषः, यावत्प्रकृतरसपरिपोषकृत् । यथा—

'क्वाकार्यं शशलक्ष्मणः क्व च कुलम्'-इत्यादौ ॥

—अत्र वितर्कादिषु उद्गतेष्वपि चिन्तायामेव विश्रान्तिरिति प्रकृतरसपरिपोषः ।

---

## साहित्यचूडामणिः

प्रतिकूलविभावादिग्रहं गुणीकर्तुमाह—सञ्चार्यादेरिति ।

विवक्षिते रसे लब्धप्रतिष्ठे तु विरोधिकाम् ।
बाध्यानामङ्गभावं वा प्राप्तानामुक्तिरच्छला ॥ [ ध्व० ३-२० ]

इति ध्वनिदृशा विरोधिनां भावानां बाध्यत्वेनावस्थानमङ्गभावप्राप्तिर्वेति द्विविधो गुणीकारः ।

तत्र प्रथममवबोधयति—बाध्यत्वेनोक्तिरिति । बाध्यत्वं हि विरोधिना शक्याभिभवत्वम् । गुणावहेत्येतद्व्याचष्टे न परमिति । उक्तञ्च मदीये वाक्ये—

कर्दमादपि यत् कार्ष्ण्यं कज्जलस्य विशिष्यते ।
गुणमेव हि तत् तस्य चक्षुष्मन्तः प्रचक्षते ॥ इति ।

चिन्तायामेवेति । न पुनर्वीचीतरङ्गन्यायादुन्मग्ननिमग्ने वितर्कौत्सुक्यादौ । प्रकृतस्य रसस्य विप्रलम्भशृङ्गारस्य परिपोषः ।

## सुधासागरः

त्वरादीनां भयादिसाधारण्येऽप्यौत्सुक्यादिना स्वकारणेन विशिष्यमाणास्त एवासाधारण्यमासाद्यौत्सुक्यादि व्यञ्जयन्तीत्यास्वादोदयः । न तु शब्दादेव तत्प्रतिपत्त्या, व्यभिचार्यादीनां वाच्यत्वासहत्वव्युत्पादनात् । अत एवात्र न वैयर्थ्यमपि विशेषणत्वेनोपयोगात् । दूरादुत्सुकमित्यादौ तु शब्दमहिम्ना विशिष्टस्यैवानुभावस्य कल्पनमिति ततोऽभिव्यक्तिरिति । एवं च व्यवस्थिते शब्देन तदुपस्थितिं विना न तदनुभावस्य साधारण्यम्, न च तेन विनाऽभिव्यक्तिर्न चाभिव्यक्तिं विना स्वादसम्भवो, न च तेन विना भावमध्यप्रवेशो न च तमन्तरेण तथा कीर्त्तनं युक्तमिति भावस्योत्कीर्तनमपि एतादृशस्य व्यभिचारिणि शब्दवाच्यताया दोषत्वाभावं साधयतीति युक्तमुत्पश्यामः ।

बाध्येत्यादि । प्रकृतविरुद्धं व्यभिचार्यादि बाध्यत्वेनोच्यते तदा दूरे दोषत्वम्, प्रत्युत प्रकृतरसपरिपोषकतया गुणत्वम् । तत्र व्यभिचारिणो यथा 'क्वाकार्यं शशलक्ष्मणः क्व च कुलं भूयोऽपि दृश्येत सा' इत्यादौ । व्याख्यातमेतच्चतुर्थोल्लासे ।

पाण्डु क्षामं वदनं हृदयं सरसं तवालसं च वपुः ।
आवेदयति नितान्तं क्षेत्रियरोगं सखि, हृदन्तः ॥

—इत्यादौ साधारणत्वं पाण्डुतादीनामिति न विरुद्धम् ।

सत्यं मनोरमा रामाः सत्यं रम्या विभूतयः ।
किन्तु मत्ताङ्गनापाङ्गभङ्गलोलं हि जीवितम् ॥

---

## साहित्यचूडामणिः

एवं स्वाभाविकीमङ्गभावप्राप्तिमुक्त्वा समारोपितामुदाहरन्नत्र विमतमर्थं समर्थयते—पाण्ड्वीति । क्षेत्रियेति 'क्षेत्रियच् परक्षेत्रे चिकित्स्य' [पा०सू० ५-२-९२] इति शरीरान्तरचिकित्स्यमचिकित्स्यमामयमावेदयति ।

अत्र विरोधमङ्गीकृत्याङ्गत्वप्राप्त्या परिहारो ध्वनिग्रन्थे । तद्वैतमयेन विरोध एव नास्तीत्याह-साधारणत्वमिति । रोगानुत्पत्तावपि पाण्डुत्वादिसम्भवात् । अत एव विरोध एव नास्ति । कुतो गुणीकारार्थमङ्गत्वप्राप्तिश्चिन्त्येत्याकूतम् । सत्यमिति ।

बाध्यत्वेनैवेति । पूर्वार्धे तावदावयोर्न विप्रतिपत्तिरिति यावत् । विरुद्धरसस्पर्शानौचित्याभावात् । उत्तरार्धेऽप्येवं विवक्षेत्याह—जीवितादधिकमिति । उपमेयादुपमाने

## सुधासागरः

अत्रेत्यादि । अत्र चतुर्षु पादेषु पूर्वभागप्रतिपाद्यानां शमाङ्गानां वितर्कमतिशङ्काधृतीनामुत्तरभागप्रतिपाद्याभिरभिलाषाङ्गभूताभिरौत्सुक्यस्मृतिदैन्यचिन्ताभिस्तिरस्कारपुरःसरं चिन्तायामेव पर्यवसानमिति भावशबलतापरिपोषकत्वाद् गुणत्वमित्यर्थः ।

'पाण्डुक्षाममि'-ति ।

गाथा छन्दः । हे सखि ! तव हृन्मानसं नितान्तमत्यन्तं क्षेत्रियरोगं क्षेत्रियो देहान्तरेऽप्यचिकित्स्यो यो रोगः क्षयरोगस्तमावेदयति । तथा हि पाण्डु धवलं क्षामं कृशं च वदनं हृदयं सरसं सरोगबीजं तेन सहितं सस्नेहं च, वपुः शरीरमलसं चेत्यर्थः ।

अत्र व्याधेः करुणरसोचितस्य शृङ्गाराङ्गत्वेन समारोपोऽदोषत्वे हेतुरिति ध्वनिकारः, तन्न । करुण इव शृङ्गारप्रकर्षेऽपि पाण्डुतादीनामनुभावानामुचितत्वात् । अत एव 'व्याध्युन्मादापस्मारजाड्यप्रसरणादिभिर्विप्रलम्भोऽभिनेतव्य' इति भरतः, तेनात्र विरोध एव नास्तीत्यलं तत्समर्थनप्रयासेनेत्याह—इत्यादाविति । अत एव प्रदीपकारैरुक्तम्—अत्र पाण्डुत्वादीनां रोगानुभावतया विरुद्धत्वेऽपि विप्रलम्भशृङ्गारे समारोपादङ्गभावप्राप्त्या दोषत्वाभाव इति ध्वनिकारः । तदयुक्तम्, तेषामुभयसाधारण्याद् विरोधस्यैवासिद्धेरिति ।

**—इत्यत्राद्यमर्धं बाध्यत्वेनैवोक्तम्। जीवितादपि अधिकमपाङ्ग-भङ्गस्यास्थिरत्वमिति प्रसिद्धभङ्गुरोपमानतयोपात्तं शान्तमेव पुष्णाति, न पुनः शृङ्गारस्यात्र प्रतीतिस्तदङ्गाप्रतिपत्तेः। न तु विनेयोन्मुखी-करणमत्र परिहारः, शान्त-शृङ्गारयोर्नैरन्तर्यस्याभावात्। नापि काव्यशोभाकरणम्, रसान्तरादनुप्रासमात्राद् वा तथाभावात्।**

---

## साहित्यचूडामणिः

साधर्म्योत्कर्षस्य सिद्धत्वात्। प्रसिद्धं यद् भङ्गुरं सदुपमानं तद्भावेनोक्तम्। तदङ्गेति। तत्र शृङ्गारस्य यदङ्गं जीवितस्थैर्यादि तस्याप्रतिपत्तेः। अत्र ध्वनिकारपदवीमपवदते नन्विति। यदाह—[ ध्व० ३.३० ]

> विनेयानुन्मुखीकर्तुं काव्यशोभार्थमेव वा।
> तद्विरुद्धरसस्पर्शस्तदङ्गानां न दुष्यति ॥ इति।

शृङ्गाराङ्गाणां विभावादीनां शृङ्गारविरुद्धरसस्पर्शो न केवलं प्रागुक्तो—विरोधलक्षणाददुष्टः यावद्विनेयानुन्मुखीकर्तुं काव्यशोभार्थमेव वा क्रियमाण इति कारिकार्थः। गुडजिह्विकया शृङ्गारेणोन्मुखीकृता विनेयाः सुखं विनयोपदेशं गृह्णन्ति।

शान्तेति। कस्यचित् प्ररोचनासामान्यस्यातात्पर्ये नैरन्तर्यस्यावश्यम्भावः। तच्च न सिद्ध्यति उभयविनाशप्रसंगात्। काव्यशोभार्थमित्यंशं प्रतिक्षिपति—नापीति। रसनिर्बन्धे शृङ्गारव्यतिरिक्तादन्यस्माद् रसात् तदभावे तु अनुप्रास-मात्राद्वा तथाभावात् शोभमानत्वात्।

## सुधासागरः

सञ्चार्यादेरित्यत्रादिग्रहणाद् विरुद्धस्य विभावस्य बाध्यत्वेनोक्तौ गुणावहत्वं दर्शयति—'सत्यमि'-ति। स्पष्टम्।

इत्यत्राद्यमर्धमित्यादि। अत्र पूर्वार्धे शृङ्गारस्योत्तरार्धे शान्तस्य विभावः। अनयोर्विरुद्धत्वेऽपि पूर्वार्धस्य बाध्यत्वेनाभिधानान्न दोषत्वम्, अपि तु गुणत्वम्, शान्तपरिपोषकत्वात्। सर्वाः रामादयः सत्येव जीविते तदर्थमुपादेयाः जीवितं चातिभङ्गुरमिति किंकृतं तासामुपादेयत्वमतो रम्यतरेऽपि निष्फला एवेति पर्यवसानात्। ननु मत्ताङ्गनापाङ्गस्योपादेयत्वावगतौ कथं शान्तस्य प्राधान्यमित्यत आह—जीवितादित्यादि। अधिकास्थिरत्वेन प्रसिद्धो यो भङ्गुरोऽपाङ्गभङ्गस्तस्य उप-मानतयोपात्तमुपादानमित्यर्थः। तदनुपमानत्वसामान्यवचनस्य समस्ततयोपादानं न स्यात्। उपमानेन सामान्यवचनस्य समासात्। 'उपमानानि सामान्यवचनैः' इत्यनुशासनात्। शान्तमेव पुष्णातीति। यथाऽपाङ्गभङ्गोऽस्थिरस्तथा जीवितमिति

**आश्रयैक्ये विरुद्धो यः स कार्यो भिन्नसंश्रयः ।**
**रसान्तरेणान्तरितो नैरन्तर्येण यो रसः ॥ १६ ॥**

वीर-भयानकयोरेकाश्रयत्वेन विरोध इति प्रतिपक्षगतत्वेन भयानको निवेशयितव्यः । शान्तशृङ्गारयोस्तु नैरन्तर्येण विरोध इति

---

## साहित्यचूडामणिः

अथ रसविरोधे संक्षिप्य परिहारोपायमाह-आश्रयेति । द्विधा हि रसविरोधः । एकाश्रयत्वमूलो नैरन्तर्यमूलश्च । तत्र पूर्वस्मिन्नाश्रयभेद एव परिहारः । यदुक्तं—

विरुद्धैकाश्रयो यस्तु विरोधी स्थयिनो भवेत् ।
स विभिन्नाश्रयः कार्यस्तस्य पोषेऽप्यदोषता ॥ [ध्व० ३.२५] इति ।

अन्यत्र रसान्तरेण विरुद्धरसद्वयविरुद्धेनान्तरितो व्यवहितः कार्यः । यच्चोक्तं-

रसान्तरान्तरितयोरेकवाक्यस्थयोरपि ।
निवर्तते हि रसयोः समावेशे विरोधिता ॥ [ध्व० ३.२७] इति ।

## सुधासागरः

जीविते क्षणस्थायित्वप्रत्ययः, तत्प्रत्यये त्वपाङ्गभङ्गादीनां निष्फलत्वावगतिः शान्तमेव पुष्णातीत्यर्थः ।

ननु शान्तशृङ्गारयोर्द्वयोरपि रसत्वेनात्रैकेनापरस्य बाधने किं विनिगमकमित्यपेक्षायामाह—न पुनः शृङ्गारस्यात्र प्रतीतिरिति । तत्र हेतुमाह—तदङ्गाप्रतिपत्तेरिति । शृङ्गारयोग्यविभावाद्यकरणादित्यर्थः । अथ विनेयानां सुकुमारमतीनां शृङ्गारलम्पटानां सदाभ्यस्तमहिलाकटाक्षविभ्रमाणां राजकुमारादीनां प्रवृत्त्यन्यथाऽनुपपत्त्याऽनुभूयमानायाः काव्यशोभाया शृङ्गारैकनिवर्त्यत्वेन चावश्यं शृङ्गाराङ्गानामक्षोभो वक्तव्य इति ध्वनिकारमतं निराकरोति—नन्वित्यादि । नैरन्तर्यमव्यवधानेनोपनिबन्धः, उभयोरेककालासत्त्वात्, शान्तशृङ्गारयोर्विरोधेन नैरन्तर्याभावस्तेन यस्याङ्गानि प्रतीयन्ते स एव रस इति शान्त एव रसो न शृङ्गारस्तेन शृङ्गारस्य विनेयोन्मुखीकरणे काव्यशोभायां च हेतुत्वमत्र नास्तीति भावः । विनेयोन्मुखत्वे काव्यशोभायां चोपपादकमाह–रसान्तरादिति । एतयोरुपपत्तिरास्वादमात्रादेव न त्वास्वादविशेषात्, तदभावस्थले तयोरभावप्रसङ्गात् । आस्वादमात्रं तु प्रकृते शान्तादेवाक्षतमिति समानार्थः । अनुप्रासानतिरिक्तरसवादिनां मतेऽनुप्रास एवास्वादबीजमिति मधुरानुप्रासेन तदुभयनिष्पत्तिरित्याह—अनुप्रासमात्राद्वेत्यादि । मात्रपदेन विभावादिव्यङ्ग्यरसादिव्यवच्छेदः ।

रसान्तरमन्तरे कार्यम्। यथा—नागानन्दे शान्तस्य जीमूतवाहनस्य 'अहो गीतम् अहो वादित्रम्'—इत्यद्भुतमन्तर्निवेश्य मलयवतीं प्रति शृङ्गारो निबद्धः।

---

## साहित्यचूडामणिः

तत्र वीरभयानकयोरेकाश्रयतया विरोधः शान्तशृङ्गारयोस्तु नैरन्तर्यात्। भयानक इति करुणस्याप्युपलक्षणम्। यतो नायकप्रभावातिशयवर्णने तत्प्रतिपक्षाणां भयानकस्येव करुणस्याप्यौचित्यम्। यथा नागानन्द इति। 'रागस्यास्पदमित्यवैमि न च मे ध्वंसीति न प्रत्यय' इत्युपक्रम्य 'सिरामुखैः स्यन्दत एव रक्तमद्यापि देहे मम मांसमस्ति' इत्यन्तं परार्थे शरीरवितरणावधि जीमूतवाहनस्य शान्तो रसः मलयवतीविषयश्च शृङ्गार इति। विरोधशङ्का च मध्ये निवेशितेन 'व्यक्तिव्यञ्जनधातुने'-त्याद्युपबृंहितेनात्यद्भुतकेन प्रतिषिध्यते।

## सुधासागरः

व्याख्यातं च प्रदीपकारैः—अत्र पूर्वार्धे शृङ्गारस्य परार्धे शान्तस्य च विभावः, अनयोर्विरुद्धत्वेऽपि पूर्वार्धस्य बाध्यत्वेनैवोक्तत्वात् गुणत्वम्। एवं ह्यत्र प्रतीयते—सर्वा रामादयः सत्येव जीविते तत्सौकर्यार्थमुपादेयाः। जीवितं चातिभङ्गुरमिति किं कृतं तासामुपादेयत्वमतो रम्यत्वेऽपि निष्फला एत इति।

नन्वेवं पूर्वार्धप्रतिपाद्यस्य बाध्यत्वेऽपि मत्ताङ्गनापाङ्गभङ्गेत्यनेन विरोधो न परिहृतः, न च तत्र शृङ्गाराप्रतीतिः इति वक्तुं शक्यम्, तदुपादानवैयर्थ्यप्रसङ्गादिति चेन्न तत्र सा प्रतीतिस्तद्व्यञ्जकानुभावाद्यप्रत्ययात्। कथं तर्हि तदुपादानमिति चेत्। शान्तपरिपोषार्थमेवेति ब्रूमः। स एव कथमिति चेत्, जीवितस्यापि भङ्गुरत्वप्रतीतेः। साऽपि कुत इति चेत्, जीवितादप्यधिकमपाङ्गस्यास्थिरत्वमिति। सकलजनसिद्धभङ्गुरोपमानतयोपात्तं शान्तमेव पुष्णातीति। केचित्तु प्रसिद्धभङ्गुरस्य साधर्म्येण जीवितोपमानतयोपात्तमिति तद् व्याचक्षते।

ध्वनिकारस्तु—भवत्येवात्र शृङ्गारप्रतीतिः, परन्तु तया गुडजिह्विकान्यायेनोन्मुखीकृत्य विनेयाः शान्तरसे निवेश्यन्ते इत्यदोषता। यद्वा—काव्यशोभानिमित्तमेव तदुपादानाद्दोषाभावः, न हि विना शृङ्गारेण काव्यशोभेति समादधे। तन्नातिमनोरमम्। शृङ्गारप्रतीत्युपगमेऽपि शृङ्गारशान्तयोर्नैरन्तर्याभावेन प्रथमसमाधेरभावात्। द्वितीयसमाधिरपि तदा स्याद् यदि रसान्तरयोगेन चारुत्वं नानुभूयेत, न त्वेवम्। किं च रसमात्रेण चारुत्वमित्यपि न शक्यते [वक्तुं],प्रागेव तु शृङ्गारमात्रेण चारुत्वसम्भवान्नोत्तरोऽपि समाधिरितीति।

न परं प्रबन्धे यावदेकस्मिन्नपि वाक्ये रसान्तरव्यवधिना विरोधो निवर्तते।

यथा—

भूरेणुदिग्धान् नवपारिजातमालारजोवासितबाहुमध्याः।
गाढं शिवाभिः परिरभ्यमाणान् सुराङ्गनाश्लिष्टभुजान्तरालाः॥
सशोणितैः क्रव्यभुजां स्फुरद्भिः पक्षैः खगानामुपवीज्यमानान्।
संवीजिताश्चन्दनवारिसेकैः सुगन्धिभिः कल्पलतादुकूलैः॥
विमानपर्यङ्कतले निषण्णाः कुतूहलाविष्टतया तदानीम्।
निर्दिश्यमानाँल्ललनाङ्गुलीभिर्वीराः स्वदेहान् पतितानपश्यन्॥
—अत्र बीभत्स–शृङ्गारयोरन्तर्वीररसो निवेशितः।

---

## साहित्यचूडामणिः

न चात्र प्रबन्धनिर्बन्ध इत्याह—न परमिति। बीभत्सशृङ्गारयोरन्तरिति। समरनिपतितकलेवरतया बीभत्सः। अप्सरःसंश्लेषेण च शृङ्गारः। मध्ये च तयोरुभयाविरुद्धो वीररसः। एकश्लोकनिबन्धे यथा [ रघुवंश–७ ]

कश्चिद् द्विषत्खड्गहृतोत्तमाङ्गः सद्यो विमानप्रभुतामुपेत्य।
वामाङ्गसंसक्तसुराङ्गनः सन् नृत्यत् कबन्धं समरे ददर्श॥ इति॥

## सुधासागरः

एवं च रसाङ्गानां विरोधं समर्थ्य रसयोर्विरोधं समर्थयति–'आश्रयैक्य' इति।

विरोधो द्विधा, दैशिकः कालिकश्च। तत्राद्यं समाधत्ते—भिन्नसंश्रय इति। द्वितीयं समाधत्ते—रसान्तरेणेति। नैरन्तर्ये तु यो रसो विरुद्धः स रसान्तरेणान्तरितः कार्य इति पूर्वेणान्वयः।

वीरभयानकयोरित्यादि। भयानकस्य प्रतिपक्षगतत्वेनोपन्यासे नायकवीररसपुष्टिरिति भावः। एकस्मिन्निति। एकक्रियासमाप्ये इत्यर्थः। शान्तशृङ्गारयोरित्यत्र शान्तपदेन सकामशान्तो गृह्यते, निष्कामशान्तस्य रसान्तरायोग्यत्वादिति बोध्यम्। यथेत्युदाहरति—भूरेण्वित्यादि। वीराः स्वदेहान् पतितानपश्यन्नित्यन्वयः। शेषं देहवीरयोर्विशेषणं योजनीयम्। बाहुमध्यं वक्षः, शिवाः शृगाल्यः क्रव्यभुजां मांसाशिनाम्। कल्पलतादुकूलैः कल्पद्रुमोद्भूतपट्टवस्त्रैः। स्पष्टमन्यत्।

**स्मर्यमाणो विरुद्धोऽपि साम्येनाथ विवक्षितः ।**
**अङ्गिन्यङ्गत्वमाप्तौ यौ तौ न दुष्टौ परस्परम् ॥ १७ ॥**

**अयं स रशनोत्कर्षी पीनस्तनविमर्दनः ।**
**नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः ॥**

---

## साहित्यचूडामणिः

एतदिति । शृङ्गारोपकरणमपि प्रागवस्थास्मरणमनुभूयमानं करुणमुल्बणयति ।

## सुधासागरः

वीररसोऽन्ते निवेशित इति । ननु कथमत्र वीररसप्रतीतिः, वीरशब्दमात्रेण तदप्रतीतेः, मैवम् । साहसनिपातजन्यस्वर्गलाभरूपानुभावस्याक्षेपलब्धगर्वादेः सञ्चारिणश्च सम्भवात्तत्प्रतीतेः । व्याख्यातं च प्रदीपकारैः—यो रस इत्यत्र विरुद्ध इत्यनुषज्यते । रसानां विरोधो द्वेधा । समानाधिकरणतया नैरन्तर्येण चेति । तत्र वीरभयानकयोरैकाधिकरण्येन विरोध इति प्रतिपक्षगतत्वेन भयानको वर्णनीयः । तथा सति दूरे तस्य दोषत्वम्, प्रत्युत वीरपरिपोषः । यथा मम—

आहूताऽपि पदं ददाति न पुरो न प्रार्थिताऽपीक्षते
साकूतं परिभाषिताऽपि बहुशः किञ्चिन्न चाऽऽभाषते ।
आश्लिष्टाऽपि न सम्मुखानि रचयत्यङ्गानि मूढाशया
कोपोद्रेकवशंवदेव तरुणी श्रेणी यदीयद्विषाम् ॥

न चात्र शृङ्गारभयानकयोरपि विरोधः, वक्ष्यमाणक्रमेण द्वयोरप्यन्याङ्गत्वाद् व्यधिकरणत्वाच्च । यद्यप्याश्रयभेदेनैवैकाश्रयावपि वीरभयानकौ क्वचिदनुभूयेते, तथाऽपि न तथा वर्ण्येते इति भिन्नाश्रयतयैव निवेशनीयौ । एवमन्येषामप्यूह्यम् । यस्य तु येन नैरन्तर्येण विरोधः सोऽविरोधिना रसान्तरेणान्तरितो निबन्धव्यः । यथा नागानन्दे शान्तजीमूतेत्यादि । न केवलं प्रबन्ध एव रसान्तरव्यवधिना विरोधनिवृत्तिः । किन्त्वेकस्मिन्नपि वाक्ये । यथा—भूरेणुदिग्धानित्यादि । अत्र विशिष्टस्य वीरस्य कर्तुः सर्ववाक्यान्वयित्वेन विमानाधिरोहणादिना मध्ये उत्साहप्रतीतेर्बीभत्सशृङ्गारयोरविरोध इति । न च प्राकरणिकत्वाद् वीरस्य प्राधान्यम्, एतद्वाक्याद्बीभत्सशृङ्गारसामग्र्योरेवोत्कटत्वेन प्रतीयमानत्वात्, वीरसामग्र्याः पुनराक्षिप्यमाणत्वेनानुत्कटत्वात् ।

प्रदीपकारास्तु—यद्यप्यत्र वीर एव प्रधानमन्यौ च तद्व्यभिचारिणाविति न विरोधस्तथाऽप्येवमप्यविरोधः सम्भवतीत्युदाहरणमित्याहुः ।

अविरोधहेत्वन्तरमाह—'स्मर्यमाण' इति ।

तत्र स्मर्यमाणत्वेनाविरोधो यथा—'अयं स' इति । स्पष्टम् ।

—एतद् भूरिश्रवसः समरभुवि पतितं हस्तमालोक्य तद्वधूरभिदधौ। अत्र पूर्वावस्थास्मरणं शृङ्गाराङ्गमपि करुणं परिपोषयति।

दन्तक्षतानि करजैश्च विपाटितानि
प्रोद्भिन्नसान्द्रपुलके भवतः शरीरे।
दत्तानि रक्तमनसा मृगराजवध्वा
जातस्पृहैर्मुनिभिरप्यवलोकितानि॥

—अत्र कामुकस्य दन्तक्षतादीनि यथा चमत्कारकारीणि तथा जिनस्य। यथा वा परः शृङ्गारी तदवलोकनात् सस्पृहस्तद्वद् एतद्दृशो मुनय इति साम्यविवक्षा।

## साहित्यचूडामणिः

यदाह[१]—'प्रकृतिमधुराः पदार्थाः शोचनीयतां प्राप्ताः प्रागवस्थाभाविभिः स्मर्यमाणैर्विलासैरधिकतरं शोकमुपजनयन्ती'-ति।

साम्येन विवक्षायामङ्गभावप्राप्तौ न विरोध इति द्वितीयं प्रकारमाह—दन्तक्षतेति। कामुकस्येत्यादिना दृष्टव्यनिष्ठाव्याजेनोचितं च साम्यमुन्मील्यते।

## सुधासागरः

समरभुवि निपतितं भूरिश्रवसो हस्तमालोक्य तद्वधूनामिदं वचनम्। तथा च शृङ्गाराङ्गमपि पूर्वावस्था स्मर्यमाणतयोद्दीपनविभावत्वेन करुणपरिपोषिकेत्यदोषः। तदेतदाह—एतदित्यादि।

साम्यविवक्षया यथा—'दन्तक्षतानी'—ति।

वसन्ततिलका छन्दः। प्रसूय बुभुक्षया निजापत्यमेव भोक्तुमारभमाणायै सिंहिकायै तदपत्यरक्षणाय स्वाङ्गमर्पितवन्तं जिनं प्रति कस्यचिदियमुक्तिः—हे जिन! प्रोद्भिन्नः सान्द्रः सघनः पुलको रोमाञ्चो यत्र तादृशे भवतः शरीरे मृगराजः सिंहः, मृग इति पुंजातिविशेषो नृपतिश्च तस्य वध्वा सिंहिकया राज्ञ्या च, रक्तमनसा रुधिरेच्छयाऽनुरक्तमनसा च, दत्तानि दन्तक्षतानि करजैर्नखैर्विपाटितानि विदारितानि च, जातस्पृहैर्मुनिभिरप्यवलोकितानीत्यन्वयः। अपिर्विरोधे, गतस्पृहाणां मुनीनामपि तदुद्रेकात्।

अत्र जिनदेहे सिंहीदत्तदन्तनखक्षतानि बीभत्सप्रतिपादकान्यपि कान्तादत्तदन्तक्षतनखक्षतरूपशृङ्गारानुभावसाम्येनोक्तानि तस्य प्रकर्षातिशयं प्रतिपादयन्ति। अत एव सस्पृहतदवलोकनेन रागिजनतुल्यता मुनीनामपीति साम्यविवक्षेत्याह—अत्र कामुकस्येत्यादि।

[१] ध्वन्यालोक—३-२० वृत्तौ

क्रामन्त्यः क्षतकोमलाङ्गुलिगलद्रक्तैः सदर्भाः स्थलीः
पादैः पातितयावकैरिव गलद्बाष्पाम्बुधौताननाः ।
भीता भर्तृकरावलम्बितकरास्त्वच्छत्रु-नार्योऽधुना
दावाग्निं परितो भ्रमन्ति पुनरप्युद्यद्विवाहा इव ॥

—अत्र चाटुके राजविषया रतिः प्रतीयते । तत्र करुण इव शृङ्गारोऽप्यङ्गमिति तयोर्न विरोधः ।

---

## साहित्यचूडामणिः

एकस्मिन्नाधिकारिके प्रधाने वाक्यार्थे रसयोर्मिथोविरोधिनोरप्यङ्गत्वमिति तृतीयं प्रकारमाह—क्रामन्त्य इति । तयोर्न विरोध इति । द्वयोरप्यन्यपरत्वेनावस्थानाद् राजनिकटनिषण्णाततायिद्वयन्यायात् ।

## सुधासागरः

ननु दयावीरस्य विस्मयोत्थापकत्वाज्जिनविषयकरतावद्भुतस्य तत्र च दयावीरशृङ्गारयोरङ्गतेति अङ्गत्वं प्राप्तयोरेवोदाहरणत्वेन तृतीयप्रकारासम्भव इति चेत् । मैवम् । ब्राह्मणानां सन्ध्यावन्दनमिव बौद्धस्य दयालुत्वं स्वभाव इति दयाया विस्मयानुत्थापकत्वादिति ।

व्याख्यातं च प्रदीपकारैः—अत्र दयावीरस्यानुभावविशेषे शृङ्गार उपमानभावेनाङ्गम् । न चात्र दयाऽपि विस्मयोपकारकत्वेनाङ्गम्, बौद्धानां स्वाभाविकदयाशीलत्वेन विस्मयाजनकत्वादिति ।

अङ्गिनीति । अङ्गिनि विरुद्धयोरङ्गत्वं द्विधा भवति राज्ञि सेनापतिद्वयवत् तुल्यकक्षतया, राज्ञि सेनापतितद्भृत्यवत् परस्याङ्गभावमापाद्य वा । तत्राद्यमुदाहरति—'क्रामन्त्य' इति ।

शार्दूलविक्रीडितं छन्दः । हे राजन् ! क्षता दर्भैर्विद्धाः याः कोमलाङ्गुलयस्ताभ्यो गलद् रक्तं येषु तादृशैः, अत एव पातितयावकैरिव दत्तालक्तकैरिव पादैश्चरणैः सदर्भाः स्थलीः क्रामन्त्यो लङ्घयन्त्यः, स्थलीनां सदर्भत्वं दर्भोत्पत्त्या दर्भास्तरणेन च । गलद्बाष्पाम्बुधौतान्याननानि यासां ताः, बाष्पपतनं शोकेन धूमेन च । मा रिपुः पश्येदिति, मा वरो विरज्येदिति च भीताः । भर्तुः पत्युः वरस्य च करेण हस्तेनावलम्बिताः करा यासां तथाभूताः, अत एव पुनरप्युद्यद्विवाहा इव भूयोऽपि जायमानपरिणया इव त्वद्वैरिनार्योऽधुना दावाग्निं वनवह्निं वैवाहिकाग्निं च परितो भ्रमन्ति पर्यटन्ति परिक्रमणं च कुर्वन्तीत्यर्थः । अग्निमिति परितःशब्दयोगे द्वितीया । अत्रेत्यादि न विरोध इति । परस्परविरुद्धयोरपि सामन्तयोर्नृपतिकार्यसम्पादनमिवेत्यर्थः ।

यथा—

एहि गच्छ पतोत्तिष्ठ वद मौनं समाचर ।
एवमाशाग्रहग्रस्तैः क्रीडन्ति धनिनोऽर्थिभिः ॥ इति॥

—अत्र एहीति क्रीडन्ति, गच्छेति क्रीडन्तीति क्रीडनापेक्षयोरागमनगमनयोर्न विरोधः ।

क्षिप्तो हस्तावलग्नः प्रसभमभिहतोऽप्याददानोंऽशुकान्तं
गृह्णन् केशेष्वपास्तश्चरणनिपतितो नेक्षितः सम्भ्रमेण ।
आलिङ्गन् योऽवधूतस्त्रिपुरयुवतिभिः साश्रुनेत्रोत्पलाभिः
कामीवार्द्रापराधः स दहतु दुरितं शाम्भवो वः शराग्निः ॥
इति ॥

---

## साहित्यचूडामणिः

विधौ हि विरुद्धसमावेशो दुष्यति नानुवाद इत्याह—यथेति ।

क्रीडनापेक्षयोरिति। तद्व्यवहितत्वादागमनक्रिययोः पतनोत्थानयोर्वदनमौनसमाचरणयोश्चाविरोधात्। ननु प्राधान्येन वाच्यत्वे विधिः, अप्राधान्ये त्वनुवादः, न च रसस्य विधेयत्वमनुवाद्यत्वं वा युक्तमिति चेत्, न । तस्य व्यङ्ग्यता-

## सुधासागरः

नन्वन्यपरयोर्विरुद्धैकस्वभावयोः कथं स्वभावत्याग इति दृष्टान्तेन परिहरति 'एहि गच्छेति'—इति । स्पष्टम् ।

एहीतीत्यादि । अत्र क्रीडाङ्गत्वेनोपात्तानां विरुद्धस्वभावानामप्यागमनगमनादीनां यथा न विरोधस्तथेहापीति भावः । व्याख्यातं प्रदीपकारैः—अत्र चाटुके या राजविषया रतिस्तत्र करुणशृङ्गारावुभावपि साक्षादङ्गमिति तन्निर्वाहैणैकव्याकुलयोस्तयोरेव राजकार्योद्यतयोरिव भटयोः सहजातो विरोधोऽपि न दोषाय । यथा—एहि गच्छेत्यादौ प्रधाने क्रीडायामङ्गभावेन भावाभावयोरपि न विरोधः । एहीति क्रीडन्ति गच्छेति क्रीडन्तीति प्रकारेणोभयोरपि प्रकारत्वेन तत्राङ्गत्वात् । तस्माद् विधेययोरेव विरोधो दोषाय न त्वनूद्यमानयोरपीति परमार्थः । प्रकृतोदाहरणे च पुनरप्युद्यद्विवाहा इवेत्युत्प्रेक्षा, तेनेहि गच्छेतिवत्प्रतापे द्वयोरपि साक्षादेवाङ्गत्वम् । तादृशोऽय प्रतापो येनासौ पुनर्विवाह उत्प्रेक्षित इति पर्यवसानादिति । द्वितीयमङ्गाङ्गिभावेन पराङ्गतया विरोधपरिहारं दर्शयति—'क्षिप्त' इति ।

—अत्र त्रिपुररिपुप्रभावातिशयस्य करुणोऽङ्गम्, तस्य तु शृङ्गारः, तथापि न करुणे विश्रान्तिरिति तस्याङ्गतैव। अथवा प्राक् यथा कामुक आचरति स्म तथा शराग्निरिति शृङ्गारपोषितेन करुणेन मुख्य एवार्थ उपोद्बल्यते।

## साहित्यचूडामणिः

यामपि वाच्यतायामिव विध्यनुवादयोरङ्गीकारात्। यदि वा विधिना प्राधान्यमनुवादेन च तस्याप्राधान्यमुपपद्यते 'विधिः प्राधान्यमन्याङ्गत्वं चानुवाद' इत्युक्तत्वात्। विरुद्धफलोत्पादकत्वं हि युगपदेकस्यानुचितं, न तु विरुद्धोभयसहकारिणस्तस्य कार्यविशेषोत्पादकत्वं, यथा सलिलदहनसहकारिणस्तण्डुलस्यौदनोत्पादकत्वम्।

अथ न केवलं मिथो निरपेक्षयोरेवाङ्गयोरङ्गिनि तात्पर्यं, यावता सापेक्षयोरपीत्युदाहरणान्तरेणाह—क्षिप्त इति। अत्र परमेश्वरप्रभावातिशयस्य वाक्यार्थतया प्राधान्यादीर्ष्याविप्रलम्भात्मा शृङ्गारः करुणश्च न विधेयकोटिमध्यासाते। अतो न तयोर्विरोधः। ननु विरुद्धपदार्थगोचरः कथमभिनयप्रयोग इति चेद् अनूद्यमानैवंविधवाच्यविषयवद् भविष्यतीति न किञ्चिदेतत्। एवञ्च परमेश्वरप्रभावस्य करुणोऽङ्गं, शराग्निप्रयुक्तत्वाच्चमत्कारस्य, तस्य चाङ्गं शृङ्गारः, शराग्निरार्द्रापराध कामिसामान्येन त्रिपुरस्त्रीषु व्यवहृतवानित्युच्यमानत्वात्। तर्हि न प्रधाने विश्रान्तिरिति चेद् नेत्याह—तथापीति। यद्यपि शृङ्गारः करुणस्याङ्गमित्युक्तं, तथापि न तत्र विश्राम्यति, अपितु भगवत एव प्रभावातिशये। इतरथा करुणस्यैव वाक्यार्थत्वापातः। मिथःसाकाङ्क्षयोरेव करुणशृङ्गारयोर्विरुद्धयोः परमेश्वरप्रभावोद्देशादङ्गभावप्राप्तिः। यद्वा साकांक्षतायामेव शृङ्गारस्य करुणे विश्रान्तिरस्तु, तथापि द्वयोः परमेश्वरस्य प्रभावातिशये तात्पर्यमित्याह—अथवेति। शृङ्गारपरिपोषितेनेति। न खलु पूर्वं शृङ्गारेण करुणस्य परिपोषः, यावत् परमेश्वरप्रभावस्यैव। अत्र तु शृङ्गारेणास्य करुणस्य परिपोषणम्। तादृशेन च करुणेन परमेश्वरप्रभावस्योपबृंहणमिति।

## सुधासागरः

यः शराग्निः साश्रुनेत्रोत्पलाभिस्त्रिपुरयुवतिभिरार्द्रापराधः कामीव हस्तावलग्नो हस्तस्पर्शं कुर्वन् सन् क्षिप्तः। अंशुकान्तमाददानः प्रसभमभिहतोऽपि, केशेषु गृह्णन्नपास्तः, चरणनिपतितः सम्भ्रमेण नेक्षितः, आलिङ्गन् सन् अवधूतो निराकृत इत्यन्वयः स्पष्टार्थः।

इतीत्यादि। तस्य शृङ्गार इति। अङ्गमिति शेषः। नन्वेवमपि शृङ्गारेण परिपुष्टः करुणः प्रधानमेव न तु प्रभावातिशयेऽङ्गमत आह—तथापीति। शृङ्गारापेक्षया प्रधानत्वेऽपि प्रभावातिशयेऽङ्गत्वमिति भावः। पक्षान्तरमाह-अथवेत्यादि। प्रथमपक्षे एकस्य द्वयम्, परपक्षे विशिष्टवैशिष्ट्यमिति पक्षयोर्भेदः। केचित्तु सकलमेव ग्रन्थमेकपक्षतयैव व्याचक्षते-अत्र पूर्वोक्ते हेतुमाह-अथवेति। अथवेत्ययं यस्मादित्यर्थे 'अथवा श्रेयसि केन तृप्यत' इत्यत्रेवेति।

उक्तं हीत्यादि। गुणो विशेषणम्।

उक्तं हि—

गुणः कृतात्मसंस्कारः प्रधानं प्रतिपद्यते ।
प्रधानस्योपकारे हि तथा भूयसि वर्तते ॥ इति ॥

प्राक्प्रतिपादितस्य रसस्य रसान्तरेण न विरोधो नाप्यङ्गाङ्गिभावो भवति इति रसशब्देनात्र स्थायिभाव उपलक्ष्यते ॥ १७ ॥

इति काव्यप्रकाशे दोषदर्शनो नाम
सप्तम उल्लासः ॥७॥

---

## साहित्यचूडामणिः

अत्राभियुक्तोक्तिं संवादयति—गुण इति। तथाहि प्रधानस्य भूयस्युपकारे वर्तते, नान्यथा।

ननु तुरीयोल्लासनिर्णीतस्य ब्रह्मानन्दास्वादसब्रह्मचारिणो विगलितवेद्यान्तरस्य रसस्य कोऽयं विरोधाङ्गाङ्गिभावप्रमुखः खलीकारकलङ्क इत्याशङ्कते—

प्रागिति। तर्हि कथं प्रक्रान्तप्रमेयनिर्वाह इत्यत्राह—रसशब्देनेति। तत्र वीरशृङ्गारयोः शृङ्गारहास्ययो रौद्रशृङ्गारयोर्वीराद्भुतयोः वीररौद्रयोः शृङ्गाराद्भुतयोश्च मिथो न विरोधः। अथ शृङ्गारबीभत्सयोर्वीरभयानकयो रौद्रशान्तयोः शान्तशृङ्गारयोः

## सुधासागरः

संस्कारोऽन्येन परिपुष्टिः तथा स्वसंस्कारेण, स्पष्टमन्यत्।

ननु विगलितवेद्यान्तरत्वं रसस्वरूपमत एकदा द्वितीयाभावात् कथं विरोधः, कथं वाऽङ्गाङ्गिभावादिकमित्यत आह- प्राक् प्रतिपादितेत्यादि।

व्याख्यातं च प्रदीपकारैः-अत्र त्रिपुररिपुप्रभावातिशयस्य करुणोऽङ्गम्, तस्य तु शृङ्गारः। नन्वेवं करुणस्य प्राधान्ये तत्रैव विश्रान्तेरुभयोरङ्गत्वासम्भवे कथमुदाहरणत्वमिति न वाच्यम्, शृङ्गारापेक्षया तस्य हि प्राधान्येऽपि न तत्रैव विश्रान्तिरिति तस्यापि प्रभावं प्रत्यङ्गत्वैव, यतो यथा पूर्वं कामुकः करावलम्बनादिकमकार्षीत्तथा सम्प्रति शराग्निरित्युपमानतया शृङ्गारपरिपोषितेन करुणेन प्रभावातिशय एव प्रकर्षमानीयते। न चाङ्गाङ्गस्य प्रभावातिशयाङ्गकरुणाङ्गस्यापि कथमङ्गत्वमिति वाच्यम्। तदुपकृतस्याङ्गस्योपकारविशेषाधायकतया तस्याप्युपकारकत्वात्। यदुक्तम्—गुणाः कृतात्मसंस्कार इत्यादि।

ननु प्राक् प्रतिपादितरूपवेद्यान्तरसम्पर्कशून्यरसस्य न रसान्तरेण विरोधो, नाप्यङ्गाङ्गिभाव इत्यसम्बद्धमेवैतत्सर्वमिति चेन्न।

## साहित्यचूडामणिः

शृङ्गारकरुणयोश्च मिथो विरोध इति तत्र परिहारौचित्यम्। परिहारश्च कस्यचित् प्राधान्यविवक्षणात्। यदाह—

प्रसिद्धेऽपि प्रबन्धानां नानारसनिबन्धने।
एको रसोऽङ्गी कर्तव्यस्तेषामुत्कर्षमिच्छता ॥[१]
कार्यमेकं यथा व्यापि प्रबन्धस्य विधीयते।
तथा रसस्यापि विधौ विरोधो नैव विद्यते ॥[२]
एकाश्रयत्वे निर्दोषो नैरन्तर्ये विरोधवान्।
रसान्तरव्यवधिना रसो व्यङ्ग्यः सुमेधसा ॥[३] इति।

तदियमत्रोपनिषत्—

अविरोधी विरोधी वा रसोऽङ्गिनि रसान्तरे।
परिपोषं न नेतव्यस्तथा स्यादविरोधिता ॥[४] इति।

अङ्गिनो रसस्य यावान् परिपोषस्तावानङ्गभूतस्य न प्रयोज्यः अङ्गिनस्तु सर्वथा प्रयोज्य इति सिद्धम्।

दोषस्य मात्राः प्रभवन्तु कामं काव्ये रसज्ञो न जहाति विद्वान्।
अलं कलङ्को जडिमा क्षयो वा चमत्क्रियां चन्द्रमसो न हन्तुम् ॥

दोषान् मनागधिगतानपि सूक्ष्मदृष्ट्या
जिह्वे कदाचिदपि मा सदसि प्रसाङ्क्षीः।
जानन्ति कोमलधियः कवयो न तत्त्वं
निःस्वस्य नः खलयितुं परमारभन्ते ॥७॥

इति साहित्यचक्रवर्तिलौहित्यभट्टगोपालविरचितायां साहित्यचूडामणौ
काव्यप्रकाशविमर्शिन्यां सप्तम उल्लासः ॥७॥

## सुधासागरः

रसशब्देनात्र प्रकरणे भावस्याभिधानाद् रस्यत इति व्युत्पत्तेरिति। अस्यैव श्रुतिकटुत्वादिप्रतिप्रसवप्रघट्टकस्य दोषाङ्कुशत्वेन केषाञ्चिद् व्यवहार इति सर्वमनवद्यम्।

इति श्रीमत्पदवाक्यप्रमाणपारावारीणदीक्षितभीमसेनकृते
काव्यप्रकाशविवरणे सुधासागराऽऽख्ये दोषनिर्णयः
सप्तम उल्लासः ॥७॥

---

[१] ध्वन्यालोके ३.२१ [२] तत्रैव ३.२६
[३] तत्रैव ३.२३ [४] तत्रैव ३.२४

# अष्टम उल्लासः

एवं दोषानुक्त्वा गुणालङ्कारविवेकमाह—

**ये रसस्याङ्गिनो धर्माः शौर्यादय इवात्मनः।**
**उत्कर्षहेतवस्ते स्युरचलस्थितयो गुणाः ॥१॥**

आत्मन एव हि यथा शौर्यादयो नाकारस्य तथा रसस्यैव माधुर्यादयो गुणा न वर्णानाम्। क्वचित्तु शौर्यादिसमुचितस्याकारमहत्त्वादेर्दर्शनाद् 'आकार एवास्य शूर' इत्यादेर्व्यवहाराद्, अन्यत्राशूरेऽपि विततकृतित्वमात्रेण 'शूर' इति, क्वापि शूरेऽपि मूर्तिलाघवमात्रेण 'अशूर' इति अविश्रान्तप्रतीतयो यथा व्यवहरन्ति तद्वन्मधुरादिव्यञ्जकसुकुमारादिवर्णानां मधुरादिव्यवहारप्रवृत्तेः अमधुरादिरसाङ्गानां वर्णानां

---

## साहित्यचूडामणिः

शृङ्गाराभोगवेलायामनालोचितभूषणाम् ।
प्रौढां सरस्वतीं वन्दे शुद्धलावण्यवर्षिणीम् ॥

गुणालङ्कारोभयभेदापलापवृत्तांतेनालङ्कारिकानभिभवाय पूर्वापरोल्लाससङ्घटनाद्वारेणाह—गुणेति। विवेकः पृथक्कारः। तत्र गुणलक्षणमाह—य इति। अङ्गिनः शरीरिणः आत्मभूतस्य उत्कर्षहेतवो ये धर्माः ते गुणाः यदाह—"तमर्थमवलम्बन्ते येऽङ्गिनं ते गुणाः स्मृताः ॥" इति। अचलस्थितयः समवायवृत्त्या वर्तमानाः। अङ्गिन इत्यात्मदृष्टान्तेन शब्दार्थयुगललक्षणं काव्यं शरीरमिव, श्रुतिकटुत्वादयो दोषाः श्वित्रादय इव,

## सुधासागरः

सम्मतिं दर्शयन्नाह-एवं दोषानुक्त्वेति। यद्यप्येवमपि गुणनिरूपणमुचितं न तु गुणालङ्कारयोर्भेदसाधनं तथाऽपि भेदं विना गुणालङ्काराभिधानमसङ्गतम्, अन्यतराभिधानेनैव चरितार्थत्वादिति तद्विवेचनमावश्यकमिति सूचयन्, केचिद् गुणालङ्कारयोर्नास्ति भेदः काव्योत्कर्षकत्वाविशेषादित्याहुस्तान्निराकुर्वंश्चाह-गुणालङ्कारविवेकमाहेति। विवेकश्च परस्परवैधर्म्यायत्त इति तदाह—'ये रसस्ये'-ति।

रसस्याङ्गिन इत्यभेदान्वयः एवं च रस आत्मस्थानीयः, शब्दार्थः शरीरमिति बोद्धव्यम्, धर्माः साक्षात्सम्बद्धा इत्यर्थः। अत्र समुचितं दृष्टान्तमाह-शौर्यादय इवात्मन इति। शौर्यं ज्ञानविशेषः, स च यथा चेतनविशेषात्मन एव, नाचेतनस्य शरीरस्येत्यर्थः। एवं च शरीरे आत्मवत्काव्ये प्राधान्येन स्थितस्य रसस्य ये धर्माः साक्षात्तदाश्रिता इति फलितोऽर्थः। तथा च वर्णादीनामेव धर्मा गुणा इति वदन्तो

**सौकुमार्यादिमात्रेण माधुर्यादि, मधुरादिरसोपकरणानां तेषामसौकुमार्यादेरमाधुर्यादि च रसपर्यन्तविश्रान्तप्रतीतिबन्ध्या व्यवहरन्ति। अत एव माधुर्यादयो रसधर्माः समुचितैर्वर्णैर्व्यज्यन्ते, न तु वर्णमात्राश्रयाः। यथैषां व्यञ्जकत्वं तथोदाहरिष्यते ॥ १ ॥**

---

## साहित्यचूडामणिः

माधुर्यादयो गुणाः शौर्यादय इव, अनुप्रासोपमादयोऽलङ्काराः कङ्कणहारादय इव, रसादिध्वनिरात्मैवेति काव्यवृत्तान्तो व्यवस्थापयति। ननु गुणवदितिवृत्तं रसादयश्च गुणा इति प्रक्रियया गुण इति व्यवहार एवास्तु, अलमुक्तरूपात्मशरीरव्यवहारनिबंधेनेति चेत्। न। किं शरीरवर्तिशौर्यादिसाधर्म्येण रसानां वाच्यधर्मत्वमुत तत्त्वसादृश्येन। न प्रथमः। सहृदयहृदयविशेषव्युदसनेन सर्वस्यापि तत्प्रतीतिप्रसंगात्। यथा पामरादिसाधर्म्येण शरीरे शौर्यादिप्रतीतिः। न द्वितीयः। माणिक्यजातित्ववदपृथक्त्वेन तत्प्रतीतिप्रसङ्गात्। न खलु शरीरे शौर्यस्येव माणिक्ये जातित्वस्य स्फुरत्तायामुन्मग्नत्वम्। अत्यन्तलीनस्वभावत्वात्। वाच्ये तु विभावादौ रसादेरुन्मज्जनमेव स्वभाव इत्युक्तम्। नाकारस्येति। शवशरीरे शौर्याद्यभावात्। एवं रसस्यैव माधुर्यादयो गुणाः न त्ववयवस्थानीयानां वर्णानाम्। एतदन्वयव्यतिरेकाभ्यामवबोधयति—क्वचित्त्विति। आकारसौष्ठवशौर्यगुणद्वययोगिनि पुरुषे आकारमहत्त्ववेषौज्ज्वल्यादेरपरोक्षीकरणात्। तदेतद् वक्ष्यमाणाया भ्रान्तेर्मूलम्। व्यवहाराद् औपचारिकात्।

## सुधासागरः

वामनादयः परास्ताः। स्थायित्वादे रसधर्मत्वमाशङ्क्याह—उत्कर्षहेतव इति। केचित्तु रसस्य धर्मा गुणास्ते चोत्कर्षरूपाः स्वव्यञ्जककाव्यस्योत्कर्षकाश्च तदाह—उत्कर्षहेतव इत्याहुः। ननु रसोत्कर्षहेतवोऽलङ्कारा अपीत्यत आह—अचलस्थितय इति। नियतस्थितय इत्यर्थः। नैयत्यं च रसेन तदुपकारेण च। तथा च ये रसं विना नावतिष्ठन्ते अवस्थिताश्चावश्यं रसमुपकुर्वन्तीत्यर्थः। अत एवानयोर्व्यतिरेकमलङ्कारे वक्ष्यति।

केचित्तु अचला नियता स्थितिर्येषान्ते तथा रसविशेषनियतविशेषा इत्यर्थः। श्रृङ्गारादौ माधुर्यस्य वीरादावोजसः प्रसादस्य सर्वात्मनि नियतत्वात्। अलङ्काराणां च सर्वेषां सर्वरसोत्कर्षकत्वान्नीरसेऽपि सत्त्वाद् व्यभिचाराच्च। अत एव सर्वालङ्काराणां सर्वत्र स्वेच्छया प्रयोग इत्याहुः। तथा च साक्षाद्रससम्बन्धित्वनियतत्वाभ्यां विशेषणाल्लक्षणलाभेन नाऽलङ्कारेऽतिव्याप्तिः। समुदिते तु व्यर्थविशेषणत्वापत्तेरिति द्रष्टव्यम्। तदेतत्सर्वमभिप्रेत्य श्रीवाग्देवतावतारो दृष्टान्तमुखेन वामनमतं निराकुर्वन् शब्दार्थयोर्मधुरादिव्यवहारस्य चौपाधिकत्वं दर्शयन्नाह—आत्मन इत्यादि।

क्वचित्त्वित्यादि। विश्रान्ता विषयादन्यत्राप्रसारिणी तदन्याऽविश्रान्ता, एवं प्रतीतिर्येषान्तेऽविश्रान्तप्रतीतयो भ्रान्ता इत्यर्थः। तद्वदिति। तथा च मधुररसव्यञ्जकत्वौपाधिक्येव वर्णानां मधुरत्वप्रतीतिः, परन्तु तद्व्यञ्जकतावच्छेदकं

## साहित्यचूडामणिः

अन्यत्रेति। शौर्यव्यतिरेकेण केवलाकारसौष्ठवशालिनि। क्वापीति। आकारसौष्ठवव्यतिरेकेण केवलशौर्यधर्मिणि। अविश्रान्तप्रतीतयः अप्रतिष्ठितबुद्धयः अप्रामाणिकप्रतिपत्तयः यथा व्यवहरन्ति तथा केचिदालङ्कारिका अपि। मधुरादीत्यादिपदादोजस्वि प्रसन्नं च। सुकुमारादीति। शूरस्याकारमहत्त्वस्थाने रसस्य वर्णसौकुमार्यादि। अत्राप्येतद् भ्रान्तिमूलं यदत्र रसमाधुर्यादेर्वर्णसौकुमार्यादेश्च क्वचिन्मेलकानुभूतिः। रसपर्यन्तं विश्रान्तया प्रतिष्ठितया प्रतीत्या बन्ध्याः केवलशब्दभागोपक्षीणा व्यवहरन्ति। अतएवेति। यतः शौर्यादेरात्मधर्मत्वनियमः अत एव माधुर्यादयो रसधर्माः, किमन्तर्गडुभिर्वर्णैरित्याह— समुचितैरिति। यथा समुचितैराकारैः शौर्यादयो व्यज्यन्ते, एवम्। न तु वर्णमात्राश्रयाः, माधुर्यादयः। उदाहरिष्यत इति। अत्रैवोल्लासे।

## सुधासागरः

सौकुमार्यम् तेन क्वापि सौकुमार्यमात्रेणामधुररसव्यञ्जकानामपि मधुरव्यवहारो मधुररसव्यञ्जकानामप्यसौकुमार्यमात्रेणामधुरव्यवहार इत्यर्थः। रसपर्यन्तेति। रसस्य पर्यन्ते सीमाया विश्रान्ता पर्यवसन्ना तदन्यत्राप्र सारिणी रसमर्यादाग्राहिणी या प्रतीतिस्तया बन्ध्या तद्धीना इत्यर्थः। माधुर्यादि न शब्दवृत्ति, किन्तु रसवृत्तीत्यजानन्त इति फलितोऽर्थः। अत एवेति। रसनैयत्यादेवेत्यर्थः। न तु वर्णेति। अत्रानैयत्यादिति भावः। ननु यद्येवं तदा कथं वर्णादीनां समुचितत्वम्, कथं वा व्यञ्जकत्वमत आह—यथैषामिति।

व्याख्यातं च प्रदीपकारैः—एवं दोषे निरूपिते गुणालङ्कारौ प्राप्तावसरौ, तयोः गुणस्यान्तरङ्गतया प्राथम्यम्। विप्रतिपद्यन्ते तु केचिद् गुणालङ्कारयोर्भेदे, किञ्च सामान्यतो लक्षिते विशेषलक्षणमुचितमिति कारिकाद्वयेन तयोः स्वरूपदर्शनमुखेन लक्षणं दर्शयन्नेव भेदकमाह—ये रसस्येत्यादि। अङ्गिनः शरीरेष्वात्मवत्काव्ये प्राधान्येन स्थितस्य रसस्य धर्माः साक्षात्तदाश्रिता इत्यर्थः। अचलस्थितय इति—अपृथक स्थितयः अव्यभिचारिस्थितय इति यावत्। अव्यभिचारश्च रसेन तदुपकारेण च, तेन रसं विना ये नावतिष्ठन्ते अवतिष्ठमानाश्चावश्यं रसमुपकुर्वन्तीत्यर्थः। अत एवानयोर्व्यतिरेकमलङ्कारे वक्ष्यति। एवं च रसस्योत्कर्षहेतुत्वे सति रसधर्मत्वं, तथात्वे सति रसाव्यभिचारिस्थितिकत्वं, अयोगव्यवच्छेदेन रसोपकारकत्वं चेति लक्षणत्रयं गुणानां द्रष्टव्यम्। अलङ्कारमात्रभेदकन्तु सत्यन्तभागविमुक्तमिदमेव ग्राह्यम्। अन्यथा विशेषणवैयर्थ्यात्।

चण्डीदासस्तु—रसधर्ममात्रं लक्षणम्। उत्कर्षहेतुत्वन्तु गुणशब्दप्रवृत्तिबीजमित्याह। तदयुक्तम्। शृङ्गारत्वादौ धर्मेऽतिव्याप्तेः। ननु रसधर्मत्वमेषामसिद्धम्, कथमन्यथा नीरसेऽपि सुकुमारादिवर्णशालिनि मधुरादिव्यवहारो, रसवत्यपीदृग्वर्णाभाववत्यमधुरादिव्यवहार इति। उच्यते। शौर्यादयस्तावदात्मन एव धर्मा इत्य-

**उपकुर्वन्ति तं सन्तं येऽङ्गद्वारेण जातुचित्।**
**हारादिवदलङ्कारास्तेऽनुप्रासोपमादयः ॥२॥**

**ये वाचक-वाच्यलक्षणाङ्गातिशयमुखेन मुख्यं रसं सम्भविनमुपकुर्वन्ति ते कण्ठाद्यङ्गानामुत्कर्षाधानद्वारेण शरीरिणोऽपि उपकारका हारादय इवालङ्काराः। यत्र तु नास्ति रसस्तत्रोक्तिवैचित्र्यमात्रपर्यवसायिनः। क्वचित्तु सन्तमपि नोपकुर्वन्ति।**

---

## साहित्यचूडामणिः

गुणालङ्कारविवेकस्य वक्तव्यत्वात् तस्य च तदुभयसद्भावपरिज्ञानपूर्वकत्वादकाण्डेऽप्यलङ्कारलक्षणमुपक्षिपति—उपकुर्वन्तीति। तम् अङ्गिनं रसम्। सन्तमिति न पुनरविद्यमानम्। उपकारोपक्षयाभावात् तस्या। जातुचित्, न सर्वदा, क्वचित्तु सन्तमपि नोपकुर्वन्तीति वक्ष्यमाणत्वात्। संयोगवृत्त्या तमुपकुर्वन्त्यलंकाराः नतु गुणवत् समवायवृत्त्या। यदाह—[ध्वनिकारः]—

—"अङ्गाश्रितास्त्वलङ्कारा मन्तव्याः कटकादिवत्।" इति।

ध्वनिरात्मभूतोऽलङ्कार्यः यश्चित्तवृत्तिविशेषं सूचयति। कटकादिभिरपि शरीरवर्तिभिरात्मैवालङ्कार्यः नत्वचेतनं शवशरीरम्। यदि च शरीरं कटकादियुक्तं हास्यावहम् अनौचित्यात्। न च देहस्य किञ्चिदनौचित्य मित्यात्मैवालङ्कार्यः अहमलङ्कृत इत्यभिमानात्।

ननु यत्र रसो नास्ति तत्र किमलंकाराणां कृत्यमित्याह—यत्र त्विति। यत्र काव्ये स्फुटप्रतीतिको रसो नास्ति तत्र शिल्पभणितिमात्रविश्रान्ताः यथा चित्रवर्तिनो राजादेरलङ्काराः। रसस्य सत्त्वेऽपि कदाचिदलङ्काराणामनुपयोगः यज्जातुचिदित्युक्तमित्याह—क्वचित्त्विति। यथोदाहरिष्यति।

## सुधासागरः

विवादम्, दृश्यते तु क्वचिदशूरेऽप्याकारमहत्त्वादियोगिनि शूरव्यवहारः, शूरेऽप्याकारलाघवादियोगिन्यशूरव्यवहारश्च। तत् कस्य हेतोः। अथ क्वचिच्छूरव्यवहारविषये विततवाकृतिदर्शनादाकार एवास्य शूर इत्यौपचारिकव्यवहाराच्चाभियुक्तानामाकार एवैतादृशः शूरपदवाच्य इति विपर्यासाददूरदर्शिनस्तथा व्यवहरन्ति। तत्त्वज्ञास्तु क्वचिदुपचार इति वक्तव्यम्। हन्तैवममधुरादिरसयोगिनि सुकुमारादिवर्णयुक्ते मधुरादिव्यवहाराद् वर्ण एवायं मधुरादिरित्यौपचारिकव्यवहाराच्चाभियुक्तानां वर्ण एव तादृशो माधुर्यभागिति विपर्यासाद् रसपर्यन्तावगाहिबुद्धिविधुरा व्यवहरन्ति। तत्त्वालोचिनस्तु—क्वचिदुपचारादिति तुल्यमेतत्।

[ यथाक्रममुदाहरणानि ]—

अपसारय घनसारं कुरु हारं दूर एव किं कमलैः ।
अलमलमालि मृणालैरिति वदति दिवानिशं बाला ॥

—इत्यादौ वाचकमुखेन,

मनोरागस्तीव्रं विषमिव विसर्पत्यविरतं
प्रमाथी निर्धूमं ज्वलति विधुतः पावक इव ।

---

## साहित्यचूडामणिः

रसस्य सम्भवत उपकारस्थानमुदाहरति—अपसारयेति । अत्र वाचकमुखेनानुप्रासो रसस्य विप्रलम्भशृङ्गारात्मन उपकारी ।

मनोरोग इत्यादौ वाच्यद्वारोपमा ।

## सुधासागरः

ननु शौर्यादेरात्मवृत्तित्ववन्मधुरत्वादीनां रसवृत्तित्वव्यवस्थितावेवं स्यात्, सैव त्वसिद्धा, रसवृत्तित्वं वर्णवृत्तित्वं वेत्यत्र विनिगमकाभावादिति चेत् । मैवम् । भवत्येव विनिगमकाभावो यदि त्वया वर्णमात्राश्रया गुणाः स्वीकर्त्तुं शक्यन्ते, न त्वेवम्, 'मधुरा रचना'—इति व्यवहारात् अविशेषेण रचनायामपि तदभ्युपगमात् । तथा च गुणस्य रसमात्रवृत्तित्वे लाघवम्, वर्णरचनोभयवृत्तित्वे तु गौरवम् । यतश्चैवमत एव माधुर्यादयो रसधर्माः समुचितैर्वर्णादिभिर्व्यज्यन्ते इत्येव सम्यक् । व्यञ्जकत्वं चैषां यथा तथोदाहरिष्यत इति नातिप्रसङ्गशङ्केति ।

अलङ्कारेषूक्तगुणधर्मराहित्यं दर्शयितुमलङ्कारस्वरूपमाह—'उपकुर्वन्ती'-ति ।

ये वाचकवाच्येत्यादि । वाचकः शब्दो, वाच्योऽर्थः । अङ्गिनो रसस्याङ्गभूतौ शब्दार्थौ तद्द्वारेण तदतिशयाधानमुखेन ये धर्मा रसमुपकुर्वन्ति (यत्र रसस्य सम्भवस्तत्र तमुपकुर्वन्ति) यत्र तस्यासम्भवस्तत्रोक्तिवैचित्र्यमात्रपर्यवसिता इति भावः । जातुचित् । न तु नियमेन । तथा च सन्तमपि रसं क्वचिन्नोपकुर्वन्तीत्यर्थः । एतावता रसावृत्तित्वं चलस्थितिकत्वं चालङ्काराणां दर्शितम् । तथा च रसोपकारत्वे सति तदवृत्तित्वम्, तथात्वे सति रसव्यभिचारित्वम्, अनियमेन रसोपकारकत्वं चेति सामान्यलक्षणत्रयमलङ्काराणाम्, गुणमात्रभेदकन्तु सत्यन्तभागरहितं पूर्ववद्वेदितव्यम् । अन्यथा व्यर्थविशेषणत्वादिति । तत्र शब्दद्वारेण रसोपकारत्वं दर्शयति—'अपसारये'-ति । स्पष्टम् । अत्र रेफानुप्रासः शब्दमलङ्कुर्वन् शृङ्गारमुपकरोति, रेफस्य शृङ्गारव्यञ्जकत्वात् । अर्थद्वारेण यथा—'मनोराग'इति ।

माधवानुरक्ताया मालत्या लवङ्गिकां प्रतीयमुक्तिः । हे सखि । मनोरागो माधवविषयकश्चित्तानुरागस्तीव्रं यथा स्यात्तथा विषमिव विसर्पति विविधप्रकारेण परितः

हिनस्ति प्रत्यङ्गं ज्वर इव गरीयानित इतो
न मां त्रातुं तातः प्रभवति न चाम्बा न भवती ॥

—इत्यादौ वाच्यमुखेनालङ्कारौ रसमुपकुरुतः।

चित्ते विहट्टदि ण टुट्टदि सा गुणेसुं
सेज्जासु लोट्टदि विसट्टदि दिम्मुहेसुं।
बोलम्मि वट्टदि पवट्टदि कव्वबन्धे
झाणेण टुट्टदि चिरं तरुणी तरट्टी ॥

---

## साहित्यचूडामणिः

अथ विद्यमानस्यापि रसस्यालङ्कारैरनुपकारमुदाहरति—चित्त इति।

चित्ते प्रलुठति न त्रुट्यति सा गुणेषु
शय्यायां लुठति विसर्पति दिङ्मुखेषु।
अपक्रमणे वर्तते प्रवर्तते काव्यबन्धे
ध्यानेन तुष्यति चिरं तरुणी विदग्धा ॥ इति।

## सुधासागरः

सञ्चरति, प्रमाथी प्रकर्षेण मथनशीलोऽयं विधुतो वातेनोत्तेजितः पावक इव निर्धूमं धूमं विनैव, अविरतं सन्ततं ज्वलति। गरीयान् गरिष्ठज्वर इव प्रत्यङ्गं हिनस्ति। इत कारणादितो दुःसहतरानुरागात्। मां त्रातुं तातः पिता न प्रभवति। नन्दनाथ मत्प्रतिप्रसवादिति भावः। न चाम्बा, साऽपि तदनुगामिनीति भावः। न भवती, पित्रो सम्मतेऽर्थे सख्या अकिञ्चित्करत्वादिति भावः।

अत्र विषमिवेत्याद्युपमा, सा चार्थमलङ्कुर्वाणा रसमुत्कर्षयति, विषमिवेत्युपमावशेन विसर्पणादेरतिशयप्राप्त्या विप्रलम्भोत्कर्षात्। तदेतदुक्तं वृत्तिकारैः—वाचकमुखेन वाच्यमुखेनालङ्कारौ रसमुपकुरुत इति। रसं विनाऽप्यलङ्कारसम्भवो यथा—'स्वच्छन्दोच्छलदे'-त्यादौ चित्रभेदे। सत्यपि रसे तदनुपकारकत्वं शब्दालङ्कारस्य यथा—'चित्त'इति।

वसन्ततिलका छन्दः।

चित्ते विघटते न लूना भवति सा गुणेषु
शय्यायां लुठति विकसति दिङ्मुखेषु।
वचने वर्त्तते गायति काव्यबन्धे
ध्यानेन त्रुट्यति चिरं तरुणी प्रगल्भा ॥

इति संस्कृतम्। प्रवासिनं नायकं प्रति विरहिण्यवस्थावर्णनमिदम्। हे अकरुण! सा प्रगल्भा तव तरुणी चित्ते विघटते चिन्तानुरूपं करोति, ननु तर्हि भ्रष्टेत्यत आह गुणेषु

[ चित्ते विघटते न त्रुट्यति सा गुणेषु
शय्यासु लुठति विसर्पति दिङ्मुखेषु ।
वचने वर्त्तते प्रवर्त्तते काव्यबन्धे
ध्यानेन त्रुटयति चिरं तरुणी प्रगल्भा ॥ ]

—इत्यादौ वाचकमेव ।

मित्रे क्वापि गते सरोरुहवने बद्धानने ताम्यति
क्रन्दत्सु भ्रमरेषु वीक्ष्य दयितासन्नं पुरः सारसम् ।
चक्राह्वेन वियोगिना बिसलता नास्वादिता नोज्झिता
कण्ठे केवलमर्गलेव निहिता जीवस्य निर्गच्छतः ॥

---

## साहित्यचूडामणिः

अत्र वाचकमेव न तु सन्तमपि रसमुपकरोत्यनुप्रासः । मित्र इति । सूर्ये सुहृदि च । योऽयमनास्वादनानुज्झनवेलायां चक्रवाकवक्त्रवर्तिन्या मृणाललताया उत्क्रान्तं जीवं निरोद्धुमर्गलया सादृश्यादुपमालङ्कारो वाच्यमेवार्थमलङ्कर्तुमलं न पुना रसम् । मृणाललता हि चक्रवाकेण नास्वादिता, कुतः, चक्रवाकी चञ्चुपुटार्धोपयोगासिद्धेः । नचोज्झिता, कुतः, आलस्यात् । सा च विरहिणो विहगस्य

## सुधासागरः

लूना न भवति गुणवत्तायां हीना न भवति, शय्यायां लुठति मुहुः पार्श्वपरिवर्त्तनं करोति न तु स्वपिति, दिङ्मुखेषु विकसति भवद्दिदृक्षया दिक्षु प्रकाशते, वचने वर्त्ततेऽविरतं प्रलपति, काव्यबन्धे भवद्वर्णनारूपे गायति, चिरं ध्यानेन त्रुट्यति कृशा भवतीत्यर्थः ।

इत्यादौ वाचकमेवेति । अयमाशयः—अत्रानुप्रासेन शब्दमात्रमलङ्क्रियते न तु सन्नपि शृङ्गारः, टवर्गस्य तत्प्रतिकूलत्वात् । अत्र च प्रतिकूलवर्णत्वं न दोषः प्राकृतस्यौजोगुणप्रधानत्वात्, अस्य च तदभिव्यञ्जकत्वात् इति कश्चित् । वस्तुतस्तु सत्यपि प्रतिकूलवर्णत्वे रसस्य नानुत्पत्तिरेव, अनुभवविरोधात्, किन्त्वपकर्षमात्रम् । न चापकृष्टेऽपि विद्यमाने तस्मिन् टवर्गानुप्रासस्योपकारकतेति सारमिति ।

सत्यपि रसे तदनुपकारकत्वमर्थालङ्कारस्य यथा—'मित्रे कापी'ति ।

मित्रे सूर्य एव मित्रे सुहृदि कापि गते सति बद्धानने मुद्रितमुखे मौनिनि च ताम्यति सति भ्रमरेषु क्रन्दत्सु रुदत्सु पुरो दयितासक्तं सारसं पक्षिविशेषं रसिकं च वीक्ष्य वियोगिना—चक्रवाकीविच्छेदवता चक्राह्वेन चक्रवाकेन बिसलता नास्वादिता

—इत्यादौ वाच्यमेव, न तु रसम्। अत्र बिसलता न जीवं रोद्धुं क्षमेति प्रकृताननुगुणोपमा।

एष एव च गुणालङ्कारप्रविभागः।

---

## साहित्यचूडामणिः

कामिसृष्टिसाधारण्याद् उद्दीपनतया हृदयव्यथावहत्वाज्जीवं हठान्निर्गमयितुमुत्सहते न तु विरोद्धुमित्युपमा प्रकृताननुगुणा प्रकृतं चक्रवाकविप्रलम्भं प्रत्यनुचिता। किञ्च प्राणोत्क्रान्तिकाले कण्ठे तृणादिसङ्गः प्राणस्थापक इत्युक्तयोत्प्रेक्ष्यमाणत्वेनाप्यनौचित्यं किमङ्ग पुनरौपम्येऽपि सापे(?)अतो वामनो दूषितवान्।

## सुधासागरः

न मुक्ता न वा उज्झिता त्यक्ता, किन्तु केवलं निर्गच्छतः प्राणस्यार्गलेव वक्त्रे निहिता स्थापितेत्यर्थः।

इत्यादौ वाच्यमेवेत्यादि। अत्र प्राञ्चः—अत्रोपमाऽर्थालङ्कारः, न चासौ प्रकृतस्य शृङ्गारस्योपकारिका, विप्रलम्भे हि जीवनिर्गमोऽपि वर्ण्यते तदुत्कर्षाधायकत्वादिति तन्निरोधहेतूपादानमनुचितम्, प्रत्युत स्नेहाभावे पर्यवस्येत। तदेतदुक्तम्—अत्र बिसलता जीवं निरोद्धुं शक्तेति प्रकृताननुगुणोपमेति। अशक्तत्वं चात्रानुचितत्वमिति व्याचख्युः। वस्तुतस्तु तदन्यथा व्याख्येयम्, बिसलता जीवं निरोद्धुमशक्तेत्युपमा प्रकृताननुगुणा, प्रकृते विषयेऽनुगुणरहिता, उपमाया अनुगुणं यत्सादृश्यन्तच्छ्रुत्या। तस्मादत्रोपमा नालङ्कारः किन्तूत्प्रेक्षा। न च तस्यामपि तद्दोषतादवस्थ्यम्, सम्भावितेनापि सादृश्येन तत्प्रवृत्तेः, न तूपमावद्वस्तुसत्त्वैव, जीवरोधकत्वरूपसादृश्यमपि विषये ह्युत्प्रेक्षणीयकोटावेवान्तर्भूतम्। यथोच्यते, रोधकमिव निहितमिति। तर्हि कथमिदं प्रकृतोदाहरणमिति चेत्, उत्प्रेक्षातो रसातिशयाप्रतीतेः। प्रत्युत तादृशोत्प्रेक्षया उपमोक्तन्यायेनापकर्षपर्यवसानादिति। अत एवोक्तं जयरामतर्कपञ्चाननैः—अर्गलासादृश्यं ऋजुत्ववक्त्रनिधानगलद्वारपिधानादिकं बिसलतायां सम्भवति। न हि सर्वथा चन्द्रादिसादृश्यं मुखादावपि। परन्तु जीवनिर्गमनिरोधकार्गलाया अप्रसिद्ध्या नोपमात्वम्, प्रसिद्धस्यैव तत्त्वात्। तत्त्वेन सम्भावनन्तु सम्भवत्येवेत्युत्प्रेक्षैवात्रेति। अत्र च मित्रबद्धाननेत्यादिशब्दश्लेषाहितः कश्चिदतिशयो न प्रकृतोत्कर्षकः। यद्यपि मित्रस्य प्रतिकर्त्तुरभावात् सुहृदां च मौनिनां क्रन्दतां च वियोगप्रतीकारासामर्थ्यात्तद्दर्शनेन स्वस्य दुःखोत्पादकत्वाच्च नायकनायिकान्तरमिलनदर्शनस्य विप्रलम्भोद्दीपकत्वात्प्रकृतानुकूलता, तथापि श्लेषस्याप्ररूढत्वान्मुख्याया उत्प्रेक्षायाः प्रकृताननुगुणत्वमिति द्रष्टव्यम्।

एष एवेत्यादि। एष एव गुणालङ्कारविभागो विचारसहो नान्य इत्यर्थः।

एवं च "समवायवृत्त्या शौर्यादयः संयोगवृत्त्या तु हारादय इत्यस्तु गुणालङ्काराणां भेदः, ओजःप्रभृतीनामनुप्रासोपमादीनां चोभयेषामपि समवायवृत्त्या स्थितिरिति गड्डलिकाप्रवाहेणैवैषां भेदः" इत्यभिधानमसत् ।

यदप्युक्तम् "काव्यशोभायाः कर्त्तारो धर्मा गुणास्तदतिशय-हेतवस्त्वलङ्कारा" इति, तदपि न युक्तम्, यतः किं समस्तैर्गुणैः काव्यव्यवहारः, उत कतिपयैः ? यदि समस्तैः तत्कथमसमस्तगुणा गौडी पाञ्चाली च रीतिः काव्यस्यात्मा ।

---

## साहित्यचूडामणिः

अथ दृष्टान्तीकृतानां गुणालङ्काराणां वृत्तिभेदमभ्युपगच्छामः । दार्ष्टान्तिकानां पुनस्तदभेद एव । तद्भेदस्तु गतानुगतिकतामात्रप्रयुक्त इति परकीयं प्रत्यवस्थानं परास्तं प्रत्येमीत्याह—एवञ्चेति । अस्त्विति कामचारकरणे लोट् । उभयेषामिति । गुणानामलंकाराणां च । समवायवृत्या न पुनरलङ्काराणां संयोगवृत्त्येति विशेषात् । गड्डरिकाप्रवाहेण मेषजातिगमनन्यायेन गतानुगतिकतामात्रेण भेद इत्यभिधानमसाधु । तत्र युक्तय उक्ताः । अथ वामनालङ्कारनिर्णीतं गुणालङ्कारभाग-मधिक्षिपति—यदपीति । यत इति । रीतिरात्मा काव्यस्य । रीतिश्च विशिष्टा पदरचना । वैशिष्ट्यं च गुणरूपम् । विशेषो गुणात्मेत्युक्तत्वात् । तत्र प्रथमा समग्र-गुणा वैदर्भी, ओजःप्रभृतिकतिपयगुणा गौडीया, माधुर्यादिकतिपयगुणा पाञ्चालीति

## सुधासागरः

अथाचार्यान्तरोक्तं गुणालङ्कारयोर्भेदकाभिधानं दूषयितुमुपन्यस्यति । एवमित्यादि । अयमाशयः—तदेवं गुणालङ्कारयोर्भेदे व्यवस्थिते यत्कैश्चिदुक्तं लौकिकयोर्गुणा-लङ्कारयोः शौर्यादिहारयोः समवेतत्वसंयोगित्वाभ्यां भेदः सम्भवति । अलौकिकयो-र्माधुर्याद्यनुप्रासोपमानयोरुभयोरपि समवेतत्वादनुपपन्नो भेदस्तस्मात्तयोर्भेदाभिधानं गड्डलिकाप्रवाहन्यायेन । तथा हि गड्डलिका मेषी काचिदेका केनचिद्धेतुना पुरो गच्छति, इतरास्तु विनैव निमित्तविचारं तामनुगच्छन्ति । तथा केनाप्यालङ्कारिकेण गुणालङ्कारौ केनचिदभिप्रायेण भिन्नतयोक्तौ, इतरे तु विनैव हेतुविचारं तदनुसारेण तद्भेदं वदन्तीति तदसम्यग्वेदितव्यम् ।

यदप्युक्तं वामनेन—काव्यशोभा काव्यव्यवहारनिमित्तं कश्चिदतिशयः तद्धेतवो गुणस्तदतिशयहेतवस्त्वलङ्कारा इति तयोर्भेद इति । तदप्ययुक्तम् । यतः शोभाहेतवो गुणा इत्युक्तम् । तत्र किं समस्तैर्गुणैः काव्ये शोभोत्पत्तिरुत येन केनापि । आद्ये पाञ्चाली गौडीया च रीतिः कथं काव्यस्यात्मा, माधुर्याद्यभावेन समस्तगुणाभावा-

**अथ कतिपयैः, ततः—**

**अद्रावत्र प्रज्वलत्यग्निरुच्चैः प्राज्यः प्रोद्यन्नुल्लसत्येष धूमः ॥**

**—इत्यादावोजःप्रभृतिषु गुणेषु सत्सु काव्यव्यवहारप्राप्तिः ।**

**स्वर्गप्राप्तिरनेनैव देहेन वरवर्णिनी ।**
**अस्या रदच्छदरसो न्यक्करोतितरां सुधाम् ॥**

**—इत्यादौ विशेषोक्तिव्यतिरेकौ गुणनिरपेक्षौ काव्यव्यवहारस्य प्रवर्त्तकौ ॥ २ ॥**

---

## साहित्यचूडामणिः

तिस्रोऽपि ताः काव्यस्यात्मभूता इति वामनीया मर्यादा । तत्र दूषणाय विकल्पयति—किमिति । आद्ये कल्पे दोषमाह—तदिति । वैदर्भी केवला काव्यस्यात्मा स्यात् । न गौड़ी वा पाञ्चाली वा । द्वितीयं कल्पं कन्दलयति—अथेति । पर्वतोऽग्निमानित्यादौ तर्कशास्त्रानुकूलेऽप्योजःश्लेषार्थव्यक्त्यादिषु गुणेषु कतिपयेषु सत्सु काव्यव्यपदेशः प्राप्नोति । अनिष्टं च तत् ।

किञ्च तदतिशयहेतवः खल्वलङ्काराः । गुणासिद्धौ कथमतिशयकारणस्यालङ्कारस्यौचित्यमित्याह—स्वर्गेति । वरवर्णिनीति सामानाधिकरण्ये नीतः । पूर्वार्धे विशेषोक्तिः । यत् स एवाह—एकगुणहानिकल्पनायां साम्यदार्ढ्यं विशेषोक्तिः । उत्तरत्र व्यतिरेकः ।

गुणनिरपेक्षौ स्फुटप्रकाशमानगुणसंस्पर्शशून्यौ अनावश्यकतया परामृष्टौ ॥२॥

## सुधासागरः

च्छोभानुत्पत्तेः । अन्त्ये 'अद्रावत्र प्रज्वलत्यग्निरुच्चैः प्राज्यः प्रोद्यन्नुल्लसत्येष धूमः' इत्यादावोजःप्रसादगुणसत्वात्काव्यव्यवहारप्रसङ्गः । न हि मन्मत इव तन्मतेऽपि तद्व्यवहारेऽलङ्कारापेक्षा, तेन गुणमात्रेणैव काव्यव्यवहारस्वीकारात् । यदपि शोभातिशयहेतवोऽलङ्कारा इति । तदप्ययुक्तम् ।

स्वर्गप्राप्तिरनेनैव देहेन वरवर्णिनी ।
अस्या रदच्छदरसो न्यक्करोतितरां सुधाम् ॥

इत्यत्र पूर्वार्धे विशेषोक्तिः। एकगुणहानिकल्पनया शेषगुणदार्ढ्यकल्पना विशेषोक्तिरिति वामनलक्षणात्। एतौ च गुणमनपेक्ष्यैव काव्यव्यवहारहेतुशोभाजनकौ। एवमन्यत्राप्यूह्यम्। नन्वत्रापि प्रसादादेर्वर्त्तमानत्वात्कथं गुणानपेक्षत्वमलङ्कारयोः, किंच निर्गुणत्वे कथं त्वन्नयेऽपि काव्यव्यवहारः,सगुणत्वविशेषणाभावादिति चेत्। अस्त्येवात्र गुणस्तथा ज्ञानं च, परन्तु किञ्चिद्गुणवत्वस्य शोभाहेतुत्वेऽतिप्रसङ्गात्

इदानीं गुणानां भेदमाह—

**माधुर्यौजः-प्रसादाख्यास्त्रयस्ते न पुनर्दश ।**

एषां क्रमेण लक्षणमाह—

**आह्लादकत्वं माधुर्यं शृङ्गारे द्रुतिकारणम् ॥ ३ ॥**

शृङ्गारे अर्थात् सम्भोगे द्रुतिर्गलितत्वमिव । श्रव्यत्वं पुनरोजःप्रसादयोरपि ।

---

## साहित्यचूडामणिः

अथ स्वमतानुगुणं गुणविभागमाह—इदानीमिति ।

माधुर्येति । एते त्रय एव गुणाः न पुनर्दशेति वामनालङ्कारोक्तमभिसन्धायोक्तिः ॥ २½ ॥

आह्लादकत्वमिति । चित्तस्य यदाह्लादनिबन्धनं तन्माधुर्यम् । द्रुतिपर्याय आह्लादः यः प्राचीनकाठिन्यपर्युदासं पर्यवस्यति ।

अर्थादिति । विप्रलम्भे सातिशयस्य तस्य वक्ष्यमाणत्वात् । ननु द्रुतिर्द्रवद्रव्यस्वभावः कथमन्तःकरणस्योपपत्तिमानित्यत्राह—गलितत्वमिवेति । औपचारिकः प्रयोग इति यावत् । माधुर्यवर्णनायां हि सहृदयानां हृदयमार्द्रीभवति ।

ननु, "श्रव्यं नातिसमस्तार्थशब्दं माधुर्यमिष्यते ।" इति भामहेनाभाणि, तत् किमभिनवलक्षणकरणक्लेशेनेत्यत आह श्रव्यत्वमिति । व्यभिचारादेतन्न लक्षणम् । न खल्वोजसः प्रसादस्य वा किञ्चिदश्रव्यत्वं, तद्गुणकस्य काव्यस्य दुष्टतापत्तेः ॥ ३ ॥

## सुधासागरः

समस्तं गुणवत्त्वं तथा वक्तव्यम्, न चात्र तत्सामग्र्यम्, तथा च गुणजन्यां शोभामनपेक्ष्यैवालङ्काराभ्यां शोभासम्पत्तिरिति तात्पर्यमिति ।

इदानीं गुणानामलङ्कारभेदे सिद्धे दशविधत्वव्युदासाय तद्भेदमाह—

दशेति परोक्ताः । तदुक्तम्—

श्लेषः प्रसादः समता माधुर्यं सुकुमारता ।
अर्थव्यक्तिरुदारत्वमोजःकान्तिसमाधयः ॥
इति वैदर्भमार्गस्य प्राणा दश गुणाः स्मृता ॥ इति ।

विभागक्रमेणैषां लक्षणमाह—

आह्लादकत्वं यद्यानन्दहेतुत्वं तर्हि न शृङ्गारस्यापि, तस्यैव सुखात्मकत्वेनातज्जनकत्वात् । आनन्दस्वरूपत्वं चेत्तर्हि सर्वेषामेव रसानामित्यत आह—द्रुतिकारण-

**करुणे विप्रलम्भे तच्छान्ते चातिशयान्वितम् ।**

अत्यन्तद्रुतिहेतुत्वात् ।

**दीप्त्यात्मविस्तृतेर्हेतुरोजो वीररसस्थिति ॥ ४ ॥**

चित्तस्य विस्ताररूपदीप्तत्वजनकमोजः ।

---

## साहित्यचूडामणिः

करुण इति । तद् माधुर्यं करुणविप्रलम्भशान्तेषु यथोत्तरमतिशयेनान्वीयते ।

कोऽयमतिशयान्वय इत्यत्राह—अत्यन्तेति । द्रवणातिशयो हि चेतसश्चर्वणीयमाधुर्यधाराधिरूढिः । यदाह—[ध्वन्यालोके-२]

शृङ्गार एव मधुरः परः प्रह्लादनो रसः ।
तन्मयं काव्यमाश्रित्य माधुर्यं प्रतितिष्ठति ॥
शृङ्गारे विप्रलम्भाख्ये करुणे च प्रकर्षवत् ।
माधुर्यमार्द्रतां याति यतस्तत्राधिकं मनः ॥ इति ।

ननु कथं शृङ्गार एव मधुर इत्यवधारणमिति चेत् । न । परमार्थतः शृङ्गारस्यैव माधुर्यम्, उपचारेण शब्दार्थयोरित्याकूतादित्यलं रसान्तरव्यावर्तनश्रमणे, करुणादेरमधुरत्वप्रसङ्गात् । करुणस्यैव च सर्वरसोत्कर्षात् ॥ ३ ॥

अथौजो लक्षयति—दीप्त्यात्मेति । दीप्त्यात्मन औज्ज्वल्यस्वभावया विस्तृते प्रसरद्रूपतायाः कारणम् । वीररसे स्थितिर्यस्य । दीप्तिविस्तारयोः—पृथगर्थतायां

## सुधासागरः

मिति । द्रुतिश्चेतसो गलितत्वमिव द्वेषादिजन्यकाठिन्याभावः । तथा च यद्वशेन श्रोतुर्निर्मनस्कतेव सम्पद्यते तदा ह्लादकत्वस्वरूपं माधुर्यमित्यर्थः । यदुक्तम्—

'गलितत्वमिवाह्लादपदव्या हृदये ददत् । माधुर्यं नाम शृङ्गारे प्ररोहं गाहते गुणः' इति । क्वासावित्यत आह—शृङ्गारे इति । शृङ्गारपदं सम्भोगपरं विप्रलम्भेऽतिशयस्य वक्तव्यत्वात् ।

भास्करस्तु (भामहस्तु) श्रव्यत्वं माधुर्यस्य लक्षणमाहस्म । तदयुक्तम् । ओजः—प्रसादयोरपि तत्सत्त्वेनातिव्याप्तेः शब्दनिष्ठत्वाच्च । तत्किं सम्भोग एव माधुर्यं नेत्याह—'करुण' इति ।

सम्भोगात्करुणे, तस्माद्विप्रलम्भे, ततोऽपि शान्तेऽतिशयितं माधुर्यम् । हास्यादेरप्यपगमेनातिद्रुतिहेतुत्वात् इयाँस्तु विशेषः—सम्भोगविप्रलम्भयोस्तन्निःसपत्नम्, शान्ते तु जुगुप्साद्यन्वयादोजोलेशानुविद्धमिति ।

चित्तस्येत्यादि । दीप्तस्वरूपा या मनसो विस्तृतिर्ज्वलितत्वमिव । तथा च यद्वशाज्ज्वलितमिव मनो जायते तदोज इत्यर्थः । क्वेदमित्यत आह—वीररसस्थितिः । अस्याधिकरणान्तरमाह—'बीभत्से'ति ।

**बीभत्सरौद्ररसयोस्तस्याधिक्यं क्रमेण च ।**

वीराद् बीभत्से, ततो रौद्रे सातिशयमोजः ।

**शुष्केन्धनाग्निवत् स्वच्छजलवत् सहसैव यः ॥ ५ ॥**

**व्याप्नोत्यन्यत् प्रसादोऽसौ सर्वत्र विहितस्थितिः ।**

अन्यदिति व्याप्यमिह चित्तम् । सर्वत्रेति सर्वेषु रसेषु सर्वासु रचनासु च ।

---

## साहित्यचूडामणिः

कारिकायां दीप्त्या विस्तृतिः वृत्तौ विस्तारेण दीप्तिर्व्याख्यातेति नात्यन्तं वैषम्यम् । यदाह—[ध्वन्यालोके]

रौद्रादयो रसा दीप्त्या लक्ष्यन्ते काव्यवर्तिनः ।
तद्व्यक्तिहेतू शब्दार्थावाश्रित्यौजो व्यवस्थितम् ॥ इति ॥४॥

अथ प्रसादं प्रकटयति—शुष्केति ।

व्याप्यमनुद्दिष्टमभिधीयते । व्याप्यमिति व्याप्नोतीत्यनेन प्रसादवाचकतया सिद्ध्यति । तस्य यत् कर्मभूतं चित्तम् । सर्वेष्विति । नहि माधुर्यस्यौजोनुगुणा रचना सङ्गच्छते, नाप्यौजसो माधुर्यानुकूला । प्रसादस्य तु तदुभयं तदतिरिक्तं च विषयः । यदाह—

समर्पकत्वं काव्यस्य यत्तु सर्वरसान् प्रति ।
स प्रसादो गुणो ज्ञेयः सर्वसाधारणक्रियः ॥ ध्व० ॥इति ।

यतः शुष्केन्धनाग्निवदिति प्रसादस्यौजसा संप्लव उक्तः स्वच्छजलवदिति माधुर्येण ॥ ५३ ॥

## सुधासागरः

वीरादित्यादि । अयमाशयः—वीराद् वीभत्से ततोऽपि रौद्रे चित्तदीप्तेः कार्यायाः सातिशयतया कारणमोजः क्रमेणोत्कर्षवत् । तदेतद् वीररौद्रयोर्निष्प्रतिपक्षम्, बीभत्से तु माधुर्यलवानुविद्धमिति विशेषः । प्राधान्येन माधुर्यौजसोरेकैकविधानमत्र प्रक्रान्तमतो हास्याद्भुतभयानकेषु न किञ्चिद् विहितम् । तेषूभयगुणप्राधान्यादिति ।

अन्यदित्यादि । अयं भावः—ओजसि शुष्केन्धनाग्निवन्माधुर्ये स्वच्छशर्करावस्त्रादिजलवद् यो गुणोऽन्यत् व्याप्यं चित्तं झटित्येव रसेन व्याप्नोति स प्रसादः । रुणस्यापि स्वातन्त्र्यविवक्षया य इति निर्देशः । अयं च सर्वेषु रसेष्वाधेयतया, मु रचनासु व्यङ्ग्यतया स्थित इति तन्त्रेणाह—सर्वत्र विहितस्थितिरिति । कथं त्वादिनामपि शब्दार्थयोर्मधुरादिव्यवहार इत्यत आह—'गुणवृत्त्ये'ति ।

**गुणवृत्त्या पुनस्तेषां वृत्तिः शब्दार्थयोर्मता ॥ ६ ॥**

गुणवृत्त्या उपचारेण । तेषां गुणानाम् , आकारे शौर्यस्येव ।

कुतस्त्रय एव न दश इत्याह—

**केचिदन्तर्भवन्त्येषु दोषत्यागात् परे श्रिताः ।**
**अन्ये भजन्ति दोषत्वं कुत्रचिन्न ततो दश ॥ ७ ॥**

---

## साहित्यचूडामणिः

ननु कथं शब्दार्थयोर्माधुर्यादिव्यपदेश इति चेदाह—गुणवृत्त्येति।

तत्राप्युक्तस्यैव दृष्टान्तस्यानुषङ्ग इत्याह—आकार इति ॥ ६ ॥

अथालंकारान्तरोक्तां गुणपरिपाटीमात्मोपपादितायां त्रिगुण्यामन्तर्भावयितुमाह—कुत इति।

केचिदिति। अनुक्ताः केचिदुक्तेषु अन्तर्भवन्तीति। उपलक्षणं चैतत्। अलंकारे ध्वनौ वान्तर्भवन्ति। तथा वक्ष्यति—"अभिधास्यमानस्वभावोक्त्यलङ्कारेणे"-त्यादिना। केचन वैचित्र्यमात्रपर्यवसिता इत्यनुसन्धेयम्। परे इतरे गुणा दोषाणां लिखितपठितानां त्यागात् पारिशेष्येण स्वीकृताः। अन्ये गुणतयाभिमन्यमानाश्च केचिद् दोषत्वं भजन्ते। कुत्रचिदुदाहरणविशेषे। अहो महान् खल्वविवेको गुण-बाहुल्यवादिनामिति यावत्। यत एवं ततो न दश। अपितु त्रय एव।

## सुधासागरः

गुणवृत्त्येत्यादि। गुणवृत्तिरुपचारः। आकारे शौर्यस्येव व्यञ्जकसुकुमार-वर्णादौ तदुपचार इत्यर्थः। तेषां गुणानाम्।

ननूक्तलक्षणाः श्लेषादयोऽपि दश दुरपह्नवाः। तत्कुतस्त्रय एव न पुनर्मदुक्ता अपि दशेत्यत आह—'केचिदे'-ति।

एषु—मदुक्तलक्षणेषु माधुर्यादिषु। इदं चोपलक्षणम्। अलङ्कारध्वन्योर-प्यन्तर्भावस्य दर्शयिष्यमाणत्वात्। उक्तान्तर्भावादिहेतुत्रयोपादानमप्युपलक्षणम्, वैचित्र्यमात्रपर्यवसानस्यापि दर्शयिष्यमाणत्वात्।

दोषत्यागादिति। दोषाभावस्वरूपत्वात्तद् व्यापकतया वाऽदोषत्वम्। कुत्रचि-दिति। दोषस्वभावस्य गुणस्वभावत्वानौचित्यात् स्वभावभङ्गप्रसङ्गात्।

[१]बहूनामपि पदानामेकपदवद्भासमानात्मा यः श्लेषः, [२]यश्चारोहावरोहक्रमरूपः समाधिः, या च विकटत्वलक्षणा उदारता[३], यश्चौजोमिश्रितशैथिल्यात्मा प्रसादः[४], तेषामोजस्य-[५]न्तर्भावः। पृथक्पदत्वरूपं माधुर्यं[६] भङ्ग्या साक्षादुपात्तम्। प्रसादेनार्थव्यक्ति-र्गृहीता[७]। मार्गाभेदरूपा समता[८] क्वचिद् दोषः। तथा हि 'मातङ्गाः किमु वल्गितैः' इत्यादौ सिंहाभिधाने मसृणमार्गत्यागो गुणः। कष्टत्वग्राम्यत्वयोर्दुष्टताभिधानात् तन्निराकरणेनापारुष्यरूपं सौकुमार्यम्[९], औज्ज्वल्यरूपा कान्तिश्च[१०] स्वीकृता। एवं न दश शब्दगुणाः।

---

## साहित्यचूडामणिः

बहूनामिति।

यत्रैकपदवद् भान्ति पदानि सुबहून्यपि।
अनालक्षितसन्धीनि स श्लेषः परमो गुणः॥
आरोहन्त्यवरोहन्ति क्रमेण यतयो हि यत्।
समाधिर्नाम स गुणः पूता तेन सरस्वती॥
विकटत्वं च बन्धस्य कथयन्ति ह्युदारताम्।
शैथिल्यमोजसा मिश्रं प्रसादं च प्रचक्षते॥
पदन्यासस्य गाढत्वं वदन्त्योजः कवीश्वराः।
बन्धे पृथक्पदत्वं च माधुर्यमुदितं बुधैः॥
यत्रार्थव्यक्तिहेतुत्वं सोऽर्थव्यक्तिः स्मृतो गुणः।
प्रतिपादं प्रतिश्लोकमेकमार्गपरिग्रहः॥
दुर्बलो दुर्विवादश्च समतेति गुणः स्मृतः।
बन्धस्याजरठत्वं च सौकुमार्यमिति स्मृतम्॥
औज्ज्वल्यं कान्तिरित्याहुर्गुणं गुणविपश्चितः।

इति स्थित्या,

वनान्तराले तव वीर! वैरी निर्मक्षिको नित्यमचामरोऽपि।
अचन्दनार्द्रोऽपि विपाण्डुराङ्गः निरातपत्रोऽपि भवत्यनूष्मा।

## सुधासागरः

तदेतदाह वृत्तिकारः—बहूनामपि पदानामित्यादि।

समाधिरपि न गुण इत्यन्तस्य वृत्तिग्रन्थस्यायमाशयः श्लेषस्तन्मते बहूनामपि पदानामेकपदवद्भासनम्। समाधिस्त्वारोहावरोहयोः क्रमः। स

---

१–१० वामनकाव्यालङ्कारसूत्राणीमानि।

## साहित्यचूडामणिः

अत्र यः श्लेषो मासृण्यलक्षणः,

कविर्लोके वाग्मी गमक इति ये केचन गुणै-
रखर्वं गर्वेयुः परपरिभवारम्भसुभटाः ।
समायोगे तेषां सह सदसि गोपालकविना
कथङ्कारं तिष्ठेदशिथिलमहङ्कारगरिमा ॥

इत्यत्र यश्च समाधिः,

हृदयकुडुवक्रोडादन्वक्षरार्पितविप्रुषः
प्रकृतिकलुषां ग्राहंग्राहं मषीमिव शेमुषीम् ।
इह कतिपये वल्गज्जिह्वातलाञ्चलतूलिकाः
पवनपदवीतालीपत्रे लिखन्ति सुभाषितम् ॥

इत्यत्र या चोदारता,

प्रासादाग्रवितर्दिकाविकृतिषु प्रालेयिनीर्वल्लकी-
रध्यारोप्य गवाक्षभागफलकं वालातपालोहिनीः ।
शुष्यन्तीरबलाः परीक्षितुममूरुच्चैः क्वणन्तीः क्रमात्
क्रन्दन्तीरिव ताडयन्ति तरलास्तन्त्रीरतन्द्रैर्नखैः ॥

इत्यत्र यश्च प्रसादः, तेषामोजस्यन्तःपातः । शैथिल्यं हि प्रसादः । तस्य न यद्योजसा मिश्रणं तदा शुद्धां दोषपदवीमवतरतीति तत्परिहारायोक्तम्—ओजोमिश्रतेति । यथाह वामनः—प्रसादो गुणसम्प्लवादिति । सम्प्लवः करुणप्रेक्षणीये सुखदुःख-सम्प्लवादनुभवसिद्धः । एतेन शुद्धमोजो व्याख्यातम् । यथा ममैव—

## सुधासागरः

चोत्कर्षापकर्षयोर्वैरस्यानाधायको विन्यासः। उदारत्वं विकटाक्षरत्वम् । तच्च नृत्यद्भिरिव पदैर्या घटना तत्त्वम् । प्रसाद ओजोमिश्रितं शैथिल्यम् , सर्वशैथिल्यस्य दोषत्वात् । तदेतच्चतुष्टयमोजस्यन्तर्भूतम् । यद्यपि दीप्तिजनकत्वरूपे रसनिष्ठे ओजसि नैषामन्त-र्भावसम्भवः, तथापि तत्स्वीकारेण स्वीक्रियते । तद्व्यञ्जके गाढबन्धलक्षणे तदन्त-र्भाव इत्यर्थः । एवमग्रेऽपि । पृथक्पदत्वरूपन्तु माधुर्यं भङ्ग्या साक्षादेवोपात्तम् । यथोक्तमाधुर्यव्यञ्जकत्वेनासमासस्य विधानात् । समता त्वारब्धवैदर्भ्यादिमार्गा-परित्यागः । सा च क्वचिद्दोष एव, यथा—'मातङ्गाः किमु बृंहितैः' इत्यादौ प्रारब्धस्य मसृणवर्णत्वस्य सिंहाभिधानेऽप्यत्यागो दोषाय । तत्परित्यागस्तु प्रत्युत गुण इत्युक्तम् । न च दोषस्वभावस्य गुणत्वम् , स्वभावभङ्गप्रसङ्गात् । सुकुमारत्वं त्वनिष्ठुराक्षरप्रायत्वम् , तच्च कष्टत्वरूपदोषाभावपर्यवसन्नम् । कान्तिस्तूज्ज्वलता । उज्ज्वलत्वन्तु ग्राम्यपदाघटितत्वमिति सापि ग्राम्यरूपदोषाभावपर्यवसन्नैव । एवं दश शब्दगुणा न पृथग्वक्तव्याः ।

साहित्यचूडामणिः

खलजिह्वावलीढस्य काव्यस्य श्रवणार्हता ।
श्वदंष्ट्रया विमृष्टस्य कुणपस्येव कल्पते ॥ इति ।

यस्या वृत्तत एव कल्पितमभूदारोपितास्ते गुणाः
सङ्कोचं व्यपनीय पल्लवतया लक्ष्म्या परिष्कार्यसे ।
धिक् ते तां च तदस्य लङ्घनधियं मूर्धानमुद्दिश्य या
वृत्त्या यच्च दिवापि दर्शयसि नच्छायेति गाढं तमः ॥

इत्यत्र माधुर्यम् । साक्षादुपात्तं कण्ठेनोक्तम् । नन्वाह्लादकत्वं माधुर्यमिति यौष्माकीणं लक्षणं, वामनीयं तु पृथक्पदत्वमिति । तत् कथमनेन तस्य साक्षादुपादानमित्याशङ्क्याह—भङ्ग्य ति । प्रकारभेदेन पृथक्पदत्वनिबन्धनोऽपि कश्चिदाह्लादोऽस्तीति मतान्तरे माधुर्यमस्य माधुर्यानुप्रवेशीति यावत् ।

क्रीडालोला कनकवलभौ साकमालीभिरेषा
यातायातैरधिकमधिकं पश्यतः पश्यतो मे ।
स्निग्धां दृष्ट्योः स्तनमुकुलयोरुन्नतामानतभ्रू-
रन्यामन्यामवयवदशामश्नुते पक्ष्मलाक्षी ॥

इत्यत्रार्थव्यक्तिरास्माकीनेन प्रसादेन सङ्गृहीता । तेन तस्या अन्तःपातः । क्वचिद् दोष इति ।

एको यञ्जलमानुषेषु भगवान् नारायणो गण्यते
शुक्तिः काचन यस्य खण्डपरशोः श्लाघ्यं शिखामण्डनम् ।
यस्मिन् बुद्बुदशय्यया परिचितौ चन्द्रार्कयोर्मण्डलौ
कस्तं रेचयितुं क्षमश्चुलुकयन्नार्यादगस्त्यादृते ॥

इत्यत्र यो मार्गाभेदो गुणतयाभिमन्यते स क्वचिदन्यत्र दोषो भवति । तदेवोपपादयति—मातङ्गा इति । मार्गभेदस्यैवात्र रसावहत्वात् । मसृणस्यानुद्धतस्य मार्गस्य यस्त्यागः स प्रत्युत गुणः । महासत्त्वस्य सिंहस्य वाच्यत्वादिति व्याख्यातचरम् । कष्टत्वेति ।

शत्रून् निपात्य चपलः शलभानुपैति
निर्वापणेन पवनेन पटुर्बभूव ।
किं कथ्यते मसृणशीतलधन्यधाम्नो
माणिक्यदीपमुकुलस्य महान् प्रभावः ॥

इत्यत्र यत् सौकुमार्यं तत् कष्टत्वस्य श्रुतिकटुताया दोषस्य निराकरणाद् दूरीचक्रे ।

त्वयि सकृदपि श्लाघारम्भश्लथन्मणिकुण्डले
झटिति लभते व्याचक्षाणः कृती कृपणो गृहान् ।
करिकलकलत्रस्यत्क्रीडाकुरङ्गकुटुम्बिनी
तरलनयनच्छायासंसारचन्द्रकिताङ्गणान् ॥

इत्यत्र या कान्तिः सा ग्राम्यताया अवैदग्धरूपा—याः प्रतिक्षेपादुपलब्धा ।
निगमयति—एवमिति ।

पदार्थे वाक्यरचनं वाक्यार्थे च पदाभिधा ।
प्रौढिर्व्याससमासौ च साभिप्रायत्वमस्य च ॥

इति या प्रौढिः ओज इत्युक्तं तद् वैचित्र्यमात्रं न गुणः । तदभावेऽपि काव्यव्यवहारप्रवृत्तेः । अपुष्टार्थत्वाधिकपदत्वानवीकृतत्वामङ्गलरूपाश्लीलग्राम्याणां निराकरणेनच साभिप्रायत्वरूपमोजः[१], अर्थवैमल्यात्मा प्रसादः[२], उक्तिवैचित्र्यरूपं माधुर्यम्[३] अपारुष्यरूपं सौकुमार्यम्[४] अग्राम्यत्वरूपा उदारता[५] च स्वीकृतानि । अभिधास्यमानस्वभावोक्त्यलङ्कारेण रसध्वनिगुणीभूतव्यङ्ग्याभ्यां च वस्तुस्वभावस्फुटत्वरूपा

## साहित्यचूडामणिः

अथार्थगुणानन्तर्भावयति—पदार्थ इति ।

पदार्थे वाक्यवचनं वाक्यार्थे च पदाभिधा ।
प्रौढिर्व्याससमासौ च साभिप्रायत्वमस्य च ॥

इत्युक्तत्वात् । तत्र पदार्थे वाक्यवचनं यथा ममैव—

लोचनेनैव जानन्ति लोके ये केचन ध्वनिम् ।
भुजङ्गा एव ते किन्तु वमन्त्यमृतमाननैः ॥

इत्यत्र चक्षुःश्रवोलक्षणे पदार्थे पूर्वार्धाकारं वाक्यं रचितम् । वाक्यार्थे पदाभिधा यथा—

किं ते गण्डे कितव ! कुटिलाताम्रमालग्नमेतत्
किं तन्मुग्धे ! परिमृशतु ते पाणिरज्ञातमाः किम् ।
प्रष्टव्योऽयं प्रणयकलहेष्वस्त्रमर्धः सुधांशो
रित्यालापो रहसि शिवयोः पेशलस्त्रायतां वः ॥

## सुधासागरः

अर्थगुणा अप्येवम् । तथा हि अर्थस्यौजः प्रौढिः । सा च पदार्थे वाक्यरचनेत्यादि श्लोकप्रतिपादितपञ्चप्रभेदा। तेष्वाद्यभेदचतुष्टमुक्तिवैचित्र्यमात्रं न गुणः, तैर्विनाऽपि काव्यव्यवहारात्, माधुर्यादिनिरपेक्षेण च तेन तद्व्यवहाराप्रवर्त्तनात् । अन्यस्तद्भेदोऽपुष्टार्थत्वरूपदोषाभावपर्यवसन्नः । एवं प्रसादोऽर्थनैर्मल्यं प्रयोजकमात्रार्थपरिग्रह इति यावत् । सोऽप्यधिकपदरूपदोषपरित्यागादेवान्यथासिद्धसन्निधिः । माधुर्यन्तूक्तिवैचित्र्यं नवीकृतत्वरूपम्, तच्चानवीकृतत्वरूपदोषाभावरूपम्, सौकुमार्यं पुनरपारुष्यम् । परुषेऽप्यर्थेऽपरुषशब्दाभिधानमिति यावत् । उदारता त्वर्थस्याग्राम्यत्वम्, तच्चामाङ्गल्यरूपाश्लीलत्वपरित्यागेनैव सिध्यति । अर्थव्यक्तिस्तु स्वभावस्य स्फुटता' सा च तच्च ग्राम्यत्वरूपदोषाभाव एवेति ।

१-५ वामनसूत्राणीमानि ।

अर्थव्यक्तिः[१] दीप्तरसत्वरूपा कान्तिश्च[२] स्वीकृता। क्रमकौटिल्यानुल्वणत्वोपपत्तियोगरूपघटनात्मा श्लेषोऽपि[३] विचित्रत्वमात्रम्। अवैषम्यस्वरूपा समता[४] दोषाभावमात्रं न पुनर्गुणः। कः खल्वनुन्मत्तोऽन्यस्य प्रस्तावेऽन्यदभिदध्यात्। अर्थस्यायोनेरन्यच्छायायोनेर्वा यदि न भवति दर्शनं तत् कथं काव्यम्, इत्यर्थदृष्टिरूपः समाधिरपि[५] न गुणः।

**तेन नार्थगुणा वाच्याः**

वाच्याः वक्तव्याः।

## साहित्यचूडामणिः

इत्यत्र कपोलस्थले मम लग्नचन्द्रलेखामुद्राङ्कस्त्वां नखक्षतशङ्कया क्षोभयतीति वाक्यार्थेऽज्ञातमिति पदमभिहितम्। इत्थं धारणस्योपरि न तत्परिज्ञानमपीत्यहो ते धाष्टर्यातिशय इति वाक्यार्थे आः किमिति पदमभिहितम्। व्यासो यथा—

बीजस्यार्पणमालवालघटना कुल्याम्भसो योजनं
रक्षा कण्टकशाखयेति सकलस्तुल्यः क्रियासंग्रहः।
दुर्लङ्घ्यो विषमः स्वभावमहिमा पत्रप्रकाण्डोदयो
माधुर्ये विपरीत इक्षुरभवन्निम्बश्च निम्बः स्वयम्॥ इति।

## सुधासागरः

स्वभावोक्त्यन्तर्भूता, कान्तिर्दीप्तरसत्वम्। सा च रसध्वनौ रसवदलङ्कारे गुणीभूतव्यङ्ग्ये वाऽन्तर्भूता। श्लेषस्तु क्रमकौटिल्यानुल्वणत्वोपपत्तियोगरूपघटना। अस्यार्थः—क्रमकौटिल्यमतिक्रमः, तस्यानुल्वणत्वमस्फुटता, तत्रोपपत्तिर्युक्तिस्तस्याः योगः सम्बन्धस्तद्रूपा या घटना रचना तदात्मा इति। यथा दृष्ट्वैकासनेत्यादि। अत्र पिहितनयनामतिक्रम्यान्यस्या चुम्बनादतिक्रमः, तस्यास्फुटत्वमनया तदज्ञानात्, तत्रोपपत्तिरेवं अनया तु न ज्ञातव्यमिति। केचित्तु क्रमकौटिल्यं क्रमस्यातिक्रमः स चात्र व्यक्त एव, एकदैवोभयानुरञ्जनात्, स एव श्लेषः उक्तिवैचित्र्यमात्रं न गुणः, अनन्यसाधारणरसोपकारित्वातिशयविरहात्। समता तु वैषम्याभावोऽर्थस्य, स च क्रमाभेदरूप इति प्रक्रमभेदरूपदोषाभाव एव। दोषत्वन्तु तद्व्यतिरेकस्य कथमिति चेत्, यतो न खल्वनुन्मत्तोऽन्यप्रस्तावेऽन्यदभिधत्ते इति। समाधिः पुनरर्थदर्शनम्। न चासौ गुणः, काव्यशरीरत्वात्। स्वयं दृष्टस्यान्यच्छायासिद्धस्यार्थस्य यदि न दर्शनं कथं तर्हि काव्यशरीरनिष्पत्तिः। असाधारणशोभाधायकं हि गुणं ब्रुवन्ति, न च काव्यशरीरनिर्वर्त्तकमिति। उक्तयुक्तीर्बुद्धिस्थीकृत्याह—तेन नार्थेति।

परैरङ्गीकृता अर्थगुणास्ते चोक्तयुक्त्या न पृथक् वक्तुमर्हाः।

---

[१-५] वामनसूत्राणीमानि।

अस्यैव समासो यथा—

एकस्मादेव सरसो वृक्षाणामम्बुसारणी ।
स रसो विषमः कस्मादुभयोरिक्षुनिम्बयोः ॥ इति ।

एवंविधा प्रौढिर्या तल्लक्षणमोजो नो न गुणः यावद् वैचित्र्यमात्रम् । तदेवोपपादयति—तदभावेऽपीति । यदभावे काव्यव्यहारस्यैव विसंवादः स गुण इति रहस्यम् । अथ दोषपञ्चकनिरासेन प्रौढिशेषस्य पुनर्गुणचतुष्कस्य च लाभ इत्याह—अपुष्टेति ।

[1]गहिरमहुरत्थगम्भो असिठिलघडणोपसण्णसोमालो ।
वक्को च्चिअ जइ रुच्चइ कव्वालावो व्व कामिणिकडक्खो ॥

इत्यत्र विशेषणानां यत् साभिप्रायत्वं तदपुष्टार्थत्वपरिहारादाक्षिप्यते । इत्यत्र

ताम्रातटान्तपुलिने तव कुञ्जरेन्द्रा
नाधोरणाः श्रवण तालशिखाधिरूढाः ।
मुक्ताशिलाशकलकण्टकवेधखिन्ना
नुल्लाघयन्ति कनकाङ्कुशकोटिसूच्या ॥

अर्थवैमल्यात्मा यः प्रसादस्तस्याधिकपदत्वापाकरणाद्दूरीकारः ।

आस्तां सत्त्वमनुक्रिया बत महामेरोः किमिक्षोर्लता
दूरे दोःपटिमा कथन्न फणिनां पत्युः पदे षट्पदा ।
शौर्य तिष्ठतु शौरये स्थिरमरुत्पुङ्गाय पुष्पं कियद्
धन्वी हन्त हरोऽपि काव्यसुभटः कामोऽपि धन्वी कथम् ॥

इत्यत्र यदुक्तिवैचित्र्यरूपं माधुर्यं तदनवीकारव्युदासादासीदिति । तत्र वाच्यमनति वर्तमाने "पुत्रेण पित्रा पुन रध्यरोहि सुत्रामधानी"-त्यत्र यत् सौकुमार्यं तत् त्रिविधेऽश्लीले तृतीयभेदनिरासद्वारा सिध्यति ।

धम्मिलकुण्डलितकेवलकेसराणां
कर्पूरगर्भकलसीत्करणाक्षराणाम् ।
भ्रूभङ्गजिह्मदरकूणितलोचनानां
वक्त्रे शुचौ निवसति स्वयमिक्षुधन्वा ॥

इत्यत्र यदग्राम्यत्वाकारमौदार्यं तद् ग्राम्यत्वपरिवर्जनादार्जितमिति । अभिधास्यमानेति ।

---

[1] गभीरमधुरार्थगर्भोऽशिथिलघटनोपसन्नसोमालो ।
वक्र एव यदि रोचते काव्यालाप इव कामिनीकटाक्षः ॥

## साहित्यचूडामणिः

मन्दाकिन्याः पयसि भगवान् कल्पनित्याभिषेको
विभ्रद् दोष्णा तटभुवि जटाः शीकरानुद्वमन्तीः ।
रेखामिन्दोर्भुजगवलयं भस्मशार्दूल कृत्तिं
मालामस्थ्नामपि परिजनादाददानः पुनातु ॥"

इत्यत्र यार्थव्यक्तिः तस्याः स्वभावोक्त्या विषयापहारः । वामनमर्यादया त्वर्थव्यक्त्या स्वभावोक्त्यलापः । भोजस्य पुनरुभयोपसङ्ग्रहः । यथोक्तं विषयविभागाय—

अर्थव्यक्तिरियं भेदमियता प्रतिपद्यते ।
जायमानमियं वार्ता रूपं सा सर्वकालिकम् ॥ इति ।

मीनैरन्तःशबलितभुवः स्पष्टदृष्टैः प्रसक्त्या
हंसद्वन्द्वैः सविधपुलिनादादरेणावगाढाः ।
मन्दोल्लासे मरुति ललितानुद्वहन्तस्तरङ्गा-
नालिप्यन्ते कथमिव मया नर्मदायाः प्रवाहाः ॥

इत्यत्र

क्रीडातल्पे दुकूले कुसुमपरिकरे चामराणां च पार्श्वे
वैलक्ष्याकारशाली विवलितनयनः स्मेरवक्त्रो विचिन्वन् ।
चूडालङ्कारमिन्दुं रहसि विगलितं निह्नुतं हैमवत्या
नर्मान्ते दत्तमीशः पुनरपि शिरसि स्थापयन् वः पुनातु ॥

इत्यत्र च या [1]दीप्तरसत्वाकारा कान्तिः सा रसध्वनिना पूर्वत्र उत्तरत्र गुणीभूतव्यङ्ग्येन च सङ्गृह्यते ।

महति जनिता वंशे पाणौ कृतासि सकौतुकं
कथमिव मुखं रागी पास्यामि ते कलभाषिणि ! ।
इति विजयते राधातल्पे हरेः स्मरतः प्रियां
जनकतनयां स्वप्नालापः स्ववेणुलतान्वयी ॥

इत्यत्र [2]क्रमस्य कर्तव्यतया [3]निर्णीतस्य [4]वस्तुनो यत् कौटिल्यमुपाध्यन्तरात् प्रकारभेदः तस्य यदनुल्बणत्वमनुद्रेकः तत्र या प्रतीतिपारुष्यव्यपोहेन प्रति-[5]पत्तिरौचित्यं तस्य योग उपायः तद्घटनात्मा श्लेषोऽपि पूर्ववद् विचित्रत्वमात्रं, न पुनर्गुणः ।

---

१ 'नीरतस्वाका', २ 'मवक्तव्य',
३ 'श्च,' ४ ''वृत्ति'' ५ 'ष्टिः त्व'

## साहित्यचूडामणिः

यत्सत्यं वद बुद्बुदेन किमपां वज्रोपलः स्पर्धते
पिञ्छस्य प्रतिगर्जितुं सुरधनुर्लेखा न किं लज्जते।
खद्योतेन नखम्पचस्य खदिराङ्गारस्य को मत्सरो
धिक् सादृश्यकथामिमां कवयतः पापीयसः प्रेयसीम् ॥

इत्यत्र यद् वैषम्यलक्षणं साम्यं तस्य दोषगुणद्वितयव्यतिरेकेण ताटस्थ्यलक्षणा कोटिरन्या विषयः न गुणाकारा। अत्रोपपत्तिः—कः खल्विति। अर्थदृष्टिस्वभावः समाधिरपि न गुणः। "अर्थदृष्टिः समाधिः (३, २, ७) इति सूत्रम्।

अर्थश्च द्विविध उक्तः, अयोनिरन्यच्छायायोनिश्च तत्राद्यो यथा—
"आमेखलं सञ्चरतां घनानां छायामधः सानुगतां निषेव्य"

इत्यादि हिमवद्वर्णने। द्वितीयो यथा—

यत्र प्रियाणामभिसारकाले ह्यहःप्रकाशं प्रति साभ्यसूयाः।
उत्सृष्टप्रदीपानुपकण्ठसानून् सिद्धाङ्गनाः सस्पृहमाश्रयन्ते ॥

इति मेरुवर्णने। यद्वा "निश्शेषच्युतचन्दने"त्याद्यः।

सत्यं निरूपमौनगर्भवदनव्याख्यातभावाक्षरं
भग्नभ्रूलतमेकलक्ष्यहृदयं चञ्चाकटाक्षाञ्चलम्।
आरादम्बुजकोशदेश्यमलिके सन्दर्शयन्नञ्जलिं
सन्ध्यां वन्दितुमुन्मुखोऽसि न पुनर्वातायनस्थां प्रियाम् ॥

इति द्वितीयः। अनुपपन्नं चैतद् विभागकरणम्। तत्र यदाह [ध्व० ४]

संवादास्तु भवन्त्येव बाहुल्येन सुमेधसाम्।
नैकरूपतया सर्वे ते मन्तव्या विपश्चिता ॥
संवादो ह्यन्यसादृश्यं तत् पुनः प्रतिबिम्बवत्।
आलेख्याकारवत् तुल्यदेशवच्च शरीरिणाम् ॥
तत्र पूर्वमनन्यात्म तुच्छात्म तदनन्तरम्।
तृतीयं तु प्रसिद्धात्म नान्यसाम्यं त्यजेत् कविः ॥ इति।

तस्मादयोनिरन्यच्छायायोनिश्चेत्ययमयुक्तप्रायोऽर्थविभागः ॥ ७ ॥

निगमयति—तेनेति।

राजा भोजो गुणानाह विंशतिं चतुरश्च यान्।
वामनो दश तत्सारानाह त्रीनेव भामहः ॥

त्रैगुण्यमेतदवलम्ब्य गुणान्तराणामुत्पत्तिरूपमुपकल्पितवैश्वरूपम्।
आत्मा रसध्वनिरयं कलयन्नभिख्यां लोकोत्तरः स्फुरति काव्यमये शरीरे ॥
इत्यन्तर श्लोकौ ॥

प्रोक्ताः शब्दगुणाश्च ये ।
वर्णाः समासो रचना तेषां व्यञ्जकतामिताः ॥ ८ ॥

के कस्य इत्याह—

मूर्ध्नि वर्गान्त्यगाः स्पर्शा अटवर्गा रणौ लघू ।
अवृत्तिर्मध्यवृत्तिर्वा माधुर्ये घटना तथा ॥ ९ ॥

ट–ठ–ड–ढ वर्जिताः कादयो मान्ताः शिरसि निजवर्गान्त्ययुक्ताः, तथा रेफलकारौ ह्रस्वान्तरिताविति वर्णाः, समासाभावो मध्यमः समासो वेति समासः, तथा माधुर्यवती पदान्तरयोगेन रचना माधुर्यस्य व्यञ्जिका । उदाहरणम् —

अनङ्गरङ्गप्रतिमं तदङ्गं भङ्गीभिरङ्गीकृतमानताङ्ग्याः ।
कुर्वन्ति यूनां सहसा यथैताः स्वान्तानि शान्तापरचिन्तनानि ॥

---

## साहित्यचूडामणिः

अथमाधुर्यादिव्यञ्जकं वर्णादिविभागमाह—वर्ण इति ॥ ८ ॥ क इति । कस्य गुणस्य के वर्णादयो व्यञ्जकत्वं प्राप्ता इत्यपेक्षायामाहेति यावत् ।

मूर्ध्नि स्वशिरसि। वर्गाणां कुचुटुतुपूनां येऽन्त्याः ङञणनमाः तान् गच्छन्तीति । अटवर्गाः टवर्गरहिताः । रणौ वर्णौ लघू । वृत्तिः समासः । तस्या अभावो वा । अवृत्तिमति वृत्तिं च विहाय मध्यमवर्तिनी वृत्तिर्वा । तथेति । माधुर्यानुगुणा । तदुपायश्च तादृक्पदान्तरयोगः ।

टवर्गनिषेधे फलितमाह—टठेति । रणाविति णकारस्याङ्गीकारात् ।

कादयो मान्ताः स्पर्शपदस्याभिधेयाः अनङ्गेति । अत्र गकारतकारौ स्पर्शविशेषौ स्वस्वशिरासि ङकारनकारौ धारयतः । "अपसारये"-त्यादौ रेफश्च ह्रस्वान्तरितः ॥९॥

## सुधासागरः

ये तु त्रय उपचारेणान्यैः शब्दगुणाः प्रोक्ताः, वस्तुतो रसगुणा एव, वर्णादयस्तेषां व्यञ्जकत्वं गताः ।

के कस्य व्यञ्जका इत्याकाङ्क्षायामाह—मूर्ध्नीति ।

उदाहरणम्—'टठडढे'-ति ।

टठडढेत्यादि । अयमाशयः—माधुर्ये व्यङ्ग्ये टवर्गवर्जिताः कादिमान्ताः रेफणकारौ चेति वर्णाः । तत्र कादयो मूर्ध्नि स्वस्ववर्गान्त्यवर्णगताः । यथा कुञ्ज इत्यादि । रेफणकारौ तु ह्रस्वस्वरान्तरितौ । वृत्तिः समासस्तस्य चाभाव एव मध्यमता वेति समासः । घटना तथेति । सौकुमार्यवती पदान्तरयोगेन रचना चेति ।

**योग आद्यतृतीयाभ्यामन्त्ययो रेण तुल्ययोः ।**
**टादिः शषौ वृत्तिदैर्घ्यं गुम्फ उद्धत ओजसि ॥ १० ॥**

वर्गप्रथमतृतीयाभ्यामन्त्ययोः द्वितीयचतुर्थयोः, रेफेण अध उपरि उभयत्र वा यस्य कस्यचित्, तुल्ययोस्तेन तस्यैव सम्बन्धः, टवर्गोऽर्थात् णकारवर्जः, शकारषकारौ, दीर्घसमासः विकटा सङ्घटना ओजसः । उदाहरणम्—

मूर्द्ध्नामुद्वृत्तकृत्तेत्यादि ॥ १० ॥

---

## साहित्यचूडामणिः

अथौजोव्यञ्जकमाह—योग इति । वर्गेषु य आद्यः प्रथमो वर्णः ककारादिः यश्च तृतीयो गकारादिः ताभ्यां सहान्त्ययोः खघयोर्योगो नैरन्तर्यम् । अन्त्यत्वं च स्वस्वापेक्षया । ततश्च प्रथमस्यान्त्यः खकारादिः, तृतीयस्य घकारादिः । किञ्च रेफेण योगः स्थाननिर्देशाभावाद् वर्णस्याध उपर्युभयत्र वा । अर्केत्यधः वक्रेत्युपरि वर्ध्रेत्युभयत्र । यस्य कस्यचिदक्षरस्य रेफेण योगः न पुनर्नियतस्य ।

किञ्च तुल्ययोर्योगः । नेह स्थानप्रयत्नसादृश्यं तुल्यत्वं किं तर्हि, अक्षरस्य कस्यचिदक्षरेण केनचिद् योग इत्याशयवानाह—तेन तस्यैवेति टवर्ग इति । यो माधुर्ये निषिद्धः । णकारवर्ज इति माधुर्ये लघोर्णकारस्योपयोगात् । शषौ तालव्य-मूर्धन्यावूष्माणौ। मूर्द्ध्नामित्यत्र तवर्गतृतीयेन दकारेण तच्चतुर्थस्य धकारस्य योगः । मित्थ्येत्यत्र तवर्गप्रथमेन तकारेण द्वितीयस्य योगः ।

मूर्ध्नामिति रेफेणादौ योगः । अङ्घ्रीत्युपरि । उद्वृत्तेति तकारस्य तकारेणैव योगः । ईशपिशुनशब्दयोः शकारः । दोष्णामिति षकारः । पटुरटत्क्रूरधारः कुठार इति टवर्गः । समासदैर्ध्यं सङ्घटनौद्धत्यं च स्पष्टम् ॥ १० ॥

## सुधासागरः

वर्णसौकुमार्यवती रचना वर्णसौकुमार्यादेव लब्धेति पदान्तरयोगे सौकुमार्यलाभाय 'घटना तथा' इत्युक्तमिति । उदाहरणम्—'अनङ्गे'ति ।

उपजातिश्छन्दः । आनताङ्ग्याः, अनङ्गः कन्दर्पस्तस्य रङ्गो नृत्यस्थानं तत्प्रतिमं तत्तुल्यं तदनुभवैकगोचरमङ्गं भङ्गीभिस्तथाऽङ्गीकृतं स्वयमादरेण गृहीतम्, यथाऽङ्गी-कारप्रकारेणैताः भङ्ग्यः यूनां मनांसि शान्तानि अपरचिन्तितानि येषु तादृशानि विस्मृतसर्वकार्याणि कुर्वन्तीत्यर्थः ।

वर्गप्रथमेत्यादि । अयमाशयः—ओजसि व्यङ्ग्ये वर्गप्रथमतृतीयाभ्यां सह तदन्त्ययोर्द्वितीयचतुर्थयोर्योगः । यथा—पुच्छबद्धेत्यादि । तथा रेफेणाध उप-र्युभयत्र वा यस्य कस्यापि योगः । यथा वक्त्रार्कनिर्ह्रादादयः । तथा तुल्ययोः कयोश्चिद्योगो यथा चित्तवित्तादौ । तथा टादिचतुष्टयम्, शषौ चेति वर्णाः । समासस्तु

**श्रुतिमात्रेण शब्दात्तु येनार्थप्रत्ययो भवेत् ।**
**साधारणः समग्राणां स प्रसादो गुणो मतः ॥ ११ ॥**

**समग्राणां रसानां सङ्घटनानां च । उदाहरणम्—**

**परिम्लानं पीनस्तनजघनसङ्गादुभयत-**
**स्तनोर्मध्यस्यान्तः परिमिलनमप्राप्य हरितम् ।**
**इदं व्यस्तन्यासं श्लथभुजलताक्षेपवलनैः**
**कृशाङ्ग्याः सन्तापं वदति बिसिनीपत्रशयनम् ॥ ११ ॥**

---

## साहित्यचूडामणिः

अथ प्रसादव्यञ्जकमाह—श्रुतीति । नहि प्रसादे वर्णनैयत्यं केवलम् । यत्र शब्दश्रवणसमनन्तरमर्थप्रतीतिः स प्रसादः ।

परिम्लानमिति । अत्र शब्दानामहमहमिकयार्थप्रत्यायनौन्मुख्यात् प्रसादः । प्रसङ्गात् कृशाङ्ग्या इत्यादौ माधुर्योचिता वर्णाः, तनोर्मध्यस्येत्यादावोजोऽनूकूलाः, मध्यमः समासः, संघटना चानुद्धता यदाह—[ ध्वनिकृत् ]

'शषौ सरेफसंयोगौ टकारश्चापि भूयसा ।
विरोधिनः स्युः श्रृङ्गारे ते न वर्णा रसश्च्युतः ॥
त एव तु निवेश्यन्ते बीभत्सादौ रसे यदा ।
तदा तं दीपयन्त्येव तेन वर्णा रसश्च्युतः ॥
असमासा समासेन मध्यमेन च भूषिता ।
तथा दीर्घसमासेति त्रिधा संघटनोदिता ॥
गुणानाश्रित्य तिष्ठन्ती माधुर्यादीन् व्यनक्ति सा ।' इति ॥ ११ ॥

## सुधासागरः

दीर्घः, गुम्फो रचना सा चोद्धता विकटेति । उदाहरणं मूर्ध्नामुद्वृत्तकृत्तेत्यादि । व्याख्यातमिदम् ।

समग्राणामिति । येन शब्देन समासेन वा यया रचनया वा श्रुतिमात्रेण शब्दादर्थप्रत्ययः, स प्रसादव्यञ्जक इत्यर्थः । उदाहरणम्—परिम्लानेति ।

शिखरिणी छन्दः । इदं बिसिनीपत्रशयनं कृशाङ्ग्याः सन्तापं वदति स्पष्टमभिव्यनक्ति । शयनं विशिनष्टि पीनयोर्मांसलयोः स्तनजघनयोः सङ्गादुभयतः परिम्लानम्, तनोर्मध्यस्य परिमिलनमप्राप्य कटेः कृशतरतया स्पर्शमलब्ध्वा अन्तर्मध्यभागे हरितम्, व्याकुलतयाऽधोमुखशयनादिति भावः । श्लथैः शिथिलैर्भुजलतयोः क्षेपवलनैः, क्षेप इच्छापूर्विका क्रिया, वलनं स्वतादृश्यपि क्रियेति भेदः । व्यस्तो विपरीतो न्यासो रचना यत्र तथाभूतमित्यर्थः । अन्येषान्तु वर्णानामुदासीनत्वमिति तदुपादाने तु पुराणच्छायेत्युच्यते ।

यद्यपि गुणपरतन्त्राः सङ्घटनादयस्तथापि—

वक्तृवाच्यप्रबन्धानामौचित्येन क्वचित्क्वचित् ।
रचनावृत्तिवर्णानामन्यथात्वमपीष्यते ॥ १२ ॥

क्वचिद् वाच्यप्रबन्धानपेक्षया वक्त्रौचित्यादेव रचनादयः । यथा—

मन्थायस्तार्णवाम्भः–प्लुतकुहरचलन्मन्दरध्वानधीरः
कोणाघातेषु गर्जत्प्रलयघनघटान्योन्यसङ्घट्टचण्डः ।
कृष्णाक्रोधाग्रदूतः कुरुकुलनिधनोत्पातनिर्घातवातः
केनास्मत्सिंहनादप्रतिरसितसखो दुन्दुभिस्ताडितोऽसौ ॥

—अत्र हि न वाच्यं क्रोधादिव्यञ्जकम् अभिनेयार्थं च काव्यमिति तत्प्रतिकूला उद्धता रचनादयः । वक्ता चात्र भीमसेनः ।

## साहित्यचूडामणिः

अथोक्तप्रकारव्यत्यासोऽपि क्वचिदुपाधिवशेन शोभत इत्याह—यद्यपीति ।

अन्यथात्वमपीति । किमुत तथात्वम् । अन्योन्यव्यतिरेकायं उदाहरणप्रपञ्चः स्पष्टः । रचनौद्धत्ये उपाधिमाह—अत्रहीति । ननु वाच्यस्य क्रोधव्यञ्जकत्वेऽपि प्रबन्धौचित्यादस्तु रचनौद्धत्यमित्यत्राह—अभिनेयार्थमिति । न पुनराख्यायिकादि-श्रव्यम् ।

## सुधासागरः

नन्वेवं माधुर्यादावुद्धतादयो रचनाद्याः सर्वत्र विरुद्धा स्युरिति वाच्यम्, यतो, 'यद्यपी'ति ।

अन्यथात्वं गुणपारतन्त्र्याभावः । वक्तृवाच्यप्रबन्धौचित्यविरह एव गुणपार-तन्त्र्यस्वीकारात् तत्रापि वक्तृक्रोधाद्यव्यक्तावुपयोगात् ।

'मन्थायस्ते'-ति । स्रग्धरा छन्दः । केनायं दुन्दुभिस्ताडितः । दुन्दुभिं विशि-नष्टि । मन्थो मन्थनं तेनायस्तं दूरमुत्क्षिप्तं यदर्णवाम्भस्तस्य प्लुतिः समन्तात्पतनं यत्रैतादृशं यत्कुहरं तत्र चलन् यो मन्दरगिरिस्तद्ध्वानवद्धीरो गम्भीरः । कोणाघातेषु सत्सु । "भेरीशतसहस्राणि ढक्काशतशतानि च । एकदा यत्र हन्यन्ते कोणाघातः स उच्यते ।" गर्जन्त्यः प्रलयकालघनानां घटास्तासामन्योन्यं सङ्घट्टवच्चण्डो दुःसहः । कृष्णाक्रोधस्य द्रौपदीरोषस्याग्रदूतः—भविष्यदर्थस्य प्रथमावेदकः । कुरुकुलनिधनार्थं दुर्योधनादिनाशार्थमुत्पातरूपो निर्घातयुक्तो वातः । अस्मत्सिंहनादस्य प्रतिरसितसखः प्रतिध्वानमित्रमित्यर्थः ।

अत्रेत्यादि । अयमाशयः अत्र वाच्यं न क्रोधादिदीप्तरसव्यञ्जकं प्रश्नरूपत्वात् । प्रबन्धश्च नाटकात्माऽभिनेय इति दीर्घसमासत्वं प्रतिकूलं यद्यपि, तथापि वक्ता भीमसेन इति तदौचित्यादुद्धता रचनाऽत्र । अतस्तदुद्धतत्वादिव्यक्तावेवोपयुज्यते ।

क्वचिद् वक्तृप्रबन्धानपेक्षया वाच्यौचित्यादेव रचनादयः। यथा—

प्रौढच्छेदानुरूपोच्छलनरयभवत्सैंहिकेयोपघात-
त्रासाकृष्टाश्वतिर्यग्वलितरविरथेनारुणेनेक्ष्यमाणम्।
कुर्वत् काकुत्स्थवीर्यस्तुतिमिव मरुतां कन्धरारन्ध्रभाजां
भाङ्कारैर्भीममेतन्निपतति वियतः कुम्भकर्णोत्तमाङ्गम्॥

क्वचिद् वक्तृवाच्यानपेक्षाः प्रबन्धोचिता एव ते। तथा हि—आख्यायिकायां शृङ्गारेऽपि न मसृणवर्णादयः, कथायां रौद्रेऽपि नात्यन्तमुद्धताः, नाटकादौ रौद्रेऽपि न दीर्घसमासादयः।

## साहित्यचूडामणिः

नाटकादौ रौद्रेऽपि न समासदैर्घ्यम्। यथा यो यः शस्त्रं बिभर्तीत्यादौ। नन्वेतत् प्रतिकूलवर्णविवेके दूषितम्। अत्रतु भूष्यत एवेति महती व्याहतिरिति चेत्। सत्यम्।

गुणानाश्रित्य तिष्ठन्ती माधुर्यादीन् व्यनक्ति सा।
रसाँस्तन्नियमे हेतुरौचित्यं वक्तृवाच्ययोः॥

इत्यत्र गुणः संघटना चैकं तत्त्वमिति पक्षे रसादयो वाच्यादयो वा नियम-निबन्धनानि। गुणवक्त्रन्(य)तरपरतन्त्रसंघटनापक्षे तु रसादय एव नियमहेतवः। यतो नीरसे कवौ तन्निबद्धे वा वक्तरि संघटनायाः कामचारः। रसभावसम्पन्नयोस्तु तयोरसमासा मध्यमसमासा वा संघटना। अथ संघटनापरतन्त्रगुणपक्षे संघटना नियामिका वक्तृवाच्यप्रबन्धा एव गुणनियमनिमित्तानि। इत्थं च पक्षत्रयेऽपि नोपप्लवः कश्चित्। अतश्च गुणपरतन्त्रसंघटनापक्षेण दोषोद्भावनं विपर्ययेण गुणत्वाङ्गीकार इति। यद्वा नात्रौजो गुणः मसृणवर्णत्वादसमासत्वादनुद्धतरचनत्वाच्च नापि माधुर्यं रौद्ररसप्राधान्यात्। अस्तु तर्हि गुणः प्रसाद इति ब्रूमः। यदाहुः—"समर्पकत्वं काव्यस्य" इत्यलमतिविचक्षण्येन।

## सुधासागरः

'प्रौढाच्छेदे'-ति। स्रग्धराछन्दः। भीमं भयङ्करम् एतत्कुम्भकर्णोत्तमाङ्गं वियतो निपतति। विशिनष्टि प्रौढो निष्ठुरो यश्छेदः, यद्वा बलवता प्रयुक्तो यश्छेदस्तदनुरूपं यदुच्छलनं तत्र यो रयस्तेन भवन् सैंहिकेयोपघातत्रासः राहूपनिपातभयं तेनाकृष्टा येऽश्वास्तैस्तिर्यग्वलितो रविरथो येन तथाभूतेनारुणेनानूरुणा ईक्ष्यमाणम्। तिर्यग्वलनं वक्रतया संस्थापनम्। कन्धरारन्ध्रभाजां मरुतां झाङ्कारैः काकुत्स्थवीर्यस्य श्रीरामपराक्रमस्य स्तुतिमिव कुर्वदित्यर्थः।

अत्र वक्ता वैतालिकः प्रबन्धश्चाभिनेयात्मेति दीर्घसमासानौचित्येऽपि वाच्यस्य कुम्भकर्णस्यौद्धत्यादुद्धता रचनादयः। क्वचिदित्यादि। क्वचिद् वक्तृवाच्यानपेक्षाः प्रबन्धोचिता एव रचनादयः। तथा हि—आख्यायिकायां हि शृङ्गारेऽपि व्यङ्ग्येऽ-

**एवमन्यदप्यौचित्यमनुसर्तव्यम् ॥ १२ ॥**

**इति काव्यप्रकाशे गुणालङ्कारभेदनियतगुणनिर्णयो नाम अष्टम उल्लासः ॥ ८ ॥**

---

## साहित्यचूडामणिः

एवमन्यदपीति। कपटपात्रप्रवेशादौ प्रतीते पात्रानुगुण्येन वर्णसंघटनादि स्वयमूहनीयं, यथा रत्नावल्यादाविति सिद्धम्॥ १२॥

मौलौ धार्यं प्रसूनं यदि कृतमितरैर्मूलपत्रप्रकाण्डै-
रालेह्यं माक्षिकं चेदलमिह सरघाकोशभृत्कीटकल्कैः।
एवं काव्ये गुणांश्चेदभिलषथ वृथाशाख्रितैः किं प्रपञ्चै-
र्माधुर्यौजःप्रसादानुचितपरिचयानाद्रियध्वं विदग्धाः॥

इति साहित्यचक्रवर्तिलौहित्यभट्टगोपाल-विरचितायां साहित्यचूडामणौ काव्यप्रकाशविमर्शिन्याम् अष्टम उल्लासः॥८॥

## सुधासागरः

नुद्धतेऽपि वक्तरि नातिमसृणा वर्णादयः, प्रत्युत विकटबन्धवत्त्वेनैव छायावत्त्वम्। विप्रलम्भकरुणयोस्तु तस्यामपि दीर्घसमासपरिहारः, तयोरतिसौकुमार्यात्। कथायां तु रौद्रेऽपि नात्यन्तमुद्धटा वर्णादयः, वर्णनीयमहापुरुषमुखप्रतिपत्तिसमर्पणोद्देश्यत्वात्। नाटकादावभिनेये तु रौद्रेऽपि न दीर्घसमासादयः, विच्छेदेनाभिनयसौकुमार्यात्। एवं मुक्तकाद्यौचित्यमनुसरणीयम्। तथा हि—एकैकच्छन्दसि वाक्यसमाप्तिर्मुक्तकम्। द्वयोः सन्दानितकम्। त्रिषु विशेषकम्। चतुर्षु कलापकम्। पञ्चादिचतुर्दशान्तेषु कुलकम्। तत्र मुक्तकेषु कवेः रसवत्त्वाभिनिवेशित्वे रसाश्रयमौचित्यम्। यथा—'शून्यं वासगृहम्' इत्यादौ। रसाभिनिवेशित्वाभावे तु कामचारः। सन्दानितकादिषु काव्यपरिसमाप्तेर्वैकल्यं दीर्घसमासता च। प्रबन्धगतेषु पुनस्तेषु प्रबन्धोचिता एव रचनादय इत्यादि ज्ञेयम्। आख्यायिकालक्षणं साहित्यमीमांसायाम्—

कविसाहित्यसहितं नरपालकथान्वितम्।
विचित्रवर्णनाचारु दशोच्छ्वासमनोहरम्॥
उच्छ्वासान्ते वक्त्रयुक्तं रचितापरवक्त्रकम्।
उच्छ्वासादौ च पद्यार्थयुक्तमाख्यायिकाभिधम्॥ इति।

कथालक्षणमुक्तमग्निपुराणे—श्लोकैर्वंशन्तु सङ्क्षेपात्कविर्यत्र प्रशंसति।
मुख्यार्थस्यावताराय भवेद्यत्र कथान्तरम्।
परिच्छेदो न यत्र स्याद्भवस्याद्वा लम्भकः क्वचित्।
सा कथा नाम तद्गर्भे निबध्नीयाच्चतुष्पदीम्॥ इति।

इति श्रीमत्पदवाक्यप्रमाणपारावारीणदीक्षितभीमसेनकृते काव्यप्रकाशविवरणे सुधासागराऽऽख्ये गुणविवेचनं नामाष्टम उल्लासः॥८॥

# नवम उल्लासः

गुणविवेचने कृतेऽलङ्काराः प्राप्तावसरा इति सम्प्रति शब्दालङ्कारानाह—

यदुक्तमन्यथा वाक्यमन्यथाऽन्येन योज्यते ।
श्लेषेण काक्वा वा ज्ञेया सा वक्रोक्तिस्तथा द्विधा ॥१॥

तथेति श्लेषवक्रोक्तिः काकुवक्रोक्तिश्च ।

---

## साहित्यचूडामणिः

क्वणन्माणिक्यमञ्जीरमेखलाङ्गदकङ्कणाम् ।
कवीनां रसनारङ्गे नृत्यन्तीं भारतीं भजे ॥
अथ शब्दैकविषयानलङ्कारान् प्रचक्ष्महे ।
यावतः प्राहुराचार्याः संक्षेपेण चिरन्तनाः ॥
तत्रापि यमकादीनामस्पृष्टरससम्पदाम् ।
काव्यानां गड्डुभूतत्वाद् दिङ्मात्रमुपवर्ण्यते ॥
को नाम रसिको लोके लावण्यामृतवर्षिणि ।
कपोलफलके तन्व्याः कुर्यादेरण्डकुण्डलम् ॥
पठन्ति शब्दालङ्कारान् बहूनन्ये मनीषिणः ।
परिवृत्तिसहिष्णुत्वान्न ते शब्दैकभागिनः ॥
ते च वक्रोक्त्यनुप्रासौ यमकं श्लेष इत्यपि ।
चित्रं च पञ्चमः षष्ठश्चाभासः पुनरुक्तवत् ॥ इति ।

यदुक्तमिति। अन्येन जनेनान्यथोक्तमन्येनान्यथा योज्यते इत्यावृत्त्या योज्यम् । श्लेषो वक्ष्यते । काकुरुक्ता ।

## सुधासागरः

एवं गुणे विवेचितेऽलङ्कारा विवेचनीयाः । तत्र सामान्यलक्षणं गुणविवेचने एवोक्तम् । शब्दालङ्कारार्थालङ्कारोभयालङ्काररूपविशेषलक्षणत्रयं चार्थलभ्यमिति तेषां विशेषलक्षणेषु वक्तव्येषु शब्दस्य प्राथम्यात्काव्यलक्षणे प्रागुपादानाच्च तदलङ्कारविशेषलक्षणे वक्तव्ये 'वक्रोक्तिः काव्यजीवितम्' इति कैश्चिदभिहितत्वेन वक्रोक्तेः चारुत्वातिशयादुक्तिवक्रतायाः स्फुटं शब्दालङ्कारत्वाच्च प्रथमं वक्रोक्तिं लक्षयति—यदुक्तमित्यादि । वक्त्राऽन्याभिप्रायेणोक्तमन्येनान्यार्थकतया योज्यते सङ्गम्यते सा वक्रोक्तिरित्यर्थः । वक्तृश्रोतृनिर्वाह्योऽयमलङ्कार इति भावः । 'श्लेषेण काक्वा वा' इति हेतुमुखेन विशेषलक्षणद्वयम् । 'सा तथा द्विधा' इति विभागः । श्लेषवक्रोक्तिः काकुवक्रोक्तिश्चेति द्विविधेत्यर्थः । श्लेषश्च द्विधा । सभङ्गपदोऽभङ्गपदश्च । तदेतदुक्तं तथेतीत्यादि ।

तत्र पदभङ्गश्लेषेण यथा—

नारीणामनुकूलमाचरसि चेज्जानासि कश्चेतनो
वामानां प्रियमादधाति हितकृन्नैवाबलानां भवान् ।
युक्तं किं हितकर्तनं ननु बलाभावप्रसिद्धात्मनः
सामर्थ्यं भवतः पुरन्दरमतच्छेदं विधातुं कुतः ॥

अभङ्गश्लेषेण यथा—

अहो केनेदृशी बुद्धिर्दारुणा तव निर्मिता ।
त्रिगुणा श्रूयते बुद्धिर्न तु दारुमयी क्वचित् ॥

## साहित्यचूडामणिः

पदभङ्गेति । श्लेषो हि द्विधा भग्नपदोऽभग्नपदश्च । यत्र भट्टोद्भटमर्यादया क्रमेण शाब्दत्वमार्थत्वं च समर्थयिष्यते ।

नारीणामिति । अङ्गनानामनुकूलमाचरसि चेत् जानासि ज्ञातेति लोके परिगृह्यसे । तदेतदरीणां वैरिणामनुकूलं नाचरसि चेदित्यन्यथा कुर्वाण आह—कश्चेतन इति । एवञ्च नारीणामित्यस्य न वैरिणामिति पदभङ्गेनान्यथा योजना । वामानां प्रतिकूलानामित्येतद् महिलार्थतयान्यथा क्रियते—हितकृदिति । भवान् महिलानां न हितकारी । अथ करोत्यर्थं कर्तनार्थत्वेनाङ्गनार्थं दुर्बलार्थतया चान्यथा करोति—युक्तमिति । बलस्य शरीरसारभूतस्याभावेन प्रसिद्धात्मनामित्येतद्

## सुधासागरः

तत्र सभङ्गपदश्लेषेण यथा—नारीति ।

शार्दूलविक्रीडितं छन्दः । अत्र नारीणामिति पदं स्त्रीणामित्यभिप्रायेणोक्तम्, श्रोता तद्भङ्ग्या न शत्रूणामित्यर्थतया योजयित्वाऽऽह—कश्चेतन इत्यादि । अत्र वामानामिति शत्रूणामित्यर्थो वक्तुरभिप्रेतः । स्त्रीणामित्यर्थतया योजयित्वाऽन्य आह हितकृदित्यादि । अथान्यो बलाभावप्रसिद्धात्मपदमिन्द्रार्थतया योजयित्वा आह सामर्थ्यमित्यादि । अत्र नारीणामबलनामिति पदे सभङ्गः । यद्यपि वामादिपदे न भङ्गस्तथापि नारीणामिति पदभङ्गमुपजीव्य प्रवृत्तानां श्लेषान्तराणां स एव मूलमिति तेनैव व्यवहार इति बोध्यम् ।

अभङ्गमात्रपदेन श्लेषेण यथा—'अहो' इति ।

अत्र दारुणेति क्रूरेत्यर्थकत्वेन वक्तुरभिप्रेतः, काष्ठेनेत्यर्थेनान्यो योजितवान् ।

काकुवक्रोक्तिर्यथा—'गुरुजनेन'-ति ।

गाथा छन्दः । अत्र नैष्यतीति नायिकया निषेधाभिप्रायेणोक्तं सख्या तु नैष्यत्यपि तु एष्यत्येवेत्यर्थकतया काक्वा योज्यते । अत एव सोत्साहं पृच्छति-'सखि सुरभिसमये' इति ।

**काक्वा यथा—**

> गुरुजनपरतन्त्रतया दूरतरं देशमुद्यतो गन्तुम् ।
> अलिकुलकोकिलललिते नैष्यति सखि, सुरभिसमयेऽसौ ॥

**वर्णसाम्यमनुप्रासः**

स्वरवैसादृश्येऽपि व्यञ्जनसदृशत्वं वर्णसाम्यम् । रसाद्यनुगतः प्रकृष्टो न्यासोऽनुप्रासः ।

---

## साहित्यचूडामणिः

बलस्यासुरविशेषस्य पराजयेन प्रख्यातः स्वभावो यस्येति पुरन्दरार्थतया विपर्यस्यन्नाह—सामर्थ्यमिति ।

अथाभङ्गश्लेषेणोदाहरति—अहो इति । दारुणा भीषणेत्येतद् दारुभूतेन करणेनेत्यन्यथाक्रियते । त्रिगुणा सत्त्वरजस्तमोमयी ।

अथ काक्वोदाहरति–गुर्विति। नैष्यतीति नायिकोक्तौ प्रत्युतागमनं न संभवीत्याकूतम् । सख्युक्तौ तु नकारशिरसि काकुप्रयोगात् सर्वाकारमेष्यत्येवेति ॥ १ ॥

अनुप्रासं लक्षयति—वर्णेति स्वराणामचां वैलक्षण्येऽपि यद् व्यञ्जनानां हलां सादृश्यं तदिह वर्णसाम्यं विवक्षितम् । इह खल्वर्थपौनरुक्त्यं शब्दपौनरुक्त्यं शब्दार्थपौनरुक्त्यं चेति । तथार्थपौनरुक्त्यं प्ररूढं दोषः । शब्दपौनरुक्त्ये व्यञ्जनपौनरुक्त्यमनुप्रासः स्वरव्यञ्जनपौनरुक्त्यं च प्ररूढं दोषः । शब्दपौनरुक्त्ये व्यञ्जनपौनरुक्त्यमनुप्रासः स्वरव्यञ्जनपौनरुक्त्यं च यमकं, केवलस्वरपौनरुक्त्यम् अचारुत्वान्न गण्यते [अलंकारसूत्रम्] । यथाह—

"नानर्थवन्तोऽनुप्रासा न चाप्यसदृशाक्षराः ।" इति ।

अनुप्रासशब्दं निर्वक्ति—रसादीति ।

## सुधासागरः

अत्र प्रदीपकारः । इयं च न वाक्यमात्रे, किन्तु स्वतोऽप्यन्येनोक्तस्यान्यथायोजनमात्रे न्यायसाम्यात् । यथा मम—

> कृष्णो वैरिविमर्दने हरिपदप्रीत्यर्जने त्वर्जुनः
> पीतः पङ्कजलोचनाभिरभितो नेत्राञ्चलैश्चञ्चलैः ।
> रक्तः सज्जनसङ्गमेषु करणश्रेणीमणे[१] श्रीधर
> स्थाने वर्णचतुष्टयस्य भुवने भर्त्ता भवान् गीयते ॥

अत्र वर्णचतुष्टयस्य भर्त्ता श्रीधर इति सार्वलौकिकं वाक्यमन्यथा श्लेषादिनास्माभिः समर्थितम् । एवमन्यदप्यूह्यमित्याह ।

---

[१] करणाः कायस्थाः । श्रीधरस्तन्नामाऽऽश्रयदाता ।

**छेकवृत्तिगतो द्विधा ।**

**छेकाः विदग्धाः । वृत्तिर्नियतवर्णगतो रसविषयो व्यापारः । गत इति छेकानुप्रासो वृत्त्यनुप्रासश्च ।**

---

## साहित्यचूडामणिः

छेकपदमप्रसिद्धं व्याचष्टे—विदग्धा इति । गृहचराः पक्षिमृगादयः छेका इति केचित् । वृत्तिः रसविषयो व्यापारः । अत्र तु तद्वती वर्णरचना वृत्तिः । सा च परुषवर्णारब्धत्वात् त्रिधा । अनुप्रासानामेव दीप्तमसृणमध्यमवर्णनीयोपयोगितया पारुष्यलालित्यमध्यमत्व-स्वरूपविवेचनाय वर्गत्रयव्युत्पादनार्थं तिस्रोऽनुप्रासजातयो वृत्तय इत्युक्ताः वर्त्तन्तेऽनुप्रासजातय आस्विति । यथ भामहः (उद्भटः)—

सरूपव्यञ्जनन्यासं तिसृष्वेतासु वृत्तिषु ।
पृथक् पृथगनुप्रासमुशन्ति कवयस्तथा ॥ [का० सा० सं० १] इति ।

ननु जातिमति जातेर्वृत्तिरिति शास्त्रशय्या । तत् कथं जातौ जातिमतो वृत्तिरिति चेत् । न । "लोकोत्तरे हि गाम्भीर्ये वर्त्तन्ते पृथिवीभुजः" इत्युक्तवत् तदनुग्रहस्यैवात्र वृत्तिशब्दार्थत्वात् । तस्माद् वृत्तयोऽनुप्रासायमानाः । यदुक्तं "जातिर्जातिमतो नान्ये"ति ।

## सुधासागरः

अथावृत्तिनिबन्धनेष्वलङ्कारेषु लक्षणीयेषु रसानुगुणतयाऽनुप्रासः प्रथमं लक्षणीयः । स द्विधा, वर्णानुप्रासः पदानुप्रासश्च । तत्राद्योऽवाचकवर्णमात्रावृत्तौ, द्वितीयस्तु वाचकपदावृत्ताविति वस्तुगतिः । तत्राद्यं लक्षयति—'वर्णसाम्ये'-ति ।

स्वरवैसादृश्येऽपीत्यादि । अयमाशयः—अव्यवधानेन वर्णमात्रविन्यासे वर्णानुप्रासः । शब्दसाम्यन्तु अनुप्राससामान्यलक्षणमित्यर्थाल्लभ्यते । वर्णपदं व्यञ्जनपरमतो व्यञ्जनवैसादृश्ये विरिञ्चिरित्यादौ नातिव्याप्तिः । न चेष्टैव सा, तत्रानुप्रासशब्दार्थस्याभावात् । रसादिभिरनुगतः प्रकृष्ट आसो न्यासो ह्यनुप्रासशब्दार्थः । न च स्वरमात्रसादृश्ये रसानुगमो, न वा सहृदयहृदयावर्जकत्वलक्षणः प्रकर्ष इति । विभजते—'छेके'-ति ।

छेका इत्यादि । गतपदस्य द्वन्द्वोत्तरवर्त्तित्वेनोभयत्राप्यन्वयः । अयं भावः—छेकगतो विदग्धाश्रितः । तैश्च प्रचुरमेतत्प्रयोगात् । वृत्तिगतो वृत्त्याश्रितः, तदुपोद्बलकत्वात् । वृत्तिश्च 'मधुरादिरसानुगुणनियतमसृणादिवर्णगतो रसविषयो व्यापारो व्यञ्जनाख्य' इति ।

किन्तयोः स्वरूपमित्याह—

**सोऽनेकस्य सकृत् पूर्वः ।**

अनेकस्य अर्थाद् व्यञ्जनस्य सकृदेकवारं सादृश्यं छेकानुप्रासः ।

उदाहरणम्—

ततोऽरुणपरिस्पन्दमन्दीकृतवपुः शशी ।
दध्रे कामपरिक्षामकामिनीगण्डपाण्डुताम् ॥

**एकस्याप्यसकृत् परः ॥ २ ॥**

एकस्य अपिशब्दादनेकस्य व्यञ्जनस्य द्विर्बहुकृत्वो वा सादृश्यं वृत्त्यनुप्रासः ।

## साहित्यचूडामणिः

अर्थाद् व्यञ्जनस्येति । स्वरवैसादृश्ये इत्युक्तत्वात् । एकवारमिति । "संख्यानियमे पूर्वं छेकानुप्रासः (सू० ५) । द्वयोर्व्यञ्जनसमुदाययोः परस्परमेकधा सादृश्यं संख्यानियम" इत्यलंकारसर्वस्वसूत्रस्थित्या द्वयोः सादृश्योक्तौ छेकानुप्रासः ।

तत इति । स्पन्दमन्दीति नकारदकारात्मकस्य व्यञ्जनसमुदायस्य सकृत् सादृश्यम् । एवं कामक्षामेति ककारमकाररूपस्य गण्डपाण्डिवति णकारडकाराकारस्यापि मन्तव्यम् ।

एकस्यापीति । "अन्यथा तु वृत्त्यनुप्रासः" (अलंकारसू० ६) इति सूत्रस्थित्या पूर्वस्माद् वैपरीत्यमस्य लक्षणम् । उक्तसमुच्चयार्थोऽयमपिशब्द इत्याह—अपिशब्दादिति । असकृत्त्वं निश्चिनोति— द्विर्बहुकृत्वो वेति ॥२॥

## सुधासागरः

किन्तयोः स्वरूमित्याहेति । तयोराद्यलक्षणमाहेत्यर्थः ।
अनेकस्य व्यञ्जनस्य सकृदेकवारं साम्यं पूर्वश्छेकानुप्रास इत्यर्थः ।
उदाहरणम्—'ततोऽरुणे'-ति । स्पष्टम् । अत्र णकारडकारयोः ।
द्वितीयं लक्षयति—'एकस्ये'ति ।

एकस्येत्यादिवृत्तिः स्पष्टार्था । यत्तु श्रीवत्सलाञ्छनभट्टाचार्यैरुक्तम्—'अत्रैकस्य सकृत्साम्येऽपि वृत्त्यनुप्रासमिच्छन्ति । यथा–'व्याधूतचूताङ्कुरेत्यादौ' इति'। तत्प्रामादिकम् । तत्र 'ऊत ऊत' इत्यस्य छेकाभासत्वात् । न ह्येकस्य व्यञ्जनमात्रस्य सकृदावृत्तौ कश्चिच्चमत्कारोऽनुभूयते । एवं च प्रदीपकारैर्वृत्तिं व्याख्याय यदुक्तम्—'वस्तुतस्तु छेकानुप्रासभिन्नं लक्ष्यम्, अन्यथैकस्य सकृदावृत्तेरसङ्गतापत्तेः । एवं चैकस्य वर्णस्य सकृदसकृद्वाऽनेकस्य त्वसकृत्सादृश्यं वृत्त्यनुप्रास इति पर्यवसन्नम्' इति तदीर्ष्यामात्रम् । न खलु वाग्देवतावतारवृत्तिकारोक्तं ब्रह्मणाऽप्यतिवर्त्तितुं शक्यमित्यसकृदावेदितमस्माभिस्तत्र तत्रेति सुधीभिर्द्रष्टव्यम् ।

तत्र—

**माधुर्यव्यञ्जकैर्वर्णैरुपनागरिकोच्यते ।**

**ओजःप्रकाशकैस्तैस्तु परुषा ।**

उभयत्रापि प्रागुदाहृतम् ।

**कोमला परैः ॥ ३ ॥**

परैः शेषैः । तामेव केचिद् ग्राम्येति वदन्ति ।

उदाहरणम्—

अपसारय घनसारं कुरु हारं दूर एव किं कमलैः ।
अलमलमालि मृणालैरिति वदति दिवानिशं बाला ॥

---

## साहित्यचूडामणिः

अथ वृत्तिं विविनक्ति—माधुर्येति । "मूर्ध्नि वर्गान्त्यगा" इत्यादि प्रतिपादितैः उपनागरिका नागरिकयोपमिता । "उपादयः कुष्टाद्यर्थे तृतीया" ( २-२-१८ वा० ) इति समासः । यदाहोद्भटः [का०सा०सं० १]—

सरूपसंयोगयुतां मूर्ध्नि वर्गान्त्ययोगिभिः ।
स्पर्शैर्युतां च मन्यन्त उपनागरिकां बुधाः ॥ इति ।

ओजःप्रकाशकैरिति । 'योग आद्यतृतीयाभ्यामि'ति निर्णीतैः ।

प्रागिति । 'अनङ्गरङ्गे'ति 'मूर्ध्नामुद्वृत्ते'ति च । कोमलेति । प्रसादप्रत्यायकैः कोमला नाम वृत्तिः । तां कोमलामेव केचिदुद्भटादयो ग्राम्येति वदन्ति । यथाह—

शेषैर्वर्णैर्यथायोगं प्रथितां कोमलाख्यया ।
ग्राम्यां वृत्तिं प्रशंसन्ति काव्येष्वादृतबुद्धयः ॥ [का० सा० सं० १] इति ।

अपसारयेति । अत्र रेफस्य लकारस्य बहुकृत्वः सादृश्याद् वृत्त्यनुप्रासः सारादेर्व्यञ्जनसमुदायस्य चासकृत् सादृश्यात् ॥ ३ ॥

## सुधासागरः

तत्र वृत्त्यनुप्रासे ।

उभयत्रापीति । अष्टमोल्लासे माधुर्यौजसोर्व्याख्यावसरे 'अनङ्गरङ्गप्रतिम'-मित्यादि । 'मूर्ध्नामुद्वृत्तकृते'त्यादि चोदाहृतमिति भावः ।

परैः शेषैरित्यादि ओजोमाधुर्यव्यञ्जकातिरिक्तैः प्रसादवद्भिरक्षरैः । एनामेव केचिदतिशयितकान्तिराहित्येन ग्राम्यस्त्रीसाम्याद् ग्राम्येति वदन्तीति भावः । उदाहरणम्—अपसारयेत्यादि ।

**केषाञ्चिदेता वैदर्भीप्रमुखा रीतयो मताः ।**

एतास्तिस्रो वृत्तयो वामनादीनां मते वैदर्भी–गौडी–पाञ्चाल्याख्या रीतयो मताः ।

**शाब्दस्तु लाटानुप्रासो भेदे तात्पर्यमात्रतः ॥ ४ ॥**

शब्दगतोऽनुप्रासः । शब्दार्थयोरभेदेऽप्यन्वयमात्रभेदात् । लाटजनवल्लभत्वाच्च लाटानुप्रासः । एष पदानुप्रास इत्यन्ये ।

---

## साहित्यचूडामणिः

प्रसङ्गेन रीतिमालोचयति—केषाञ्चिदिति । एता उपनागरिका परुषा कोमला । माधुर्यादीनां गुणानामुचितवृत्त्यर्पणप्रवीणानां ललितदीप्तमध्यमवर्णनीयविषयाणां विदर्भगौडपञ्चालदेशहेवाकप्राचुर्येण त्रैविध्यम् । सैव रीतिर्गुणसमुदाययोरिति यावत् । जातिर्जातिमतो नान्या, समुदायश्च समुदायिभ्यो नान्य इति रीतिवृत्तयो न गुणालङ्कारव्यतिरिक्ता इति रहस्यम् । यदाह [ ध्वनिकारः ]—

रसाद्यनुगुणत्वेन व्यवहारोऽर्थशब्दयोः ।
औचित्यवान् यस्ता एता वृत्तयो द्विविधाः स्थिताः ॥
शब्दतत्त्वाश्रयाः काश्चिदर्थतत्त्वयुजोऽपराः ।
वृत्तयोऽपि प्रकाशन्ते ज्ञातेऽस्मिन् काव्यलक्षणे ॥
अस्फुटस्फुरितं काव्यतत्त्वमेतद् यथोदितम् ।
अशक्नुवद्भिर्व्याकर्तुं रीतयः संप्रवर्तिताः ॥ इति ।

तत्र शब्दगता वृत्तय एता उपनागरिकानागरिकाग्राम्याः । अर्थगतास्तु कैशिक्यादयः प्रसिद्धाः ।

एवं वार्णमुक्त्वा शाब्दमनुप्रासमाह—शाब्दस्त्विति ।

शब्दार्थयोरभेदेऽपि समयग्रहणादिना भेदाभावेऽपि पार्यन्तिकवाक्यार्थमात्रभेदादयमनुप्रासः शाब्दः, लाटदेशदृष्टत्वात् तत्समाख्या यथा विदर्भादिषु दृष्टतया

## सुधासागरः

एता इत्यादि । वामनादीनां मते एता एव यथाक्रमं वैदर्भी गौडी पाञ्चाल्यो रीतय उच्यन्ते इत्यर्थः । शब्दानुप्रासमाह—शाब्द इति ।

शब्दगतोऽनुप्रास इत्यादि । शब्द्यते–प्रकाश्यतेऽनेनेति शब्दः शब्दनारूपव्यापारवान् प्रातिपदिकादिः, तद्गतः शाब्दः । भेदे इति । तात्पर्यमन्वयभेदस्तन्मात्राद् भेदे न तु स्वरादर्थाद् वा । तथा च भिन्नतात्पर्यकतुल्यार्थकशब्दसादृश्यं शब्दानुप्रासः, स तु लाटानुप्रास उच्यते इत्यर्थः । तुशब्दो वर्णानुप्रासस्य लाटीयत्वव्यवच्छेदकः ।

**पदानां सः ।**

स इति लाटानुप्रासः । उदाहरणम्—

यस्य न सविधे दयिता दवदहनस्तुहिनदीधितिस्तस्य ।
यस्य च सविधे दयिता दवदहनस्तुहिनदीधितिस्तस्य ॥

**पदस्यापि ।**

---

## साहित्यचूडामणिः

रीतीनां वैदर्भ्यादिसमाख्या । तत्त्वतस्तु देशनिर्देशैर्न किञ्चिदुपक्रियते काव्यानाम् ।

यदाहोद्भटः—स्वरूपार्थाविशेषेऽपि पुनरुक्तिः फलान्तरात् ।
शब्दानां वा पदानां वा लाटानुप्रास इष्यते ॥ इति ।

यच्च सूत्रे "तात्पर्यभेदवत् तु लाटानुप्रासः" ( अ० सू० ९) इति । तत्रानुपलक्ष्यमाणसुप्तिङन्ताः शब्दाः, तेष्वेवोपलक्ष्यमाणेषु पदानि ॥ ४ ॥

पदानां स इति । कदाचित् पदानां सः लाटानुप्रासः सम्भवी । यस्येति । अस्लीकस्य तु दावानलश्चन्द्र इत्यन्वयमात्रप्रभेदादयमनुप्रासः प्रवर्तते ।

पदस्यापीति । न केवलं पदानामेव यावदेकस्यापि पदस्यायमनुप्रासः ।

वदनमिति । अत्र सुधाकरपदस्य कदाचिद् वदनसामानाधिकरण्याद् अन्यदा कलङ्कवैकल्यानौचित्याच्चान्वयः ।

## सुधासागरः

यत्तु पुनरुक्तत्वव्यवच्छेदाय 'भेदे तात्पर्यमात्रत' इत्युक्तमिति व्याख्यानम्, तदसत् । मात्रशब्दस्याप्रयोजकतापत्तेः । एष एव कैश्चित्पदानुप्रास उच्यते । सोऽयं पदस्य नाम्नो वेति द्विविधः । तत्र सविभक्तिकस्य यत्रावृत्तिः स आद्यः । अन्यादृशस्तु द्वितीयः । तयोराद्यो ऽनेकस्य पदस्यैकस्यैव वा पदस्येति द्विविधः । अन्त्यस्तु त्रिविधः । आवृत्तेर्भिन्नसमासस्थतयाऽभिन्नसमासस्थतया एकस्याः समासस्थत्वे सत्यप्यपरस्या असमासस्थतया च । समासं विनाऽस्याऽसम्भवादिति पञ्चप्रभेदा इति कारिकया प्रतिपादितमिति भावः ।

तत्राद्यमाह—पदानामिति । पदानामिति बहुवचनमनेकोपलक्षणम्, अन्यथा द्वयोः पदयोरावृत्तौ षष्ठभेदापत्तेः । उदाहरणं—यस्येति ।

गाथा छन्दः । अत्र पूर्वार्धे तुहिनदीधितौ दवदहनत्वं विधेयम् । उत्तरार्धे तु दवदहने तुहिनदीधितित्वम्, यद्यप्येवं पूर्वोत्तरार्धयोर्दवदनतुहिनदीधित्योरर्थान्तरसङ्क्रमितवाच्यत्वान्नार्थभेदः तथापि शक्यार्थमात्रमादायोद्देश्यविधेयभावाविपर्यासेन तात्पर्यभेदान्वयभेदः । यद्वा, अविशिष्टपदावृत्तेरेवोदाहरणम् । तथा च समुच्चयाभावेन चकारस्त्वर्थकतया समर्थनीयो न च पुनरुक्ततेति । द्वितीयभेदमाह—'पदस्यापी'-ति ।

अपिशब्देन स इति समुच्चीयते । उदाहरणम्—

वदनं वरवर्णिन्यास्तस्याः सत्यं सुधाकरः ।
सुधाकरः क्व नु पुनः कलङ्कविकलो भवेत् ॥

**वृत्तावन्यत्र तत्र वा ।**

**नाम्नः स वृत्त्यवृत्त्योश्च ।**

एकस्मिन् समासे, भिन्ने वा समासे, समासासमासयोर्वा, नाम्नः प्रातिपदिकस्य, न तु पदस्य सारूप्यम् । उदाहरणम्—

---

## साहित्यचूडामणिः

"लोचने तव चकोरलोचने ! वारुणीमदविलासचारुणी ।"

इत्यादौ विभक्त्यादेरपौनरुक्त्येऽपि शब्दार्थपौनरुक्त्यमात्रेण लाटानुप्रासत्वम् । ननु

"त्वन्मुखं त्वन्मुखमिव त्वद्दृशौ त्वद्दृशाविव ।"

इत्यादावनन्वयेनास्य विषयापहारापत्तिः, अनेन वा तस्येति चेत् । न । अन्योन्यापेक्षशब्दार्थगतत्वेनार्थमात्रगतत्वेन च व्यवस्थितेः भिन्नविषयत्वात् ।

कारिकायां व्युत्क्रमेणोक्तं क्रमेण व्याचष्टे—एकस्मिन्निति तत्रेत्यस्य टीका । भिन्न इत्यन्यत्रेत्यस्य । अर्थाद् वाकारस्यापि स्थानचलनम् । प्रातिपदिकस्येति । सुबन्तत्वे पदत्वम्, अन्यथा प्रातिपदिकत्वं सुपो लोपात् ।

सितेति । अत्र करशब्दयोरेकत्र समासे सादृश्यम् । विभाकराकारेत्यामन्त्रितम् । विभाशब्दयोर्भिन्ने समासे सादृश्यम् । पौरुषकमला पुरुषकारसम्पत्,

## सुधासागरः

अपिशब्देन स लाटानुप्रासः समुच्चीयते । उदाहरणम्-वदनमिति ।वरवर्णिनी उत्तमा स्त्री । स्पष्टमन्यत् । अत्र प्रथमसुधाकरपदस्य विधेयपरत्वं द्वितीयस्यानुवाद्यपरत्वमिति बोध्यम् ।

नाम्नः प्रकारत्रयमाह—नाम्न इति ।

वृत्तिनिरूपितप्रकारत्रये नाम्न एव लाटानुप्रास इत्यर्थः । तदेतदुक्तमेकस्मिन्नित्यादि । प्रातिपदिकस्य प्रत्ययरहितस्येत्यर्थः, प्रकृतिभागस्य प्रातिपदिकत्वात् । अत एवोक्तं न तु पदस्य सुप्तिङन्तस्य पदत्वात् । यद्यपि भेदेन प्रातिपदिकस्य प्रयोगाभावान्न तस्यावृत्तिः, तथापि लुप्तविभक्तिकस्यैव प्रयोगेण तावन्मात्रपुरस्कारेण प्रातिपदिकस्येत्युक्तमिति तत्त्वम् । उदाहरणम्—'सितकरे'-ति ।

हे विभाकराकार प्रचण्डप्रताप धरणिधर राजन् सितकरस्य चन्द्रस्य कराः किरणास्तद्वद्रुचिरा विभा दीप्तिर्यस्याः सा तादृशी कीर्तिः । पौरुषेण विद्यया

सितकरकररुचिरविभा विभाकराकार, धरणिधर, कीर्तिः ।
पौरुषकमला कमला साऽपि तवैवास्ति नान्यस्य ॥

तदेवं पञ्चधा मतः ॥ ५ ॥

अर्थे सत्यर्थभिन्नानां वर्णानां सा पुनः श्रुतिः ॥

यमकम्

'समरसमरसोय'-मित्यादावेकेषामर्थवत्त्वेऽन्येषामनर्थकत्वे भिन्नार्थानामिति न युज्यते वक्तुम् इति अर्थे सतीत्युक्तम् । सेति 'सरो रस' इत्यादिवैलक्षण्येन तेनैव क्रमेण स्थिता ।

पाद-तद्भाग-वृत्ति तद् यात्यनेकताम् ॥ ६ ॥

---

## साहित्यचूडामणिः

कमला सा च छत्रचामरादिचिह्ना प्रसिद्धा लक्ष्मीश्च । कमलाशब्दयोः प्रथमः समासे, अन्यस्त्वसमास इति त्रैविध्यम् ।

पञ्चधेति । पदविषयस्य द्वैविध्यस्योक्तत्वात् ॥ ५ ॥

अथ यमकं लक्षयति—अर्थे इति । अर्थभिन्नानां भिन्नार्थानाम्, आहिताग्न्यादिपाठात् । यदाह भामहः [ काव्या० २.१७ ]

तुल्यश्रुतीनां भिन्नानामभिधेयैः परस्परम् ।
वर्णानां यः पुनर्वादो यमकं तन्निगद्यते ॥ इति ।

स्वरव्यञ्जनसमुदायपौनरुक्त्यं यमकम् । इति सूत्रम् [ अ० सू०–७ ] ।

## सुधासागरः

शौर्यादिना कमला लक्ष्मीः सापि तवैवास्ति नान्यस्येत्यर्थः । यत्तु पौरुषं कमलमाश्रयो यस्याः सा पौरुषकमलेति व्याख्यानम्, तदयुक्तम् । कमलपदेन पद्मस्य कमलापदेन लक्ष्म्या अभिधानादर्थभेदेन शब्दभेदेन चानुदाहरणत्वापत्तेः । अत्र करकरेत्येकसमासः विभाविभेति भिन्नौ समासौ कमलाकमलेति पूर्वस्य समास उत्तरस्यासमास इति त्रयाणामुदाहरणं व्याख्यातम् ।

समरसोऽयमित्यादि । अयमाशयः—अर्थभिन्नानां भिन्नार्थानामित्यर्थः, एतच्च लाटानुप्रासेऽतिव्याप्तिवारणाय । तन्मात्रे च कृते 'समरसमरसोऽयम्' इत्यादौ द्वितीयावृत्तेरर्थाभावादव्याप्तिः स्यात्, अत उक्तम् 'अर्थे सतीति' । यद्यर्थस्तदा भिन्न इत्यर्थः । वर्णानामिति बहुवचनमविवक्षितम्, द्वयोरपि यमकव्यवहारात् । सेति । पूर्वेणैव क्रमेणेत्यर्थः । अतः सरो रस इत्यादौ नातिप्रसङ्गः । एवं समा-

प्रथमो द्वितीयादौ द्वितीयस्तृतीयादौ, तृतीयश्चतुर्थे, प्रथमस्त्रिष्वपीति सप्त। प्रथमो द्वितीये तृतीयश्चतुर्थे, प्रथमश्चतुर्थे द्वितीयस्तृतीये इति द्वे। तदेवं पादजं नवभेदम्। अर्धावृत्तिः श्लोकावृत्तिश्चेति द्वे।

द्विधा विभक्ते पादे प्रथमादिपादादिभागः पूर्ववत् द्वितीयादिपादादिभागेषु, अन्तभागोऽन्तभागेष्विति विंशतिर्भेदाः। श्लोकान्तरे हि नासौ भागवृत्तिः त्रिखण्डे त्रिंशत् चतुष्खण्डे चत्वारिंशत्।

---

## साहित्यचूडामणिः

नन्वर्थभिन्नानामित्येतावत्युक्ते 'समरसमरसोऽयमि'त्यादौ यमकत्वं न स्यादित्यव्याप्तिलक्षणदोषः येन प्राथमिकस्यैव समरशब्दस्यार्थवत्त्वं न द्वितीयस्य, सम एकरूपो रसः प्रीतिर्यस्येति सकारावधौ तस्यार्थवत्त्वाभावात्।

उभयोरर्थवत्त्वाभावे कथं भिन्नार्थत्वमित्याशङ्क्याह—अर्थे सतीति। स्मरामि तां स्मरामितामित्यादिवद् यत्र द्वयोरर्थवत्ता तत्र मुख्यं नार्थवत्त्वम्। तेनैव क्रमेणेति। येनैव क्रमेण पूर्वश्रुतिः, तेनैव पुनः श्रुतिरिति प्रकाशयितुं सेत्यनुभूतार्थविषयस्य तद्वृत्तस्य प्रयोगः। अन्यथा पिकः कपिः जारा राजा रसः सरः हरः रह इत्यादावपि यमकावप्रसङ्गः, पुनःश्रुतित्वाविशेषात्। एतेन,

आवृत्तिमेव संघातगोचरां यमकं विदुः।

इत्यादि प्रत्युक्तम्।

## सुधासागरः

नार्थकत्वाभाववत्समानानुपूर्वीकानेकवर्णावृत्तिर्यमकमिति लक्षणं द्रष्टव्यम्।

तदेतद् विभजते—प्रथमो द्वितीयादावित्यादि।

अयमर्थः—प्रथमपादो यदि द्वितीयपादे यम्यते तदा मुखं नाम यमकम्। तृतीये चेत्तदा सन्दंशः। चतुर्थे चेत्तदा आवृत्तिः। एवं द्वितीयः पादश्चेत्तृतीये तदा गर्भः। चतुर्थे चेत्तद्। सन्दष्टकम्। तृतीयश्चेच्चतुर्थे तदा पुच्छम्। प्रथमस्त्रिषु चेत्तदा पङ्क्तिर्महायमकमिति केचित्। पादत्रययमकन्तु न चमत्कारकारि, अतो न प्रयुक्तमित्येकैकपादावृत्तौ सप्त भेदाः। प्रथमो द्वितीये तृतीयश्चतुर्थे चेत्तदा युग्मकं नाम यमकम्। प्रथमश्चतुर्थे द्वितीयस्तृतीये चेत्तदा परिवृत्तिः। अर्धाभ्यासमृते पदद्वयावृत्तौ द्वयमिति नव भेदाः। आवृत्तिस्तु समुद्गः। श्लोकावृत्तिर्महायमकम्। तदुभयमपि पादावृत्तिविशेष एवेत्येकादश पादयमकभेदाः। पादभागवृत्ति बहुभेदम्। तथाहि द्विधा विभक्तेषु पादेषु प्रथमादिपादानामाद्यभागाः पूर्ववत् द्वितीयादिपादेष्वाद्यभागेष्वेव यदि यम्यन्ते तदा पूर्ववन्मुखादयो दश भेदाः श्लोकान्तरे भागावृत्तिर्न स्वदत इति श्लोकावृत्तिस्थानीय

प्रथमपादादिगतान्त्याधर्धादिभागो द्वितीयपादादिगते आद्यार्धादिभागे यम्यते इत्याद्यन्वर्थतानुसरणेनानेकभेदम्, अन्तादिकम् आद्यन्तिकम् तत्समुच्चयः, मध्यादिकम् आदिमध्यम् अन्तमध्यम् मध्यान्तिकम् तेषां समुच्चयः। तथा तस्मिन्नेव पादे आद्यादिभागानां मध्यादिभागेषु अनियते च स्थाने आवृत्तिरिति प्रभूततमभेदम्। तदेतत् काव्यान्तर्गड्डुभूतमिति नास्य भेदलक्षणं कृतम्।

---

## साहित्यचूडामणिः

अस्य च विभागमनन्तप्रकारमासूत्रयितुमाह—पादेति। प्रथमः पादो द्वितीये चतुर्थे च, तृतीयश्चतुर्थे। तथा प्रथमस्त्रिष्वपि द्वितीयतृतीयचतुर्थेषु यौगपद्येन यम्यते।

सप्तेति। प्रथमस्य त्रयः, द्वितीयस्य द्वौ, तृतीयस्यैकः प्रथमस्य यौगपद्यादेक इति। द्विधेति। पादचतुष्कस्य प्रत्येकं द्वैधीकरणे। पूर्ववत् पादभेदवत्। आदिपदैस्तत्प्रकारबाहुल्यमुन्मीलयते। प्रथमस्य पादस्य प्राथमिकः खण्डः क्रमादुपरितनपादत्रयादिखण्डेषु यम्यत इत्यादि। श्लोकान्तरे भागावृत्तिर्नास्ति, चमत्कारविशेषाभावात् पादान्तरे पुनरस्त्येवेति भावः। अन्वर्थतेति। गुणनार्थो हि यमिः यथा 'यमौ कुशलवावि'-ति। अन्तादिकमिति। पूर्वपादान्तोत्तरपादादिभागयोर्यमनात्। तद्विपर्ययादाद्यन्तिकम्। एवमन्यत्रापि। गड्डुः शरीरे मेदोग्रन्थिः। यदाह [ध्वनिकृत्] —

यमकादिनिबन्धेषु पृथग् यत्नोऽस्य जायते।<br>
शक्तस्यापि रसेऽङ्गत्वं तस्मादेषां न विद्यते॥<br>
रसाक्षिप्ततया यस्य बन्धः शक्यक्रियो भवेत्।<br>
अपृथग्यत्ननिर्वर्त्यः सोऽलङ्कारो ध्वनौ मतः॥ इति।

## सुधासागरः

एकादशो भेदो भागावृत्तौ नास्ति। एवं प्रथमादिपादानामन्त्यभागस्य द्वितीयादिपादान्त्यभागेष्वेव यमने पूर्ववद् दशभेदाः। एवं द्विखण्डीकृतेषु विंशतिः। त्रिखण्डीकृतेषु त्रिंशतिः। चतुःखण्डीकृते चत्वारिंशद् भेदाः स्थानापरिवर्त्तिनो भवन्ति। अथ स्थानपरिवर्त्तनभेदाः। प्रथमादिपादानामन्त्यादिभागाः द्वितीयादिपादानामाद्यादिभागेषु यम्यन्ते इत्याद्यन्वर्थतानुसारेणान्ताद्यादियमकादयः प्रभेदा भवन्ति। तथा हि द्विखण्डे यथा—प्रथमपादस्यान्त्यमर्धं द्वितीयपादस्याद्यर्धे चेद् यम्यते तदान्तादिकं यमकम्, प्रथमभाग एव चेदन्त्यभागे तदाद्यन्तयमकम्। एवं प्रथमपादस्याद्यन्तभागौ द्वितीयस्यान्तादिभागयोर्यदि यम्येते तदाद्यन्तान्तादियमकयोः समुच्चयः। अत्र त्रिखण्डचतुःखण्डयोः पूर्वपादमध्यभाग उत्तरपादस्यादिभागे यदि यम्यते तदा मध्यादियमकम्। पूर्वस्यादिभागश्चेदुत्तरपादस्य मध्यभागे तदाऽऽदिमध्ययमकम्। पूर्वस्य मध्यादिभागौ चेदुत्तरस्याद्यमध्ययोस्तदा मध्याद्यादिमध्ययोः समुच्चयः।

दिङ्मात्रमुदाह्रियते—

सन्नारीभरणोमायमाराध्य विधुशेखरम् ।
सन्नारीभरणोऽमायस्ततस्त्वं पृथिवीं जय ॥

विनायमेनो नयताऽसुखादिना विना यमेनोनयता सुखादिना ।
महाजनोऽदीयत मानसादरं महाजनोदी यतमानसादरम् ॥

## साहित्यचूडामणिः

तत्र प्रथमतृतीयपादयोर्यथा—सन्नारीति । सतीर्नारीः । बिभ्राणामुमां याति अयत इति वा सन्नारीभरणोमायः तं विधुशेखरमाराध्य सन्नारीभरणः नष्टशत्रुगजसमर इति ।

प्रथमो द्वितीये तृतीयश्चतुर्थे इत्येतद् यथा—विनेति । मरणाद् बिभ्यतः कस्यचिदुक्तिः । अयमपराधं विना नयता मारयता असुखादिना प्राणानिन्द्रियाणि च खादितुं शीलवता । विनेति विशब्दो वैफल्ये, निष्फलो नाभवन् यमेन कृतान्तेन

## सुधासागरः

एवं प्रथमस्यान्त्यभागो द्वितीयस्य मध्यभागे चेत् तदाऽन्त्यमध्यम् । पूर्वस्य मध्यभागश्चेद् द्वितीयस्यान्त्यभागे तदा मध्यान्तिकम्, पूर्वस्यान्त्यमध्यभागौ चेद् द्वितीयस्य मध्यान्तभागयोस्तदाऽन्त्यमध्यान्तयोः समुच्चयः । यद्यपि पूर्वस्यादिभागे उत्तरस्यान्त्यभागे चेत्तदाऽऽद्यन्तकम् अन्त्यभागस्त्वाद्यभागे चेत्तदान्तादिकमिति प्रकारद्वयं सम्भवति, तथापि द्विखण्डान्तर्गतमेव तदिति पृथङ् न गण्यते । सर्वेषां चैषामपरः समुच्चय इति भिन्नपादे यमने प्रभेदाः । एवं तस्मिन्नेव पादे आद्यादिभागानां मध्यादिभागेष्वावृत्तौ भेदा द्रष्टव्याः । सर्वे चैते नियतभागस्थानविवक्षया भागस्थानयमकभेदाः, नियतेषु भागस्थानेष्वावृत्तेरिति । भागानपेक्ष्य नियतस्थानयमकभेदा अपि बहवो भवन्तीति प्रभूततमप्रभेदं यमकम् । तदेतत् काव्यान्तर्गडुभूतमिति नास्य भेदलक्षणं कृतमित्यर्थः । गडुर्ग्रन्थिः । यथेक्षुदण्डग्रन्थिश्चर्वणेन रसनिःसरणे व्यवधायकस्तथा काव्येऽपि यमकं गूढार्थानुसन्धानविलम्बेनास्वादविच्छेदादिति भावः । गडुर्ग्रह इति प्रदीपकाराः । अजागलकुच इति क्वचित् । अत्र दिङ्मात्रमुदाह्रियते । तत्रैकपादाभ्यासेषु सन्दंशो यथा—सन्नारीति ।

सतीः नारीः बिभर्त्ति तादृशी या उमा तामयते प्राप्नोति यस्तं विधुशेखरं शिवमाराध्य हे अमाय मायाशून्य निष्कपट ततस्तदाराधनात् त्वं सन्ना अवसन्ना अरीणामिभा यत्र तादृशो रणो यस्य तथाभूतः सन् पृथिवीं जय सार्वभौमो भवेत्यर्थः ।

द्विपादाभ्यासे युग्मकं यथा—विनेति ।

एनो विना अपराधमन्तरेण सुखादिना ऊनयता विषयभोगमसहिष्णुना प्राणभक्षकेण । अत एव नयतां स्वस्थानं प्रापयतां यमेन कृतान्तेन महानुत्सवान्

